एवं धर्म[1]परः प्राज्ञो धर्ममेवाचरेत्सदा ।
धर्मेणोत्तारयेत्सर्वान् धर्मान्मोक्षं प्रयाति हि ॥ ११७

धर्मो ददाति धनमक्षयमुत्तमं तु[2]
धर्मो ददाति पदमक्षयमच्युतस्य ।
धर्मो ददाति विमलां धियमात्मसौख्यं
धर्मो ददाति बहुपुत्रयशांसि नृणाम् ॥ ११८

सूतः—

इति श्रुत्वा महीपोऽपि शौनकाद्धर्मतत्परः ।
धर्ममेवाचरन्नित्यं धर्मनिष्ठो बभूव ह ॥ ११९

तस्माद्धर्मस्समस्तानां प्राणिनां सद्गतिप्रदः ।
पुमर्थेष्वपि सर्वेषु धर्ममेव परं विदुः ॥ १२०

[3]धर्म एव च साधूनां सर्वापत्तारणक्षमः ।
अतस्सर्वप्रकारेण बुद्धिमान् धर्ममाचरेत् ॥ १२१

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे धर्ममाहात्म्य-
कथनं नाम प्रथमोऽध्यायः ।

---

1. क. रतः
2. क ख. हि
3. क. ख. धर्मस्सहायः

## ॥ द्वितीयोऽध्यायः ॥

### भूसुरमाहात्म्यकथनम्

सूतः—

धर्मस्य [1]ब्राह्मणो मूलं मन्त्राणामास्पदं द्विजाः ।
निदानमागमार्थानां विशेषादेव भूसुराः ॥ १

कर्मणा मनसा वाचा सम्पूज्या ब्राह्मणोत्तमाः ।
तुष्टा यदि प्रदास्यन्ति ब्राह्मणास्सुमहत् पदम् ॥ २

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
कथितं धर्मपुत्राय कृष्णेनामिततेजसा ॥ ३

युधिष्ठिरः—

त्रैलोक्ये सर्वभूतानां कः श्रेष्ठो यदुपुङ्गव ।
केन वा पूज्यसे त्वं च तुष्यसे केन कर्मणा ॥ ४

श्रीकृष्णः—

ब्राह्मणस्सर्ववर्णानां [2]परमो गुरुरुच्यते ।
तस्मादभ्यधिकः को वा न भूतो न भविष्यति ॥ ५

ब्राह्मणस्सम्भवेनैव देवानामपि दैवतम् ।
[3]यत्स्यान्नेन सदाश्नन्ति हव्यानि त्रिदिवौकसः ॥ ६

कव्यानि चैव पितरः किंभूतमधिकं ततः ।
अविद्यो वा सविद्यो वा ब्राह्मणो दैवतं महत् ॥ ७
अवध्यस्सर्वभूतानां ब्राह्मणो ह्यनलोपमः ।
भूतानामग्रभुग्विप्रो वर्णश्रेष्ठः परो गुरुः ॥ ८

विप्राः परा गतिर्मह्यं [4]ममरूपा हि सर्वदा ।
बहवोऽपि न जानन्ति नरा ज्ञानबहिष्कृताः ॥ ९

---

1. क. ख. ब्राह्मणा
2. क. ख. भूतानां
3. क. ख. यस्यास्येन
4. क. ख. मम रूपं हि ते सदा

यथाहं द्विजरूपेण चरामि पृथिवीमिमाम् ।
नातः पवित्रम[1]परं न पुण्यमधिकं ततः ॥ १०

अर्चयेत्सततं भक्त्या ब्राह्मणान् भूमिदैवतान् ।
ब्राह्मणे पूजिते नित्यं पूजितोऽहं न संशयः ॥ ११

तुष्टोऽहं विप्रसन्तुष्टया [2]ममरूपा हि भूसुराः ।
ब्राह्मणेषु च तुष्टेषु तुष्यन्त्यखिलदेवताः ॥ १२

तेषामेव हि संमानान्महत्पदम[3]वाप्नुयात् ।
विप्राणां पूजया प्राप्तमनेकैस्सुमहत्पदम् ॥ १३

व्याधोऽप्यासीत्सत्यतपा ऋषिर्ब्राह्मणसेवया ।
तदेव वक्ष्ये संक्षिप्य शृणु त्वं धर्मनन्दन ॥ १४

श्रीकृष्णः—

आरुणिर्नाम विप्रर्षिः [4]पूर्वे कल्पे महानभूत् ।
सोऽरण्यमगमत्किञ्चित्तपोऽर्थी ब्राह्मणोत्तमः ॥ १५

तपस्तेपे ततस्तस्मिन्नुपवासपरायणः ।
[5]देविकायास्तटे रम्ये सोऽवसद्ब्रह्मवत्सलः ॥ १६

कदाचिदभिषेकाय स जगाम महानदीम् ।
तत्र स्नात्वा जपन् विप्रो ददर्शायान्तमग्रतः ॥ १७

व्याधं महाधनुष्पाणिं रक्तनेत्रं [6]सुभीषणम् ।
तं द्विजं हन्तुमायात्स वल्कलानां जिघृक्षया ॥ १८

तं दृष्ट्वा क्षुभितो विप्रो व्याधं भयनिपीडितः ।
ध्यायन्नारायणं देवं तस्थौ [7]मृतमयो द्विजः ॥ १९

तं तथैव स्थितं दृष्ट्वा व्याधो भीत इवाग्रतः ।
विहाय सशरं चापं ततो वचनमब्रवीत् ॥ २०

---

1. क. ख. तुलं
2. क. ख. धर्मरूपं
3. क. ख. वाप्यते
4. क. ख. पूर्वकल्पेऽभवत्पुरा
5. इतस्सार्धः श्लोकः अ. पुस्तके नास्ति
6. क. ख. विभीषणम्
7. क. ख. तत्रैव स

व्याधः—

हन्तु[1]मिच्छन्नहं ब्रह्मन् भवन्तं प्रागिहागतः ।
इदानीं दर्शनात्तेऽत्र सा मतिः क्व गता विभो ॥ २१

पुरुषाणां सहस्राणि नारीणामयुतानि च ।
विहतानि मया ब्रह्मन् वृत्तिहेतोः कुटुम्बिना ॥ २२

न च मे[2]ऽभ्यधिकं वित्तं कदाचिदपि जायते ।
इदानीं तप्तुमिच्छामि तपोऽहं त्वत्समीपतः ॥ २३

उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ।
एवमुक्तस्तदा विप्रो नोत्तरं प्रत्यपद्यत ॥ २४

ब्रह्महा पापकर्मेति मत्वा ब्राह्मणपुङ्गवः ।
[3]अनुक्तोऽपि स धर्मेप्सुर्व्याधस्तत्रैव तस्थिवान् ॥ २५

तस्याश्रमे द्विजस्यैव वृक्षमूलमुपाश्रितः ।
कस्यचित्त्वथ कालस्य तां नदीमगमत्किल ॥ २६

व्याघ्रः क्षुधान्वितः साधुं [4]विप्रं हन्तुं समुद्यतः ।
अन्तर्जलगतं विप्रं यावद्व्याघ्रो जिघृक्षति ॥ २७

तावद्व्याधेन विद्धोऽसौ सद्यः प्राणैर्वियोजितः ।
विप्रोऽप्यन्तर्जलगतः श्रुत्वा तच्छब्द[5]माकुलः ॥ २८

नमो नारायणायेति वाक्यमुच्चैरुवाच ह ।
व्याघ्रेणापि श्रुतो मन्त्रः प्राणैः कण्ठगतैस्तदा ॥ २९

तस्माद्व्याघ्रशरीरात्तु निर्गतः पुरुषः [6]किल ।
अब्रवीद्यामि तं देशं यत्र विष्णुस्सनातनः ॥ ३०

त्वत्प्रसादा[7]दहं विप्र मुक्त[8]पाप्मा निरामयः ।
इत्युक्तो ब्राह्मणः प्राह कोऽसि त्वं पुरुषर्षभ ॥ ३१

---

1. क. ख. मिच्छुरहं
2. क. ख. ह्यधिकं
3. क. ख. अनुक्तेऽपि
4. क. ख. तं विप्रं हन्तुमुद्यतः
5. ख. माकुलम्
6. क. ख. क्वचित्
7. क. ख. न्मुनिश्रेष्ठ
8. क. ख. पापो

सोऽब्रवीदस्मि राजेन्द्रो दीर्घबाहुरिति श्रुतः ।
अहं जानामि वेदार्थानहं वेद्मि शुभाशुभम् ॥ ३२

ब्राह्मणैर्नैव मे कार्यं किं वस्तु ब्राह्मणा इति ।
मामेवंवादिनं विप्रास्सर्वे क्रोधसमन्विताः ॥ ३३

ददुः शापं दुराधर्षं क्रूरो व्याघ्रो [1]भवत्विति ।
ततस्ते ब्राह्मणास्सर्वे प्रणिपत्य प्रसादिताः ॥ ३४

उक्ताश्चानुग्रहार्थं तु [2]त ऊचुर्मामिदं पुरा ।
यदेषुघातं लब्ध्वा तु प्राणैः कण्ठगतैर्भवान् ॥ ३५

श्रोष्यते द्विजमुख्यात्तु नमो नारायणेति च ।
तदा स्वर्गगतिस्तुभ्यं भविता नात्र संशयः ॥ ३६

विप्रद्वेषफलं भुक्तं सुखी च तव दर्शनात् ।
एवमुक्त्वा गतः स्वर्गं स राजा वीतमत्सरः ॥ ३७

ब्राह्मणोऽपि मुदा युक्तस्तं व्याधं प्रत्यभाषत ।
इदानीं तव पापानि देविकाभिषवेण च ॥ ३८

मद्दर्शने[3]नापि चिरं मम शुश्रूषणेन च ।
नष्टानि शुद्धदेहोऽसि साम्प्रतं नात्र संशयः ॥ ३९

तपः कुरुष्व साधो त्वं नियतो मम सन्निधौ ।
एवमुक्तस्स विप्रेण द्विज[4]भक्तस्समाहितः ॥ ४०

तपस्तेपे निराहार[5]स्तमृषिं मनसा स्मरन् ।
अथ कालेन स मुनिः [6]प्रसादमकरोत्तदा ॥ ४१

[7]तमस्थिशेषं व्याधं तु क्षुधा दुर्बलतां गतम् ।
दृष्ट्वा प्रोवाच शास्त्राणि सर्वे वेदाश्च सङ्ग्रहाः ॥ ४२

---

1. क. ख. भवेदिति
2. क. ख. तत ऊचुरिदं
3. क. ख. न च
4. क. ख. भक्तिसमन्वितः
5. क. ख. स्तं गुरुं
6. क. ख. सुप्रीतस्तपसास्य वै
7. अ. पुस्तके इतः सार्धः श्लोको नास्ति

ब्रह्मविद्या पुराणानि सेतिहासानि कृत्स्नशः ।
[1]सदा सर्वाणि शास्त्राणि प्रत्यक्षाणि भवन्तु ते ॥ ४३

एवं प्रादाद्वरं तस्मै द्विजोऽसौ नाम चाकरोत् ।
भवान् सत्यतपा नाम ऋषिराद्यो भविष्यति ॥ ४४

एवं दत्तवरो व्याधः कृतकृत्योऽभवत्किल ।
एतच्छ्रुत्वा धर्मपुत्रः कृष्णाद्विप्रार्चनं व्यधात् ॥ ४५

तस्मात् द्विजप्रसादेन किं न सिध्यति भूसुराः ।
पूजनीया द्विजास्तस्मात् पूजितास्सर्वसिद्धिदाः ॥ ४६

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे ब्राह्मणमाहात्म्य-
कथनं नाम द्वितीयोऽध्यायः

1. क. ख. मत्प्रसादप्रभावेन

## ॥ तृतीयोऽध्यायः ॥

### ब्राह्मणावमानकथनम्

सूतः--

ब्राह्मणा हि महात्मानो वेदविद्यासमन्विताः ।
तेषां निन्दा न कर्तव्या नावज्ञा च कदाचन ॥ १

सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ।
[1]स्मर्तव्या ब्राह्मणा वेदाः स्मर्तव्यः पुरुषोत्तमः ॥ २

[2]ब्राह्मणा जङ्गमा देवाः कूटस्थः पुरुषोत्तमः ।
तयोरन्यतराच्छ्रेयो लोकेषु च न विद्यते ॥ ३

ब्राह्मणानां परिभवं यः करोति सुदुर्मतिः ।
मन्त्रतन्त्रक्रियाहीनो जायते [3]दुष्टयोनिषु ॥ ४

[4]तदर्थे श्रूयते कश्चिदितिहासः पुरातनः ।
युधिष्ठिराय [5]कथितः पुरा कृष्णेन धीमता ॥ ५

श्रीकृष्णः—

कश्चिदासीद्[6]द्विजद्रोही पिशुनः क्षत्रियाधमः ।
परपीडारतः क्षुद्रः स्वभावादपि निर्घृणः ॥ ६

निन्दिता ब्राह्मणास्तेन ह्यवज्ञाताश्च [7]सर्वशः ।
तेन दोषेण महता चाल्पायुरभवन्नृप ॥ ७

स त्वायुषि परिक्षीणे जज्ञे घोरो निशाचरः ।
विप्रावमानजातेन पापेन कलुषाशयः ॥ ८

---

1 क. ख. अनिन्द्या
2. अ. पुस्तके श्लोकार्धमिदं न दृश्यते
3. क. ख. कष्ट
4. क. ख. अत्रार्थे
5. क. ख. संप्रोक्तः
6. क. ख. नरेन्द्रो हि
7. क. ख. सर्वदा

क्रूरां चक्रे ततो वृत्तिं [1]राक्षसत्वाद्विशेषतः ।
यं यं पश्यति सत्त्वं स तं तमादाय खादति ॥ ९

एवं तस्यापि दुष्टस्य कुर्वतः प्राणिनां वधम् ।
जगाम [2]सुमहान् कालः परिणामगतं वयः ॥ १०

स कदाचित्तपस्यन्तं ददर्श सरितस्तटे ।
कृतरक्षं द्विजवरं वासुदेवपरायणम् ॥ ११

तं ग्रहीतुमथोद्युक्तो राक्षसस्तमुपाद्रवत् ।
ततो द्विजेन कृतया रक्षया रजनीचरः ॥ १२

निर्धूतवेगस्सहसा तस्थौ मासचतुष्टयम् ।
[3]यतो द्विजस्य राजेन्द्र समाप्तिर्नियमस्य च ॥ १३

ततो जप्यावसानेऽसौ [4]तं ददर्श निशाचरम् ।
दीनं हतबलोत्साहं कान्दिशीकं हतौजसम् ॥ १४

तं दृष्ट्वा कृपयाविष्टः समाश्वास्य निशाचरम् ।
पप्रच्छागमने हेतुं स चाचष्ट यथातथम् ॥ १५

स्वभावमात्मनो [5]दुष्टं प्रसीदेत्यब्रवीत्पुनः ।
कर्ताहं सर्वपापानां निर्विण्णः पापकर्मणा ॥ १६

त्वदीयनिकटं प्राप्तः प्रसादं कर्तुमर्हसि ।
निन्दिता बहवो विप्रास्तर्जिताश्चावमानिताः ॥ १७

तेन दोषेण महता राक्षसत्वमहं गतः ।
पापप्रशमनायालं कुरु मे धर्मदर्शनम् ॥ १८

तस्य तद्वचनं श्रुत्वा राक्षसस्य द्विजोत्तमः ।
वचनं प्राह धर्मात्मा हेतुयुक्तं सुभाषितम् ॥ १९

---

1. क. ख. राक्षसस्तद्वि
2. क. ख. च महान्
3. क. ख. यावद्
4. क. ख. सन्ददर्श
5. क. ख. दोषं

कथं क्रूरस्य जाता ते जिज्ञासा धर्म[1]वर्त्मनाम् ।
पतनायावमानो हि ब्राह्मणानां महात्मनाम् ॥ २०

हन्युः क्रुद्धाश्च ते [2]मन्त्रात् भस्मीकुर्युश्च तेजसा ।

राक्षसः—

तवैव [3]सङ्गान्मे ब्रह्मन् जातो निर्वेद उत्तमः ॥ २१

विप्रावमानदोषेण गतोऽस्म्येवंविधां दशाम् ।

सूतः—

इत्येवमुक्तस्स मुनिः प्रत्युवाच निशाचरम् ॥ २२

युक्तमेतद्धि पापानां निवृत्तिरुपकारिका ।
न करिष्ये राक्षसानामहं धर्मोपदेशनम् ॥ २३

एवमुक्त्वा ययौ विप्रस्त्यक्त्वा विप्रावमानिनम् ।
सोऽपि पापापनोदः स्यात्कथ[4]मित्याकुलोऽभवत् ॥ २४

तथा हि पापो[पं] दुःखेन करोति तरलं मनः ।
एवं चिन्ताकुलस्सोऽपि पर्यटन्निर्जने वने ॥ २५

[5]ददर्श स फलादानायागतं ब्रह्मचारिणम् ।
अग्रहीच्च [6]दुराचारः पापबुद्ध्याकुलीकृतः ॥ २६

गृहीतो रक्षसा तेन स तदा मुनिदारकः ।
निराशो जीविते प्राह सामपूर्वं निशाचरम् ॥ २७

[7]कथं कथय यत्कार्यं गृहीतं केन हेतुना ।
तद्ब्रूहि भद्र भद्रं ते पश्चात्तव वदाम्यहम् ॥ २८

राक्षसः—

षष्ठे काले ममाहारः क्षुधितस्य समागतः ।
आहारं कर्तुमिच्छामि तस्मात्त्वां मुनिपुङ्गव ॥ २९

---

1. क. ख. वर्त्मनः
2. क. ख. मन्त्रैः
3. क. ख. सङ्गमात्
4. ख. मत्याकुलः
5. क ख. ददर्शाथ
6. क. ख. दुरावारं
7. 28, 29, श्लोकौ अ. पुस्तके नोपलभ्येते

ब्राह्मणः—

तथावश्यं त्वया चाहं भक्षणीयो निशाचर ।
[1]भो यास्यामि तदद्यैव निवेद्य गुरवे फलम् ॥ ३०

गुर्वर्थमेतदागत्य फलानां ग्रहणं कृतम् ।
ममात्र निष्ठा [2]प्रागासीत् यत्फलं गुरवेऽर्पितम् ॥ ३१

स त्वं मुहूर्तमात्रं मां विसृज्य परिपालय ।

राक्षसः—

मुञ्चाम्यहमसन्दिग्धं करोति यदि तद्भवान् ॥ ३२

निर्विवेकेन चित्तेन पापकर्म समार्जितम् ।
[3]प्रागिदं मम पापेन धर्मे न रमते मनः ॥ ३३

तत्पापं येन निर्धूय मोक्षं [4]प्राप्नोमि तद्वद ।
त्वया तदुपदिष्टं चेत् त्वां मुञ्चामि न संशयः ॥ ३४

एवमुक्तो मुनिवरश्चिन्तानिर्विण्णमानसः ।
जगाम रक्षसस्तस्य ज्ञानदानेन संशयम् ॥ ३५

एवं व्याकुलचित्तोऽसौ मनसा शपथं व्यधात् ।
यदि शुश्रूषितो वह्निर्गुरुशुश्रूषणादनु ॥ ३६

व्रतानि च सुचीर्णानि सप्तार्चिः पातु मां ततः ।
इत्येवं मनसा सत्यात् [5]शपथं कुर्वतस्ततः ॥ ३७

सप्तार्चिषः समुदि(ता) [तात्] प्रादुरासीत्सरस्वती ।
सा प्रोवाच द्विजवरं राक्षसग्रहणाकुलम् ॥ ३८

मा भैषीर्द्विजवर्य त्वां मोक्षयिष्यामि सङ्कटात् ।
[6]स्थित्वाहं तव जिह्वाग्रे रक्षार्थं राक्षसस्य हि ॥ ३९

---

1. ख. आयास्यामि
2. क. ख. नित्या स्यात्
3. क. ख. प्रागल्म्यान्मम पापस्य न धर्मेषु रतं मनः
4. क. ख. प्राप्स्यामि
5. ख. शपथान्
6. क, ख, स्थिताहं

तत्सर्वं कथयिष्यामि ततो मोक्षमवाप्स्यसि ।
इत्युक्त्वा रक्षसा तेनादृष्टादर्शनमाप सा ॥ ४०

ब्राह्मणः—

श्रूयतां तव यच्छ्रेयस्तथा[1]न्येषां च पापिनाम् ।
समस्तपापशुद्ध्यर्थं पुण्योपचयदं महत् ॥ ४१

प्रातरुत्थाय जप्तव्यो विष्णोस्सारस्वतस्तवः ।
इत्युक्त्वा प्रददौ तस्मै [2]वरं पातकनाशनम् ॥ ४२

युक्तश्चासौ तच्छ्रवणात् सौम्यचित्तेन रक्षसा ।
विशेषात्कृपयाविष्टो हितं प्रोवाच राक्षसम् ॥ ४३

तव भद्र समाख्यातो विष्णोस्सारस्वतस्तवः ।
द्विजनिन्दाकृतं पापं तद्ध्वंसनकृतं तथा ॥ ४४

तदवज्ञानजनितं स्तोत्रपाठात्प्रणश्यति ।
अनेनैव जगन्नाथं समाराधय केशवम् ॥ ४५

[3]तपो भक्तिं दृढां कृत्वा सर्वपापैः प्रमुच्यसे ।

सूतः—

ततः प्रणम्य तं विप्रं प्रसाद्य च निशाचरः ॥ ४६

अहर्निशं सदैवैतज्जपन् सारस्वतस्तवम् ।
सर्वपापविनिर्मुक्तो विष्णोः स्थानमवाप्तवान् ॥ ४७

[4]एवं विप्रावमानेन महद्दुःखं प्रजायते ।
इन्द्रो दुर्वाससश्शापात् त्यक्तश्रीरभवत्क्षणात् ॥ ४८

दण्डकः शुक्रशापेन सपुत्रबलबान्धवः ।
अश्मवृष्ट्या विनिहतो भस्मीभूतोऽभवत् क्षणात् ॥ ४९

---

1. क. ख. तेषां
2. क. ख. स्तवं
3. क. ख. स्तुहि
4. अ. पुस्तके 48, 49 श्लोकौ 50 पूर्वार्धं च नोपलभ्यन्ते

दिवोदासोऽपि धर्मात्मा काशिराजः प्रतापवान् ।
नष्टो ब्राह्मणशापेन क्षणाद्राज्यात्परिच्युतः ॥ ५०

एवमन्येऽपि बहवो नष्टा विप्रावमानतः ।
तस्मात्तु नावमन्तव्या ब्राह्मणा भूतिमिच्छता ॥
मोहादप्यवमन्ता चेन्महद्दुःखं [1]प्रयाति सः ॥ ५१

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे ब्राह्मणावमान-
कथनं नाम तृतीयोऽध्यायः

1. क. ख. प्रयास्यति

## ॥ चतुर्थोऽध्यायः ॥

### पूर्वकर्मसम्बन्धकथनम्

सूतः—

श्रृण्वन्तु मुनयस्सर्वे सम्बन्धं पूर्वकर्मणः ।
वाक्कायमानसानीति कर्माणि विविधानि च ॥ १

पूर्वाभ्यासेन तान्येव कुर्वन्त्येव शुभाशुभे ।
पुरुषं चानुबध्नन्ति योन्यन्तर[1]गतं पुनः ॥ २

अस्मिन्नर्थे पुरावृत्तं काव्याय बलिनोदितम् ।

बलिः—

[2]या कथा वर्तते पूर्वं कोशकारसुतस्य हि ॥ ३

[3]कथां कर्मानुसम्बद्धां युक्तां तां श्रृणु भार्गव ।
पूर्वाभ्यासेन कर्माणि सम्भवन्ति नृणां स्फुटम् ॥ ४

वाक्कायमानसानीह योन्यन्तरगतान्यपि ।
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ॥ ५

तद्वच्छुभाशुभं कर्म कर्तारमनुगच्छति ।
[4]करोति कुर्वतः कर्म कर्तारमनुगच्छति ॥ ६

येन यत्र प्रभोक्तव्यं शिवं वा दुःखमेव वा ।
स तत्र रज्ज्वा बद्ध्वेव [5]कर्मणा नीयते बलात् ॥ ७

उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति ।
करोति कुर्वतः कर्म च्छायेवानुविधायिनी ॥ ८

कर्माधीनं तथा सर्वं जगत् स्थावरजङ्गमम् ।
बद्धाश्च कर्मभिः स्वैः स्वैः सर्वे देवास्सवासवाः ॥ ९

---

1. क. ख. गतान्यपि
2. क. ख. या वृत्ता मलये पूर्वं
3. क. ख. कथा कर्मानुसम्बन्धयुक्ता
4. अ. पुस्तके अर्धमिद नास्ति
5. क. ख. बलाद्देवेन नीयते

[1]मुद्गलस्य मुनेः पुत्रः कोशकार इति श्रुतः ।
आसीत्पुरा ज्ञानयुक्तस्सर्वशास्त्रार्थपारगः ॥ १०

तस्यातिदयिता साध्वी धर्मिष्ठा नामतः शुभा ।
सती वात्स्यायनसुता धर्मशीला पतिव्रता ॥ ११

तस्यामस्य सुतो जातः प्रकृत्या वै जडाकृतिः ।
तं जातं ब्राह्मणी पुत्रं जडं [2]मूकमचक्षुषम् ॥ १२

मत्वा त्यक्तवती षष्ठेऽहनि द्वारि स्ववेश्मनः ।
ततोऽत्रागादुद्दुराचारा राक्षसी जातहारिणी ॥ १३

स्वशिशुं कृशमादाय शूर्पाक्षी नाम नामतः ।
तत्रोत्सृज्य [3]निजं बालं जग्राह द्विजनन्दनम् ॥ १४

तमादाय जगामाथ मोक्तुं [4]शातोदरी गिरौ ।
ततस्तामागतां वीक्ष्य तस्या भर्ता घटोदरः ॥ १५

नेत्रहीनस्स तु प्राह किमानीतमिति प्रियाम् ।
साब्रवीद्राक्षसपतिं मया स्थाप्य निजं सुतम् ॥ १६

कोशकारद्विजगृहे तस्यानीतस्सुतः प्रभोः ।
स प्राह न त्वया भद्रे शुभमाचरितं [5]त्विदम् ॥ १७

महाज्ञानी स द्विजेन्द्रो नूनं शप्स्यति कोपितः ।
[6]तस्माच्छीघ्रमिमं त्यक्त्वा पुत्र[7]मन्यं त्वमानय ॥ १८

इत्युक्ता सा जगामाथ समुत्पत्य विहायसम् ।
स [8]चासौ राक्षससुतो [9]विसृष्टो गृहबाह्यतः ॥ १९

रुरोद सुस्वरं ब्रह्मन् प्रक्षिप्याङ्गुष्ठमानने ।
सा शब्दं च[10] चिराच्छ्रुत्वा निर्जगाम गृहात्तदा ॥ २०

---

1. क. ख. मलयेशम्भरः
2. क. मूकं विचक्षसम् ख. विचक्षुषम्
3. क. ख. स्वपुत्रं सा
4. क. ख॰ शालोदरे
5. क. ख. च हि
6. क. ख. तस्माच्छिशु
7. क. ख. मन्यस्य चानय
8. क. ख. चापि
9. क. ख. विशिष्टो
10. क. ख. चाचिरात्

स चापि ब्राह्मणश्रेष्ठः [1]सम्पश्यंस्तत्र तं शिशुम् ।
ततो विहस्य प्रोवाच कोशकारो निजां प्रियाम् ॥ २१

प्रिये त्ववश्य[2]मेकेन भाव्यं भूतेन साम्प्रतम् ।
कोऽपि चास्मान् वञ्चयितुं कुरूपी [3]भुवि संस्थितः ॥ २२

इत्युक्त्वा वचनं मन्त्री मन्त्रैस्तं राक्षसात्मजम् ।
बबन्धोल्लिख्य वसुधां कोशकारोऽथ पाणिना ॥ २३

एतस्मिन्नन्तरे प्राप्ता शूर्पाक्षी विप्रबालकम् ।
अन्तरिक्षगता भूमौ विससर्ज गृहान्तिके ॥ २४

तं क्षिप्तमात्रं जग्राह कोशकारो [4]निजात्मजम् ।
सा चाभ्येत्य ग्रहीतुं तं नाशकद्राक्षसी सुतम् ॥ २५

इतश्चेतश्च विभ्रष्टा सा भर्तार[5]मुपागता ।
कथयामास वृत्तान्तं सा द्विजात्मजकारणम् ॥ २६

एवं गतायां राक्षस्यां ब्राह्मणेन महात्मना ।
स्वराक्षसशिशू ब्रह्मन् भार्यायै च निवेदितौ ॥ २७

तौ तया वर्धितौ बालौ सञ्जातौ सप्तवार्षिकौ ।
पित्रा च कृतनामानौ [6]दिवाकरनिशाकरौ । २८

[7]ततश्चकार विप्रोऽसौ व्रतबन्धक्रियाः क्रमात् ।
[8]व्रतबन्धे कृते वेदं पपाठासौ दिवाकरः ॥ २९

निशाकरो जडतया न पपाठेति [9]च श्रुतम् ।
तं बान्धवाश्च पितरौ भ्राता च गुरवस्तथा ॥ ३०

---

1. क. ख. समपश्यत
2. क. ख. मेतेन
3. क. ख. बहु
4. क. ख. निजं सुतम्
5. क. ख. मुपागमत्
6. क. ख. निशाकरदिवाकरौ
7. क. ख. तयोः
8. अ. पुस्तके अर्धमिदं-नास्ति
9. क. ख. नः

[1]पर्यसीदंस्तदा ये च जना निलयवासिनः ।
ततस्स पित्रा [2]क्रुद्धेन क्षिप्तः कूपे तु निर्जले ॥ ३१

तस्योपरि शिलामे[3]काम पिधानं चकार ह ।
एवं क्षिप्तस्तथा कूपे बहुवर्षगणं स्थितः ॥ ३२

[4]तदा दशसु वर्षेषु समतीतेषु भार्गव ।
धर्मिष्ठा पिहितं कूपं विलोक्य शिलया ततः ॥ ३३

उच्चैः प्रोवाच केनेयं कूपोपरि शिला कृता ।
कूपान्तःस्थः स तां वाणीं श्रुत्वा मातुर्निशाकरः ॥ ३४

प्राह स्म दत्ता तातेन [5]कूपान्मातः शिला त्वियम् ।
सा तु भीताब्रवीत् [6]कोऽपि कूपान्तःस्थोऽ[7]द्भुतस्वरम् ॥ ३५

स प्राह तव पुत्रोऽस्मि निशाकर इति श्रुतः ।
तच्छ्रुत्वा तां [8]शिलां सुभ्रूः समुत्क्षिप्यान्यतोऽक्षिपत् ॥ ३६

स उत्तीर्य ततः [9]कूपान्मातुः पादाववन्दत ।
ततस्तमादाय सुतं धर्मिष्ठा पतिमेत्य [10]सा ॥ ३७

कथयामास तत् सर्वं चेष्टितं स्वसुतस्य च ।
ततो ह्यपृच्छद्विप्रोऽसौ किमिदं तात कारणम् ॥ ३८

नोक्तवान् यद्भवान् पूर्वं महत् कौतूहलं मम ।
तच्छ्रुत्वा वचनं धीमान् [11]कोशकारद्विजोत्तमम् ॥ ३९

प्राह पुत्रोऽद्भुतं वाक्यं मातरं च पुरः स्थिताम् ।
श्रूयतां कारणं तात येन मूकत्व[12]माश्रितम् ॥ ४०

---

1. क. ख. तेऽप्यनिन्दन् तथा चैव
2. क. ख. क्रोधेन
3. क. ख. कां पिधानार्थं
4. क. ख. ततो
5. क. ख. कोपात्
6. क. ख. कोऽसि
7. क. ख. द्रुतस्वरः
8. ख. तथा
9. क. ख. कोपात्
10. क. ख. च
11. क. ख. कोशकारं
12. क. ख. मागतः

[1]यस्माज्जडत्वमनघ तथैवान्ध्यं च चक्षुषः ।
पूर्वमासमहं [2]विप्रो मूले [3]बृन्दावनस्य तु ॥ ४१

वृषारूपस्य साधोर्हि मालागर्भसमुद्भवः ।
ततः पितापाठयन्मां शास्त्रं धर्मार्थकामदम् ॥ ४२

सोऽहं तात महाज्ञानी [4]परापरविशारदः ।
जातो मत्तश्च तेनाहं दुष्कर्माभिरतोऽभवम् ॥ ४३

विवेको नाशमगमन्मोहभाव उपागतः ।
मूढभावतया चाथ परदाररतोऽस्म्यहम् ॥ ४४

परदारे परार्थे च रतिर्मे [5]सर्वदाभवत् ।
परदाराभिमर्शित्वात्परार्थहरणादपि ॥ ४५

मृत्युना पीडितोऽत्यर्थं रौरवं नरकं गतः ।
तस्माद्वर्षसहस्रान्ते मुक्तः शिष्टे तदागसि ॥ ४६

अरण्ये निर्जने पाप[6]स्सम्भूतोऽहं मृगादनः ।
तत्रागतेन भूपेन [7]बद्धः पञ्जरगः [8]स्थितः ॥ ४७

[9]कृतः स्थितस्य भवने व्याघ्रत्वेऽपि महामते ।
शास्त्राणि प्रत्यभासन्त पूर्वाभ्यासेन [10]कर्म तत् ॥ ४८

ततो नृपतिशार्दूलो गदापाणिः कदाचन ।
एकवस्त्रपरीधानो नगरान्निर्ययौ बहिः ॥ ४९

तस्य भार्याजिता नाम रूपेणाप्रतिमा भुवि ।
सा निर्गते [11]भर्तरीयं ममान्तिकमुपागता ॥ ५०

---

1. क. ख. जडत्वञ्च तथा येन
2. क. ख. विप्रकुले
3. क. ख. बृन्दारकस्य
4. क. ख. परावर
5. क. ख. सा तदा
6. क. ख. सञ्जातो
7. क. ख. बद्ध्वा
8. क. ख. कृतः
9. क. ख. स्थितस्य तस्य
10. क. ख. कर्मणा
11. क. ख. भर्तरि च

तां दृष्ट्वा ववृधे [1]मन्युः पूर्वाभ्यासा[2]न्मनोभुवः ।
कन्दर्पसायकाविद्धस्ततोऽहमवदं [3]हि ताम् ॥ ५१

राजपुत्रि सुकल्याणि रूपयौवनशालिनि ।
चित्तं हरसि मे भीरु कोकिला ध्वनिना यथा ॥ ५२

सा मद्वचनमाकर्ण्य प्रोवाच तनुमध्यमा ।
कथं रंस्ये [4]त्वया व्याघ्र लोकोऽयं [5]परिपश्यति ॥ ५३

रात्रौ कवाट[6]मुद्घाट्य द्वौ वां रंस्यात्र लीलया ।
तामेवाहमवोचं नो कालक्षेपमहं क्षमे ॥ ५४

तस्मादुद्घाटय द्वारं मां बन्धाद्विनिमोचय ।
द्वारमुद्घाटयामास ततस्सा पीवरस्तनी ॥ ५५

उद्घाटिते ततो द्वारे निर्गतोऽहं बहिः क्षणात् ।
क्षणाच्च निगलादीनि [7]भिन्नानि च मया बलात् ॥ ५६

सा गृहीता च [8]युवतिर्भार्या रन्तुं यथेच्छया ।
तावद्दृष्टोऽस्मि नृपतेर्भृत्यैरतुलविक्रमैः ॥ ५७

शस्त्रहस्तैः सर्वगैश्च तैरहं निहतः क्षणात् ।
भूयो गतोऽहं नरकं परदारनिषेवणात् ॥ ५८

मुक्तो वर्षसहस्रान्ते [9]भूयोऽहं श्वेतगर्दभः ।
ब्राह्मणस्याग्नि[10]होत्रस्य गृहे बहुकलत्रिणः ॥ ५९

तत्रापि सर्वविज्ञानं प्रत्यभान्मे तथापि च ।
[11]उपवासः कृतश्चापि द्विजभार्याभिरादरात् ॥ ६०

---

1. क. ख. मह्यं
2. क. मनोभवः
3. क. ख. च.
4. क. ख. दिवा
5. क. ख. परिदृश्यते
6. क. मुत्पाट्य चावां
7. क. ख. छिन्नानि
8. क. ख. नृपतेर्भार्या
9. क. ख. जातो
10. क. ख. वेत्रस्य
11. क. ख. उपवाह्यः

एकदा परराष्ट्रीया भार्या तस्याग्रजन्मनः ।
विमतिर्नाम विख्याता गन्तुमैच्छद्गृहं पितुः ॥ ६१

तामुवाच पतिर्गच्छेत्यारुह्य श्वेतगर्दभम् ।
सा तन्वी तद्वचः श्रुत्वा बन्धनादवमुच्य माम् ॥ ६२

अधिरुह्य गता वेगादतिचञ्चलकुन्तला ।
ततोऽर्धपथि तन्वी सा मत्पृष्ठादवरुह्य च ॥ ६३

अवतीर्णा नदीं स्नातुं सुरूपा विमलांशुका ।
अतिकोमलसर्वाङ्गी तां दृष्ट्वाहमुपाद्रवम् ॥ ६४

[1]तदा चाभिद्रुतस्तूर्णं पतितोऽहं स्मरातुरः ।
दृष्टो भर्त्रानुशिष्टेन [2]क्रन्दंस्तदनुसारिणा ॥ ६५

तद्भयात्तां परित्यज्य प्रद्रुतो दक्षिणा[3]मुखम् ।
ततो बबन्ध मां सोऽपि शृङ्खलाभि[4]स्तदा मुने ॥ ६६

तत्रासक्तस्य षड्रात्रान्ममाभूज्जीवितक्षयः ।
गतोऽस्मि नरकं भूयस्तस्मान्मुक्तोऽभवं शुकः ॥ ६७

महारण्ये [5]तु सम्बध्य शबरेण महामुने ।
पञ्जरे क्षिप्य दत्तोऽहं वणिक्पुत्राय धीमते ॥ ६८

तेनाप्यन्तः[6]पुरे भूयो युवतीनां समीपतः ।
[7]निवेशितोऽहं विप्रेन्द्र कौतुकासक्तचेतसा ॥ ६९

तद्वासिन्यस्तरुण्यो मां पोषयन्ति फलादिभिः ।
कदाचित्पद्मपत्राक्षी वणिक्पुत्रप्रिया शुभा ॥ ७०

---

1. क. ख. तया चाभिहतः
2. क. ख. तूर्णं
3. क. ख. मुखः
4. क. ख. स्ततो
5. क. ख. तथा बद्धः
6. क. ख. पुरवरे
7. अस्य स्थाने क. ख. पुस्तकयोः 'शब्दशास्त्रं विदित्वैव दोषज्ञश्चेत्यवस्थितः' इति दृश्यते

नाम्ना चन्द्रवती सुभ्रूः [1]समुत्सार्याथ पञ्जरम् ।
मां [2]च जग्राह चार्वङ्गी कराभ्यां चारुहासिनी ॥ ७१

[3]चकारोरसि पीनाभ्यां स्तनाभ्यां सा हि मां [4]प्रियम् ।
[5]क्षतिं ततोऽहं कृतवांस्तस्या हारावलिं प्रति ॥ ७२

ततोऽहं पापसंयुक्तो मृतश्च तदनन्तरम् ।
[6]गतो हि नरकं भूयः प्रपन्नोऽस्मि सुदुर्मतिः ॥ ७३

तस्माच्चाहं वृषत्वं वै गतश्चण्डालपत्तने ।
स चैकदा मां शकटे नियोज्य स्वविलासिनीम् ॥ ७४

समारोप्य निजां भार्यां गन्तुं [7]धृतिमतीं वनम् ।
ततोऽग्रतस्स चण्डालो गतस्सा चास्य पृष्ठतः ॥ ७५

गायन्ती तत्स्वनं श्रुत्वा जातोऽहं व्यथितेन्द्रियः ।
पृष्ठतस्तु [8]समालोक्य विषयैर्विप्लुतस्तदा ॥ ७६

पुरतोऽभूवमज्ञात्वा [9]भग्नो गमनविक्रमात् ।
[10]योक्त्रे सुबद्ध [11]एवास्मि पञ्चत्वमगमं [12]तदा ॥ ७७

भूयो [13]निमग्नो नरके दशवर्षशतान्यपि ।
ततः परं तव गृहे जातो जातिमनुस्मरन् ॥ ७८

पूर्वाभ्यासेन शास्त्राणि [14]सर्वाणि प्रतिभान्ति मे ।
[15]ज्ञानवांस्तदहं ज्ञानं ज्ञापयिष्ये कथञ्चन ॥ ७९

पापानि घोर[16]रूपाणि मनसा कर्मणा गिरा ।
शुभं वाप्यशुभं वापि स्वाध्यायश्शास्त्रजीविका ॥ ८०

---

1. क. ख. समुत्पाट्य
2. क. ख. जग्राह सुचार्वङ्गी
3. क. ख. चकारोपरि
4. क. ख. प्रिया
5. क. ख. क्षतं
6. क. ख. ततोऽहं
7. क. च. धृतमतिः
8. ख. समारोप्य
9. क. ख. अग्रो
10. क. ख. योक्त्रे तु
11. क. ख. एवाहं
12. क. ख. ततः
13. क. ख. निमग्नाश्चानेक
14. क. ख. वचनं चागतं मम ।
15. क. ख. पुस्तकयोः 'तदहं ज्ञानविज्ञानी नाचरिष्ये कथञ्चन' इति पाठः
16. क. ख. कर्माणि

वञ्चनं च वधश्चापि पूर्वाभ्यासेन जायते ।
जातिं मे पूर्विकां स्मृत्वा जातो निर्वेद उत्तमः ॥
तदहं सर्वपापेभ्यो निवृत्तिं च करोम्यहम् ॥ ८१

अहं गमिष्ये शुभवर्तनाय
पापक्षयायाथ मुने वनान्तम् ।
दिवाकरं पुत्रममुं त्वदीयं
गार्हस्थ्यधर्मे विनियोजयस्व ॥ ८२

बलिः—

इत्येवमुक्त्वा स निशाकरस्तदा
प्रणम्य मूर्ध्ना पितरौ महर्षिः ।
जगाम पुण्यं सदनं मुरारेः
ख्यातं बदर्याश्रममाद्यमीड्यम् ॥ ८३

एवं पुराभ्यासबलेन पुंसो
भवन्ति [1]दानाध्ययनादिकानि ।
ज्ञानं तपो ब्रह्मचर्यं महर्षे
धर्मो महापातक[2]दावदाहः ॥ ८४

[3]विद्यास्तथैवाभ्यसतां हि पूर्वं
भवन्ति धर्मार्थयशांसि नाम ॥ ८५

सूतः—

इत्येवमुक्तवान् विप्राः शुक्रं प्रति महाबलिः ।
तस्मात्कर्म करोत्येव नृणां पूर्वं शुभाशुभम् ॥
एतद्विचार्य मतिमान् [4]सत्कर्मनिरतो भवेत् ॥ ८६

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे पूर्वकर्मसम्बन्धकथनं
नाम चतुर्थोऽध्यायः

---

1. ख. दारा
2. क. ख. तूल
3. इदं श्लोकार्धं अनन्तरश्लोकश्च अ. पुस्तके न स्तः ।
4. ख. सत्कर्मणि रतो

## ॥ पञ्चमोऽध्यायः ॥

### गार्हस्थ्यश्रैष्ठ्यप्रतिपादनम्

श्रीसूतः—

श्रूयतां भूसुरवरा गृहस्थाश्रममुत्तमम् ।
चतुर्णामाश्रमाणाञ्च [1]गृहस्थस्तु विशिष्यते ॥ १

पितरो मुनयो देवा भूतानि मनुजास्तथा ।
गृहस्थमुपजीवन्ति ततस्तृप्तिं प्रयान्ति च ॥ २

गृहस्थस्सर्वभूतानामाधारः परमो मतः ।
इति यच्छ्रूयते लोके तत्सत्यं न मृषा द्विजाः ॥ ३

कथामिमां प्रवक्ष्यामि गार्हस्थ्यश्रैष्ठ्यसूचनीम् ।
रुचिः प्रजापतिः पूर्वं निर्ममो निरहङ्कृतिः ॥ ४

यत्रास्त मितशायी च चचार पृथिवीमिमाम् ।
अनग्निमनिकेतं तमेकाहावसथाश्रयम् ॥ ५

[2]मुक्तसङ्गं तु सम्प्रेक्ष्य प्रोचुस्तं पितरो मुनिम् ।

पितरः—

वत्स कस्मात्त्वया पुण्यो न कृतो दारसङ्ग्रहः ॥ ६

स्वर्गापवर्गहेतुश्च सन्तत्युत्पत्तिकारणम् ।
गृही समस्तदेवानाम् [3]ऋषीणाञ्च तथार्हकः ॥ ७

[4]पितॄणामतिथीनां च [5]त्रीन् हि लोकानुपासते ।
स्वाहोच्चारणतो देवान् स्वधोच्चारणतः पितॄन् ॥ ८

[6]विभजन्नन्नदानेन भूतादीनतिथीनपि ।
स त्वमस्मादृणाद्विप्र बन्धमस्मादृणादपि ॥ ९

---

1. क. गृहस्थस्य
2. क. ख. विमुक्तसंङ्गं
3. क. ख. पितॄणाञ्च तथार्हणाम्
4. क. ख. ऋषीणां
5. क. ख. कुर्वन्
6. क. ख. विभजत्यन्न-

अवाप्नोषि मनुष्यार्थे भूतेभ्यश्च दिने दिने ।
अनुत्पाद्य सुतान् देवान[1]सन्तर्प्य पितॄंस्तथा ॥ १०

अकृत्वा विधिवद्दानं मौढयात्सुगतिमिच्छसि ।
क्लेशमेवाधिकं तत्र मन्यामोऽत्र भवेत्तव ॥ ११

मृतस्य नरकं तद्वत्क्लेश एवान्यजन्मनि ।

रुचिः—

परिग्रहोऽतिदुःखाय पापायाधोगतेस्तथा ॥ १२

भवत्यतो मया पूर्वं न कृतो दारसङ्ग्रहः ।
आत्मनस्संयमो योऽयं क्रियतेऽ[2]क्षिनियन्त्रणात् ॥ १३

मुक्तिहेतुश्च न भवत्यसावपि परिग्रहः ।
प्रक्षाल्यते ह्यनुदिनं यदात्मा निष्परिग्रहः ॥ १४

ममत्व[3]पङ्कलिप्तोऽपि चित्ताम्भोभिर्वरं [4]हि तत् ।
अनेकभवसंभूतकर्मपङ्काङ्कितो बुधैः ॥ १५

आत्मा सद्वासनातोयैः प्रक्षाल्यो नियतेन्द्रियैः ।

पितरः—

युक्तं प्रक्षालनं कर्तुमात्मनो नियतेन्द्रियैः ॥ १६

किन्न [5]लेपाय मार्गोऽयं यत्र त्वं पुत्र [6]वत्स्यसि ।
ऋणत्रयविनिर्मुक्तः पुरुषः खलु पूज्यते ॥ १७

[7]फलैस्तत्रापि भुज्येत पूर्वकर्म शुभाशुभैः ।
एवं बन्धो न भवति कुर्वतः कारणात्मकम् ॥ १८

न च बन्धाय तत्कर्म भवत्यनभिसंहितम् ।
[8]पूर्वकर्म कृतं भोगैः क्षीयतेऽहर्निशं तथा ॥ १९

---

1. क. ख. तर्प्य च
2. क. क्षनियन्त्रणम्
   ख. क्षनियन्त्रणात्
3. ख. पङ्कालिप्तो
4. क. हितम्
5. क. ख. लेपाय
6. ख. वर्तसे
7. क. ख. फलैस्तत्रोपभुञ्जेत
8. क. ख. यथा पूर्वं कृतो

सुखदुःखादिकं वत्स [1]पुण्यापुण्यात्मकं नृणाम् ।
एवं प्रक्षाल्यते प्राज्ञैः [2]आर्तिबन्धात्सुरक्ष्यते ॥ २०

न त्वेकमविवेकेन पातकं केन दह्यते ।

रुचिः—
अविद्या पठ्यते [3]वेदैः [4]कर्ममार्गः पितामहाः ॥ २१

[5]तत्कर्मणो मोहमार्गे भवन्तो योजयन्ति माम् ।

पितरः—
अविद्या सत्यमेवैतत् कर्म नैतन्मृषा वचः ॥ २२

किन्तु विद्यापरिप्राप्तौ हेतुः कर्म न संशयः ।
विहिताकरणात्पुंभिरसद्भिः क्रियते हि यः ॥ २३

संयमो मुक्तये नासौ [6]प्रच्युतोऽधोगतिप्रदः ।
[7]शयानीति कथं नु त्वमात्मानमवमन्यसे ॥ २४

विहिताकरणोद्भूतैः पापैस्त्वं तु विदह्यसे ।
तस्माद्वत्स कुरुष्व त्वं विधिवद्दारसङ्ग्रहम् ॥ २५

मा जन्म विफलं तेऽस्तु [8]इदं प्राप्य तु लौकिकम् ।

रुचिः—
वृद्धोऽहं सांप्रतं को मे पितरस्सम्प्रदास्यति ॥ २६

कन्यां तथा दरिद्राय दुष्करो दारसङ्ग्रहः ।

पितरः—
अस्माकं पतनं वत्स भवतश्चाप्यधोगतिः ॥ २७

भावि भूतं वर्तमानं नाभिनन्दसि नो वचः ।

सूतः—
इत्युक्त्वा पितरस्तस्य सहसादर्शनं ययुः ॥ २८

---

1. क. ख. कर्म पुण्यात्मकं
2. क. ख. आत्मा बन्धाच्च रक्ष्यते
3. क. ख. वेदे
4. अ. कर्ममार्ग पितामह
5. क. ख. तत्कथं कर्मणो मार्गे
6. ख. प्रत्युताधो
7. अत्र क. ख. पुस्तकयोः 'प्रक्षालयामीति कथं त्वमात्मानं तु मन्यसे' इति पाठः
8. क. ख. असम्प्राप्य

स तेन पितृवाक्येन सहसोद्विग्नमानसः ।
कन्याभिलाषी विप्रर्षिः परिबभ्राम मेदिनीम् ॥ २९

कन्यामलभमानोऽसौ [1]पितृवाक्यप्रचोदितः ।
चिन्तामवाप महतीं [2]स तदोद्विग्नमानसः ॥ ३०

किं करोमि क्व गच्छामि कथं मे दारसङ्ग्रहः ।
क्षिप्रं भवेन्मे पितॄणां [3]यदभ्युदय[4]कारणम् ॥ ३१

इति चिन्तयतस्तस्य मतिर्जाता महात्मनः ।
तपसाराधयाम्येनं ब्रह्माणं कमलोद्भवम् ॥ ३२

ततो वर्षशतं दिव्यं तपस्तेपे महातपाः ।
आराधनाय च तदा [5]परं नियममास्थितः ॥ ३३

ततस्सन्दर्शयामास निजरूपं पितामहः ।
उवाच [6]सुप्रसन्नोऽस्मि ब्रूहि यत्तेऽभिवाञ्छितम् ॥ ३४

ततोऽसौ प्रणिपत्याह ब्रह्माणं [7]जगतां पतिम् ।
पितॄणां वचनात्तेन यत्कर्तुमभिवाञ्छितम् ॥ ३५

[8]ब्रह्मा प्राह रुचिं तत्र श्रुत्वा तस्याभिवाञ्छितम् ।
प्रजापतिस्त्वं भविता स्रष्टव्या भवता प्रजाः ॥ ३६

सृष्ट्वा प्रजास्सुतान् विप्र समुत्पाद्य क्रियास्तथा ।
कृत्वा कृताधिकारस्तु ततस्सिद्धिमवाप्स्यसि ॥ ३७

स त्वं यथोक्तं पितृभिः कुरु दारपरिग्रहम् ।
कामं [9]त्वेनमभिध्यात्वा क्रियतां पितृपूजनम् ॥ ३८

[10]यथा च तुष्टाः पितरः प्रदास्यन्ति तवेप्सितम् ।
पत्नीं सुतांश्च सन्तुष्टाः किं न दद्युः पितामह ॥ ३९

---

1. क. ख. पितृवाक्याग्निदीपितः
2. क. ख. अतीवो-
3. ख. यदा-
4. क. ख. -कारकः
5. अ. पानीयं भूमिमास्थितः
6. क. ख. च
7. क. ख. जगतः
8. अ. पुस्तकेऽर्धमिदं नास्ति
9. क. ख. चेदमभिध्याय
10. क. ख. त एव

सूतः—

एवमुक्तं वचः श्रुत्वा ब्रह्मणोऽव्यक्तजन्मनः ।
नद्यां विविक्ते पुलिने चकार पितृतर्पणम् ॥ ४०

तुष्टाव च पितॄन् सर्वान् [1]वेदैर्नानाविधैस्तदा ।
एकाग्रः प्रयतो भूत्वा भक्तिनम्रात्मको रुचिः ॥ ४१

ततस्तस्य पुरस्ताद्धि तेजसो राशिरुच्छ्रितः ।
प्रादुर्बभूव सहसा गगनव्याप्तिकारकः ॥ ४२

तं दृष्ट्वा[2]सौ महत्तेजः [3]समाच्छाद्य स्थितं जगत् ।
जानुभ्यामवनीं गत्वा तत्तेजस्[4]तु तदा रुचिः ॥ ४३

[5]तत्तेजसस्समुत्तस्थुः पितरो दीप्ततेजसः ।
निवेदितञ्च यत्नेन पुष्पगन्धानुलेपनम् ॥ ४४

तद्भूषितानथ [6]स तांन् ददर्श च पितॄन् स्थितान् ।
प्रणिपत्य [7]मुहुर्भक्त्या पुनरेव कृताञ्जलिः ॥ ४५

नमस्तुभ्यं नमस्तुभ्यमित्याह [8]पुनरादृतः ।
[9]ततः प्रसन्नाः पितरस्तमूचुर्मुनिपुङ्गवम् ॥ ४६

वरं वृणीष्वेति स तानुवा[10]च नतकन्धरः ।
सांप्रतं सर्गकर्तृत्वमादिष्टं ब्रह्मणा मम ॥ ४७

सोऽहं पत्नीमभीप्सामि धन्यां दिव्यां प्रजावतीम् ।

पितरः—

[11]अत्रैव पत्नी भवतो भवत्वतिमनोहरा ॥ ४८

तस्याश्च पुत्रो भविता भवतो मुनिसत्तम ।
मन्वन्तराधिपो धीमांस्त्वन्नाम्नैवोपलक्षितः ॥ ४९

---

1. क. ख. स्तवैः
2. क. ख. सुमहत्
3. ख. समासाद्य
4. क. ख. स्तुतवान्
5. क. ख. तत्तेजश्चि
6. अ. क. सुतान्
7. क. ख. मुनि
8. क. ख. पुनरग्रतः
9. क. ख. प्रसन्नाः पितरस्तत्र
10. क. ख. चानत-
11. क. ख. अद्यैव सद्यः पत्नी ते

रुचे रौच्य इति ख्यातिं स यास्यति जगत्त्रये ।
तस्यापि बहवः पुत्रा भविष्यन्ति महाबलाः ॥ ५०

त्वं [1]नः प्रजापतिर्भूत्वा [2]प्रजाः सृष्ट्वा [3]चतुर्विधाः ।
चीर्णाधिकारो धर्मज्ञस्ततस्सिद्धिमवाप्स्यसि ॥ ५१

ततस्तस्मान्नदीमध्यात् समुत्तस्थौ मनोरमा ।
[4]प्रमेधा नाम तन्वङ्गी तत्समीपे वराप्सराः ॥ ५२

सा चोवाच महात्मानं रुचिं [5]मधुरया गिरा ।
अतीव रूपसम्पन्ना मत्सुता रुचिराम्बरा ॥ ५३

जाता वरुणपुत्रेण पुष्करेण महात्मना ।
तां गृहाण मया दत्तां भार्यार्थं वरवर्णिनीम् ॥ ५४

[6]मनुर्महामनुस्तस्यां समुत्पत्स्यति ते सुतः ।
तथेति [7]मनसा प्रोक्ते तस्मात्तोयाद्वपुष्मती ॥ ५५

उज्जहार ततः कन्यां मालिनीं नाम नामतः ।
नद्याश्च पुलिने रम्ये स मुनिर्मुनिसत्तमः ॥ ५६

जग्राह विधिवत् पाणिं समानाय्य महामुनीन् ।
तस्यां तस्य सुतो जज्ञे महावीर्यो महामतिः ॥ ५७

रौच्योऽभवन्महातेजा विख्यातो जगतीतले ।
रुचिर्गार्हस्थ्यमाश्रित्य [8]तारयामास वै पितॄन् ॥ ५८

तस्मात्सर्वप्रयत्नेन गार्हस्थ्यं समुपाश्रयेत् ।
यो ब्रह्मचारी गार्हस्थ्यं समुल्लङ्घ्याश्रमान्तरम् ॥ ५९

---

1. क. ख. च
2. क. ख. प्रजां
3. क. ख. चतुर्विधाम्
4. क, ख, प्रम्लोचना च
5. क. ख. समधुराक्षरम्
6. क. ख. मति
7. क. ख. रुचिना प्रोक्ता
8. क. ख. रमयामास

श्रयते यदि मूढात्मा [1]तत्सर्वं न स विन्दति ।
[2]यथा हि पक्षिणो वृक्षमाश्रयन्ति [3]दिनक्षये ॥
तथाश्रयन्ति भूतानि क्षुधितानि गृहाधिपम् ॥ ६०

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे गार्हस्थ्यश्रैष्ठ्यप्रतिपादनं नाम पञ्चमोऽध्यायः

---

1. क. ख. तत्फलं
2. क. ख. यथेह
3. क. ख. दिनागमं

## ॥ षष्ठोऽध्यायः ॥

### पतिव्रताधर्मकथनम्

सूतः—

इदं रहस्यं परमं श्रूयतामृषिसत्तमाः ।
पातिव्रत्यात्परो धर्मो नारीणां नेह विद्यते ॥ १

न व्रतेनोपवासेन धर्मेण विविधेन च ।
नारी स्वर्गमवाप्नोति [1]प्राप्नोति पतिपूजनात् ॥ २

तिष्ठत्यव्याहतोन्मेषा गृहे यस्य पतिव्रता ।
सोऽपि प्राप्नोति परमां कीर्तिं स्वर्गञ्च विन्दति ॥ ३

अस्मिन्नर्थे पुरावृत्त[2]मितिहासं वदामि वः ।
प्रोक्तं वाक्पतिना पूर्वमगस्त्याय महात्मने ॥ ४

वाक्पतिः—

श्रृण्वगस्त्य महाभाग लोपामुद्राप्रियङ्कर ।
धन्योऽसि कृतकृत्योऽसि मान्योऽसि महतामपि ॥ ५

प्रत्याश्रमं [3]प्रतिनगं प्रत्यरण्यं तपोधनाः ।
किं न सन्ति मुनिश्रेष्ठ काचिदन्यैव ते स्थितिः ॥ ६

तपोलक्ष्मीस्त्वयीहास्ति ब्राह्मं तेजस्त्वयि स्थितम् ।
पुण्यलक्ष्मीस्त्वयि परा त्वय्यौदार्यं मनस्त्वयि ॥ ७

पतिव्रतेयं कल्याणी लोपामुद्रा सधर्मिणी ।
तवाङ्गच्छायया तुल्या यत्कथा पुण्यकारिणी ॥ ८

पतिव्रतास्वरुन्धत्या सावित्र्याप्यनसूयया ।
शाण्डिल्यया च सत्या च लक्ष्म्या च शतरूपया ॥ ९

---

1. क. ख. सुखेन
2. क. ख, माख्यानं कथयामि वः
3. क, ख, प्रतिगृहं

मेनया च सुनीत्या च संज्ञया स्वाहया तथा ।
यथैषा वर्ण्यते श्रेष्ठा न तथान्येति निश्चितम् ॥ १०

भुङ्क्ते भुक्ते त्वयि मुने [1]आसीने त्वयि तिष्ठति ।
विनिद्रिते च निद्राति प्रथमं [2]प्रतिबुध्यते ॥ ११

अनलङ्कृतमात्मानं तव नादर्शयत् क्वचित् ।
कार्यार्थं प्रोषिते क्वापि सर्वमण्डनवर्जिता ॥ १२

न च ते नाम [3]गृह्णीयात्तवायुष्यविवृद्धये ।
पुरुषान्तरनामापि न गृह्णाति कदाचन ॥ १३

आक्रुष्टापि [4]च नाक्रोशेत्ताडितापि प्रसीदति ।
[5]इदं कुरु कृतं स्वामिन् मन्यतामिति वक्ति च ॥ १४

आहूता गृहकार्याणि त्यक्त्वागच्छति [6]सादरम् ।
किमर्थं व्याहृता नाथ सुप्रसादो विधीयताम् ॥ १५

न चिरं तिष्ठति द्वारि न द्वारमुपसेवते ।
[7]अनुमत्या विना किञ्चित् कस्मैचिन्न ददात्यपि ॥ १६

पूजोपकरणं सर्वमनुक्ता साधयेत् स्वयम् ।
नियमोदकबर्हींषि पत्र[8]पुष्पाक्षतादिकम् ॥ १७

प्रतीक्षमाणा[9]वसरं यथाकालोचितं हि यत् ।
तदुपस्थापयेत् सर्वमनुद्विग्नातिहृष्टवत् ॥ १८

सेवते भर्तुरुच्छिष्टं मृष्टमन्नं फलादिकम् ।
महाप्रसाद इत्युक्त्वा पतिदत्तं प्रतीच्छति ॥ १९

अविभज्य न चाश्नीयाद्देवपित्रतिथिष्वपि ।
परिचारकवर्गेषु [10]गोषु भिक्षुकुलेषु च ॥ २०

---

1. ख. कदासीति वनं गते?
2. ख. परिबुध्यति
3. क. ख. गृह्णाति
4. क. ख. न चा-
5. अ. पुस्तके इदमर्धं न दृश्यते
6. क. ख. सत्वरम्
7. क. ख. अदापितं
8. क. ख. -पुष्पफलादिकम्
9. ख. -वसथं
10. क, ख, गोभिक्षुककुलेष्वपि

संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।
कुर्यात्त्वयाननुज्ञाता नोपवासव्रतादिकम् ॥ २१

दूरतो वर्जयेदेषा समाजोत्सवदर्शनम् ।
न गच्छेत्तीर्थयात्रादि विवाहप्रेक्षणादिषु ॥ २२

सुखसुप्तं सुखासीनं रममाणं यदृच्छया ।
आतुरेष्वपि कार्येषु पतिं नोत्थापयेत् क्वचित् ॥ २३

स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत् ।
स्ववाक्यं [1]वाचयेन्नापि यावत् स्नाता [2]विशुध्यति ॥ २४

सुस्नाता भर्तृवदनं [3]पश्येदन्यस्य न क्वचित् ।
अथ वा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥ २५

हरिद्रां कुङ्कुमञ्चैव सिन्दूरं कज्जलं तथा ।
कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं शुभम् ॥ २६

केशसंस्कारकबरीकरकर्णविभूषणम् ।
भर्तुरायुष्यमिच्छन्ती दूषयेन्न पतिव्रता ॥ २७

न रजक्या [4]तथोदक्या तथा श्रमणया [5]तथा ।
न च दुर्भगया क्वापि सखित्वं कुरुते [6]क्वचित् ॥ २८

[7]भर्तृविद्वेषिणीं भार्यां नैषा सम्भाषते क्वचित् ।
नैकाकिनी क्वाचिद्भूयान्न नग्ना स्नाति च क्वचित् ॥ २९

नोलूखले न मुसले न वर्धन्यां दृषद्यपि ।
न यन्त्रके न देहल्यां सती चोपविशेत् क्वचित् ॥ ३०

विना व्यवायसमयं प्रागल्भ्यं न क्वचिच्चरेत् ।
यत्र यत्र रुचिर्भर्तुस्तत्र प्रेमवती सदा ॥ ३१

---

1. क. ख. श्रावयेत्
2. क. ख. न शुध्यति
3. क. ख. वीक्षते
4. क. ख. च नोदक्या
5. क. ख. न च
6. क. ख. सती
7. अ. पुस्तके 29, 30 -तमौ श्लोकौ न वर्तेते

इदमेव व्रतं स्त्रीणामयमेको [1]विधिः परः ।
इयमेका देवपूजा भर्तुर्वाक्यं न लङ्घयेत् ॥ ३२

[2]क्लीबं वा दुरवस्थं वा व्याधितं वृद्धमेव वा ।
सुस्थितं दुःस्थितं वापि पतिमेकं न लङ्घयेत् ॥ ३३

हृष्टा हृष्टे विषण्णा स्याद्विषण्णेऽस्मिन् प्रिया सदा ।
[3]एवंरूपा भवेत्पुण्या सम्पत्सु च विपत्सु च ॥ ३४

[4]सर्पिर्लवणतैलादिक्षयेऽपि च पतिव्रता ।
पतिं नास्तीति न ब्रूयादायासेषु न योजयेत् ॥ ३५

तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् ।
शङ्करादपि विष्णोर्वा पतिरेकोऽधिकः स्त्रियः ॥ ३६

व्रतोपवासनियमं पतिमुल्लङ्घ्य याचरेत् ।
आयुष्यं हरते भर्तुर्मृता निरयमृच्छति ॥ ३७

[5]अन्यत्र भर्तुरन्येभ्यो नाचरेदुपदेशकम् ।
तथा चेदसती सा स्यान्नरकं याति रौरवम् ॥ ३८

उक्ता प्रत्युत्तरं दद्याद्या नारी क्रोधतत्परा ।
सरमा जायते [6]पश्चात् सृगाली निर्जने वने ॥ ३९

[7]स्त्रीणां हि परमश्चैको नियमस्समुदाहृतः ।
अभ्यर्च्य चरणौ भर्तुर्भोक्तव्यं कृत[8]निश्चया ॥ ४०

उच्चासनं न सेवेत न व्रजेत् परवेश्मसु ।
न त्रपाकरवाक्यानि वक्तव्यानि कदाचन ॥ ४१

अपवादो न कर्तव्यः कलहं दूरतस्त्यजेत् ।
गुरूणां सन्निधौ क्वापि नोच्चैर्ब्रूयान्न वा हसेत् ॥ ४२

---

1. क. ख. वृषः
2. अ. पुस्तकेऽयं श्लोको नास्ति
3. क. ख. एकरूपा
4. अ. पुस्तके 35, 36 -तमौ श्लोकौ न स्तः
5. क. ख. पुस्तकयोः अयं श्लोको नास्ति
6. क. ख. ग्रामे
7. इदमर्धं अ. पुस्तके न दृश्यते
8. क. ख. निश्चयम्

[1]या भर्तारं परित्यज्यं रहश्चरति दुर्मतिः ।
उलूकी जायते क्रूरा वृक्षकोटरशायिनी ॥ ४३

ताडिता ताडितं चेच्छेत्सा व्याघ्री पृषदंशिका ।
कटाक्षयति यान्यं वै केकराक्षी तु सा भवेत् ॥ ४४

या भर्तारं समुत्सृज्य मृष्टमश्नाति केवलम् ।
ग्रामे वा सूकरी भूयाद्वल्गुली वा श्वविड्भुजा ॥ ४५

या हुङ्कृत्य प्रियं ब्रूते सा मूका जायते खलु ।
या सपत्नीं सदेर्ष्येत दुर्भगा स्यात् पुनः पुनः ॥ ४६

दृष्टिं विलुप्य भर्तुर्या कश्चिदन्यं समीक्षते ।
काणा च विमुखी चापि [2]अथ वा जायते पुनः ॥ ४७

बाह्यादायान्तमालोक्य त्वरितागमनासनैः ।
ताम्बूलैर्व्यजनैश्चैव पादसंवाहनादिभिः ॥ ४८

[3]तथैव चारुवचनैः क्लेशसंशोधनैः परैः ।
या प्रियं प्रीणयेत् [4]प्रीत्या त्रिलोकी प्रीणिता तया ॥ ४९

मितं ददाति हि पिता मितं [5]माता मितं सुतः ।
अमितस्य [6]हि दातारं भर्तारं का न पूजयेत् ॥ ५०

भर्ता देवो गुरुर्भर्ता धर्म[7]तीर्थानि तानि च ।
तस्मात् सर्वं परित्यज्य पतिमेकं समर्चयेत् ॥ ५१

जीवहीनो यथा देहः क्षणादशुचितां व्रजेत् ।
भर्तृहीना तथा योषित् सुस्नाता ह्यशुचिस्सदा ॥ ५२

अमङ्गलेभ्यस्सर्वेभ्यो विधवा ह्यत्यमङ्गलम् ।
विधवादर्शनात् सिद्धिर्जन्तो[8]र्जातु न जायते ॥ ५३

---

1. अ. पुस्तके 43, 44-तमौ श्लोकौ 45 पूर्वार्धश्च नोपलभ्यन्ते
2. क. ख. कुरूपी चापि जायते
3. क. ख. तथैवाचार-
4. क. ख. प्रीता
5. क. ख. भ्राता
6. क. ख. प्रदातारं
7. क. ख. तीर्थव्रतानि
8. क. ख. -र्यांवुः

विहाय मातरञ्चैकां सर्वमङ्गलवर्जिताम् ।
तदाशिषमपि प्राज्ञस्त्यजेदाशीविषोपमाम् ॥ ५४

कन्यां विवाहसमये वाचयेयुरिति द्विजाः ।
भर्तुस्सहचरी भूयात् जीवतोऽजीवतोऽपि वा ॥ ५५

भर्त्रा सहैव यातव्या देहवच्छायया स्त्रिया ।
चन्द्रमा ज्योत्स्नया यद्वत् विद्युत्वान् विद्युता यथा ॥ ५६

[1]अनुगच्छति भर्तारं गृहात्पितृवनं मुदा ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयः ॥ ५७

व्यालग्राही यथा व्यालं बिलादुद्धरते बलात् ।
एवमुत्क्रम्य [2]दूतेभ्यः पतिं स्वर्गं नयेत्सती ॥ ५८

यमदूताः पलायन्ते सतीमालोक्य दूरतः ।
अपि दुष्कृतकर्माणं समुत्सृज्य च तत्पतिम् ॥ ५९

[3]न तथा बिभिमो वह्नेर्न तथा विद्युतो यथा ।
आपतन्तीं समालोक्य वयं दूताः पतिव्रताम् ॥ ६०

तपन[4]स्तप्यते मन्दं दहनोऽपि [5]न दह्यते ।
कम्पन्ते सर्वतेजांसि [6]दृष्ट्वैव हि पतिव्रताम् ॥ ६१

यावत् स्वलोमसङ्ख्या[7]स्ते तावत्कोट्ययुतानि च ।
भर्त्रा स्वर्ग[8]फलं भुङ्क्ते रममाणा पतिव्रता ॥ ६२

धन्या सा जननी लोके धन्योऽसौ [9]जनकस्तथा ।
[10]धन्यस्स च पतिः श्रीमान् येषां गेहे पतिव्रता ॥ ६३

पितृवंश्या मातृवंश्याः पतिवंश्यास्त्रयस्त्रयः ।
पतिव्रतायाः पुण्येन स्वर्गसौख्यानि भुञ्जते ॥ ६४

---

1. क. ख. अनुव्रजन्ती
2. क. ख. पूयेभ्यः
3. अ.. पुस्तके श्लोकोऽयं नोपलभ्यते
4. क. ख. स्तप्यतेऽत्यन्तं
5. क. ख. च
6. क. ख. दृष्ट्वा पातिव्रतं महः
7. क. ख. -स्ति
8. क. ख. सुखं
9. ख. जनकः पुनः
10. ख. धन्यश्चासौ

शीलभङ्गेन दुर्वृत्ताः पातयन्ति कुलत्रयम् ।
पितुर्मातुस्तथा पत्युरिहामुत्र च [1]दुःखदाः ॥ ६५

[2]पतिव्रतायाश्चरणौ यत्र यत्र स्पृशेद्द्रुतम् ।
तत्रेति भूमिर्मन्येत नात्र भारोऽस्मि पावनी ॥ ६६

बिभ्यत्पतिव्रतास्पर्शं कुरुते भानुमानपि ।
सोमो गन्धवहश्चापि स्वपवित्राय नान्यथा ॥ ६७

आपः पतिव्रतास्पर्शमभिलष्यन्ति सर्वदा ।
अद्य जाड्य[3]स्य नाशो नो जातास्त्व[4]द्य स्म पावनाः ॥ ६८

गृहे गृहे न किं नार्यो रूपलावण्यगर्विताः ।
परं विश्वेशभक्त्यैव लभ्यते स्त्री पतिव्रता ॥ ६९

भार्या मूलं गृहस्थस्य भार्या मूलं सुखस्य च ।
भार्या धर्मफलावाप्तौ भार्या सन्तानवृद्धये ॥ ७०

परलोकस्त्वयं लोको जीयते भार्यया [5]स्वयम् ।
देवपित्रतिथीनां हि नाभार्यः कर्म चार्हति ॥ ७१

गृहस्थस्स हि विज्ञेयो यस्य गेहे पतिव्रता ।
[6]प्रसिष्यते प्रतिपदं राक्षस्या जरया [7]यदा ॥ ७२

यथा गङ्गावगाहेन शरीरं पावनं [8]भवेत् ।
[9]तथा पतिव्रतादृष्ट्या शुभया पावनं महत् ॥ ७३

अनुयाति न भर्तारं यदि दैवात्कथञ्चन ।
तत्रापि शीलं [10]तं रक्षेच्छीलभङ्गात्पतत्यधः ॥ ७४

---

1. क. ख. दुःखिताः
2. अ. पुस्तके श्लोकोऽयं नास्ति
3. क. ख. विनाशो
4. ख. द्यान्यपावनाः
5. क. ख. द्वयम्
6. क. ख. ग्रस्यतेऽन्यः
7. क. ख. ऽथवा
8. क. ख. महत्
9. अ. पुस्तकेऽर्धमिदं नास्ति
10. क. ख. संरक्ष्यं

तद्वैगुण्यात्तथा स्वर्गात्पतिः पतति नान्यथा ।
[1]तस्मात्पिता च माता च [2]भ्राता वेश्म कुलं तथा ॥ ७५

पत्यौ [3]मृतेऽथ वा योषिद्वैधव्यं पालयेत्क्वचित् ।
सा पुनः प्राप्य भर्तारं स्वर्गे भोगान्समश्नुते ॥ ७६

विधवाकबरीबन्धो भर्तुर्बन्धाय जायते ।
शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥ ७७

एकाहारस्सदा कार्यो न द्वितीयः कदाचन ।
त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा ॥ ७८

मासोपवासं वा कुर्याच्चान्द्रायणमथापि वा ।
कृच्छ्रं पराकं वा कुर्यात्तप्तकृच्छ्रमथापि वा ॥ ७९

[4]यवान्नैर्वा फलाहारैः शाकाहारैः पयो[5]व्रतैः ।
प्राणयात्रां च कुर्वीत यावत्प्राणः स्वयं व्रजेत् ॥ ८०

पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् ।
तस्माद् भूशयनं कार्यं पतिसौख्य[6]परीप्सया ॥ ८१

नैवाङ्गोद्वर्तनं कार्यं स्त्रिया विधवया क्वचित् ।
[7]उपास्ते यं विधिं भर्ता यं देवं पूजयेत्सदा ॥ ८२

भर्ता व्रतं यच्चरति विधवानां तदुच्यते ।
विहाय भर्तुराचारं चरेदन्यं पतेदधः ॥ ८३

गन्धद्रव्यस्य सम्भोगो नैव कार्यस्तथा क्वचित् ।
तर्पणं प्रत्यहं कार्यं भर्तुः कुशतिलोदकैः ॥ ८४

तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम् ।
[8]विष्णोर्नमस्क्रिया कार्या पतिबुद्ध्या न चान्यथा ॥ ८५

---

1. क. ख. तस्याः पिता
2. क. ख. भ्रातृवर्गस्तथैव च
3. क. ख. मृतेऽपि या
4. ख. या वन्यै
5. क. ख. घृतैः
6. क. ख. समीहया
7. अ. पुस्तके इदमर्धमनन्तरश्लोकस्तदनन्तरश्लोकपूर्वार्धञ्च नोपलभ्यते
8. क. ख. विष्णोस्तु पूजनं कार्यं

पतिमेव सदा ध्यायेद्विष्णुरूपधरं परम् ।
यद्यदिष्टतमं लोके यच्च पत्युस्समीहितम् ॥ ८६

तत्तद्गुणवते देयं पति[1]प्रीणनकाम्यया ।
एवङ्कार्यापरा नित्यं विधवापि शुभा मता ॥ ८७

[2]एवं धर्मपरा युक्ता विधवापि पतिव्रता ।
पतिलोकानवाप्नोति न भवेत्क्वापि [3]दुःखिता ॥ ८८

न गङ्गया तया भेदो या नारी पतिदेवता ।
[4]रमादेवीसमा साक्षात्तस्मात्तां पूजयेत्सदा ॥ ८९

बृहस्पतिः—

गङ्गास्नानफलञ्चैत[5]ज्जातं तु तव दर्शनात् ।
लोपामुद्रे [6]जगन्मातर्भर्तृपादाम्बुजेक्षणे ॥ ९०

इति स्तुत्वा महाभागां राजपुत्रीं पतिव्रताम् ।
प्रणम्य च [7]मुनिं प्राह [8]मुनिस्सर्वार्थकोविदः ॥ ९१

प्रणवस्त्वं श्रुतिरियं क्षमैषा त्वं स्वयंतपः ।
सत्क्रियेयं फलं त्वं हि धन्योऽसीति महामुने ॥ ९२

इदं पातिव्रतं तेजो [9]ब्राह्मं तेजो भवान्परम् ।
[10]तवाप्येतत्तपस्तेजः किमसाध्यतमं तव ॥ ९३

सूतः—

एवं वाचां पतिर्धीमानगस्त्याय महात्मने ।
श्लाघ्यं पतिव्रताधर्ममत्रोचत्सर्वसिद्धिदम् ॥ ९४

---

1. क. ख. -प्रणय-
2. अ. पुस्तकेऽर्धमिदं नोपलभ्यते
3. क. ख. दुःखभाक्
4. क. उमाशिवमया ख. उमाशिवसमा
5. क. ख.-च्चजातं तव दर्शनम्
6. ख. महामातः
7. क. ख. गुरुः
8. क. ख. मुनिं स-
9. क. ख. ब्रह्मतेजो
10. अ. पुस्तकेऽर्धमिदं नास्ति

इमं पतिव्रताधर्मं श्रुत्वा स्त्री पुरुषोऽपि वा ।
पापकञ्चुकमुत्सृज्य शक्रलोकं प्रयास्यति ॥ ९५

तस्मात्पतिव्रताधर्मं प्रवदन्त्युत्तमोत्तमम् ।
यस्य श्रवणमात्रेण सुखी भवति [1]सर्वदा ॥ ९६

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे पतिव्रताधर्म-
कथनं नाम षष्ठोऽध्यायः

1. क. ख. नित्यदा

## ॥ सप्तमोऽध्यायः ॥

### अतिथिसत्कारकथनम्

ऋषयः—

केन मृत्युर्गृहस्थेन कर्मणा निर्जितः पुरा ।
एतत्सर्वं समाचक्ष्व [1]भगवन् रोमहर्षण ॥ १

सूतः—

[2]गृहस्थस्य परो धर्मः शस्यतेऽतिथिपूजनम् ।
तेन धर्मेण मृत्युः स्याज्जित एव न संशयः ॥ २

अत्राप्युदाहरन्तीममितिहासं [3]पुरातनम् ।
माहिष्मत्यामभूद्राजा [4]द्युतिमान्नीतिविश्रुतः ॥ ३

दुर्योधनस्तस्य पुत्रस्सङ्ग्रामे दुर्जयस्तथा ।
न तस्य विषये कश्चित् कृपणो नापि दुर्गतः ॥ ४

स दक्षिणो मधुरवागनसूयुर्जितेन्द्रियः ।
[5]धर्माचारोऽनृशंसश्च विक्रान्तश्चाविकत्थनः ॥ ५

यज्वा वदान्यो मेधावी ब्रह्मण्यस्सत्यसङ्गरः ।
तं नर्मदा देवनदी पुण्यशीतजला शिवा ॥ ६

चकमे पुरुषश्रेष्ठं स्वेन भावेन [6]सुव्रतम् ।
तस्य जज्ञे तदा नद्यां कन्या राजीवलोचना ॥ ७
नाम्ना सुदर्शनाख्याता रूपेण च सुदर्शना ।
तादृग्रूपा न नारीषु जातरूपा कदाचन ॥ ८

तामग्निश्चकमे साक्षाद्राजकन्यां सुदर्शनाम् ।
सा चाग्निशरणे राज्ञः शुश्रूषाकृतनिश्चया ॥ ९

---

1. क. ख. रोमहर्षण तत्त्वतः
2. क. ख. गृहस्थस्य हि धर्मोऽन्यः सम्प्राप्तोऽतिथिपूजनात्
3. ख. वदामि वः
4. क. द्युतिमान्नाम ख. श्रुतिमान्नाम
5. क. ख. धर्मात्मा चानृशंसश्च
6. क. ख. सुव्रता

नियुक्ता पितृसन्देशाद्वह्निमाराधयत्तदा ।
तस्या मनोहरं रूपं दृष्ट्वा देवो हुताशनः ॥ १०

मन्मथेन समाविष्टः पत्नीत्वे[1]नावृणोन्मिथः ।

अग्निः—

भज मामनवद्याङ्गि कामात्कमललोचने ॥ ११

रम्भोरु मृगशावाक्षि पूर्णचन्द्रनिभानने ।
एवमुक्ता च सुदती पावकेन महात्मना ॥ १२

[2]ईषदाकम्पिहृदया [3]व्यथिता वाक्यमब्रवीत् ।
ननु नाम कुलीनानां कन्यकानां विशेषतः ॥ १३

माता पिता प्रभवतः प्रदाने बान्धवाश्च [4]हि ।
पाणिग्रहणमन्त्रैश्च [5]हुत्वा चैव विभावसौ ॥ १४

सतां मध्ये विसृष्टायाः कन्यायाः शरणं पतिः ।
साहं नात्मवशा देव पितरं वरयस्व मे ॥ १५

एवमुक्त[6]स्तदा वह्निर्यज्ञे च [7]वितते सति ।
विप्ररूपी हुतवहो नृपं कन्यामयाचत ॥ १६

न तु राजा प्रदानाय तस्मै भावमकल्पयत् ।
दरिद्रश्चासवर्णश्च ममायमिति पार्थिवः ॥ १७

अथ दीक्षामुपेतस्य तस्य [8]यज्ञे महात्मनः ।
आहूतं हवनार्थाय वेद्यामग्निः प्रणश्यति ॥ १८

ततस्स भ्रान्तो नृपतिर्भृशं [9]प्रव्यथितेन्द्रियः ।
अमानुषो विकारोऽयमिति चिन्तापरोऽभवत् ॥ १९

---

1. क ख. यतते मिथः
2. क. ख. ईषदाकम्प-
3. क. ख. व्रीडिता
4. क. ख. ये
5. क. ख. हुते
6. क. ख. -स्तया
7. क. ख. विहिते
8. क. ख. सत्रे
9. ख. स-

अथ ऋक्सामयजुषां पारगैर्ब्रह्मवादिभिः ।
वेदतत्त्वार्थकुशलैः स्तुति[1]स्तोत्र[2]पुरस्करैः ॥ २०

गुह्येषु नामधेयेषु [3]कीर्तितेष्वथ पावकः ।
स्वरूपं दीप्तिमत्कृत्वा तानाह ब्रह्मणोत्तमान् ॥ २१

वरये ह्यात्मनोऽर्थाय दुर्योधनसुता[4]महम् ।
[5]प्रत्याख्यानपरो राजा तेनादर्शनतां गतः ॥ २२

ततस्ते काल्यमुत्थाय तस्मै राज्ञे न्यवेदयन् ।
ब्राह्मणा विस्मिताः सर्वे यदुक्तं चित्रभानुना ॥ २३

ततस्स राजा तच्छ्रुत्वा वचनं ब्रह्मवादिनाम् ।
[6]अवाप परमं हर्षं तथेति प्राह बुद्धिमान् ॥ २४

अयाचत ततः शुल्कं भगवन्तं विभावसुम् ।
सान्निध्यमिह ते नित्यं चित्रभानो भवेदिति ॥ २५

तमाह भगवानग्निरेवमस्त्विति पार्थिवम् ।
ततस्तां समलङ्कृत्य कन्यामहतवाससम् ॥ २६

ददौ दुर्योधनो राजा पावकाय महात्मने ।
प्रतिजग्राह चाग्निस्तां राजपुत्रीं सुदर्शनाम् ॥ २७

विधिना वेददृष्टेन वसोर्धारामिवाध्वरे ।
तस्यां समभवत्पुत्रो नाम्नाग्नेयस्सुदर्शनः ॥ २८

[7]शिशुरेवाभ्यगात्सर्वं स च ब्रह्म सनातनम् ।
अथौघवान्नाम नृपः कन्यामोघवतीं ददौ ॥ २९

सुदर्शनाय विदुषे भार्यार्थे देवरूपिणीम् ।
स गृहस्थाश्रमरतस्तया सह सुदर्शनः ॥ ३०

---

1. ख. स्तोभ
2. क. ख. -पुरस्कृतः
3. क. ख. कीर्त्यमानेषु
4. क. ख. मिति
5. क. ख. पुस्तकयोरिदं नास्ति
6. क. ख. ख. अवाप्य
7. अ. पुस्तके 29, 30, तमौ श्लोकौ न दृश्येते

कुरुक्षेत्रे [1]वसन् विप्र ओघवत्या समन्वितः ।
[2]गृहस्थो विजयिष्यामि मृत्यु[3]मित्याह स प्रभुः ॥ ३१

प्रतिज्ञामकरोद्धीमान् दीप्ततेजा महामुनिः ।
तामथौघवतीं पत्नीं प्रत्युवाच सुदर्शनः ॥ ३२

अतिथेः प्रतिकूलं ते न कर्तव्यं कदाचन ।
येन येन च तुष्येत नित्यमेवातिथिस्तथा ॥ ३३

अप्यात्मनः प्रदानेन न ते कार्या विचारणा ।
एतद्[4]वृत्तं हृदि सदा मम संप्रति वर्तते ॥ ३४

गृहस्थानां तु सुश्रोणि नातिथेर्विद्यते परम् ।
निष्क्रान्ते मयि कल्याणि तथा सन्निहितेऽनघे ॥ ३५

अतिथिर्नावमन्तव्यः प्रमाणं यद्यहं तव ।
तमब्रवीदोघवती ततो मूर्ध्नि कृताञ्जलिः ॥ ३६

प्रतिजग्राह [5]नियममतिथीनाञ्च सत्कृता ।
जिगीषमाणं तु तथा सदा मृत्युस्सुदर्शनम् ॥ ३७

रन्ध्रान्वेषी चान्वगमद्यत्र [6]विप्रस्सुदर्शनः ।
इध्मार्थं तु गते तस्मिन्नग्नि[7]होत्रे सुदर्शने ॥ ३८

अतिथिर्ब्राह्मणः श्रीमांस्तामाहौघवतीं तदा ।
आतिथ्यं भोक्तुमिच्छामि [8]त्वय्यद्य वरवर्णिनि ॥ ३९

इत्युक्ता तेन विप्रेण राजपुत्री यशस्विनी ।
[9]विधिना प्रतिजग्राह वेदोक्तेन विशां पते ॥ ४०

आसनं चैव पाद्यञ्च तस्मै दत्त्वा द्विजातये ।
प्रोवाचौघवती विप्रं किं वाञ्छा किं ददाम्यहम् ॥ ४१

---

1. क. ख. अवसत्
2. क. ख. गृहस्थस्सन् विजेष्यामि
3. ख. मित्येव स प्रभो
4. क. ख. व्रतं
5. क, ख. नियता त्वतिथीनां तु सत्कृतिम्
6. क. ख. यत्र सु
7. क. ख. पुत्रे
8. क. ख. त्वयाद्य
9. क. ख. पुस्तकयोः इदमर्धमनन्तरश्च श्लोको नोपलभ्यते

तामब्रवीत्तदा विप्रो राजपुत्रीं सुदर्शनाम् ।
यदि प्रमाणं धर्मस्ते गृहस्थाश्रम[1]धर्मतः ॥ ४२

प्रदानेनात्मनो भद्रे कर्तुमर्हसि मे प्रियम् ।
तया संमान्यमानोऽन्यैः [2]परं नैतत् प्रियं तथा ॥ ४३

सा तु राजसुता स्मृत्वा भर्तुर्वचनमादृता ।
तथेति लज्जमाना सा तमुवाच द्विजर्षभम् ॥ ४४

ततो रहस्स विप्रर्षि[3]स्तयैवोपविवेश ह ।
अथ चेध्मं समादाय स पावकिरुपागमत् ॥ ४५

मृत्युना रौद्रभावेन नित्यं बन्धुरिवान्वितः ।
ततः स्वाश्रममागम्य स पावकसुतस्तदा ॥ ४६

[4]स तामुवाचौघवतीं क्वासि यातेति चासकृत् ।
तस्मै प्रतिवचस्सा तु भर्त्रे न प्रददौ तदा ॥ ४७

उटजस्थस्तु तं विप्रः प्रत्युवाच सुदर्शनम् ।
अतिथिं विद्धि संप्राप्तं पावके ब्राह्मणं च माम् ॥ ४८

आत्मप्रदानविधिना [5]ममार्चनपरा सती ।
अनुरूपं यदत्रान्यत्तद्भवान् वक्तुमर्हति ॥ ४९

सूतः—

कूटमुद्गरहस्त[6]स्तु मृत्युश्चै[7]व समन्वियात् ।
[8]भग्नप्रतिज्ञस्तत्रैनं वधिष्यामीति चिन्तयन् ॥ ५०

सुदर्शनस्तु मनसा कर्मणा चक्षुषा गिरा ।
त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिदम् ॥ ५१

गृहस्थस्य तु धर्मोऽग्र्यः संप्राप्तेऽतिथिपूजनात् ।
अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति ॥ ५२

---

1. ख. -संमतः
2. ख. वन्यैर्नैच्छत्प्रियं तदा
3. क. ख. स्सा चैवोप-
4. क. ख. तामाजुहावोघवतीं
5. क. ख. मामर्चयति सुव्रता
6. क. ख. स्त
7. क. ख. -नं
8. क. ख. हीनप्रतिज्ञमत्रैनं

नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः ।
धाता प्रजापतिः शक्रो वह्निर्वसुगणो यमः ॥ ५३

[1]प्रपूज्यातिथिमेवैते भुञ्जते ते द्विजोत्तम ।
[2]बुद्धिरात्मा मनः कालो दिशश्चैतास्तथा दश ॥ ५४

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चकम् ।
सुकृतं दुष्कृतं चापि नित्यं पश्यन्ति देहिनाम् ॥ ५५

तेन सत्येन मां देवाः पालयन्तु [3]दहन्त्वघम् ।
प्राणाश्च मम दाराश्च यच्चान्यद्विद्यते वसु ॥ ५६

अतिथिभ्यो मया देयमिति मे व्रतमाहितम् ।
ततो नादस्समभवत् नैतन्मिथ्येति सर्वतः ॥ ५७

उटजात्तु ततस्तस्माद्विनिष्क्रम्य [4]ततो द्विजः ।
वपुषा खञ्च भूमिञ्च व्याप्य [5]वायुं व्यवस्थितः ॥ ५८

उवाच चैनं धर्मज्ञं पूर्वमामन्त्र्य पावकिम् ।
धर्मोऽहमस्मि भद्रं ते जिज्ञासार्थं तवानघ ॥ ५९

प्राप्तस्सत्त्वं च ते ज्ञात्वा प्रीतिर्हि परमा त्वयि ।
विजितश्च त्वया मृत्युरेष त्वामनुगच्छति ॥ ६०

रन्ध्रान्वेषी तव सदा त्वया चैव वशीकृतः ।
पतिव्रतामिमां विद्धि पातिव्रत्यगुणैरपि ॥ ६१

अधृष्या सर्व[6]भूतानां तथा [7]सा नान्यथा भवेत् ।
अनया सह लोकांश्च गतस्त्वं तपसार्जितान् ॥ ६२

अनेनैव च देहेन लोकांस्त्वमपि पश्यसि ।
निर्जितश्च त्वया मृत्यु[8]रथैश्वर्यं तवोत्तमम ॥ ६३

---

1. क. ख. प्रविश्यातिथिमेवैते भुञ्जत्येनं द्विजोत्तमम्
2. क. ख. पुस्तकयोः इतः आरभ्य प्राणाश्चेति श्लोकपर्यन्तं श्लोकक्रमे व्यत्यासो दृश्यते
3. क. ख. दहन्तु वा
4. क. ख. स वै
5. क. ख. वायुरिव स्थितः
6. क. ख. -भूतैर्हि
7. क. ख. तन्नान्यथा
8. क. ख. रैश्वर्यं च

गृहस्थधर्मेणानेन कामक्रोधौ च [1]तौ जितौ ।
मृत्युरात्मा च लोकाश्च जिता भूतानि पञ्च च ॥ ६४

इत्युक्त्वा भगवान् धर्मो यथादृष्टो जगाम ह ।
सोऽपि गार्हस्थ्यधर्मेण मृत्युं जित्वा दुरासदम् ॥ ६५

सशरीरो [2]ऽगमत्स्वर्गं सपुत्रपशुबान्धवः ।
तस्माद्गृहाश्रमस्थानां नान्यदैवतमस्ति वै ॥ ६६

ऋतेऽतिथिं हि विप्रेन्द्रास्सत्यमेव ब्रवीमि वः ।
अतिथिः पूजितो यद्धि मनसा ध्यायते शुभम् ॥ ६७

न तत्क्रतुशतेनापि [3]लभते नात्र संशयः ।
अज्ञातकुलनामानं तत्काले समुपस्थितम् ॥ ६८

बुभुक्षुमागतं शान्तं याचमानमकिञ्चनम् ।
ब्राह्मणं प्राहुरतिथिं संपूज्यः शक्तितो [4]बुधैः ॥ ६९

न पृच्छेद्गोत्रचरणं न स्वाध्यायं [5]तपः श्रुतम् ।
शोभनाशोभनाकारं तं मन्येत प्रजापतिम् ॥ ७०

[6]पात्रं चातिथिमासाद्य शीघ्रं यो न च पूजयेत् ।
क्षुदत्तं क्षुद्धुतं वापि क्षपयेत न [7]चार्पितः ॥

तस्मात्पूज्यतमो नित्यमतिथिस्सर्वदा द्विजैः ॥ ७१

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे अतिथिसत्कारकथनं
नाम सप्तमोऽध्यायः

---

1. क. ख. ते
2. क. ख. गतः
3. क. ख. लभ्यते
4. क. ख. द्विजैः
5. क. ख. नं च
6. क. ख. काले त्वतिथि-
7. ख. चार्चितः

## ॥ अष्टमोऽध्यायः ॥

### पञ्चमहायज्ञकथनम्

सूतः—

कथयामि मुनिश्रेष्ठाः पञ्चयज्ञप्रशंसनम् ।
धरण्यै कथितं पूर्वं वराहेण महात्मना ॥ १

धरणी—

पञ्चसूना गृहस्थस्य वर्तन्तेऽहरहस्तथा ।
खण्डनी पेषणी चुल्ली जलकुम्भी ह्युपस्करः ॥ २

एतानि वाहयन् विप्रो [1]बाध्यते वै मुहुर्मुहुः ।
तेभ्यः कथं विमुच्येत तन्मे विस्तरतो वद ॥ ३

श्रीवराहः—

पुरा पञ्च महायज्ञाः कथिता ब्रह्मणा[2]नघ ।
ते कर्तव्यास्सदा विप्रैः पञ्चसूना[3]पनुत्तये ॥ ४

ब्रह्मयज्ञो देवयज्ञः पितृयज्ञस्तथैव च ।
भूतयज्ञो नृयज्ञश्च पञ्च यज्ञाः प्रकीर्तिताः ॥ ५

पञ्च यज्ञांस्तु यो मोहान्न करोति [4]गृहाश्रमी ।
तस्य नायं न [5]परश्च लोको भवति धर्मतः ॥ ६

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि ते ।
आसीत्पुरा वसुर्भूपो धर्मनिष्ठः प्रतापवान् ॥ ७

कर्मकाण्डेन देवेशं प्रभुं नारायणं हरिम् ।
तोषयामास राजेन्द्रस्तदभेदेन भूपतिः ॥ ८

ततः कालेन महता तस्य राज्ञो मतिः किल ।
निवृत्ता राजभोगेभ्यो द्वन्द्वस्यान्तमियेष सः ॥ ९

---

1. क. ख. वध्यते
2. क. ख. तदा
3. क. ख. विपत्तये
4. क. ख. विमूढधीः
5. क. ख. च परो

ततः पुत्रं विवस्वन्तं ज्येष्ठं पुत्रशतस्य च ।
अभिषिच्य स्वके राज्ये पुष्करं तीर्थ[1]मभ्यगात् ॥ १०

तत्र गत्वा वसुर्भूपः स्वशरीरमशोषयत् ।
[2]पुण्डरीकाक्षपाराख्यं जजाप स्तोत्रमुत्तमम् ॥ ११

जपतस्तस्य वपुषो मूर्तिमान् कश्चिदुद्गतः ।
रक्ताक्षो ह्रस्वकायश्च नीलाञ्जिघनसंनिभः ॥ १२

उवाच प्राञ्जलिर्भूत्वा किं करोमीति भूमिपम् ।

राजा—

[3]कानि किं कार्यमथ [4]भो कस्मादागतवानसि ॥ १३

एतन्मे कथय व्याध एतदिच्छामि वेदितुम् ।

व्याधः—

पूर्वं कलियुगे राजन् राजा त्वं दक्षिणापथे ॥ १४

[5]पौण्ड्रवंशोद्भवः श्रीमान् जनस्थाने विचक्षणः ।
स कदाचिद्भवान् वीरस्तुरगैः [6]परिसेवितः ॥ १५

अरण्यमागतो हन्तुं श्वापदान् हि विशेषतः ।
तत्र त्वया सकामेन मृगवेषधरो मुनिः ॥ १६

दण्डायुधेन दूरात्तु पातितो धरणीतले ।
तं दृष्ट्वा निहतं भूप क्षुभितेन्द्रियमानसः ॥ १७

गृहं गतस्त[7]तो यस्य कस्यचित्कथितं [8]न तु ।
ब्रह्महत्या[9]भयग्रस्तचित्तेनैतद्विचिन्तितम् ॥ १८

धर्मं करोमि शान्त्यर्थं मुच्येयं [10]येन पातकात् ।
ततस्त्वया महाराज सकृन्नाराय[11]णः प्रभुः ॥ १९

---

1. ख. मन्वगात्
2. अ. पुस्तके इदमर्धमनन्तरश्च श्लोको न वर्तते
3. क. ख. कोऽसि
4. क. ख. वा
5. क. ख. पाण्ड्य-
6. क. ख. परिवारितः
7. क. ख. तोऽन्यस्य
8. ख. त्वया
9. ख. भयाद्ग्रस्त-
10. क. ख. तेन
11. क. ख. -णं प्रभुम्

सञ्जि[1]न्त्य द्वादशी शुद्धा [2]पुण्या राजन्नुपोषिता ।
गौर्दत्ता विधिना सद्यो मृतोऽस्म्युदरशूलतः ॥ २०

अभुक्त्वा द्वादशीमेवं स्वर्गलोकं गतस्तदा ।
अहं च तव देहस्थस्सर्वं जानामि [3]चाक्षमः ॥ २१

तावद्विष्णोस्तु पुरुषैः किङ्करैर्मुसलैर्हतः ।
ततस्ते रोमकूपस्थः स्वर्गस्थ[4]स्य महीपते ॥ २२

तस्मिन् [5]काले च निर्वृत्ते रात्रिकल्पे च सत्तम ।
इदानीमादि[6]वृक्षात्तु [7]कृतायां नृपसत्तम ॥ २३

सम्भूतस्त्वं महाराज राज्ञः [8]सुमनसो गृहे ।
यज्ञैरिष्टं [9]त्वया सत्रैर्दानैश्च विविधैरपि ॥ २४

न चाहं [10]तैरवगतो विष्णुस्मरणवर्जितैः ।
इदानीं पठितं स्तोत्रं विष्णोस्तेन प्रभावतः ॥ २५

[11]निर्गतोऽहं पुमान् जातो व्याधरूपो नृपोत्तम ।
एतच्छ्रुत्वा प्राह राजा परं विस्मयमागतः ॥ २६

राजा—

स्मारितोऽस्मि त्वया व्याध यथा [12]जन्मान्तरं गतम् ।
तथा त्वं मत्प्रसादेन धर्मव्याधो भविष्यसि ॥ २७

एवमुक्त्वा [13]ततो राजा विमानवरमास्थितः ।
[14]वरेण तपसा योगमवापाशेष[15]रूपकम् ॥ २८

---

1. क. ख. न्त्यैकादशी
2. क. ख. पुरा
3. क. ख. चाक्षयः
4. क. ख. -स्यापि भूपते
5. क. ख. कल्पेऽपि
6. क. ख. सृष्टौ तु
7. क. ख. कृते नृपातसत्तम
8. अ. सुमनसा ग्रही
9. क. ख. -त्वयानेकैः
10. क. ख. तैश्च वशगो
11. क. ख. विष्णोरेहं
12. क. ख. जन्मान्तरां गतिम्
13. क. ख. तदा
14. क. ख. परेण तेजसा
15. क. ख. धारितः

वसोश्शरीरादुत्पन्नो व्याधस्तु बहु[1]वार्षिकः ।
मृगमेकं कुटुम्बार्थे हत्वा वनचरं ततः ॥ २९

[2]भक्त्या नित्यं हुताशानां प्रीणनं कुरुते सदा ।
मिथिलायां वरारोहे सदा पर्वणि पर्वणि ॥ ३०

पितॄणां कुरुते श्राद्धं स्वाचारेण विचक्षणः ।
एवं तु वसतस्तस्य धर्मबुद्धेर्महात्मनः ॥ ३१

पुत्रस्त्वर्जुनको नाम बभूवार्जुनकी सुता ।
तस्या यौवनकाले तु चिन्तयामास धर्मवित् ॥ ३२

[3]कन्येयं दीयते [4]कस्य [5]कोऽस्या योग्यश्च वै धवः ।
इति चिन्तयतस्तस्य महान् कालस्समत्यगात् ॥ ३३

मतङ्गो नाम मतिमान् बभूव [6]तपतां वरः ।
पुत्रः प्रसन्ननामाभूत्तस्य शास्त्र[7]विदां वरः ॥ ३४

धर्मव्याधः [8]प्रसन्नस्य कन्यां चार्जुनकीं [9]ददौ ।
सा च श्वशुरयोर्भर्तुः शुश्रूषणपराभवत् ॥ ३५

अथ कालेन महता कन्यकार्जुनकी शुभा ।
उक्ता श्वश्वा तथा पुत्रि जीव[10]घातुस्त्वमीदृशी ॥ ३६

[11]जानासि हि तपः कर्तुं भर्तुराराधनं तथा ।
[12]इत्थमल्पापराधेन भर्त्सिता सा शुचिस्मिता ॥ ३७

एतज्ज्ञात्वा पिता तस्य मतङ्गस्य गृहं ययौ ।
मतङ्गश्चासनाद्यैस्तं पूजयित्वेदमब्रवीत् ॥ ३८

---

1. क. ख. वार्षिकम्
2. क. ख. भृत्यातिथिहुताशानां
3. क. ख. कस्येयं
4. क. ख. कन्या
5. क. ख. कः स्यात्
6. क. ख. व्रतिनां
7. क. ख. विशारदः
8. क. ख. प्रदात्तस्य
9. क. ख. तदा
10. क. ख. हन्तुः
11. क. ख. न जानासि तपश्चर्तुं
12. ख. इत्थं स्वल्पा-

[1]किं मयानघ कृत्यं ते वद [2]त्वं तत्करोम्यहम् ।

धर्मव्याधः—

अहं व्याधो जीवघाती त्वं तु लोके ह्यहिंसकः ॥ ३९

भोजनं किञ्चिदिच्छामि भोक्तुं चैतन्यवर्जितम् ।
कौतूहलेन तेनाहमागतो भवतो गृहम् ॥ ४०

एवमुक्तो मतङ्गोऽपि शूर्पं गोधूमपूरितम् ।
अपरं व्रीहिभिः पूर्णं तस्मै शूर्पमुपाहरत् ॥ ४१

दृष्ट्वा[3]व्रीहिस गोधूमान् समुत्थाय वरासनात् ।
स्वगृहं गन्तुमारब्धो मातङ्गेन निवारितः ॥ ४२

किमर्थं गन्तुमारब्धं त्वया वद महामते ।
याचयित्वा स्वयं चान्नं किमर्थं नात्र भुज्यते ॥ ४३

धर्मव्याधः—

अचैतन्यं यदि गृहे विद्यतेऽन्नं सुसंस्कृतम् ।
तदानीमस्मि भोक्ताहमेते हि [4]खलु जन्तवः ॥ ४४

ब्रह्मणा तु पुरा सृष्टा ओषध्यो [5]वीरुधस्तथा ।
यज्ञार्थं न तु भूतानां [6]भक्ष्यमित्येव हि श्रुतिः ॥ ४५

पूर्वं पञ्च महायज्ञा ब्रह्मणा निर्मितास्तथा ।
[7]एतद्व्रते जङ्गमान्नं स्थावरान्नं च शुध्यति ॥ ४६

अन्यथा व्रीहयो ह्येते [8]एकैका मृगपक्षिणः ।
मन्तव्या दातृभोक्तॄणां वृथा मांसं तु तत्स्मृतम् ॥ ४७

[9]यथा ते दुहिता दत्ता पुत्रार्थे देवरूपिणी ।
सा च स्वद्भार्यया प्रोक्ता जीवघातिसुतेति च ॥ ४८

---

1. क. ख. किमागमनकृत्यं
2. ख. ख. तत्तु
3. क. ख. व्रीहीन्
4. क. ख. लघु
5. क. ख. पशुवीरुधः
6. क. ख. भक्ष्या इत्येव
7. क. ख. एतत्कृते जगन्नाथं
8. क. ख एकैक-
9. क. ख. मया

तदर्थमागतोऽहं ते गृहं प्रतिसमीक्षितुम् ।
आचारं देवपूजां च अतिथीनां च पूजनम् ॥ ४९

एतेषामेक[1]मत्रैव पर्वण्यपि न [2]दृश्यते ।
त्वद्गृहेऽहं तु वचसा धर्मव्याधोऽभवं [3]त्वसौ ॥ ५०

अहमेकं कुटुम्बार्थे [4]हन्म्यारण्यपशुं दिने ।
तं चातिथिभ्यस्संस्कृत्य दत्त्वा भुञ्जामि सानुगः ॥ ५१

सहस्रशः कोटिशश्च जीवान् हत्वा दिने दिने ।
भुञ्जसे यज्ञ[5]रहितं स्वकुटुम्बेन [6]संयुतम् ॥ ५२

अथेदृशस्य पापस्य कोऽन्नं [7]भुङ्क्ते तु सत्पुमान् ।
तत्ते पापं महज्जातं प्रायश्चित्तं कुरुष्व ह ॥ ५३

एवमुक्त्वा समुत्थाय [8]वेगान्नारीः शशाप ह ।
मा स्नुषाभिस्समं [9]श्वश्र्वा विश्वासो भवतु क्वचित् ॥ ५४

मा च स्नुषा [10]कदाचित्तां श्वश्रूमि[11]च्छेत जीवितुम् ।
एवमुक्त्वा गतो व्याधः स्वगृहं प्रति [12]धारिणीम् ॥ ५५

अतः पञ्च महायज्ञान् यो वा न कुरुते नरः ।
स लोके जीवघाती स्यात् [13]सूनैश्चाद्यापि बाध्यते ॥ ५६

श्रीसूतः—

इति [14]भूमिस्समाकर्ण्य वराहस्य मुदान्विता ।
तस्मादेव सदा कुर्यात्पञ्चयज्ञान् गृहाश्रमी ॥
त[15] एव धर्मानखिलान् [16]प्राप्नुवन्ति न संशयः ॥ ५७

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे पञ्चमहायज्ञकथनं नामाष्टमोऽध्यायः

---

1. क. ख. अप्यद्य
2. क. ख. विद्यते
3. क. ख. वसोः
4. अ. धर्मारण्यपशुं
5. क. ख. रहितः
6. क. ख. संयुतः
7. क. ख. भुङ्क्तेऽत्र
8. क. ख. कोपान्नारीः
9. क. ख. श्वश्रूविश्वासो
10. क. ख. कदाचिच्च
11. क. ख मिच्छेच्च
12. ख. धारिणि
13. ख. ख. सूनादोषैश्च
14. क. ख. भूर्गिरमाकर्ण्य
15. क. ख. तैरेव
16. क. ख. प्राप्नोति

## ॥ नवमोऽध्यायः ॥

### आर्जवकथनम्

सूतः—

आर्जवं वः प्रवक्ष्यामि सर्वधर्मोत्तमोत्तमम् ।
पार्वत्यै कथितं पूर्वं देवदेवेन शम्भुना ॥ १

उमा—

आर्जवेन कृतो धर्मः फलस्यप्रतिमं फलम् ।
यथैवेशान मे ब्रूहि सर्वधर्मोपदेशकम् ॥ २

शिवः—

पृच्छसे मां यदनघे धरणीधरजेऽव्यये ।
तदहं चारुपद्माक्षि कथयिष्यामि ते शृणु ॥ ३

[1]ब्रह्मण्यो ब्राह्मणो ह्यासी[2]त्तथैवासीद्बहुश्रुतः ।
शुचि[3]र्दर्पाशुचिर्नाम अग्निहोत्रपरायणः ॥ ४

[4]अग्निहोत्रेण मन्त्रेण जुहुते मन्त्रवर्जितः ।
गायत्र्या जुहुते सोऽग्निपार्जवेन समन्वितः ॥ ५

[5]सदैवाद्येन भावेन पश्यत्यर्चयते [6]स च ।
ब्रह्मक्षत्रियविट्छूद्रान् [7]ऋजुभावेन पश्यति ॥ ६

तस्य त्वेवं व्रतं देवि [8]पुष्करं परिपालने ।
अनर्घ्यं [9]नाश्यादतिथीन् मामनर्घ्य च भामिनि ॥ ७

आर्जवेनाम्बुजाभाक्षि भजते ह्यार्जवं द्विजः ।
[10]बहून्ययुतवर्षाणि तस्यार्जवपरस्य च ॥ ८

---

1. क. ख. ब्राह्मणो
2. क. -त्र चैवा
3. क. ख. दयारुचि-
4. क. ख. अग्निहोत्रं न
5. क. ख. सदवान्येन
6. क. ख. न च
7. क. ख. तेन भावेन
8. क. ख. दुष्करं
9. क. ख. नाश्नात्यतिथीन्
10. क. ख. बहून्यतीयुः

कदाचिच्छीतवर्षोत्थतुषारै[1]र्व्यावृतं दिनम् ।
तस्मिन् दिने तु गिरिजे शीतवर्षभयार्दितः ॥ ९

अपूर्वश्चाध्वगः कश्चिदतिथि[2]र्नागतो गृहम् ।
अग्निहोत्रं स हुत्वा तु तस्मिन्नह्नि ममेश्वरि ॥ १०

अतिथेरागमं काङ्क्षन्नन[3]श्नंस्तत्र तिष्ठति ।
नायात्यतिथिरित्येवं प्रततापं सुदुःखितः ॥ ११

तस्याग्नयस्तुष्यमाणास्तेनार्जवसमाधिना ।
आमन्त्रयित्वा तेऽन्योन्यं प्रियमूचुरिदं वचः ॥ १२

अस्मानयं द्विजवरो यथा धर्मार्जत्रान्वितः ।
सायं प्रातश्च होमैश्च चातुर्मास्येष्टिभिः स्तवैः ॥ १३

[4]अर्चयामास हव्यानि हुत्वा [5]तैर्हृष्टमानसः ।
अतिथिव्रत एवैष अतिथिर्नागतो गृहम् ॥ १४

[6]न क्षमत्याशु विप्रेन्द्रो भवामातिथयो वयम् ।
[7]मन्त्रवत्सु हुताशेषु अग्निहोत्र[8]परो हि सः ॥ १५

काङ्क्षमाणोऽतिथेर्लाभं सर्वतः [9]पश्यति द्विजः ।
अथ तत्रागतं धर्मं रूपं चाण्डालमाश्रितम् ॥ १६

[10]रूक्षाङ्गं रूक्षवर्णं च जलक्लिन्नाम्बरोरसम् ।
[11]रक्ताक्षं क्षुधयाविष्टं शीतवर्षानिलार्दितम् ॥ १७

न्यग्रोधमूलोपगतं चण्डालं पश्यति द्विजः ।
स तं हि कुत्सितं दृष्ट्वा चण्डालमतिथिं द्विजः ॥ १८

---

1. क. ख. रावृतं
2. अ. र्वागतो
3. क. ख. श्नन् समातिष्ठत
4. क. ख. तर्पयामास
5. क. ख. वै हृष्ट
6. क. ख. विनङ्क्ष्यत्याशु
7. क. ख. मन्त्रयत्सु
8. क. ख. परं हितं
9. क. ख. घुष्यति
10. क. ख. पुस्तकयोरस्य श्लोकस्य पूर्वोत्तरार्धे व्यत्यस्ते दृश्येते
11. अ. अक्षरं

[1]कालः श्रेष्ठोऽयमित्युक्त्वा [2]तमातिथ्यादपूजयत् ।
सम्पूज्यमाने विधिना चातुर्वर्ण्यजुगुप्सितम् ॥ १९

असावातिथ्यमकरोद्[3]द्विजः शुद्धान्तरात्मना ।
स तु पत्रपुटे गृह्य ब्रह्मोदनमिवामृतम् ॥ २०

न्यग्रोधमूलमागम्य बुभुजे [4]तत् क्षुधान्वितः ।
स तु शुद्धोदनं भुक्त्वा अमृतेन च संमितम् ॥ २१

आर्जवेन च सन्तुष्टः स चण्डालो ह्यचिन्तयत् ।
कुत्सितं चापि मामेष [5]सदारोऽमृतसंनिभम् ॥ २२

सत्कृत्य ब्राह्मणमिव प्रादादन्नं द्विजोत्तमः ।
अस्यातिथ्यस्य किं तस्य फलं यत्सदृशं भवेत् ॥ २३

येनाहं ब्राह्मणस्यास्य प्रियार्थं [6]समुपाहरे ।
सुवर्णं वा हिरण्यं वा भोज्यं वा यत्नतः कृतम् ॥ २४

नास्मत्सकाशाद्वाञ्छन्ति भूदेवा देवसंनिभाः ।
यथा ह्ययं विजानाति मुहूर्ताद्यानमुत्तमम् ॥ २५

एनं तथा नयिष्यामि ब्रह्मलोकमनुत्तमम् ।
[7]मलकायस्स चण्डाल इति सञ्चिन्त्य सत्वरः ॥ २६

अग्नेर्याच्ञापदेशेन अग्निहोत्रगृहं गतः ।
स तं ब्राह्मणमासीनमग्निहोत्राददूरतः ॥ २७

चण्डालः प्राह वै गत्वा तदा वचनमुत्तमम् ।
शीतवातार्दितश्चाहमातपेन विवर्जितः ॥ २८

---

1. क. ख. काले
2. अ. तमातिथ्येन पूजयत्
3. क. ख. विशुद्धेनान्तरामना
4. क. ख. स
5. ख. ददानो
6. क. ख. यदुपाहरे
7. क. ख. पुस्तकयोः इदमर्धं 27, 28 तमौ श्लोकौ च नोपलभ्यन्ते

अग्निमिच्छामि [1]दातव्यस्त्वयाग्निर्वह्नितेजसा ।

शिवः—

चण्डालस्य कपालेऽ[2]दात् तस्याग्निं [3]स्नेहभाग्द्विजः ॥ २९

आरणेयमदाद्भूमौ अग्निहोत्री महामनाः ।
[4]स आदाय कपालस्थं तमग्निं ह्यग्निहोत्रिणः ॥ ३०

[5]चण्डालस्साञ्जलिर्वाक्यमित्युवाच महामनाः ।
कुत्सितो नाम जात्यापि अनर्हस्सर्वकर्मसु ॥ ३१

तवार्जवा[6]त्तथा प्राप्तः [7]सत्कृतश्च विशेषतः ।
आर्जवेन हि येनैव ममातिथ्यं कृतं त्वया ॥ ३२

तेनैव चार्जवेनैवं मम वाक्यं निशामय ।
अमेध्यात्काञ्चनं ग्राह्यं मद्विधाच्च सुभाषितम् ॥ ३३

अग्निहोत्रस्य [8]वै देयामस्यामाहुतिमुद्धृताम् ।
ममोक्त्या पातयस्वाग्नौ ततः सिद्धिमवाप्स्यसि ॥ ३४

चण्डालेन [9]तथा ह्युक्तमग्निहोत्री तथार्जवी ।
विवेश वासाय गृहं सोऽपि न्यग्रोधमाविशत् ॥ ३५

[10]न्यग्रोधवासिचण्डालः कृत्वा [11]काण्डेऽग्निमुत्तमम् ।
शीतवातभयं घोरं निस्ती[12]र्य दिवसोदितम् ॥ ३६

अग्निहोत्रगृहं प्राप्तश्चण्डालोऽपि [13]तथा पुनः ।
चण्डाले [14]च गते गेहं जपन् ब्राह्मणपुङ्गवः ॥ ३७

---

1. क. ख. वै देय-
2. क. ख. -थ
3. क. ख. सोऽग्नि-
4. क. समाधाय
5. क. ख. चण्डालरूपोऽग्नि-
6. क. ख. -दथ
7. क. ख. सत्कारश्च
8. क. ख. या वेला तस्यामाहुतिमध्यताम्
9. क. ख. तथेत्युक्तोऽग्नि-
10. क. न्यग्रोधवासी
11. क. ख. काष्ठाग्नि-
12. क. ख. -र्यार्णवसन्निभम्
13. क. ख. दिनागमे
14. क. ख. चागते मन्त्रं प्रजपन् ब्राह्मणोत्तमः

आहुतिश्च [1]स्रुवा गृह्य होतुकामस्तदाभवत् ।
[2]तदा रौद्रे मुहूर्ते तु वर्तमाने सुदारुणे ॥ ३८

आपातयाहुतिमिति चण्डालो द्विजमब्रवीत् ।
आहूतिस्तेन विप्रेण तद्वाक्यसमनन्तरम् ॥ ३९

[3]क्षिप्ता वागम्बरे चासीत् साधु साध्विति [4]तत्क्षणात् ।
ततः शङ्खमृदङ्गानां दुन्दुभीनां च [5]निस्वनः ॥ ४०

अथ चामीकरमयं तन्मयासनशोभितम् ।
चित्रध्वजपताकश्च विमानं प्रत्यदृश्यत ॥ ४१

गृहमध्य[6]गतं तच्च पश्यन् विस्मय[7]मागतः ।
विमानपालस्तं विप्रं प्रोवाच मधुरं वचः ॥ ४२

एह्येहि भगवंस्तुष्टा आर्जवेन तवामराः ।
[8]तद्विमानं समास्थाय ब्रह्मलोकं व्रजानघ ॥ ४३

ब्राह्मणः—

नाहं मुक्त्वा गमिष्यामि पुत्रान् पौत्रान् गुणान्वितान् ।
चण्डालरूपो देवो वा अतिथि[9]श्चाथ तिष्ठति ॥ ४४

येनाहमतिथिं त्यक्त्वा लौल्येन च दिवं गतः ।
वैमानिकाः क्षिपेयुर्मां सेन्द्रास्सर्वे दिवौकसः ॥ ४५

विमानपालः—

यं यमिच्छसि विप्रेन्द्र तं तमारोप्य पुष्पकम् ।
गच्छ त्वमार्जवोपेतो ब्रह्मलोकं द्विजोत्तम ॥ ४६

एवमुक्तस्तु स मुनिः पुत्रमित्रकलत्रवान् ।
विमानवरमारुह्य चण्डालेन सहैव च ॥ ४७

---

1. क. ख. स्रुवं
2. क. ख. अथ
3. अ. क्षिप्तवानम्बरे
4. अ. चाब्रवीत
5. क. ख. निस्वनम्
6. क. ख. -गतस्तच्च
7. क. ख. माप सः
8. क. एतद्विमानमास्थाय
9. ख. श्चात्र

अग्निहोत्री ययौ लोकं ब्रह्मणः परमेष्ठिनः ।

शिवः—

[1]अथ पार्वति चण्डालस्सो[2]ऽपि चण्डालवर्धनः ॥ ४८

आर्जवेन च सन्तुष्टस्तारयामास वै द्विजम् ।
यस्त्वेवमार्जवोपेतो दानं वा व्रतमाचरेत् ॥ ४९

स याति ब्रह्मणः स्थानं तारयित्वा पितॄनपि ।
[3]अतस्त्वार्जवसंयुक्तो धर्मः श्रेयस्करो भवेत् ॥ ५०

तेनैव रहितो धर्मो निष्फलत्वं प्रयाति च ।
इत्युक्तवान् महेशानः पार्वत्यै भाविताशयः ॥
तस्मादार्जवमेवाहुस्सर्वधर्मोत्तमोत्तमम् ॥ ५१

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे आर्जवकथनं
नाम नवमोऽध्यायः

1. क. ख. न च
2. क. ख. -ऽग्निश्चण्डवपुर्धरः
3. क. ख. ततः

## ॥ [1]दशमोऽध्यायः ॥

### पितृभक्तिकथनम्

सूतः—

ब्रह्मविष्णुशिवादीनामर्चनात्तीर्थसेवनात् ।
महतस्तपसो दानात् पितृभक्तिर्विशिष्यते ॥ १

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पश्चिमे सागरस्यान्ते द्वारका नाम वै पुरी ॥ २

तस्यामास्ते महाभागः शिवशर्मा द्विजोत्तमः ।
तस्यापि पञ्च पुत्रास्ते बभूवुः शास्त्रकोविदाः ॥ ३

यज्ञशर्मा वेदशर्मा धनशर्मा यथा श्रुतम् ।
देवशर्मा सोमशर्मा सर्वे पितृमते स्थिताः ॥ ४

पितृभक्तिं विना धर्मं नान्यं विन्दन्ति ते सदा ।
तेषां स भक्तिजिज्ञासुर्मायया ब्रह्मवित्तमः ॥ ५

मृता वो जननीत्येनां तेषां प्रादर्शयच्च सः ।
ते प्रोचुः पितरं तात यथा सञ्जीविता वयम् ॥ ६

सास्मान्विहाय याताद्य पतिं त्वामपि दैवतम् ।

शिवशर्मा—

यज्ञशर्मन्ननेनैव शस्त्रेण निशितेन तु ॥ ७

विच्छिद्याङ्गानि ते मातुर्यत्र कुत्र क्षिपाद्य भो ।
तत् कृतं तेन पुत्रेण यथादेशं मतं पितुः ॥ ८

तं विज्ञाय महाभागः पितृभक्तं द्विजोत्तमः ।
वेदशर्माणमाहूय गच्छ त्वं मम शासनात् ॥ ९

स्त्रिया विना न शक्नोमि स्थातुं कन्दर्पमोहितः ।
इत्युक्त्वा मायया काञ्चिद्दर्शयित्वा च योषितम् ॥ १०

---

1. दशमाध्यायमारभ्य विंशाध्यायपर्यन्तो भागः अ. पुस्तके नोपलभ्यते

एनामानय वत्स त्वं ममार्थे कृतनिश्चयः ।
इति गां पितुराकर्ण्य स तां प्राप्याब्रवीद्वचः ॥ ११

पिता त्वां याचते भद्रे तं भजेत्यथ साब्रवीत् ।
न जरापीडितस्याङ्कं प्रविशामि कदाचन ॥ १२

त्वामेव रन्तुमिच्छामि सर्वसौभाग्यलक्षणम् ।
महद्भाग्यं च भविता ममाङ्गालिङ्गनेन ते ॥ १३

इत्याकर्ण्य वचस्तस्या वेदशर्माब्रवीद्वचः ।
धर्मयुक्तं न ते वाक्यं भज त्वं पितरं मम ॥ १४

यत्त्वं वाञ्छसि तत्सर्वं पितुरर्थे ददाम्यहम् ।
सेन्द्रान् देवांश्च ते भद्रे दर्शयामि तपोबलात् ॥ १५

इत्युक्ता तेन सा प्राह सेन्द्रान् देवान् प्रदर्शय ।
पश्चान्मे वाञ्छितं कर्तुं पितुरर्थे भवान् क्षमः ॥ १६

इत्युक्तस्स तया तस्यै दर्शयामास तत्क्षणात् ।
सेन्द्रा देवास्तथा सर्वे वेदशर्माणमब्रुवन् ॥ १७

प्राप्ता इमे त्वयाहूताः किं कुर्मो व्रियतां वरः ।

वेदशर्मा—

पितर्यस्त्वेव मे भक्तिरिति तान् प्रत्यभाषत ॥ १८

तथेत्युक्त्वा प्रयातेषु सेन्द्रेषु विबुधेषु सा ।
उवाच वेदशर्माणं वाञ्छितं मे प्रपूरय ॥ १९

यदि त्वं पितृभक्तोऽसि शस्त्रेण स्वशिरः स्वयम् ।
छित्त्वा मह्यं ददस्वाद्य पितरं ते तदाप्नुयाम् ॥ २०

इति तस्या वचः श्रुत्वा शस्त्रेण स्वशिरोऽच्छिनत् ।
ददौ च तत्करे तस्यास्सा तदादाय भामिनी ॥ २१

शिवशर्माणमभ्येत्य यथावृत्तं न्यवेदयत् ।
शिवशर्मा स्थिरां भक्तिं ज्ञात्वा तां वेदशर्मणः ॥ २२

धर्मशर्माणमाहूय वाक्यमेतदुवाच ह ।
एतच्छिरस्तु संयोज्य गात्रैस्त्वं वेदशर्मणः ॥ २३

यथा जीवत्ययं भद्रस्तथा वत्स विधीयताम् ।
तद्वाचा धर्मशर्मापि पितृभक्तिसमन्वितः ॥ २४

संयोज्य शिरसा तेन शरीरं वेदशर्मणः ।
धर्मं ह्यचिन्तयत्तस्मिन् प्रसन्ने तमुवाच सः ॥ २५

यदि धर्म प्रसन्नोऽसि पितृभक्तिर्ममास्ति चेत् ।
यदि वा तपसो वीर्यं वेदशर्माद्य जीवतु ॥ २६

एवमस्त्विति तेनोक्ते धर्मेणामिततेजसा ।
उदतिष्ठद्यथापूर्वं वेदशर्मा स्फुरन्मुखः ॥ २७

धर्मशर्मा स्वकं कर्म प्राहास्मै वेदशर्मणे ।
तमुवाच ततो धर्मो धर्मशर्माणमग्रतः ॥ २८

वरं वरय भद्रं ते वरार्हस्संमितोऽसि मे ।
धर्मशर्मा ततो धर्मात्पितृभक्तिमयाचत ॥ २९

तथास्त्विति गते तस्मिन् धर्मे भ्रात्रा समन्वितः ।
धर्मशर्मा ततः पित्रे गत्वा प्रादर्शयच्च तम् ॥ ३०

पितृभक्तौ स तौ मत्वा देवशर्माणमब्रवीत् ।
अनया कान्तया पुत्र रन्तुमिच्छामि सांप्रतम् ॥ ३१

तदानय दिवः क्षिप्रममृतं यौवनप्रदम् ।
तां पितुर्वाचमाकर्ण्य देवशर्मा मुदान्वितः ॥ ३२

तथेत्युक्त्वा च पितरं नमस्कृत्य यथाविधि ।
पितृभक्तिबलेनैव सुधामानेतुमैहत ॥ ३३

खेचरत्वं [1]च तस्यासीत्पितृभक्तस्य धीमतः ।
सोऽतीत्य दिव्यधामानि त्रिदशद्वारमाययौ ॥ ३४

---

1. क. तथास्यासीत्

तं ज्ञात्वा द्विजमायान्तममृतार्थं सुरेश्वरः ।
संमन्त्र्य त्रिदशैस्सार्धं ततः प्रोवाच मेनकाम् ॥ ३५

शासनान्मम गच्छ त्वं महत् कार्यमिदं कुरु ।
देवशर्मा यथा नैति कुरु विघ्नं तथान्तरे ॥ ३६

सा तथेति शचीभर्तुराज्ञया विश्वमोहिनी ।
शृङ्गारदेवतेवान्या निर्जगाम शुचिस्मिता ॥ ३७

निर्गत्य नन्दनवने दोलाकेलिं वितन्वती ।
गायन्ती मान्मथं तन्त्रमास्ते [1]सौभाग्यभूषणा ॥ ३८

तावत्सोऽपि समुद्देशं गत्वा दृष्ट्वा च मेनकाम् ।
शक्रस्य [2]वञ्चना सेयमिति निश्चित्य सन्मतिः ॥ ३९

तृणाय मन्यमानस्तां गन्तुमैच्छत्त्वरान्वितः ।
तमुवाच महाभागं मेनका कामरूपिणी ॥ ४०

[3]क्व गच्छसि महाप्राज्ञ मामनादृत्य रंहसा ।
[4]मदर्थे दिवमायान्ति मानवाः कर्मशोभिनः ॥ ४१

देवशर्मा तु तामाह पुत्रोऽहं शिवशर्मणः ।
देवशर्मेति विख्यातो ब्रह्मचर्यव्रते स्थितः ॥ ४२

सुधामानेतुमाप्तोऽत्र पितुरर्थे तदाज्ञया ।
जानामि त्वां तपोयोगाद्विघ्नं कर्तुमिहोद्यताम् ॥ ४३

नाहं मुह्यामि ते देवि रूपयौवनविभ्रमैः ।
विश्वामित्रादयः सन्तु त्वादृशास्त्वद्वशे स्थिताः ॥ ४४

अन्यं भज विशालाक्षि शक्रलोकं व्रजाम्यहम् ।
इत्युक्त्वा प्रययौ विप्रो मेनका निष्फलोद्यमा ॥ ४५

आसीत्परं च शक्रोऽपि वने भूतान् ससर्ज ह ।
अथ तस्याग्रतस्सद्यः प्रादुरासन् महात्मनः ॥ ४६

---

1. क. सा भाग्य-
2. ख. वञ्चनात्
3. क. त्वं
4. क. मदर्थं

पिशाचा राक्षसा दैत्या वेताला घोरदर्शनाः ।
व्याघ्रास्सरीसृपाः सिंहा मेघाः पाषाणवर्षिणः ॥ ४७

तमांसि वह्नयो घोरास्तथान्ये पिशिताशनाः ।
स तानि विघ्नजालानि दुरन्तानि तपोनिधिः ॥ ४८

पितृभक्तिबलेनैव निर्ददाह निराकुलः ।
सत्येयं लौकिकी वाणी यो हन्यात्स विहन्यते ॥ ४९

इति निश्चित्य विप्रेन्द्रः शक्रं दण्ड्यममन्यत ।
अन्यमिन्द्रं करिष्यामि स्वर्गो येन हि पाल्यते ॥ ५०

पश्यन्तु देवतास्सर्वाः पितृभक्तिं [1]मम स्थिराम् ।
ततस्तां वासवः श्रुत्वा प्रतिज्ञां देवशर्मणः ॥ ५१

वाचां पतिं पुरस्कृत्य तस्योपान्तिकमागमत् ।
प्रसाद्य बहुभिर्वाक्यैर्विनीतैः पाकशासनः ॥ ५२

तमुवाच महाभागं ज्वलन्तमिव तेजसा ।

इन्द्रः—

भो भो विप्र महाप्राज्ञ तपसा नियमेन च ॥ ५३

दमेन शौचाचारेण त्वत्समो नास्ति चापरः ।
अनया पितृभक्त्या ते जितोऽहममरैस्सह ॥ ५४

ममापराधं सर्वं [2]तं क्षन्तुमर्हसि सत्तम ।
वरं वरय भद्रं ते दुर्लभं तद्ददाम्यहम् ॥ ५५

देवशर्मा—

विप्रतेजो [3]महारौद्रं दुस्सहं देवदानवैः ।
पितृभक्तस्य देवेन्द्र दुस्सहं सर्वथा विभो ॥ ५६

आज्ञाभङ्गो न कर्तव्यो ब्राह्मणानां महात्मनाम् ।
भवानद्य समायातो वरं दातुमिहेच्छति ॥ ५७

---

1. क. मयि
2. क. त्वं
3. क. महद्रौद्रं

अमृतं देहि देवेन्द्र यदि तुष्टोऽसि देवराट् ।

इन्द्रः—

एवं ददामि ते पुण्यं वरं त्वमृतसंयुतम् ॥ ५८

इति संभाष्य तं विप्रममृतं दत्तवान् स्वयम् ।
दत्त्वा भक्तिं च पितरि स जगाम सहस्रदृक् ॥ ५९

देवशर्मा ततो गत्वा पितरं वाक्यमब्रवीत् ।
इदमिन्द्रात्समानीतममृतं व्याधिनाशनम् ॥ ६०

अनेनैव महाभाग नीरुजो भव सर्वदा ।
अमृतेन त्वमद्यैव परां तृप्तिमवाप्नुहि ॥ ६१

एतद्वाक्यं ततः श्रुत्वा शिवशर्मा द्विजस्य हि ।
सुतान् सर्वान् समाहूय प्रीयमाणोऽब्रवीद्वचः ॥ ६२

पितृभक्तिपरा यूयं मद्वाक्यपरिपालकाः ।
वरं वृणीध्वं सुप्रीताः पुत्रका दुर्लभं भुवि ॥ ६३

पुत्राः—

अस्माकं जीवतां माता [1]या गता यममन्दिरम् ।

शिवशर्मा—

अद्यैव लब्धजीवेयं भवतां पुण्यवत्सलाः ॥ ६४

माता समेष्यति सती नात्र कार्या विचारणा ।
एवमुक्ते शुभे वाक्ये ऋषिणा शिवशर्मणा ॥ ६५

एषां माता संप्रहृष्टा जीवन्ती वाक्यमब्रवीत् ।

सुव्रता—

स्त्रियो लोके महाभागास्सुपुण्याः पुण्यवत्सलाः ॥ ६६

सुतमिच्छन्ति सर्वज्ञं पुण्याङ्गं पुण्यसाधनम् ।
यूयं पुत्रास्तु सञ्जाताः पितृभक्तिसमन्विताः ॥ ६७

यज्वानः पुण्यशीलाश्च मम हर्षविवर्धनाः ।
एवं संवर्धितास्ते तु तया मात्रा पुनः पुनः ॥ ६८

---

1. क, याता या

हर्षेण महताविष्टाः प्रणेमुर्मातरं शुभाः ।

पुत्राः—

सुपुण्यैः प्राप्यते मातस्सुमाता सुपिता किल ॥ ६९

यस्य गर्भोदरं प्राप्य सुपुण्यैश्च विवर्धिताः ।
जन्मान्तरे च त्वं माता पिता चैष भविष्यति ॥ ७०

पिता—

वृणीध्वं मामकाः पुत्राः सुवरं पुण्यदायकम् ।

पुत्राः—

यदि तात प्रसन्नस्त्वं वरं दातुमिहेच्छसि ॥ ७१

प्रेषयास्मान् परं लोकं वैष्णवं दोषवर्जितम् ।

पिता—

प्रयात वैष्णवं लोकं यूयं विगतकल्मषाः ॥ ७२

मत्प्रसादात्तपोभक्त्या मातृभक्त्या तथानया ।
तस्मिन् क्षणे समायातः शङ्खचक्रगदाधरः ॥ ७३

सुपुत्रं शिवशर्माणमित्युवाच श्रियः पतिः ।
सपुत्रस्य [1]तवाद्यैव भक्त्या प्रीतोऽस्मि सुव्रत ॥ ७४

पुत्रैः पत्न्या बन्धुभिश्च शीघ्रमागच्छ मत्पदम् ।

शिवशर्मा—

अमी गच्छन्तु चत्वारः पुत्रास्ते लोकमुत्तमम् ॥ ७५

कञ्चित्कालं तु पुत्रेण सहितः सोमशर्मणा ।
अनया भार्यया चात्र स्थातुमिच्छामि भूतले ॥ ७६

एवमुक्ते तु ते विप्राश्चत्वारस्सत्यतेजसः ।
विष्णुरूपधरास्सर्वे पितृभक्तिबलेन च ॥ ७७

प्रहृष्टेनात्मना जग्मुस्तद्विष्णोः परमं पदम् ।
ततस्तु शिवशर्मा च दत्वा वै सोमशर्मणः ॥ ७८

1. ख. तथाद्यैव

करे धीमान् सुधाकुम्भं तपस्तेपे निरञ्जनः ।
दशवर्षसहस्राणि निराहारो जितेन्द्रियः ॥ ७९

पुनस्स तु समायातः शिवशर्मा महायशाः ।
[1]मायां कृत्वा महाप्राज्ञो भार्यया सह तं सुतम् ॥ ८०

कुष्ठरोगान्वितो गत्वा स्त्रिया तादृशया युतः ।
समागतौ तु पितरौ सोमशर्मा महायशाः ॥ ८१

[2]तौ दृष्ट्वा कृपयाविष्टो भक्त्यानमितकन्धरः ।
तयोः पादौ नमस्कृत्य प्राहेदं विस्मयान्वितः ॥ ८२

भवादृशं न पश्यामि तपसा तेजसा पितः ।
गुणभागैस्सुपुण्यैश्च किमिदं वर्तते त्वयि ॥ ८३

इयं पुण्यवती माता महापुण्या महाव्रता ।
या हि भर्तुः प्रसादेन त्रैलोक्यं धर्तुमिच्छति ॥ ८४

सा कथं दुःखमाप्नोति तन्मे कथय कारणम् ।

शिवशर्मा—

मा शुचस्त्वं महाभाग भुज्यते कर्मजं फलम् ॥ ८५

नरेण कर्मयुक्तेन पापपुण्ययुतेन च ।
शुश्रूषणं कुरुष्व त्वमुभयोर्व्याधियुक्तयोः ॥ ८६

एवमुक्ते शुभे वाक्ये सोमशर्मा महायशाः ।
शुश्रूषणञ्च कृतवानुभयोर्दुःखदुःखितः ॥ ८७

श्लेष्ममूत्रपुरीषं स उभयोः परिशोधयन् ।
पादसंवाहनं चक्रे अङ्गसंवाहनं तथा ॥ ८८

द्वावेतौ तु महाभागस्सोमशर्मा महायशाः ।
तीर्थं नयति धर्मात्मा स्कन्धमारोप्य नित्यशः ॥ ८९

स्नापयित्वा स्वहस्तेन [3]सन्मन्त्रं विधिपूर्वकम् ।
तर्पणञ्च पितॄणाञ्च देवतानां च पूजनम् ॥ ९०

---

1. क. पुस्तके इतस्सार्धः एकः श्लोको न दृश्यते
2. क. तं
3. क. सन्मन्त्रविधि-

कारयित्वैष धर्मात्मा स्वयमग्नौ जुहोति च ।
भोजयत्यतिसुप्रीतो द्वावेतौ पितरौ सुतः ॥ ९१

ताम्बूलवस्त्रगन्धाद्यमुभयोरपि वाञ्छितम् ।
मूलं पयः स्वभक्त्या च नित्यमेव ददात्यसौ ॥ ९२

अनेन कर्मयोगेन पितरौ पर्यपूजयत् ।
एवं शुश्रूषमाणं तं पिता [1]कुत्सति निष्ठुरः ॥ ९३

न कृतं वाञ्छितं मह्यं भवता कुलपांसन ।
विनिन्दन्निष्ठुरैर्वाक्यै[2]स्ताडयन् मुष्टिभिस्सह ॥ ९४

घातयन् मुष्टिघातेन शिवशर्मा गदातुरः ।
एवं कृते स धर्मात्मा नैव कुप्यति तुष्यति ॥ ९५

मनसा वचसा चैव कर्मणा त्रिविधेन च ।
सन्तुष्टस्सर्वदा सोऽपि पितरं पर्यपूजयत् ॥ ९६

अमृतं त्रायते नित्यमानीतं देवशर्मणा ।
एवं बहुतिथे काले शतसङ्ख्ये गते सति ॥ ९७

शिवशर्मा च तस्यैव भक्तिं दृष्ट्वा [3]ह्यचिन्तयत् ।
माययासौ निजाङ्गेषु कुष्ठरोगः प्रदर्शितः ॥ ९८

श्लेष्ममूत्रमलादींश्च दृष्ट्वा स्पृष्ट्वा महामतिः ।
निन्दां न कुरुते नित्यं स्वहस्तेन महामनाः ॥ ९९

अङ्गसंवाहनं भक्त्या करोति निजभावतः ।
दुस्सहं वचनं पुत्रो दारुणं सहते मम ॥ १००

अपनेष्याम्यहं तस्माद्दुःखं विष्णोः प्रसादतः ।
इत्येवं चिन्तयित्वा तु शिवशर्मा महामतिः ॥ १०१

पुनर्मायां चकारासौ कुम्भादाहृत्य [4]तत्पयः ।
ततः पुत्रं समाहूय सोमशर्माणमब्रवीत् ॥ १०२

---

1. क. कुत्सित
2. ख. तारयन्
3. व्यचिन्तयत्
4. ख. यत्पयः

तव हस्ते मया दत्तममृतं व्याधिनाशनम् ।
तन्मे शीघ्रं प्रयच्छ त्वं यथा पानं करोम्यहम् ॥ १०३

एवमुक्ते तु गुरुणा समुत्थाय त्वरान्वितः ।
गत्वा तं दृष्टवान् कुम्भममृतेन विनाकृतम् ॥ १०४

तस्य पापस्य वै कर्म केन वा विप्रियं कृतम् ।
पितुरग्रे च वृत्तान्तं कथयिष्ये ह्यहं यदि ॥ १०५

ततः कोपं प्रयात्येष पुनश्च व्याधिपीडितः ।
इत्येवं चिन्तयित्वैव प्रतिज्ञां कृतवान् मुनिः ॥ १०६

अद्य मे कृतमेव स्याद्गुरुशुश्रूषणं यदि ।
तपस्तप्तं मया पूर्वं यदि विध्युक्तवर्त्मना ॥ १०७

घटोऽप्यमृतपूर्णोऽयं भवत्वेवाविलम्बितम् ।
इत्युक्तमात्रे तु मुनौ सुधापूर्णोऽभवद्घटः ॥ १०८

इत्युक्त्वा हर्षसंयुक्तस्सोमशर्मा महायशाः ।
गत्वा गुरुं नमस्कृत्य कुम्भमादाय सत्वरम् ॥ १०९

अमृतं तं गृहाणेति मधुरं वाक्यमब्रवीत् ।
एतावद्वाक्यमाकर्ण्य शिवशर्मा सुतस्य हि ॥ ११०

तुतोष भक्तिभावाच्च सोमशर्माणमब्रवीत् ।
तपसा नियमेनैव पितृशुश्रूषयानया ॥ १११

भक्तिभावेन तुष्टोऽस्मि तवाद्य कुलनन्दन ।
एवमुक्त्वा निजं देहं तस्य प्रादर्शयत्पिता ॥ ११२

यथापूर्वं स्थितौ तौ स दृष्टवान् पितरौ मुनिः ।
दीप्तिमन्तौ महात्मानौ सूर्यबिम्बोपमौ [1]विभू ॥ ११३

हर्षेण महताविष्टो ननाम च पुनः पुनः ।
शिवशर्मा सुतायाथ दत्त्वा च विविधान् वरान् ॥ ११४

---

1. क. भुवि

जगाम भार्यया सार्धं योगाभ्यासेन तत्त्ववित् ।
विष्णोः पदं परं नित्यममृतं शाश्वतं शिवम् ॥ ११५

सोमशर्माथ निजया गुरुभक्त्यानयान्वितः ।
[1]वैष्णवं ज्ञानमासाद्य योगाभ्याससमन्वितः ॥ ११६

तीर्थयात्रास्वभिरतो नित्यं ब्राह्मणपूजकः ।
यायजूकः शुचिः शान्तो वेदाध्ययनतत्परः ॥ ११७

आश्रमे न्यवसत्तस्मिन् परं गार्हस्थ्यमाश्रितः ।

सूतः—

तस्मात्सर्वप्रयत्नेन पितृभक्तो भवेन्नरः ॥ ११८

पिता ब्रह्मा पिता विष्णुः पिता देवो महेश्वरः ।
पितरि प्रीतिमापन्ने प्रीताः स्युस्सर्वदेवताः ॥ ११९

पितृभक्तिमतां पुंसां किं नाम भुवि दुर्लभम् ।
तीर्थैर्दानैस्तपोभिश्च यत्फलं लभते नरः ॥ १२०

तत्फलं समवाप्नोति पितृभक्त्यैव मानवः ।
स लेभे महतीं प्रीतिं भीष्मो धर्मभृतां वरः ॥ १२१

पितुराज्ञां विधायैव वैष्णवं पदमाप्तवान् ।
रामोऽपि भार्गवः पूर्वं पितुराज्ञानुपालनात् ॥ १२२

लेभे च महदैश्वर्यं कीर्तिमग्र्यामवाप्तवान् ।
विजित्य सकलान् शत्रून् भूमिं लब्ध्वा तु दुर्जयः ॥ १२३

प्रादात्ससागरां भूमिं ब्राह्मणेभ्यो महायशाः ।
रामो दाशरथिस्त्यक्त्वा राज्यञ्च पितुराज्ञया ॥ १२४

जगाम वनवासाय धर्मपत्नीसमन्वितः ।
तत्रासुरान् बहून् हत्वा राज्यं पुनरवाप्तवान् ॥ १२५

---

1. इदं श्लोकार्धं कपुस्तके न दृश्यते

अतस्सर्वेषु कालेषु पितृभक्तिर्विशिष्यते ।
यः पित्रोः पूजको भूमौ स देवैः पूज्यते दिवि ॥ १२६

य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः ।
सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ॥ १२७

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे पितृभक्ति-
कथनं नाम दशमोऽध्यायः

## ॥ एकादशोऽध्यायः ॥

### अन्नदत्यागदूषणकथनम्

सूतः—

ये त्यजन्त्यन्नदातारं दुर्भिक्षे वञ्चनापराः ।
ते पापिनः [1]क्रूरतरा नरकायैव केवलम् ॥ १

यथा सर्वेषु दानेषु अन्नदानं महत्तरम् ।
तथा द्रोहोऽप्यन्नदातुः सर्वपापान्महत्तरम् ॥ २

केवलं जननायैव पिता जनयिता नृणाम् ।
योऽन्नदाता पिता सो हि विद्याप्राणादिदायकः ॥ ३

तस्य त्यागाद्बुद्धिमतां प्राणत्यागो विशिष्यते ।
यस्यान्नेन धृताः प्राणास्तांस्तस्यैव निवेदयेत् ॥ ४

अन्यथा प्राणिनस्तस्य कुतः स्यात्पापिनस्सुखम् ।
यः पोषयित्वा स्वं देहं यस्यान्नेन निरन्तरम् ॥ ५

न करोत्यस्य शुश्रूषां स देही किं पशुर्हि सः ।
अन्नदातुर्हि शुश्रूषा सर्वधर्मार्थदायिनी ॥ ६

तां मुक्त्वा धर्मचरणं स्याद्भस्मनि हुतं नृणाम् ।
अस्मिन्नर्थे पुरावृत्तमुपाख्यानं वदामि वः ॥ ७

हिमवत्पर्वते पूर्वमुर्वीधरवरे शुभे ।
सावर्णिस्सूर्यतनयस्तपश्चक्रे महामुनिः ॥ ८

ज्ञानविज्ञानसामग्रीं मनुत्वमपि शङ्करात् ।
स महीश्च [संप्राप्तुं स] महातेजा यतवाक्कायमानसः ॥ ९

अष्टाविंशतमे प्राप्ते युगे वैवस्वतस्य सः ।
द्वापरान्ते भवप्रीत्यै यज्ञं कर्तुं मनो दधे ॥ १०

---

1. क. क्रूररताः

तस्य यष्टुर्मनो लग्नं कर्मभूमौ विशेषतः ।
कदाचिन्मुनयः केचिद्देवदारुवनाश्रयाः ॥ ११

अन्वेषमाणाः क्षेत्राणि तदा जग्मुस्तदाश्रमम् ।
[1]पुष्पभद्रानदीतीरे स्थाने भद्रशिलाह्वये ॥ १२

छायया वटवृक्षस्य भद्राख्यस्य सुशीतले ।
प्रसन्न[2]स्सत्यतपसो यत्र [3]लक्ष्मीं शचीपतिः (?) ॥ १३

तस्याश्रमपदे रम्ये निवसन्तं रवेस्सुतम् ।
आगम्य प्रणिपत्यैनं व्यतिष्ठन्त सविस्मयाः ॥ १४

तानागतान् [4]मनुर्दृष्ट्वा नानावंशसमुद्भवान् ।
स्वागतासनपाद्यार्घ्यैः पूजयामास भास्करिः ॥ १५

तेन ते सत्कृतास्सर्वे सूर्यपुत्रेण तापसाः ।
उपोपविविशुर्दीनास्तमनुप्राप्य भूतले ॥ १६

सावर्णिः—

धन्योऽस्म्यनुगृहीतोऽस्मि भवतां दर्शनादहम् ।
अधीतसर्ववेदानां स्नातकव्रतधारिणाम् ॥ १७

किमागमनकृत्यं वो मदाश्रमपदं प्रति ।
संसिद्धतपसां [5]सिद्धमीश्वरासक्तचेतसाम् ॥ १८

मुनयः—

नास्मद्दर्शनतस्तेऽद्य धन्यता सूर्यनन्दन ।
वयमेव हि पूताः स्म भवद्दर्शनतो मुने ॥ १९

नास्माकं विद्यते सम्यग्ज्ञानं विज्ञानमेव वा ।
तपो वा सुमहत्तप्तं गौतमस्य प्रकोपतः ॥ २०

धन्यो भवानेव मुने न वयं सिद्धिमागताः ।
क्षेत्रजिज्ञासया यामो गौतमक्रोधदीपिताः ॥ २१

---

1. क. पुष्यभद्रा
2. क. स्सप्ततपसो
3. क. लक्ष्मी
4. क. मुनि
5. क. नित्यं

सावर्णिः—

किमर्थमशपद्विप्रान् गौतमस्तपसां निधिः ।
भवद्भिः किं कृतं तस्य तत्सर्वं कथयस्व मे ॥ २२

मुनयः—

अनावृष्टिः पुरा जाता सौरे द्वादशवार्षिकी ।
तदौषध्यः क्षयं याता विनेशुस्सर्वदेहिनः ॥ २३

अवग्रहे तथाभूते वर्तमाने जनक्षये ।
गौतमस्सत्रमारेभे जनानां हितकाम्यया ॥ २४

एतस्मिन्नन्तरे ब्रह्मा तस्य तुष्टः पितामहः ।
प्रददौ शालिबीजानि चिन्तामणिसमानि तु ॥ २५

उप्यन्ते प्रथमे यामे लूयन्ते च द्वितीयके ।
मध्यन्दिनात्परं विप्रैर्भुज्यन्ते परिपाचिताः ॥ २६

ततस्तां सिद्धिमासाद्य गौतमो मुनिसत्तमः ।
ददावन्नं बहुविधं सर्वेभ्यो विधिपूर्वकम् ॥ २७

अन्नदं गौतमं श्रुत्वा सर्वे वननिवासिनः ।
आजग्मुर्मुनयः शान्ताः क्षुधासंपरिपीडिताः ॥ २८

तैस्सार्धं वयमप्येते तदाश्रमपदं प्रति ।
आगम्य भुक्त्वा स्वेच्छातो न्यवसिष्म सदादृताः ॥ २९

यावच्च भारते वर्षे नववर्षशतक्रतुः ।
तावच्च गौतमोऽस्माकं ददावन्नं यथाविधि ॥ ३०

अवग्रहे व्यतिक्रान्ते ववर्ष भुवि वासवः ।
सुभिक्षं भारतं वर्षं तदासीत्सर्वतोदिशम् ॥ ३१

अथ तान् गन्तुमारब्धान् मुनीन् मुनिवरस्तदा ।
प्रतिगृह्यादरेणासौ गमनं प्रत्यषेधयत् ॥ ३२

ततः प्रतिदिनं तेन सत्कृताः प्रीतिपूर्वकम् ।
अवसाम सुखं भुक्त्वा मृष्टान्नं स्वगृहे यथा ॥ ३३

अनुज्ञां गौतमस्तेषां न ददाति यदा तदा ।
मुनयो मन्त्रयामासुः [1]केचिन्निर्गमनेच्छया ॥ ३४

मुनयः—

इयन्ति वर्षाण्यस्यान्नमनावृष्ट्या दिनक्षये ।
भुक्त्वा यदि पुनः काले सुभिक्षेऽथ न गच्छथ ॥ ३५

सत्रप्रदानादस्माकं गौतमो गर्वमाश्रितः ।
हसत्यस्मानहो याज्याः केवलौदरिका इति ॥ ३६

किमधीतमनेनैव तपस्तेनैव किं कृतम् ।
किमस्माकं भयं हर्ता किं वयं ब्रह्मबन्धवः ॥ ३७

कमस्मिन् दोषमासज्य विनिन्द्यैनं पुनः पुनः ।
विगर्वं कारयित्वैनं गमिष्यामो न संशयः ॥ ३८

इति संमन्त्र्य ते सर्वे गामेकां माययासृजन् ।
पीनोधसं स्वर्णवर्णां स्वर्णशृङ्गसमन्विताम् ॥ ३९

शालिक्षेत्रे मुनेस्तस्य प्रत्यूषे तामचारयन् ।
वत्सान्वितां दामयुक्तां जिघत्सन्तीं यवाङ्कुरान् ॥ ४०

अथ स्नात्वा स भगवान् पूर्वसन्ध्यामुपास्य च ।
प्रयातः शालिगोधूमानदन्तीं तां ददर्श ह ॥ ४१

याहीति बहुशस्तेन भर्त्सिता नागमद्यदा ।
तदा तोयं समादाय ताडयामास गौतमः ॥ ४२

तोयेन मुनिमुक्तेन स्पृष्टा गृष्टिः क्षणेन सा ।
पपात शालिकेदारे गतासुस्सूर्यनन्दन ॥ ४३

विसंज्ञां गामुपालक्ष्य विवर्णवदनो मुनिः ।
तानुपागम्य पप्रच्छ प्रायश्चित्तं च गौतमः ॥ ४४

सर्वेऽथ पापम[पापिनोऽ]र्हन्ति प्रायश्चित्तं मतिं विना ।
कृते तु गोवधे विप्र मतिपूर्वं न निष्कृतिः ॥ ४५

---

1. क. कश्चित्

जलवज्रविभिन्ना हि गौरेषा मतिपूर्वकम् ।
पुनर्दिव्येन तोयेन सिक्ता जीवमुपैष्यति ॥ ४६

सत्रं [1]तिष्ठति तावत्ते यावद्गोजीवनं पुनः ।
प्रवर्ततां वयं यामो हित्वा तं गोवधान्वितम् ॥ ४७

इत्युक्त्वा मुनयस्साधुं गौतमं मुनिपुङ्गवम् ।
यथागतं ययुस्सर्वे वयं च रविनन्दन ॥ ४८

गङ्गाजलेन गामेनां जीवयिष्यामि पातिताम् ।
इति निश्चित्य स मुनिस्तपश्चक्रे शिवं प्रति ॥ ४९

केदारशिखरं गत्वा कैलासे पर्वतोत्तमे ।
बहुवर्षसहस्राणि तपतस्तस्य धीमतः ॥ ५०

प्रत्यक्षमगमच्छम्भुर्भक्तानां भयनाशनः ।

भगवान्—

तपसा परितुष्टोऽहं वरं वरय गौतम ॥ ५१

प्रत्यक्षं तं हरं नत्वा वरं वव्रे स गौतमः ।
प्रसन्नो यदि देवेश गङ्गां त्वं दातुमर्हसि ॥ ५२

ततस्स भगवान् देवो जटामण्डलमध्यगाम् ।
विभज्यैकजटामात्रां प्रादात्तस्मै वृषध्वजः ॥ ५३

रुद्रः—

जटामेनां जलक्लिन्नां गृहीत्वा यत्र गौर्मृता ।
सन्निवत्स्व तदुद्देशे नदी तत्र भविष्यति ॥ ५४

तस्याः स्पर्शनमात्रेण सा स्वर्गं प्रतियास्यति ।
भविष्यसि निरेनास्त्वं ततो ज्ञास्यसि वञ्चनाम् ॥ ५५

इत्युक्त्वा भगवान् रुद्रस्तत्रैवान्तरधीयत ।
गौतमोऽपि मुनिश्रेष्ठो ययौ गौर्यत्र संस्थिता ॥ ५६

---

1. क. तिष्ठतु

जटां सलिलसंक्लिन्नां गौतमस्तपतां वरः ।
महादेवोदिते देशे विधिवत्संन्यधापयत् ॥ ५७

ततः प्रवृत्ता सा गङ्गा महावेगप्रवाहिनी ।
दर्शितेन पथानेन ययौ गौर्यत्र मूर्छिता ॥ ५८

सा गङ्गास्पर्शनेनैव स्वस्थदेहोदतिष्ठत ।
जगाम च दिवं सद्यो दिव्यतोयप्रभावतः ॥ ५९

गोजीवरक्षणार्थाय ददौ देवो वरं हरः ।
अतो गोदावरी नाम विख्याताभून्महानदी ॥ ६०

तदा पश्यति दिव्येन चक्षुषा गौतमो मुनिः ।
प्रसादात्पार्वतीशस्य कृतकं मुनिभिः कृतम् ॥ ६१

ततः शशाप कोपेन स्वसत्रान्नभुजो मुनीन् ।

गौतमः—

अस्याद्य वर्तमानस्य मनोर्वैवस्वतस्य हि ॥ ६२

अष्टाविंशतमे प्राप्ते युगे तिष्ये भविष्यथ ।
ब्राह्मणाः पापनिरताः श्रुतिस्मृतिबहिष्कृताः ॥ ६३

ज्ञानविज्ञानरहिता वर्णसङ्करकारिणः ।
येषां मायाबलेनैव गोहत्या पातिता मयि ॥ ६४

तत्तादृशानां भवतां तपो नाशं प्रयात्विति ।
वयमेवं तस्य शापात्तपोवीर्यविवर्जिताः ॥ ६५

अज्ञानस्य परीक्षार्थादस्माकं रचिता खलु ।
यक्षेण शिवदासेन विरूपाक्षेण गानतः ॥ (?) ६६

मोहयित्वा स्त्रियस्सर्वास्तद्दोषकलुषात्मनाम् ।
अस्माकं कर्मवैफल्यं तेनोक्तमनुकम्पया ॥ (?) ६७

सत्कर्मफलदं चाह भैरवक्षेत्रमुत्तमम् ।
सह्याद्रिमध्यगं तत्तु गच्छामस्सूर्यनन्दन ॥ ६८

इत्युक्त्वा तेन चाज्ञप्ता ययुः क्षेत्रञ्च भैरवम् ।
इष्ट्वा सोऽपि शिवं यज्ञैः स्वाभीप्सितमवाप्तवान् ॥ ६९

तस्मात्कुर्यादन्नदातुर्वञ्चनां नात्मविज्जनः ।
यदि कुर्यात्प्रमादेन स याति महदापदम् ॥ ७०

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे अन्नदत्यागदूषणकथनं
नाम एकादशोऽध्यायः

## ॥ द्वादशोऽध्यायः ॥

### पितृतीर्थकथनम्

सूतः—

पित्रोस्तीर्थं प्रवक्ष्यामि प्रोक्तं वेनाय विष्णुना ।
सर्वे श्रृणुत विप्रेन्द्रा धर्मस्य परमं रहः ॥ १

विष्णुः—

धर्मात्मत्वेन भूपाल पित्रोस्तीर्थं वदाम्यहम् ।
कुरुक्षेत्रे महापुण्ये कुण्डलो नाम वै द्विजः ॥ २

सुकर्मा नाम तस्यासीत्पुत्रः पुण्यगुणैर्युतः ।
चकार पित्रोः शुश्रूषां स जरापीडिताङ्गयोः ॥ ३

पित्रोः शुश्रूषणादेवाभवंस्तस्य समृद्धयः ।
तत्काले पिप्पलो नाम काश्यपस्य कुलोद्भवः ॥ ४

जिताहारस्तपस्तेपे जितात्मा जितमत्सरः ।
सर्वेन्द्रियाणि संयम्य घोरे तपसि तिष्ठतः ॥ ५

त्रीणि वर्षसहस्राणि गतानि त्रिदशास्ततः ।
पुष्पवृष्टिं वितन्वन्तस्तस्य मूर्ध्न्यवदन्वचः ॥ ६

देवाः—

यं यं त्वं वाञ्छसे कामं तं तं वरय पिप्पल ।
अलं घोरेण तपसा वरदा वयमागताः ॥ ७

इत्युक्तः पिप्पलः श्रुत्वा स तान् प्राप्याब्रवीद्वचः ।

पिप्पलः—

यथा विश्वं भवेद्वश्यं यथा विद्याधरोऽस्म्यहम् ॥ ८

तथा कुरुध्वं त्रिदशास्तपसा तोषिता यदि ।
एवमस्त्विति ते दत्त्वा वरं जग्मुर्यथागतम् ॥ ९

गतेषु तेषु विप्रेन्द्रो विद्याधरपदे स्थितः ।
यद्यद्वयचिन्तयद्विश्वं तत्तत्तस्यान्तिकेऽभवत् ॥ १०

एवं सप्रत्ययं चक्रे जगद्वश्यकरं परम् ।
पिप्पलोऽपि वशीकृत्य जगदत्यन्तगर्वितः ॥ ११

भूलोके मत्समो नास्तीत्यन्तर्दुरभिमानिनम् ।
सरस्तीरगतः कश्चित्सारसः प्राह पिप्पलम् ॥ १२

सारसः—

कस्मादुद्वहसे गर्वमेष ते पतनाय हि ।
सर्ववश्यात्मिकां बुद्धिं नाहं पश्यामि ते द्विज ॥ १३

वश्यावश्यं कर्म सर्वमर्वाचीनं प्रशस्यते ।
पराचीनं न जानासि ज्ञातव्यं सर्वसिद्धये ॥ १४

कुण्डलस्य सुतो धीमान् सुकर्मा नामतः सुधीः ।
अर्वाचीनं पराचीनं स तु जानाति तत्त्वतः ॥ १५

वश्यावश्यं जगत्सर्वं वश्यमासीत्सुकर्मणः ।
न दत्तं तेन वै ज्ञानं न तप्तं सुचिरं तपः ॥ १६

स्वच्छन्दचारी पुण्यात्मा पितृमातृहिते रतः ।
सर्वशास्त्रार्थविज्ञाता तत्समो नास्ति भूतले ॥ १७

यादृशं तस्य वै ज्ञानं बालस्यापि सुकर्मणः ।
तादृशं नास्ति ते ज्ञानं वृथा भवसि गर्वितः ॥ १८

पिप्पलः—

को भवान् पक्षिरूपेण मामेवं परिकुत्स्यति ।
किं वा ब्रह्माथ वा विष्णुः किं वा रुद्रो [1]भविष्यति ॥ १९

अर्वाचीनं पराचीनं सर्वं कथय सारस ।

सारसः—

स वदिष्यति सर्वं ते व्रज पार्श्वं सुकर्मणः ॥ २०

---

1. क. भविष्यसि

इत्युक्तः पिप्पलस्तेन दशारण्यं जगाम ह ।
तत्र पित्रोः पादसेवां कुर्वाणं पुण्यदर्शनम् ॥ २१

[1]सुकर्माणं ज्ञानवन्तं दृष्टवान् पिप्पलो मुनिः ।
सोऽपि पिप्पलमायान्तमर्घ्यपाद्यासनादिभिः ॥ २२

सम्पूज्य तेन पृष्टः सन् सुकर्मा वाक्यमब्रवीत् ।

सुकर्मा—

वश्यावश्यात्तपोलब्धाद्गर्वमुद्वहसे मुने ॥ २३

यस्माद्बोधितवांस्तं तु ब्रह्माणं विद्धि सारसम् ।
अर्वाचीनस्य लिङ्गं हि ब्राह्मण्याद्यखिलं जगत् ॥ २४

ब्रह्माद्यास्सर्वदेवाश्च पराचीनं वदामि ते ।
अव्यक्तं मोक्षरूपञ्च परात्परतरं शिवम् ॥ २५

योगिनोऽपि न पश्यन्ति सूक्ष्मब्रह्म सनातनम् ।
श्रुतयोऽपि पराचीननिश्चये शङ्कितास्सदा ॥ २६

अर्वाचीनो हि सकलः पराचीनो हि निष्कलः ।
इत्येतत्सकलं श्रुत्वा पिप्पलः पुनरब्रवीत् ॥ २७

पिप्पलः—

कस्माज्जातं [2]महज्ज्ञानं तव तत् कारणं वद ।

सुशर्मा—

तपो न तप्तं न मया कृतं कायस्य शोषणम् ॥ २८

न जाने परमं मन्त्रं न च चीर्णं व्रतं मया ।
पित्रोर्भक्त्या स्फुटं जाने कृतं पित्रोः प्रपूजनम् ॥ २९

पित्रोः स्नानोदकेनैव स्नानपाने करोम्यहम् ।
तस्माद्भागीरथीस्नानमहन्यहनि जायते ॥ ३०

सर्ववेदेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ।
तत्फलं समवाप्नोति मातापित्रोश्च पूजया ॥ ३१

---

1. क. सुकर्मणा ज्ञानवता 2. क. महद्दानं

तत्र गङ्गा गया तत्र तत्र पुष्करमेव च ।
पुत्रस्य भक्तियुक्तस्य पितरौ यत्र तिष्ठतः ॥ ३२

मातापित्रोः स्नानकाले पतन्ति जलबिन्दवः ।
यस्य देहे तु विप्रस्य सर्वतीर्थफलं लभेत् ॥ ३३

यस्तु मृष्टान्नपानाद्यैः पित्रोः प्रीतिं विधास्यति ।
तस्याश्वमेधस्य फलमहन्यहनि जायते ॥ ३४

अभुक्तयोः क्षुधितयोर्यस्तु पित्रोः [1]प्रयस्यतोः ।
मृष्टमश्नाति पापी स भुङ्क्ते मूत्रपुरीषकम् ॥ ३५

यो मातरञ्च पितरमवज्ञाय प्रवर्तते ।
स गृध्रो जायते दुष्टो जन्मकोटिशतैरपि ॥ ३६

नास्ति मातृसमं तीर्थं पितृतीर्थसमं च न ।
तारणाय सुपुत्राणामिह लोके परत्र च ॥ ३७

पितरौ यत्र पूज्येते सर्वदेवाश्च पूजिताः ।
त्रयो लोकाश्च तुष्यन्ति पित्रोः शुश्रूषणादपि ॥ ३८

यावत्पिता च माता च द्वावेतौ निर्विकारिणौ ।
तावत्सर्वं परित्यज्य पुत्रः स्यात्तत्परायणः ॥ ३९

माता पिता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ।
स पुत्रस्सकलं धर्मं प्राप्नुयात्तेन कर्मणा ॥ ४०

मातरं पितरं भक्त्या तोषयेन्न प्रकोपयेत् ।
मातृशापेन सर्पाणां सर्पयागेऽभवत् क्षयः ॥ ४१

तुष्टे च पितरि प्राप्तं पूरुणा राज्यमुत्तमम् ।
रुष्टे च पितरि प्राप्तं दुःखं यदुपुरोगमैः ॥ ४२

तस्मात्सर्वप्रयत्नेन पितृभक्तो भवेन्नरः ।
नास्ति मातृसमं तीर्थं नास्ति पित्रा समो गुरुः ॥ ४३

---

1. क. प्रपद्यतोः

न ताभ्यामननुज्ञातो धर्ममन्यं समाश्रयेत् ।
एष धर्मः परस्साक्षादुपधर्मोऽन्य उच्यते ॥ ४४

बाल्येन दृष्टवानीशमुपमन्युर्महामुनिः ।
करणान्मातृवाक्यस्य ध्रुवोऽपि ध्रुवतां गतः ॥ ४५

मातुर्वचननिर्देशात्कर्णः कीर्तिं परां गतः ।
स्ववाक्यानृतशङ्किन्या मातुर्वाक्यानुपालनात् ॥ ४६

विजयो विजयी जातो भ्रातृभिस्सह भूतले ।
द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः ॥ ४७

दिव्यज्ञानं मया प्राप्तं मातापित्रोः प्रसादतः ।
तस्मात्त्वमपि विप्रेन्द्र पितृशुश्रूषणं कुरु ॥ ४८

विष्णुः—

एवं सम्बोधितस्तेन पिप्पलश्च सुकर्मणा ।
आमन्त्र्य तं द्विजश्रेष्ठं लज्जितस्सन् ययौ तदा ॥ ४९

सुकर्मा सोऽपि धर्मात्मा पितृशुश्रूषणे रतः ।
पितृतीर्थं मातृतीर्थं समाख्यातं नरेश्वर ॥ ५०

यः शृणोति नरो भक्त्या स याति परमां गतिम् ।

सूतः—

इति विष्णोः प्रभावेण परां मुदमवाप्तवान् ।
तस्मात्सर्वप्रयत्नेन पितृभक्तो भवेन्नरः ॥ ५१

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे पितृतीर्थकथनं
नाम द्वादशोऽध्यायः

## ॥ त्रयोदशोऽध्यायः ॥

### गुरुतीर्थकथनम्

सूतः—

पित्रोस्तीर्थं समाख्यातं गुरुतीर्थं वदामि वः ।
इदञ्च विष्णुना पूर्वं वेनायोक्तं महीभुजे ॥ १

विष्णुः—

कथयिष्याम्यहं राजन् गुरुतीर्थमनुत्तमम् ।
शिष्याणां सर्वफलदमिह लोके परत्र च ॥ २

दिवा प्रकाशकस्सूर्यो रात्रौ चन्द्रः प्रकाशकः ।
गुरुः शिष्यस्य सततमज्ञानतिमिरापहः ॥ ३

गुरुः परतरं तीर्थं शिष्याणामवनीपते ।
गुरुं पुण्यमयं ज्ञात्वा सर्वपापैः प्रमुच्यते ॥ ४

इत्यर्थे श्रूयते राजन्नितिहासः पुरातनः ।
भार्गवस्य कुले जातश्च्यवनो मुनिसत्तमः ॥ ५

तीर्थयात्राप्रसङ्गेन परिबभ्राम मेदिनीम् ।
स स्नानात्सर्वतीर्थानां विशुद्धो विजितेन्द्रियः ॥ ६

नर्मदादक्षिणे कूले तीर्थे चामरकण्टके ।
स्नात्वा सम्पूजयामास लिङ्गमोङ्कारसंज्ञितम् ॥ ७

तदन्तिके श्रमहरां वटच्छायां समाश्रितः ।
सुष्वाप पक्षिणां शृण्वन् [1]ऋतविज्ञानसंयुतः ॥ ८

तत्रास्ते कुञ्जलो नाम चिरजीवी शुकोत्तमः ।
अभवंस्तस्य तनयाश्चत्वारः पूर्व उज्वलः ।
समुज्ज्वलो विज्वलश्च कपिञ्जल इति क्रमात् ॥ ९

---

1. क. ऋतं

तत्रैव निवसन्त्येते पितृमातृहिते रताः ।
एते गिरिद्वीपवनोद्देशान् प्राप्य दिने दिने ॥ १०

पक्वं फलं समानीय पित्रोः पूर्वं निवेद्य च ।
मात्रा च पूजिताः पश्चात्प्रीतिभाजो भवन्ति हि ॥ ११

एकदा कुञ्जलोपान्ते कथां चक्रुः परस्परम् ।
कदाचिदुज्ज्वलं प्राह कुञ्जलः पूर्वजं सुतम् ॥ १२

कुञ्जलः—

अद्य त्वं क्व गतस्तत्र दृष्टमाश्चर्यमस्ति चेत् ।
पुत्र विस्तरतो ब्रूहीत्युक्तः पितरमब्रवीत् ॥ १३

दिव्यदेव्युपाख्यानं नाम प्रथमा कथा

उज्ज्वलः—

अहं फलार्थं गच्छामि प्लक्षद्वीपं दिने दिने ।
तत्र भाति दिवोदास इति तद्द्वीपनायकः ॥ १४

तत्रा[स्या]सीत्कन्यका काचिद्दिव्यदेवीति विश्रुता ।
रूपेणाप्रतिमा शीलगुणसौभाग्यसंयुता ॥ १५

स तां दृष्ट्वा दिवोदासो [1]वने तारुण्यभूषिताम् ।
[2]कस्य देया मया कन्येत्येवं चित्ते विचार्य च ॥ १६

रूपसेनाधिकं चित्रसेनमाहूय तस्य हि ।
दातुमुद्योगमकरोद्दिव्य[3]देवीं महीपतिः ॥ १७

प्राप्ते विवाहसमये चित्रसेनो दिवं गतः ।
तस्मिन् गते दिवोदासश्चिन्तानिर्विण्णमानसः ॥ १८

धर्मं सुताविवाहाय पर्यपृच्छद्द्विजोत्तमान् ।
अस्या विवाहसमये चित्रसेनो दिवं गतः ॥ १९

किं कुर्मः कीदृशो धर्मः किं कर्तव्यमतः परम् ।
योग्या दातुं किमन्यस्मै नो तद्[4]ब्रूत विनिश्चयम् ॥ २०

---

1. क. नवतारुण्य
2. क. कस्मै
3. क. देही
4. क. ब्रूहि

ब्राह्मणाः—

राजन् वरो निश्चितोऽपि निन्दायुक्तो मृतोऽथ वा ।
महाव्याधियुतो दूरं गतस्संन्यासतां गतः ॥ २१

वाचा दत्ता तु या कन्या सान्यस्मै दातुमर्हति ।
नोदकेन न वाचा वा कन्यायाः पतिरिष्यते ॥ २२

पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ।
इत्येवं सुमहान् धर्मो धर्मशास्त्रेषु निश्चितः ॥ २३

तस्माद्राजन् सुतामेनामन्यस्मै दातुमर्हसि ।
एवं राजा समादिष्टो ब्राह्मणैर्वेदपारगैः ॥ २४

रूपसेनाय तां दातुमुद्यमं कृतवांस्ततः ।
विवाहसमये प्राप्ते सोऽपि कालवशं गतः ॥ २५

यो योऽस्या वरतां प्राप्तस्स स कालवशं गतः ।
वराणां परिणेतॄणामित्थमेकशतं गतम् ॥ २६

ततस्स राजा सञ्चिन्त्य स्वयंवरमकल्पयत् ।
स्वयंवरगता राज्ञस्तस्या रूपेण मोहिताः ॥ २७

इयं मे मम मे वेति युयुधुश्च परस्परम् ।
अन्योन्यशस्त्रसम्पातान्निहताः प्रययुर्दिवम् ॥ २८

संस्थानं परिणेतॄणां दृष्ट्वा राजा सुदुःखितः ।
दिव्यदेव्यपि दुःखार्ता गता पर्वतकन्दरम् ॥ २९

एतद्दृष्टं मया तस्य वद दुष्कृतकारणम् ।

कुण्डलः—

अस्ति वाराणसी नाम नगरी पापनाशनी ॥ ३०

तस्यां वैश्यः कश्चिदास्ते सुवीर इति विश्रुतः ।
तस्य चित्राभवद्भार्या दुराचारपरायणा ॥ ३१

सा त्यक्त्वा स्वकुलाचारं दुःशीला [1]कलहप्रिया ।
सदा परगृहे वासं करोति बहुभाषिणी ॥ ३२

1. क. सकल

सा चित्रा पतिना त्यक्ता बभ्राम महतीं महीम् ।
विटानां पापशीला सा दूतकर्म चकार ह ॥ ३३

साध्व्योऽभवन् परिभ्रष्टा वाक्यैस्तस्याः प्रलोभिताः ।
मनांस्यचालय[1]त्पापं पुरुषाणां सहस्रशः ॥ ३४

एवमेकोत्तरशतं गार्हस्थ्यं नाशितं तया ।
एवं [2]दुष्टापि सा चित्रा गृहाङ्गणमुपागतम् ॥ ३५

भ्रान्तं क्षुधान्वितं सिद्धं दृष्ट्वा मलिनवाससम् ।
स्नानभोजनवस्त्राद्यैस्तं सिद्धं यदुपाचरत् ॥ ३६

तेन पुण्यविपाकेन दिव्यदेवीति नामतः ।
दिवोदासस्य तनया बभूवाप्रतिमा गुणैः ॥ ३७

एकोत्तरशतं पूर्वं गार्हस्थ्यं नाशितं यतः ।
तया तत्कर्मपाकेन दृष्टं [3]भर्तृसहस्रकम् ॥ ३८

एतद्वृत्तान्तमाख्यातं दिव्यदेव्याः पुरातनम् ।

उज्ज्वलः—

यथा सा लभते मोक्षं तदुपायं वद प्रभो ॥ ३९

कुञ्जलः—

यया कृता भर्त्रवज्ञा तस्यास्तत्पापशान्तये ।
अशून्यशयनं नाम व्रतमुक्तं द्विजोत्तमैः ॥ ४०

व्रतमेतच्चरत्वेषा तस्य पापस्य शान्तये ।
सकलं निष्कलं रूपं ध्यायेद्देवस्य शार्ङ्गिणः ॥ ४१

कुर्यादात्मपरिज्ञानं संसारक्लेशशान्तये ।
एवं [4]जपव्रतध्यानस्वस्वरूपावलोकनैः ॥ ४२

एतैश्चतुर्भिस्सा त्यक्ता पापान्मुक्तिं प्रयास्यति ।
उज्ज्वल त्वं तत्र गत्वा सर्वमेतदुपादिश ॥ ४३

विष्णुः—

इति पित्रा समादिष्टस्स जगाम तदन्तिकम् ।
वनान्तरस्थितां दिव्यदेवीं दृष्ट्वाब्रवीद्वचः ॥ ४४

---

1. क. -त्पापात् 2. क. पुष्टापि 3. क. भर्तुः 4. क. व्रतजप

उज्ज्वलः—

का त्वं कस्यासि भद्रे त्वं केन ते विप्रियं कृतम् ।
किमर्थं ते वने वासो मम सर्वं निवेदय ॥ ४५

दिव्यदेवी—

उक्त्वा स्वकीयं वृत्तान्तमुज्ज्वलाय मनीषिणे ।
कस्त्वं पतत्रिरूपोऽसि सौष्ठवं परिभाषसे ॥ ४६

सिद्धो वा देवता वा त्वं कथयेत्यब्रवीद्वचः ।

उज्ज्वलः—

अहं पक्षी महाभागे नाहं सिद्धो न चापरः ॥ ४७

तव दुष्कृतिशान्त्यर्थं मत्पित्रा यन्निवेदितम् ।
वक्तुं भवत्यै तत्सर्वं कृपयाहं समागतः ॥ ४८

अशून्यशयनं नाम व्रतं नाम्नां शतं हरेः ।
सकलं निष्कलं ध्यानमात्मज्ञानमिति क्रमात् ॥ ४९

एतच्चतुष्टयं प्रोक्तं मत्पित्रा तव मुक्तये ।
उपादिशद्दिव्यदेव्यै इत्येवं सर्वमुज्ज्वलः ॥ ५०

सा दिव्यदेवी तत्सर्वं निशम्य नियताशया ।
अशून्यशयनं नाम व्रतं चीर्त्वा ततः परम् ॥ ५१

नाम्नां शतं महाविष्णोर्जप्त्वा दुरितनाशनम् ।
सकलं निष्कलं रूपं ध्यात्वा विष्णोर्महात्मनः ॥ ५२

स्वस्वरूपं परिज्ञाय तेन निर्दग्धकल्मषा ।
प्रभावोपनतं दिव्यं विमानमधिरुह्य च ॥
गता सा वैष्णवं रूपं पुनरावृत्तिवर्जितम् ॥ ५३

विष्णुः—

उज्ज्वलोऽपि समागम्य पित्रोः पादौ प्रणम्य च ।
तत्सर्वं कथयामास वृत्तान्तं विस्मयान्वितः ॥ ५४

इति गुरुतीर्थे दिव्यदेव्युपाख्यानं
नाम प्रथमा कथा

## कुब्जारेवाख्यायिका नाम द्वितीया कथा

विष्णुः—

कुञ्जलस्तु महाप्राज्ञो द्वितीयं पुत्रमब्रवीत् ।
किमपूर्वं त्वया दृष्टं तन्मे कथय संज्वल ॥ १

संज्वलः—

गच्छाम्यहं प्रतिदिनं हिमवन्तं फलेप्सया ।
तत्र दृष्टं मयापूर्वं मानसोपान्तमागतः ॥ २

कृष्णो हंसस्त्रिभिर्हंसैः कृष्णैः शुद्धैः परैस्सह ।
चतस्रः कृष्णवर्णाश्च स्त्रियस्तेन समागताः ॥ ३

कृष्णहंसान् समालोक्य साक्षेपं जहसुः स्त्रियः ।
[1]ततस्स कृष्णहंसस्तु हंसैस्सह समुत्थितः ॥ ४

अहमुड्डीय तैस्सार्धं विन्ध्यपर्वतमभ्यगाम् ।
ते विन्ध्यशिखरे पुण्ये वृक्षच्छायां समाश्रिताः ॥ ५

तेषां तु पश्यमानानां [पश्यतामेव] कश्चिद्भिल्लः समागतः ।
कृष्णवर्णश्च रक्ताक्षो बर्बरः कृष्णकञ्चुकः ॥ ६

निनीषुर्मृगया[2]श्रान्ति कुब्जारेवासमागमे ।
अकरोत्स्नानपानादि तेनासीद्दिव्यदेहवान् ॥ ७

तस्मिन् क्षणे तस्य दातुमन्नं भिल्ली समागता ।
तेनाहूतापि नाज्ञासीत्तं वेषान्तरधारिणम् ॥ ८

भिल्लोऽपि पूर्ववृत्तान्तं ज्ञापयामास तां प्रति ।
तत्र तेषां पश्यतां तु स्नात्वा दिव्यस्वरूपिणी ॥ ९

वैष्णवं [3]यानमारुह्य सह भर्त्रा दिवं गता ।
तत्र स्नात्वा कृष्णहंसाश्चत्वारो विशदा[ः अ]भवन् ॥ १०

ताः स्त्रियः कृष्णवर्णाश्च मृता यमपुरं गताः ।
उड्डीना अपरे हंसाः स्वं स्वं स्थानं प्रपेदिरे ॥ ११

---

1. ख. ततस्तु 2. क. शान्ति 3. क. बाम

काः स्त्रियस्ता धार्तराष्ट्राः केऽपि हंसास्तथापराः ।
एतत्समस्तं विस्तार्य वद मे तात कुञ्जल ॥ १२

कुञ्जलः—

इन्द्रलोके मया दृष्टमाश्चर्यं प्रवदामि ते ।
एकदा नारदः स्वर्गमिन्द्रं द्रष्टुं समागतः ॥ १३

इन्द्रोऽपि नारदं दृष्ट्वा सुसम्पूज्याब्रवीद्वचः ।
त्वया दृष्टानि पुण्यानि तीर्थानि सकलान्यपि ॥ १४

तेषु कानि प्रशस्तानि महापातकनाशने ।

नारदः—

दृष्टानि पुण्यतीर्थानि पावनानि समानि च ॥ १५

नाहं विशेषं जानामि तानि प्रत्यक्षयस्व मे ।
शक्रस्तथेत्याजुहाव तीर्थानि सकलान्यपि ॥ १६

अष्टषष्टिश्च तीर्थानि नदीनां शतकोटयः ।
आजग्मुरिन्द्रस्य सभां सुरसङ्घैरलङ्कृताम् ॥ १७

तीर्थानि वः किं सामर्थ्यमिह पातकनाशने ।
प्रायश्चित्तं विना मध्ये भवतां तद्ब्रुवन्तु मे ॥ १८

सन्ति सर्वाणि तीर्थानि सर्वपापहराणि च ।
ब्रह्महत्यादिपापानि नाशितुं नैव शक्नुमः ॥ १९

प्रयागश्चार्कतीर्थञ्च पुष्करञ्च ततः परम् ।
पुण्यं वाराणसीतीर्थं महापातकनाशने ॥ २०

धात्रा सृष्टानि चत्वारि सर्वपापहराणि च ।
उपपातकनाशार्थं वयं धात्रा प्रतिष्ठिताः ॥ २१

एवमाकर्ण्य तद्वाक्यं तीर्थानां तु पुरन्दरः ।
अगम्यागमनोपेतो ब्रह्महत्यादिसंयुतः ॥ २२

सुरैस्सर्वैः परिवृतो मालवं देशमभ्यगात् ।
वाराणस्यामर्कतीर्थे प्रयागे पुष्करेऽपि च ॥ २३

स्नापितो मुनिभिस्त्यक्तः पापात्स्वर्ग[1]मपालयत् ।
ततस्तु ब्रह्मशर्मेति ब्राह्मणो गुरुघातकः ॥ २४

अगम्यागमनोपेतो देवशर्मा च दारुणः ।
बद्धलो नाम विख्यातो राजा ब्राह्मणघातकः ॥ २५

वञ्जुलो नाम वैश्यस्तु सुरापी दुष्टमानसः ।
चत्वार एते तीर्थानि सर्वाणि परिबभ्रमुः ॥ २६

[2]वाराणस्यामर्कतीर्थे प्रयागे पुष्करेऽपि च ।
अमायां सोमवारे च स्नात्वा मुक्तिं प्रपेदिरे ॥ २७

[3]चत्वारि तानि तीर्थानि तत्पापमलिनानि च ।
कृष्णहंस[4]स्य रूपेण सस्नुस्तीर्थेषु सर्वतः ॥ २८

रेवाकुब्जासङ्गमे तु स्नात्वा सिद्धिं प्रपेदिरे ।
स्त्रीरूपाः कृष्णहंसास्तु ब्रह्महत्यादिपातकाः ॥ २९

सांक्षेपहासच्छलतो भस्मीभूतास्तदाभवन् ।
आययुश्चापरे हंसास्तीर्थानि सकलान्यपि ॥ ३०

तीर्थेषु सिद्धिं यातेषु स्वं स्वं स्थान[5]मवाप्तवान् ।
एतत्ते सर्वमाख्यातं परिपृष्टं हि यत्त्वया ॥ ३१

इति गुरुतीर्थे कुब्जारेवाख्यायिका नाम
द्वितीयालापिका

---

1. ख. मथालभत्
2. अयं श्लोकः क. पुस्तके नास्ति
3. इदमर्धं क. पुस्तके नास्ति
4. क. स्वरूपेण.
5. क. मवापतन्

## सुबाह्वाख्यायिका नाम तृतीयालापिका

विष्णुः—

कुञ्जलस्तु महाप्राज्ञस्तृतीयं पुत्रमब्रवीत् ।
किमपूर्वं त्वया दृष्टं पुत्र तद्विस्तराद्वद ॥ १

विज्वलः—

अस्ति शृङ्गे मेरुगिरेरानन्दं नाम काननम् ।
दिव्यवृक्षसमाकीर्णं दिव्यनारीगणैर्युतम् ॥ २

चकास्ति तद्वनोद्देशे सोमनद्यभिधं सरः ।
तदन्तिकं समायातः कश्चिदाश्चर्यविग्रहः ॥ ३

सर्वाभरणसम्पन्नः शस्त्रेण विलसत्करः ।
दिव्यं यानं समारुह्य नार्या तादृशरूपया ॥ ४

अवतीर्य विमानात्तौ स्थितौ स्नात्वा सरोजले ।
तावत्तत्सरसो मध्यादुदभूच्छवयोर्युगम् ॥ ५

तत्रैकः कामिनीरूपः परस्तु पुरुषाकृतिः ।
तौ शवौ कोमलाकारौ सर्वाभरणभूषितौ ॥ ६

तौ दम्पती जगृहतुः स्त्रीरूपं स्त्री वरं पुमान् ।
करायुधैश्छिद्य शवावतीत्याहसतामुभे ॥ ७

अन्ये स्त्रियौ समागत्य तयोर्जगृहतुः पुनः ।
तौ दम्पती स्त्रियावन्ये देहि देहीत्ययाचताम् ॥ ८

एवं दृष्टं मया तात यदपूर्वं त्वयेरितम् ।
कान्तायुक्तस्स कस्तं के नार्यौ प्रहसनाकुले ॥ ९

देहि देहीति याचन्त्यौ नार्यौ के तद्वदस्व मे ।

कुञ्जलः—

श्रूयतामभिधास्यामि सर्वेषामेव कारणम् ॥ १०

चकास्ति चोलविषये सुबाहुर्नाम भूपतिः ।
नयरूपगुणोपेतो विष्णुभक्तिपरायणः ॥ ११

तस्यासीज्जैमिनिर्नाम पुरोधाः पुण्यनिश्चयः ।
एकदा तु समागत्य तमुवाच द्विजोत्तमः ॥ १२

राजंस्त्वं देहि दानानि यैर्भवेयुस्समृद्धयः ।
दानेन लभते कीर्तिं दानेनैव दिवं व्रजेत् ॥ १३

सुबाहुः—
स्वर्गस्य मे गुणं ब्रूहि तथा दोषं द्विजोत्तम ।

जैमिनिः—
न रोगो न जरा मृत्युर्न शोको न हिमातपौ ॥ १४

एते गुणास्समादिष्टा दोषं शृणु महीपते ।
इह यत् क्रियते कर्म तत्फलं तत्र भुज्यते ॥ १५

असन्तोषो भवत्येव दृष्ट्वा दिव्यां परश्रियम् ।
क्षीणे पुण्ये मर्त्य[1]लोकप्राप्तिस्सुमनसामपि ॥ १६

एवं दोषगुणौ श्रुत्वा स्वर्गस्य पृथिवीपतिः ।
तमुवाच महाभागं जैमिनिं वदतां वरम् ॥ १७

नाहं स्वर्गं गमिष्यामि न च दानं करोम्यहम् ।
ध्यानयोगेन देवेशं यजिष्ये कमलाप्रियम् ॥ १८

इत्युक्त्वा ज्ञानयोगेन पूजयामास केशवम् ।
उपचारप्रियं विष्णुमुपचारैश्च नार्चयत् ॥ १९

न दत्तं तेन नैवेद्यं कदाचिदपि विष्णवे ।
अन्नञ्च स्वयमुद्दिश्य ब्राह्मणेभ्यो न दत्तवान् ॥ २०

अदत्वा चातिथिभ्योऽन्नं भुनक्ति स्वयमेव सः ।
एवंविधस्स भूपालः पत्न्या सह दिवं गतः ॥ २१

विष्णुलोकं गतो राजा तत्र विष्णुं न दृष्टवान् ।
प्रियायुतोऽसौ क्षुधया तृष्णया चातिपीडितः ॥ २२

---

1. क, लोके,

पर्यटन्वामदेवं तु दृष्ट्वा [1]प्राञ्जलिरब्रवीत् ।

सुबाहुः—

अनया भार्यया सार्धं विष्णुलोकमहं गतः ॥ २३

तत्र विष्णुं न पश्यामि क्षुधा तृष्णा च वर्धते ।
एतन्मे कारणं ब्रूहि प्रसादसुमुखो भव ॥ २४

वामदेवः—

राजंस्त्वं विष्णुभक्तोऽसि त्वया विष्णुः प्रतोषितः ।
केवलध्यानयोगेन न हि नैवेद्यपूर्वकम् ॥ २५

न दत्तं विष्णुमुद्दिश्य विप्रेभ्योऽन्नादिकञ्च वा ।
अदत्त्वा चातिथिभ्योऽन्नं तव देहः सुरक्षितः ॥ २६

आवाहनादिभिर्विष्णुरुपचारैर्न तोषितः ।
तस्मात्त्वं सहधर्मिण्या [2]युतो विष्णुं न दृष्टवान् ॥ २७

यत्त्वया वासुदेवस्य नैवेद्यं न समर्पितम् ।
प्रियायुक्तस्य ते तस्मात् क्षुधा तृष्णा च वर्तते ॥ २८

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तद्वच्छुभाशुभं कर्म कर्तारमनुगच्छति ॥ २९

येन यत्रोपभोक्तव्यं सुखं वा दुःखमेव वा ।
स तत्र रज्ज्वा बद्ध्वेव बलाद्दैवेन नीयते ॥ ३०

उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति ।
करोति कुर्वतः कर्म च्छायेवानुविधायिनी ॥ ३१

भोगादृते नैव किञ्चित् प्रायश्चित्तं नरोत्तम ।
तस्मात्स्वकर्मणः पक्वं फलं भुङ्क्ष्व नरोत्तम ॥ ३२

यत्र ते पतितः कायः प्रियायाश्च महीपते ।
उभाभ्यां तत्र भोक्तव्यं गत्वा स्वं स्वं कलेवरम् ॥ ३३

---

1. क. साञ्जलि 2. क. युक्तो

यदा त्वं श्रोष्यते स्तोत्रं वासुदेवाह्वयमुत्तमम् ।
ब्रह्मणा कथितं पूर्वं तदा स्वर्गं प्रयास्यसि ॥ ३४

एवं श्रुत्वा ततो राजा राज्ञी चागत्य तत्तटम् ।
मांसमत्तः स्वदेहोत्थं दृष्ट्वा दुष्कृतयोः शवम् ॥ ३५

अन्नं न दत्तं विप्रेभ्यस्त्वया तत्स्वशरीरजम् ।
मांसमत्ती[त्सी]ति हसतः प्रज्ञाश्रद्धे स्त्रियौ तदा ॥ ३६

अन्ये स्त्रियौ क्षुधातृष्णे देहि देहीति याचतः ।
पुत्र त्वं वासुदेवाख्यं स्तोत्रं श्रुत्वा महीभुजे ॥ ३७

उपादिशेति पुत्राय प्रादात्सोऽपि महामतिः ।
आनन्दकाननं गत्वा पुरतस्तस्य भूभुजः ॥ ३८

जजाप वासुदेवाख्यं स्तोत्रं तत्पापशान्तये ।
तदाकर्णनमात्रेण राजा मुक्तस्स पातकात् ॥ ३९

भार्यया सहितस्तूर्णं विष्णुलोकं जगाम ह ।
दृष्ट्वा च पुण्डरीकाक्षं भोगान् स बुभुजे बहून् ॥
विज्वलः पुनरागत्य पित्रे सर्वं न्यवेदयत् ॥ ४०

इति सुबाह्वाख्यायिका नाम तृतीयालापिका

## अशोकसुन्दर्युपाख्यानं नाम चतुर्थी कथा

विष्णुः—

कुञ्जलस्तु महाप्राज्ञश्चतुर्थं पुत्रमब्रवीत् ।
यदपूर्वं त्वया दृष्टं तद्वदस्व कपिञ्जल ॥ १

कपिञ्जलः—

कैलासं पर्वतश्रेष्ठं गतोऽहं फलकाङ्क्षया ।
सरस्तत्रास्ति विमलं कश्चिद् दृष्टस्तु तत्तटे ॥ २

भस्मोद्धूलितसर्वाङ्गो जटावांस्तपसा कृशः ।
गङ्गाजलात्समानीय पुष्पं सम्पूजयन् शिवम् ॥ ३

तदन्तिके वरारोहा रुदती काचिदीक्षिता ।
एतन्मे कारणं ब्रूहि तात ज्ञानवतां वर ॥ ४

कुञ्जलः—

एकदा पार्वती देवमुवाच परमेश्वरम् ।
द्रष्टुं मे नन्दनं देव दौहृदं परिवर्तते ॥ ५

एवमस्तु महाभागे दर्शयिष्यामि नन्दनम् ।
इत्युक्त्वा वृषभारूढस्तया सह महेश्वरः ॥ ६

स्वर्णदीसरसोपान्तं प्रविष्टो नन्दनं वनम् ।
प्रविश्य दर्शयामास पार्वत्यै पार्वतीप्रियः ॥ ७

सुवर्णवल्लीसंवीतं कल्पकं काङ्क्षितार्थदम् ।
तं दृष्ट्वा पार्वती तस्याभीष्टदानपरीक्षया ॥ ८

पुत्रीं पुण्यगुणोपेतां ययाचे कल्पपादपम् ।
ततस्तस्मात्समुदिता काचित्कमललोचना ॥ ९

अपरा कल्पवल्लीव सर्वाभरणभूषिता ।
मञ्जुशिञ्जानमञ्जीरपदन्यासा समागता ॥ १०

शिवयोरन्तिकं साक्षादिव शृङ्गारदेवता ।
प्रणम्य शिवयोः पादं प्रफुल्लनलिनोपमम् ॥ ११

अहमम्ब त्वया सृष्टा किमर्थमिति सावदत् ।

देवी—

कल्पकस्याभीष्टदानं द्रष्टुं त्वं याचिता सुते ॥ १२

तस्माल्लब्धा सरोजाक्षी सर्वलक्षणलक्षिता ।
अशोकसुन्दरीनाम्ना ख्यातिं लोके गमिष्यसि ॥ १३

नहुषो नाम राजेन्द्रस्सोमवंशे भविष्यति ।
स एव पुत्रि ते भर्ता महीतलपुरन्दरः ॥ १४

इत्युक्त्वा गिरिजा पत्या सह कैलासमभ्यगात् ।
चचार नन्दनवने सा च सर्वसुखावहे ॥ १५

तस्मिन् काले विप्रचित्तेः सुतो हुण्ड इति श्रुतः ।
प्रविश्य नन्दनवनं दृष्टवान् शिवकन्यकाम् ॥ १६

तत्क्षणे मन्मथाविष्टस्तामुवाच वराननाम् ।
का त्वं कस्यासि भद्रे त्वमागता नन्दनं वनम् ॥ १७

कन्यका—

सुताहं देवदेवस्य शिवस्य गिरिजापतेः ।
स्वसाहं कार्तिकेयस्य पार्वती जननी मम ॥ १८

[1]को भवान् कुटिलः पापः किमर्थं परिपृच्छसि ।

हुण्डः—

विप्रचित्तिसुतो नाम्ना हुण्डस्त्वद्दर्शनादहम् ॥ १९

[2]ततः कन्दर्पविशिखैर्मम त्वं वल्लभा भव ।

कन्या—

ददौ मां नहुषायैव पार्वती जननी मम ॥ २०

भर्ता मे नहुषो नाम सोमवंशे भविष्यति ।
तस्मान्न प्रार्थनीयाहं त्यज भ्रान्तिमतो व्रज ॥ २१

---

1. अयं श्लोकः क. पुस्तके नास्ति 2. अयं श्लोकः क. पुस्तके नास्ति

हुण्डः—

नहुषो नाम भूपालस्सोमवंशे भविष्यति ।
भवती वयसा ज्येष्ठा स कनिष्ठो न युज्यते ॥ २२

कदा स नहुषो भद्रे तव भर्ता भविष्यति ।
तारुण्यं यौवनं तावन्नाशमेव प्रयास्यति ॥ २३

कन्यका—

अष्टाविंशति[त]मे प्राप्ते द्वापराख्ये युगे तथा ।
रैवतस्य सुतां पूर्वां बलो भार्यां करिष्यति ॥ २४

प्रद्युम्नो नाम वीरोऽपि गन्धर्वतनयां शुभाम् ।
पुरा कृतयुगे जातां निजभार्यां करिष्यति ॥ २५

अतस्त्वं दानवाधीश न चालय मनो मम ।
क्रुद्धा यदि त्वां धक्ष्यामि गच्छ मोहमिमं त्यज ॥ २६

इत्युक्तोऽशोकसुन्दर्या हुण्डो मायां तमोमयीम् ।
कृत्वा तां स्वगृहं निन्ये कन्दर्पशरपीडितः ॥ २७

स तां निवेश्य डोलायां बद्धाञ्जलिरुवाच ह ।
भद्रे भजस्व मां यत्त्वं वाञ्छसे तद्ददाम्यहम् ॥ २८

कन्यका—

भवादृशैरगम्याहं दानवैर्दानवाधम ।
नाशयिष्यामि ते जीवं धनपुत्रादिकानपि ॥ २९

नहुषस्य महीभर्तुर्हस्तान्मरणमेष्यसि ।
इति शप्त्वा तपस्तप्तुं गङ्गातीरं गता सती ॥ ३०

स हुण्डो मन्त्रिणा सार्धं कम्पनेन विचार्य च ।
नहुषस्य वधोपायं चिन्तयन्नुद्यतोऽभवत् ॥ ३१

विष्णुः—

तस्मिन् काले महाधीमानायुर्नाम महीपतिः ।
अवाप्तुं पुत्रमुद्युक्तो दत्तात्रेयाश्रमं ययौ ॥ ३२

दत्तात्रेयो महायोगी तमालोक्य नरोत्तमम् ।
पुरतस्साञ्जलिं नम्रमवज्ञाय स्थितोऽभवत् ॥ ३३

अवज्ञातोऽपि भूपालः स्थितस्तत्रैव भक्तितः ।
दत्तात्रेयस्तस्य भक्तिं दृष्ट्वा सन्तुष्टमानसः ॥ ३४

पुत्रं [1]पुत्रगुणोपेतं ददौ राज्ञाभियाचितः ।
स तु लब्धवरः [2]प्राप पुरीमायुर्महीपतिः ॥ ३५

तस्य राज्ञः प्रिया गर्भमधत्त कुलभूषणम् ।
तदा हुण्डो दानवस्तु गर्भविध्वंसकारिणीम् ॥ ३६

मायां चकार गर्भोऽपि रक्षितो विष्णुमायया ।
असूतेन्दुमती पुत्रं राज्ञी रात्रौ शुभे दिने ॥ ३७

जहार पुत्रं तं रात्रौ मायया दानवेश्वरः ।
आहूय विद्युतां हुण्डो बालं दत्त्वाब्रवीद्वचः ॥ ३८

एनं बालं रिपुं भक्ष्ये पचस्व सहसा स्वयम् ।
इत्युक्त्वा ज्ञातवृत्तान्तामकरोत्तां च दानवः ॥ ३९

सा समाहूय सैरन्ध्रीं स्वकरात्तत्करे ददौ ।
सा सूदस्य ददौ हस्ते स समालोक्य बालकम् ॥ ४०

दिव्यलक्षणसम्पन्नं तं हन्तुं नान्वमन्यत ।
सूदश्चान्यश्च सा चैव हत्वा बालकमाशु च ॥ ४१

पक्त्वा तस्य तु तन्मांसं ददतुर्विस्मयान्वितौ ।
सा च पक्वेन मांसेन सन्तुष्टं दानवं व्यधात् ॥ ४२

सा सैरन्ध्री तु तं बालं रात्रौ सुप्तजनव्रजे ।
वसिष्ठस्याश्रमद्वारि निधाय स्वगृहं गता ॥ ४३

प्रभाते स गृहद्वारि वसिष्ठः पुत्रमैक्षत ।
राजलक्षणसम्पन्नं बालसूर्यसमप्रभम् ॥ ४४

---

1. पुण्य 2. क. प्राप्य

दृष्ट्वा विचारयामास मुनिर्ज्ञानेन चक्षुषा ।
आयोः पुत्रमिमं ज्ञात्वा हुण्डस्य च विचेष्टितम् ॥ ४५

यावद्गृह्णाति पाणिभ्यां तावदिन्द्रादयः सुराः ।
मुमुचुः पुष्पवर्षाणि जगुर्गन्धर्वकिन्नराः ॥ ४६

घूर्णितं नैव केनापि बालभावे नराधिप ।
तस्मान्नहुष इत्यस्य नाम चक्रे द्विजोत्तमः ॥ ४७

जातकर्मादिकं चक्रे चौलोपनयनादिकम् ।
कृत्वा वेदांश्च शास्त्राणि ग्राहयामास तं सुतम् ॥ ४८

शस्त्राण्यस्त्राणि दिव्यानि नहुषायोपदिष्टवान् ।
तत्र चेन्दुमती पुत्रमदृष्ट्वा सूतिकागृहे ॥ ४९

केनो[ना]पनीतः पुत्रो मेऽत्यन्तशोकाकुलाभवत् ।
किं वा हृतं फलं कस्य पूर्वजन्मनि पापया ॥ ५०

कर्मणस्तस्य हि फलं भुज्यतेति रुरोद सा ।
आयुश्च ज्ञातवृत्तान्तः शुशोचातिशुचान्वितः ॥ ५१

तपसश्च फलं नास्ति नास्ति दानस्य यत्फलम् ।
यज्ञानाञ्च फलं नास्ति वाक्यञ्च महतामपि ॥ ५२

पुत्रः पुण्येन लब्धो मे केन मायाविना हृतः ।
इति शोकाकुले राज्ञि तत्रैवागत्य नारदः ॥ ५३

राजन् पुत्रस्तव क्षेमेणास्ते दुःखमिमं त्यज ।
स भविष्यति धर्मात्मा युद्धे वज्रायुधोपमः ॥ ५४

एवमुक्त्वा गते तस्मिन् राजा राज्ञी च तोषितौ ।
ततो वसिष्ठो नहुषं वन्यवृत्त्यर्थमादिशत् ॥ ५५

वन्यद्रव्यं समानेतुं नहुषोऽपि वनं ययौ ।
तत्र शुश्राव मधुरं चारणैरीरितं वचः ॥ ५६

वन्यद्रव्यं समानीय वसिष्ठस्य च सन्निधौ ।
उवाच प्रणतो भूत्वा चारणैरीरितं वचः ॥ ५७

अयं मात्रा विहीनोऽसावायोः पुत्रो महात्मनः ।
अयं हुण्डेनापहृतो नाम्नासौ नहुषः स्मृतः ॥ ५८

अशोकसुन्दरीनाम्ना पुण्या भागीरथीतटे ।
इममेव पतिं लब्धुं तपस्यति शिवात्मजा ॥ ५९

इति श्रुतं मुने तत्र किमिदं वद कौतुकम् ।

वसिष्ठः—

आयोः पुत्रो भवानेव त्वमेव नहुषाधिपः ॥ ६०

अशोकसुन्दरी कन्या प्रिया तव भविष्यति ।
हुण्डञ्च तव हर्तारं त्वं जित्वा दानवाधमम् ॥ ६१

मातरं पितरं नत्वा प्रबोधय महामते ।
इत्युक्तो मुनिभिस्सर्वैराशीर्भिरभिवर्धितः ॥ ६२

नत्वा वसिष्ठपदयोर्निर्जगाम तपोवनात् ।
अथ देवास्समासाद्य ब्रह्माद्याश्च तदन्तिकम् ॥ ६३

ब्रह्मा ब्रह्मास्त्रमब्जाक्षश्चक्रं शूलं त्रियम्बकः ।
शक्रायुधः स्वायुधानि नहुषाय ददुस्तदा ॥ ६४

इति दत्तायुधो देवैरारुह्य स्यन्दनोत्तमम् ।
जगाम नहुषस्तूर्णं हुण्डस्य वधकाङ्क्षया ॥ ६५

अथ हुण्डोऽपि सन्नाहमस्य श्रुत्वावमत्य च ।
निर्जगाम रणाकाङ्क्षी महत्या सेनया युतः ॥ ६६

अथ युद्धमभूद्घोरं हुण्डस्य नहुषस्य च ।
नहुषं दानवास्सर्वे खड्गैः शूलैश्च शक्तिभिः ॥ ६७

नहुषोऽपि समालोक्य दानवान्निशितायुधान् ।
इन्द्रायुधसमं चापं विस्फार्य निशितैः शरैः ॥ ६८

चिच्छेद रोषयोगेन शतशोऽथ सहस्रशः ।
केचिन्नष्टा हताः केचित् केचिद्भीताः पलायिताः ॥ ६९

अथ ढुण्डोऽपि युयुधे नहुषेण समं रणे ।
तयोः प्रववृधे युद्धं मत्तवारणयोरिव ॥ ७०

उभयोर्वीरयोर्युद्धं ददृशुर्दिवि देवताः ।
अस्त्रैः शस्त्रैरनेकैश्च युयुधाते परस्परम् ॥ ७१

ततस्स ढुण्डो दुष्टात्मा [1]विचिक्षेपाथ मुद्गरम् ।
नहुषस्तु विनिर्भिद्य सायकैर्नतपर्वभिः ॥ ७२

ढुण्डस्य ताडयामास गदया हृदयान्तरम् ।
स तया ताडितो भूमौ पपात रुधिरं वमन् ॥ ७३

नहुषेण हते ढुण्डे देवास्संप्रीतमानसाः ।
मुमुचुः पुष्पवर्षाणि जगुर्गन्धर्वकिन्नराः ॥ ७४

स वसिष्ठाश्रमं गत्वा नत्वा तस्य पदाम्बुजम् ।
नहुषः कथयामास दानवस्य पराभवम् ॥ ७५

मुनिस्तु विजयोपेतमाशीर्भिरभिवर्ध्य तम् ।
सन्तुष्टो रम्भया सार्धमाहूयाशोकसुन्दरीम् ॥ ७६

नहुषाशोकसुन्दर्योरकरोत्कौतुकक्रियाम् ।
नहुषं शिवनन्दिन्या सहितं सज्जनप्रियम् ॥ ७७

पुरीं प्रस्थापयामास द्रष्टुं पित्रोर्मुखाम्बुजम् ।
प्रेषितस्तेन मुनिना जगाम नहुषो बली ॥ ७८

पश्यन्वनस्थलीं दृप्तमृगां कौतुकसंयुतः ।
उत्तोरणध्वजां प्राप स्वपुरीं कुलभूषणः ॥ ७९

आनन्दनिर्भरां कुर्वन्नालोकनरताः प्रजाः ।
मातरं पितरं नत्वा ताभ्यामप्यभिनन्दितः ॥ ८०

पित्राभिषि[2]क्तोऽसौ राज्ये राज्यं चिरमपालयत् ।

कुण्डलः—

अनेन यो हतो ढुण्डस्तस्य पुत्रोऽभवद्बली ॥ ८१

---

1. क. चिक्षेपाथ स मुद्गरम्   2. क. क्तस्सोरण्ये

विहुण्डस्सत्त्ववीर्येण त्रैलोक्यञ्चाप्यपीडयत् ।
विहुण्डपीडिता देवाः प्रणम्य पुरुषोत्तमम् ॥ ८२

[1]तस्मै विज्ञापयामासुर्विहुण्डस्य विचेष्टितम् ।
तत्तु श्रुत्वा हरिर्मायां स्वीयां कान्ताकृतिं व्यधात् ॥ ८३

सा विहुण्डस्य पुरतः कोमला सञ्चचार ह ।
तां दृष्ट्वा सोऽपि कामार्तस्तस्यास्सङ्गमयाचत ॥ ८४

कन्या—

कामोदसम्भवैः पुष्पैस्सप्तकोटिभिरीश्वरम् ।
पूजयित्वाथ तां मालां मम कण्ठे निवेशय ॥ ८५

तव भार्या भविष्यामि तदाहं न हि संशयः ।
एतच्छ्रुत्वा विहुण्डोऽपि कामोदकुसुमेच्छया ॥ ८६

परिभ्रम्य वनोद्देशान् भार्गवं वाक्यमब्रवीत् ।
कामोदाख्यं द्रुमं ब्रूहि क्वास्ते पुष्पसमन्वितः ॥ ८७

शुक्रः—

कामोदपादपो नास्ति योषिदस्ति महीतले ।
यदा सा हसते हास्यात् पीतानि कुसुमान्यपि ॥ ८८

यदा रुदति सा तस्माद्रक्तानि कुसुमान्यपि ।
सम्भवन्त्येव सा नारी भुवि कामोदसंज्ञिता ॥ ८९

गङ्गाद्वारे सदा सेयमास्ते कामोदपट्टने ।
त्वया तत्रैव गन्तव्यमित्युक्तोऽसौ जगाम ह ॥ ९०

कामोदं प्रति गच्छन्तं दृष्ट्वा वर्त्मनि नारदः ।
क्व गच्छसि किमर्थं तत्कथयेत्यब्रवीद्वचः ॥ ९१

विहुण्डः—

कामोदायाः प्रसूनानि समाहर्तुं व्रजाम्यहम् ।
तैः शङ्करं पूजयित्वा प्रियां प्राप्स्यामि नारद ॥ ९२

---

1. अयं श्लोकः ख. पुस्तके नोपलभ्यते

नारदः—

तत्र दैत्य न गन्तव्यमास्ते विष्णुस्सुरारिहा ।
कामोदाश्रूणि विमले निपत्य स्वर्णदीजले ॥ ९३

भवन्ति रक्तपद्मानि समेष्यन्त्येव तज्जलात् ।
एवमुक्तो विहुण्डस्तु गङ्गातीरं समाश्रितः ॥ ९४

आदाय रक्तपद्मानि पूजयामास शङ्करम् ।
अथ गौरी क्रुधा युक्ता शङ्करं वाक्यमब्रवीत् ॥ ९५

कामोदा[1]शोकजैः पुष्पैः पूजयन् दुष्टमानसः ।
आवयोः कुरुते दुःखमिति तं हन्तुमुद्यता ॥ ९६

सा गृहीत्वा ब्राह्मणस्य वेषं तं हन्तुमुद्यता ।

गौरी—

कामोदाशोकजैः पुष्पैः किमित्यर्चयसे शिवम् ॥ ९७

तस्माद्दण्डं प्रदास्यामि भुङ्क्ष्व कर्म त्वयार्जितम् ।
इत्युक्तवन्तं तं विप्रं जिघांसुः खड्गमाददे ॥ ९८

स च हुङ्कारमात्रेण पातयामास दानवम् ।
दानवे तु हते सर्वे लोका हृष्टास्तदाभवन् ॥ ९९

कुञ्जलः—

स विहुण्डस्त्वया दृष्टस्तत्र वै पूजयन् शिवम् ।
रुदन्ती या त्वया दृष्टा सा कामोदा कपिञ्जल ॥ १००

स्वकर्मजनितात्पापात्संसारस्य भविष्यतः ।
स्वप्नाच्च नारदाद् दृष्ट्वा भिया रोदिति चानिशम् ॥ १०१

सा च पुण्योदयेनैव त्यक्तशोकाभवत्पुनः ।

विष्णुः—

एवंविधाः कथाः श्रुत्वा कुञ्जलो विरराम ह ॥ १०२

अथ स्थितो वटाधस्ताच्च्यवनो विस्मयावहम् ।
वाक्यं श्रुत्वा विस्मितान्तःकरणो वाक्यमब्रवीत् ॥ १०३

---

1. क. कोशजैः

च्यवनः—

को भवान् धर्मतत्त्वज्ञः पक्षिरूपेण पर्वते ।
किं वा देवोऽथ गन्धर्वः किं वा विद्याधरो भवान् ॥ १०४

कुञ्जलः—

नाहं देवो न गन्धर्वो न च विद्याधरो मुने ।
काश्यपस्य कुले जातः कश्चिदस्ति द्विजोत्तमः ॥ १०५

वेदवेदाङ्गतत्त्वज्ञः सर्वधर्मप्रवर्तकः ।
विद्याधर इति ख्यातः कुलशीलगुणान्वितः ॥ १०६

तस्य त्रयस्सुता जाता वसुशर्मा तु पूर्वजः ।
द्वितीयस्सोमशर्मा तु धर्मशर्मा तृतीयकः ॥ १०७

तेषामहं धर्मशर्मा तृतीयो गुणवर्जितः ।
ममाग्रजौ तु सञ्जातौ वेदवेदाङ्गपारगौ ॥ १०८

अहमेको महामूर्खो न करोमि गुरोर्वचः ।
काले महति सञ्जाते लज्जा समभवन्मम ॥ १०९

मूर्खो विद्याविहीनोऽहमिति देवालये स्थितः ।
मम भाग्योदयेनैव दृष्टवान् सिद्धमग्रतः ॥ ११०

प्रणम्य पादयोर्भक्त्या परया तस्य चाब्रुवम् ।
नाथ सिद्ध कृपाराशे प्रसीद सुमुखो भव ॥ १११

तत्त्वज्ञानप्रदीपेन मम ज्ञानं निबर्हय ।
इत्युक्तः कृपया सिद्धो बोधयामास मे सुधीः ॥ ११२

ज्ञानं सुनिर्मलं ज्ञेयं ज्ञातारं तत्त्वदर्शिनम् ।
मम ज्ञानेन युक्तस्य श्रृणु कीरत्वकारणम् ॥ ११३

मया गृहीतो विप्रेण दत्तः कश्चिच्छुकार्भकः ।
तस्य पाठविनोदेन मम जातं तु कौतुकम् ॥ ११४

नाथ स्नानार्थमागच्छ तात पूजय शङ्करम ।
बद्धो भोगोचितान् भुङ्क्ष्व सखे सम्भावयाम्यहम् ॥ ११५

एवं वदति मां नित्यं शुको विज्ञानसंयुतः ।
कदाचिद्भक्षितः कीरो बिडालेनातिरंहसा ॥ ११६

अहं तद्दुःखसंवीतो विस्मृतज्ञानपद्धतिः ।
शोकेन तन्मयो भूत्वा मृतोऽहं तादृशोऽभवम् ॥ ११७

मरणे यादृशो भावः प्राणिनां परिजायते ।
तादृशो जायते मर्त्यस्तद्भावपरिभावितः ॥ ११८

ज्ञानं गुरोः कृपादृष्ट्या प्राप्तं जन्मान्तरेऽपि माम् ।
तेन सर्वं च पश्यामि भवद्भूतं च भावि च ॥ ११९

तारणाय मुमुक्षूणां संसारश्रान्तचेतसाम् ।
गुरुतीर्थसमं नास्ति मुक्तिमार्गप्रदायकम् ॥ १२०

गुरुः शिवो गुरुर्मन्त्रो गुरुर्माता गुरुः पिता ।
गुरुर्वेदो गुरुः शास्त्रं गुरुर्योगो गुरुः फलम् ॥ १२१

गुरुर्देवो यतस्साक्षात्तद्गृहं देवमन्दिरम् ।
गुरोर्हितं प्रियं कुर्यादादिष्टो वाथवा सदा ॥ १२२

असमक्षं समक्षं वा तस्य कार्यं सदाचरेत् ।
श्रेयोऽर्थी चेद्गुरुं भक्त्या तोषयेन्न प्रकोपयेत् ॥ १२३

तस्य क्रोधेन दह्यन्ते ह्यायुःश्रीर्ज्ञानसत्क्रियाः ।
तस्मात् सर्वप्रयत्नेन तस्याज्ञां शिरसा वहेत् ॥ १२४

गुर्वाज्ञापालको यस्मा[1]ज्ज्ञानं सम्पत्तिमश्नुते ।
गुरोर्वै वचनं पुण्यं स्वर्ग्यमायुष्करं नृणाम् ॥ १२५

गुरुप्रसादात् त्रैलोक्यमशिषद्वै शतक्रतुः ।
गौतमस्य त्रयः पुत्रा गुरुशुश्रूषया तया ॥ १२६

लेभिरे महतीं कीर्तिं परं ज्ञानञ्च दुर्लभम् ।
गुरुतीर्थे रतस्तस्मात्सर्वान् कामानवाप्नुयात् ॥ १२७

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे गुरुतीर्थकथनं
नाम त्रयोदशोऽध्यायः

---

1. क. ज्ञानसंपत्ति

## ॥ चतुर्दशोऽध्यायः ॥

### स्वामितीर्थकथनम्

सूतः—

स्वामितीर्थं प्रवक्ष्यामि सर्वतीर्थफलावहम् ।
पित्रापि[पितृभ्यः]सर्वदेवेभ्यः स्वामितीर्थं परं स्मृतम् ॥ १

सर्वदेवमयः स्वामी पिता माता गुरुः स्वयम् ।
पिता हि राजा लोकस्य प्रजानां योऽनुकम्पया ॥ २

सम्भावयति मातेव दीनमभ्यवपद्यते ।
गुरुर्धर्मोपदेशेन शास्ता च परिपालनात् ॥ ३

दहत्यग्निरिवानिष्टान् दमयत्यहितांस्तथा ।
त्वष्टेव विसृजत्यर्थान् कुबेर इव कामदः ॥ ४

यस्याभावेन भूतानामभावः स्यात्समन्ततः ।
भावे च भावो नियतः कस्तं न प्रतिपूजयेत् ॥ ५

भर्तृशुश्रूषणं धर्मो यथा स्त्रीणां परो मतः ।
पुत्राणां पितृशुश्रूषा यथा सर्वफलावहा ॥ ६

शिष्याणां गुरुशुश्रूषा यथा कैवल्यदायिनी ।
प्रजानां च तथा स्वामिशुश्रूषा सर्वसिद्धिदा ॥ ७

आयुर्धर्मो यशः सौख्यं स्वामिशुश्रूषणाद्भवेत् ।
एतदर्थे पुरावृत्तमाख्यानं प्रवदामि वः ॥ ८

दमपुत्र इति ख्यातो राजाभूद्राज्यवर्धनः ।
स सम्यक् पालयाञ्चक्रे वसुधां वसुधाधिपः ॥ ९

तस्य पत्नी बभूवाथ मानिनी नाम कामिनी ।
कदाचित्तस्य सा सुभ्रूः शिरस्यभ्यञ्जनोद्यता ॥ १०

पश्यतो राजलोकस्य मुमोचाश्रूणि मानिनी ।
बहुशः पृच्छतस्तस्य भूभृतस्सा सुमध्यमा ॥ ११

दर्शयामास पलितं केशपाशान्तरोद्गतम् ।
स विहस्याब्रवीत्पत्नीं शृण्वतां तस्य भूभृताम् ॥ १२

जन्मर्द्धिपरिणामाद्याः सहजास्सर्वदेहिनाम् ।
सप्तवर्षसहस्राणि मयेयं पालिता मही ॥ १३

इदानीं वनवासस्य मम कालोऽयमागतः ।
शोकेनालं विशालाक्षीत्युक्त्वा स तु महीपतिः ॥ १४

वनं जिगमिषुः पुत्राभिषेकं कर्तुमुद्यतः ।
ततोऽमात्याश्च भृत्याश्च पौरवृद्धास्तथा द्विजाः ॥ १५

समेत्य मन्त्रयामासुः किमत्र क्रियतामिति ।
तपसाराध्य भास्वन्तं प्रार्थयामो महीपतेः ॥ १६

अस्यायुर्देयमित्युक्त्वा रवेः प्रीतिं वितेनतुः ।
केचिदर्घ्यैः परे दण्डप्रणामैरपरे स्तवैः ॥ १७

अन्ये पुष्पोपहारैश्च सन्तुष्टं भास्करं व्यधुः ।
अपरे वेदतत्त्वज्ञा भास्करन्यस्तदृष्टयः ॥ १८

साम्नां च यजुषां सूर्यसूक्तैश्चक्रुः प्रियं रवेः ।
इत्थं पूजयतां भक्त्या तुष्टस्सन्निदधे रविः ॥ १९

स्वप्रभामण्डलोपेतं सर्वे दृष्ट्वा दिवाकरम् ।
पुलकैर्भूषिताकाराः प्रणेमुर्मन्त्रपूर्वकम् ॥ २०

नमो नमस्तेऽस्तु सहस्ररश्मये
सर्वस्य हेतुस्त्वमशेषहेतुः ।
पाता त्वमीड्योऽखिलयज्ञधामन्
ध्येयस्तथा योगविदां प्रसीद ॥ २१

ततः प्रसन्नो भगवान् भानुराहाखिलाः प्रजाः ।
प्रीतोऽहं भवतां भक्त्या वरं वरयत प्रजाः ॥ २२

दशवर्षसहस्राणि जीवतां नो महीपतिः ।
निरामयो जितारातिः सुखी स्यात् स्थिरयौवनः ॥ २३

तथा भवत्विति वरं दत्वा भास्वांस्तिरोदधे ।
ऊचुर्नृपाय तद्वृत्तमिति लब्धवराः प्रजाः ॥ २४

तच्छ्रुत्वा मानिनीं दृष्ट्वा राजा चिन्ताकुलोऽभवत् ।
राज्ञी चिन्ताकुलं भूपं प्राह राजन् महामते ॥
किमर्थं हर्षकाले तु चिन्तयाविष्टमानसः ॥ २५

राजा—

दश वर्षसहस्राणि मया[मम]जीविष्यता[ष्यतः]प्रिये ।
[1]पुत्रान् पौत्रान् प्रपौत्रांश्च बान्धवान् सकलाः प्रियाः ॥ २६

पश्यतो मे मृतान् दुःखं किमल्पं हि भविष्यति ।
अत एवाहमाराध्य भानुं लप्स्ये समीहितम् ॥ २७

दशवर्षसहस्राणि यथाहं स्थिरयौवनः ।
तथा स्थिरायुषो लोके प्रजास्सर्वाः करोम्यहम् ॥ २८

इत्युक्त्वा स जगामाशु कामरूपं महीधरम् ।
तत्रैवाराधयामास भास्करस्य दृढव्रतः ॥ २९

प्रातः प्रातस्समुत्थाय तीव्रांशुमवलोकयन् ।
पादाङ्गुष्ठेन च स्थित्वा निराहारो जितेन्द्रियः ॥ ३०

ऊर्ध्वबाहुर्जपन् देवीं गायत्रीं सर्वसिद्धिदाम् ।
तोषयामास भास्वन्तं लोकेशं दिवसान् बहून् ॥ ३१

ततस्सहस्रकिरणस्सन्तुष्टः पुरतोऽभवत् ।
ददौ प्रजानां भूभर्तुरायुः स्थितिकरं वरम् ॥ ३२

दशवर्षसहस्राणि धर्मेणापालयत्प्रजाः ।
प्रजाश्च स्वामिनः प्रीत्या प्राप्ता लक्ष्मीं [2]प्रियायुषः ॥ ३३

---

1. 26 श्लोकोत्तरार्धं 27 श्लोकपूर्वार्धं च ख. पुस्तके नास्ति
2. ख. स्थिरा-

सर्वयज्ञेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।
तत्फलं समवाप्नोति स्वामितीर्थरतो नरः ॥ ३४

तत्र गङ्गा गया तत्र तत्र पुष्करमेव च ।
भृत्यस्य भक्तियुक्तस्य सुस्वामी यत्र तिष्ठति ॥ ३५

स्वामिनः पुरतो यस्तु प्राणांस्त्यजति संयुगे ।
तस्याश्वमेधयज्ञस्य फलं भवति निश्चयात् ॥ ३६

नास्ति स्वामिसमं तीर्थं भृत्यानां हितकारणम् ।
स्वामिकार्ये त्यजन् प्राणान् कर्णः कीर्तिं परां गतः ॥ ३७

आञ्जनेयः स्वामिभक्त्या प्राप्स्यति ब्रह्मणः पदम् ।

सूतः—

तस्मात्सर्वप्रयत्नेन स्वामितीर्थं समाश्रयेत् ॥ ३८

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे स्वामितीर्थ-
कथनं नाम चतुर्दशोऽध्यायः

## ॥ पञ्चदशोऽध्यायः ॥

### भार्यातीर्थकथनम्

सूतः—

भार्यातीर्थं प्रवक्ष्यामि सर्वतीर्थोत्तमोत्तमम् ।
पुंसां सद्यस्सुखकरमिह लोके परत्र च ॥ १

अस्ति वाराणसी नाम पुरी भागीरथीतटे ।
तस्यां नित्यं वसत्येको वैश्यः कृकलसंज्ञकः ॥ २

तस्य भार्या महासाध्वी साध्वीव्रतपरायणा ।
धर्माचार[1]परा नित्यं पातिव्रत्यगुणान्विता ॥ ३

[2]सुकला नाम पुण्याङ्गी प्रियाकारा प्रियप्रिया ।
वैश्यश्च सर्वधर्मज्ञः पुराणश्रवणोत्सुकः ॥ ४

तीर्थयात्रां स तु श्रुत्वा बहुपुण्यप्रदायिनीम् ।
तीर्थयात्रापरैर्विप्रैस्सह गन्तुं मतिं व्यधात् ॥ ५

अविचार्यैव गच्छन्तं पत्नी तं वाक्यमब्रवीत् ।
अहं वै धर्मपत्नी ते सदा पुण्यकरी प्रिया ॥ ६

पतिभक्तिपरा नित्यं पतिदेवं यजाम्यहम् ।
पतितीर्थं समाश्रित्य वर्ते नित्यमतन्द्रिता ॥ ७

सव्यं पादाम्बुजं भर्तुः प्रयागः पापनाशनः ।
तस्य वामपदाम्भोजं तीर्थं पुष्करसंज्ञितम् ॥ ८

तस्य पादोदकं तस्मात् स्नानात्पानाच्च सिद्धिदम् ।
सर्वतीर्थमयो भर्ता [3]सर्वपुण्यमयः पतिः ॥ ९

---

1. क. रता
2. क. सुकलो
3. क. सर्वतीर्थं

[1]गङ्गादिसर्वतीर्थानां यात्रां कृत्वापि यद्भवेत् ।
तत्फलं समवाप्नोति भर्तुः शुश्रूषणादपि ॥ १०

स्त्रीणां नैव पृथग्धर्मः पतिशुश्रूषणं विना ।
आश्रित्य तावकीं छायामागमिष्यामि तत्पते ॥ ११

सूतः—

रूपं शीलं गुणं भक्तिं समालोक्य पुनः पुनः ।
शरीरकोमलामेनां दुष्टे पथि कथं नये ॥

इति निश्चित्य निश्चित्य स्वां प्रियां पुनरब्रवीत् ॥ १२

कृकलः—

ममाप्येतत् कृतं स्थानं धर्मस्थानं वरानने ।
मम प्राणप्रिया नित्यं रक्षणीया सदैव हि ॥ १३

अत्रैव तिष्ठ भद्रे त्वं गृहिणीधर्ममाश्रिता ।
इत्युक्ता तस्य भार्यापि तद्यात्रां नान्वमन्यत ॥ १४

सोऽपि तस्यामजानन्त्यां सार्थेन च समागतः ।
तस्मिन् गते महाभागे तां तद्गतिमजानतीम् ॥ १५

दुःखशोकपरीताङ्गीं त्यक्ताभरणभोजनाम् ।
एकवेणीधरामेककञ्चुकीमेकवाससम् ॥
जीविते निरपेक्षां तां सख्यः प्रोचुरिदं वचः ॥ १६

सख्यः—

तीर्थयात्रां प्रति गतस्तव भर्ता द्विजैस्सह ।
साधयित्वा तीर्थजातं पुनरेष्यति सुव्रते ॥ १७

मा शुचस्त्वं शुभं ब्रूहि पत्युरागमनं प्रति ।
पानीयमपि भुङ्क्ष्वान्नं कुरु शृङ्गारमुत्तमम् ॥ १८

वृथा त्यजसि किं भोगान् वृथा च परितप्यसे ।
इति तासां वचः श्रुत्वा सुकला वाक्यममब्रवीत् ॥ १९

---

1. क, गया

यावदायाति मे भर्ता भूमौ स्वप्स्याम्यसंस्तरा ।
घृतं क्षीरं न भोक्ष्येऽहं तैलं च लवणं दधि ॥ २०

परित्यजामि ताम्बूलं मधुरञ्च गुडादिकम् ।
एकाहारा निराहारा त्यक्तकल्याणभूषणा ॥ २१

यावदागमनं भर्तुस्तावदेवं करोम्यहम् ।
मां त्यक्त्वा तु गतो भर्ता तीर्थसाधनतत्परः ॥ २२

मम भारायते प्राणो निमेषोऽपि युगायते ।
जीवनाशो वरं सख्यो वरञ्च विषभक्षणम् ॥ २३

वरमग्निप्रवेशश्च वरं कायविनाशनम् ।
पतिं या कर्मणा वाचा मनसा वापि पूजयेत् ॥ २४

भर्तुः पार्श्वं महातीर्थं या समाश्रित्य वर्तते ।
सा कान्ता लभते पुत्रान् सा भाग्यमपि विन्दति ॥ २५

स्वभर्तारं परित्यज्य व्रतमन्यं करोति या ।
सा निष्फलव्रता लोके पुंश्चलीति निगद्यते ॥ २६

दृष्टे भर्तरि तस्यास्तु तुष्टाः स्युस्सर्वदेवताः ।
तुष्टे भर्तरि पुष्यन्ति ऋषयो देवतागणाः ॥ २७

शृङ्गारभूषणं रूपं सम्पत्सौभाग्यमेव च ।
पत्या विना न [1]भात्येव क्षीरं सर्पमुखे यथा ॥ २८

गते भर्तरि या नारी शृङ्गारं कुरुते यदि ।
तामेव भूतले लोकाः पुंश्चलीं प्रवदन्ति च ॥ २९

अस्मिन्नर्थे पुरावृत्तमुपाख्यानं वदामि वः ।
पूर्वमासीदयोध्यायामिक्ष्वाकुर्नाम भूपतिः ॥ ३०

सुश्रवा नाम तस्यासीद्भार्या कामेश्वरात्मजा ।
तया सार्धं महाराजश्चिरं रेमे यथेप्सितम् ॥ ३१

---

1. क. भाव्येत

एकदा जाह्नवीतीर्थं मृगयार्थं गतस्तया ।
स तु तत्र वराहांश्च खड्गांश्च महिषानपि ॥ ३२

निजघान शरैस्तीक्ष्णैरन्यान् दुष्टमृगानपि ।
एवं संक्रीडमानस्य कोलः प्रादुरभूत्पुरः ॥ ३३

बहुसूकरयूथेन पुत्रपौत्रैरलङ्कृतः ।
पर्वतप्रान्तमाश्रित्य तिष्ठन्तं पर्वतोत्तमम् ॥ ३४

पलायन्तं स्ववीर्येण पुत्रान् पौत्रान् गुरूंश्च तान् ।
दृष्ट्वा विस्मयमापेदे राजा समरदुर्जयः ॥ ३५

राजानं सूकरो दृष्ट्वा सूकरीमाह गर्वितः ।
मृगयां क्रीडते कान्ते कोसलानामधीश्वरः ॥ ३६

लुब्धकैरुद्धतबलैः श्वभिर्मृगकुलान्तकैः ।
स दृष्ट्वा मामकं यूथं जिघांसुरभियास्यति ॥ ३७

अयं हि पुण्यो नृपनाथ आगतो
विश्वाधिकः केशवरूपरूपः ।
युद्धं करिष्ये समरे महात्मना
सार्धं प्रिये पौरुषभीषणेन ॥ ३८

जेष्यामि भूपं यदि नैजतेजसा
भोक्ष्यामि राज्यं महतीञ्च कीर्तिम् ।
नो वा हतो वीरवरेण सङ्गरे
यास्यामि लोकं मधुसूदनस्य ॥ ३९

न जाने पातकं पूर्वमन्यजन्मनि सञ्चितम् ।
येनाहं सूकरीं योनिं गतः पातकसञ्चयात् ॥ ४०

अस्य बाणोदकैर्घोरैः क्षालयिष्यामि पातकम् ।
[1]देवेनापि ममाद्यैव स्वर्गद्वारमनुत्तमम् ॥ ४१

1. क. दैवेना-

उद्घाटितकवाटं तद्यास्यामि समराद्दिवम् ।
त्वं पुत्रपौत्रान् स्वजनं कुटुम्बं वृद्धबालकम् ॥
गृहीत्वा पर्वतप्रान्तं गच्छ मोहमिमं त्यज ॥ ४२

सूकरी—

अस्मिन् यूथे भवान् स्वामी पुत्रपौत्रैरलङ्कृतः ।
त्वया मुक्तमिदं सर्वं भविष्यति विचेतनम् ॥ ४३

अलङ्कृतापि या नारी वस्त्रैर्माणिक्यभूषणैः ।
[1]न भाति पतिहीना सा तथाहं पुत्रपौत्रकैः ॥ ४४

चन्द्रहीना यथा रात्रिः पुत्रहीनं यथा कुलम् ।
दीपहीनं यथा गेहं ज्ञानहीनो यतिर्यथा ॥ ४५

[2]मन्त्रहीनं यथा राष्ट्रं वेदहीनो यथा द्विजः ।
त्वया हीनो न भात्येव तथा कोलबलं महत् ॥ ४६

[3]प्रविशामि त्वया सार्धं भूमिं वा स्वर्गमेव वा ।
त्वया विना न शक्नोमि धर्तुं प्राणान् ममेश्वर ॥ ४७

आवां व्रजाव यूथेशैस्सह पर्वतकन्दरम् ।
तत्र किं दृश्यते लोभो मरणे वद साम्प्रतम् ॥ ४८

सूकरः—

वीराणां त्वं न जानासि धर्ममार्गं शृणु प्रिये ।
परेण याचितं युद्धं न ददाति यदा भटः ।
कामाल्लोभाद्भयाद्वापि कुम्भीपाके स पच्यते ॥ ४९

युद्धातिथिस्समायातो विष्णुरूपस्सनातनः ।
सत्कारो विष्णुरूपेण कर्तव्यश्च मया प्रिये ॥ ५०

सूकरी—

ततोऽहं कान्त पश्यामि युद्धे तव पराक्रमम् ।
इत्युक्त्वा बालकान् [4]प्राह यूयं गच्छथ बालिशाः ॥
अहं युद्धाय गच्छामि पत्या पौरुषशालिना ॥ ५१

---

1. क. नाभाति
2. क. मन्त्रि
3. क. प्रविशानि
4. क. आह

पुत्राः—

यो याति पितरौ त्यक्त्वा युद्धे स नरकं व्रजेत् ।
तस्मात्त्यक्त्वा न यास्यामो योत्स्यामः सुभटैस्सह ॥ ५२

इत्युक्त्वा व्यूहमाकल्प्य बलं वाराहमास्थितम् ।
अथ राजा समालोक्य वाराहबलसम्भ्रमम् ॥ ५३

अभिप्रतस्थे तत्सैन्यं सुभटैर्लुब्धकैः श्वभिः ।
रथैर्गजैः परिवृतस्तुङ्गं तुरगमास्थितः ॥ ५४

ततो राज्ञा समाज्ञप्ता लुब्धकाः श्वभिरावृताः ।
वाराहं छादयामासुः सायकैर्नतपर्वभिः ॥ ५५

अथ सूकरराजोऽपि रोषावेशवशीकृतः ।
चकार कदनं राज्ञो बलस्य सुबलेन हि ॥ ५६

निशितैरायुधैर्वीरो दंष्ट्राघातैश्च सूकराः ।
अकुर्वन् द्वन्द्वयुद्धं तु स्मरणादपि भीतिदम् ॥ ५७

दंष्ट्राघातैः शराघातैर्हताश्शूराश्च सूकराः ।
निपत्य रक्तदिग्धाङ्गा भूमौ स्वर्गं प्रपेदिरे ॥ ५८

एकावशिष्टं युद्धाय गच्छन्तं प्राह सूकरी ।
गच्छ कान्त मया सार्धं सुतैः शिष्टैश्च पञ्चभिः ॥ ५९

सूकरः—

बले भग्ने क्व गच्छामि प्रिये स्थानं न भूतले ।
उभयोस्सिंहयोर्मध्ये सूकरः पिबते जलम् ॥ ६०

द्वयोः सूकरयोर्मध्ये सिंहो न पिबते जलम् ।
एवं सूकरजात्यां हि दृश्यते बलमुत्तमम् ॥ ६१

यदि भग्नो व्रजाम्यद्य क्षतं स्यात्कौलपौरुषम् ।
यः कामाद्वा भयाल्लोभाद्रणतीर्थात्पलायते ॥ ६२

युध्यन् गतोऽथ यः पापी स स्त्रीजात इति श्रुतिः ।
यो वीरः सङ्गरे प्राणांस्त्यजत्यभिमुखे रिपोः ॥ ६३

स याति परमं लोकं देवदेवस्य शार्ङ्गिणः ।
यो युद्धेऽभि[1]मुखे युध्यन् परैः स्वशिरशोणितम् ॥ ६४

पिबति स्वर्गलोकस्थस्सोऽश्वमेधफलं लभेत् ।
एवं धर्मं विदित्वा तु कथं यास्ये रणान्तरात् ॥ ६५

तस्मात्कोसलराजेन यास्याम्यभिमुखे स्थितः ।
इत्युक्त्वा कोलराजोऽपि रोषावेशवशीकृतः ॥ ६६

अत्युद्धतसटाटोपां कुर्वन् [2]घुरुघुरारवम् ।
राजानं प्रत्युदचलत्स जगाम इवाचलः ॥ ६७

पत्तिं विद्रावयामास प्रस्थितैः श्वासमारुतैः ।
पौत्रेण पृथुना वेगात् स्यन्दनानुदचिक्षिपत् ॥ ६८

अतितीव्रैः खुराघातैस्तुरङ्गानप्यपातयत् ।
दंष्ट्राघातैः करीन्द्राणां शुण्डादण्डानखण्डयत् ॥ ६९

पतत्पत्रि त्रसत्पत्ति धावद्धस्ति चलद्रथम् ।
तद्बलं सहसा जज्ञे संक्षुब्ध इव सागरः ॥ ७०

अथ राजा समालोक्य सैन्यं सूकरनिर्जितम् ।
तुङ्गं तुरङ्गमारुह्य सज्यमादाय कार्मुकम् ॥ ७१

सूकरं पर्वताकारं क्षणादपि ससार सः ।
अभिद्रुत्य स राजा तं शरवर्षैरवाकिरत् ॥ ७२

स तु निर्धूय बाणौघान् घोणाघातैः सटाच्छटैः ।
जघान वेगात्तुरगं दंष्ट्रया वज्रसारया ॥ ७३

राजा तुरङ्गा[3]दुत्प्लुत्य त्यक्त्वा निपतितं हयम् ।
आरूढस्यन्दनो बाणान् निजघान तदङ्गके ॥ ७४

स वराहोऽपि दंष्ट्राभ्यां पौत्रेण पृथुना खुरैः ।
कोपात्सञ्चूर्णयामास ससूतं सहयं रथम् ॥ ७५

---

1. क. मुखो
2. क. पुरुपुरा
3. क. दुत्पत्य

अवतीर्य रथाद्राजा सूकरं रोषरूषितः ।
गदया वज्रसमया ताडयामास मस्तके ॥ ७६

गदाघातेन तीव्रेण सहसा भिन्नमस्तकः ।
क्षतजालिप्तसर्वाङ्गो निपपात महीतले । ७७

स पश्यत्येव नृपतौ हित्वा तां सूकरीं तनुम् ।
दिव्याम्बरधरो दिव्यवपुर्भूत्वा चतुर्भुजः ॥ ७८

दिव्यं विमानमारुह्य त्रिदशालयमास्थितः ।
अथ सा दिव्यवपुषं भर्तारं निहतं युधि ॥ ७९

दृष्ट्वा निश्वस्य सहसा पुत्रकानिदमब्रवीत् ।
भवतां च पिता स्वर्गं गतो वीरः स्वकर्मणा ॥ ८०

अनेनैव पथा यास्ये मद्भर्ता यत्र तिष्ठति ।
गिरिकन्दरदुर्गाणि समाश्रयत जीवत ॥ ८१

एवमुक्त्वा पञ्च पुत्रांस्तेषां त्रीन् विनिवर्त्य च ।
द्वाभ्यां समेता युयुधे युद्धार्हाभ्यां महीभुजे ॥ ८२

निपात्य पत्तीन् सञ्चूर्ण्य स्यन्दनं तुरगोत्करम् ।
विदार्य दन्तिनो भित्त्वा बलं सा व्याकुलं व्यधात् ॥ ८३

कृत्यामिव समुद्भूतां दर्शनादेव भीतिदाम् ।
दृष्ट्वा काशीन्द्रतनया राजानमिदमब्रवीत् ॥
किमर्थं सूकरीं दुष्टां न निवारयसि प्रभो ॥ ८४

राजा—

महान् दोषः प्रिये दृष्टः स्त्रीवधे दैवतेरितः ।
वध्यामपि न हन्ये तां प्रेषयामि न कञ्चन ॥ ८५

एवमुक्त्वा तदा राज्ञीं विरराम महीपतिः ।
ततस्तु जर्झरो नाम लुब्धकः सूकरीं शरैः ॥ ८६

बिव्याध सा तु दंष्ट्राभ्यां द्विधा कृत्वा न्यपातयत् ।
पतमानेन तेनापि खड्गेन विदलीकृता ॥ ८७

सुकला—

एनां कण्ठगतप्राणां पतितां धरणीतले ।
दृष्ट्वाभ्यषिञ्चत्पाणिभ्यां दिव्यतोयेन सुश्रवाः ॥ ८८

सा समुन्मील्य नेत्रे तां वाचा मानुष्ययावदत् ।
भद्रे भवतु ते भद्रं त्वत्करोदकसेचनात् ॥ ८९

त्वद्दर्शनात् क्षयं याति मम दुष्कृतसञ्चयः ।
तदाकर्ण्य वचस्तस्या विस्मिता प्राह तां पुनः ॥ ९०

सुश्रवाः—

का त्वं भद्रे पतिः कस्ते कथं ते मानुषं वचः ।
तव भर्तुः कथमभूद्भद्रे सूरकजातिता ॥ ९१

सूकरी—

रङ्गविद्याधरो नाम गन्धर्वो मत्पतिः पुरा ।
मेरुं गिरिं समाश्रित्य [1]पुलस्त्यस्य [2]तपस्यतः ॥ ९२

अगात्तदाश्रमोपान्ते सुस्वरं श्रोत्रयोस्सुखम् ।
स मुनिर्गीतमाकर्ण्य ध्यानाच्चलितमानसः ॥ ९३

स्थानमन्यद्व्रजस्वेति गायन्तं तमुवाच ह ।

रङ्गविद्याधरः—

एतत्साधारणस्थानं त्वदुक्त्या न व्रजाम्यहम् ॥ ९४

गच्छ त्वमिति तद्वाक्यं श्रुत्वा श्रवणनिष्ठुरम् ।
क्षमां कृत्वा जगामाथ स्थानमन्यद् द्विजोत्तमः ॥ ९५

स्थानं तेन पुनः क्रूसमसौ वाराहरूपधृक् ।
क्षोभयामास सोऽप्येष पशुरित्यकरोन्मतिम् ॥ ९६

असौ तत्र स्थितो गीत्या तस्य विक्षोभयन्मनः ।
एवं शशाप [3]कोपेन स तु शापायुधो मुनिः ॥ ९७

वाराहं रूपमास्थाय त्वयाहं बाधितो ननु ।
तस्माद्दुर्वृत्तचित्तस्त्वं सूकरीं योनिमाश्रय ॥ ९८

---

1. ख. युक्तस्त्वस्य  2. क. समाश्रितः  3. क. क्रोधेन

शप्तस्तेनापि विप्रेण गत्वा देवं पुरन्दरम् ।
विज्ञाप्य तेन सहितो मुनेरन्तिकमागमत् ॥ ९९

इन्द्रः—

क्षम्यतामपराधो यदनेनैव दुरात्मना ।
इति तेनानुनीतः सन्मुनिरिन्द्रमभाषत ॥ १००

पुलस्त्यः—

इक्ष्वाकुर्नाम धर्मात्मा सर्ववर्णानुपालकः ।
भविष्यति यदा तेन शापमोक्षं प्रयास्यति ॥ १०१

[1]इत्युक्तः सौकरीं योनिं प्राप्यानेन समुद्धृतः ।
मुक्तः शापादयं भद्रे दिव्यमूर्तिर्दिवं गतः ॥ १०२

एवमेतस्य शुकलावृत्तान्तं ते निवेदितम् ।
मदीयमपि वृत्तान्तं शृणुष्व पतिना सह ॥ १०३

कलिङ्गाख्ये शुभे देशे श्रीपुरं नाम पत्तनम् ।
तस्मिन्वसति नाम्नाथ वसुदत्त इति द्विजः ॥ १०४

अहं तस्य सुता भद्रे सर्वकल्याणसंयुता ।
याचितोऽपि द्विजैः स्वीयैर्मत्पिता मां न दत्तवान् ॥ १०५

मे माता यौवनोपेतां मां दृष्ट्वा प्रियमाह सा ।
किमर्थं न ददासि त्वं कन्यकां कान्तिभूषणाम् ॥ १०६

वसुदत्तः—

योऽस्मद्गृहे नित्यवासी तस्मै कन्यां ददाम्यहम् ।
तस्मिन् काले तु धर्मात्मा शिवशर्मा द्विजोत्तमः ॥ १०७

रूपवान् वेदविच्छान्तो भिक्षार्थं गृहमागतः ।
भद्रे मां दत्तवांस्तस्मै पिता मम शुभे दिने ॥ १०८

अहं मम पितुर्गेहे स्थिता च पतिना सह ।
नैव शुश्रूषितो भर्ता पादसंवाहनादिभिः ॥ १०९

1. ख. इत्युक्त्वा

स्नेहेन पतिभावेन न दृष्टः पापया मया ।
मातापित्रोस्सुशिक्षां च भ्रातॄणाञ्च हितं वचः ॥ ११०

अकुर्वत्या [1]ममालोक्य भर्ता मम गृहाद्गतः ।
गते भर्तरि मे तातः स्वभार्यामिदमब्रवीत् ॥ १११

इयं पापसमाचारा निर्गुणा ब्रह्मचारिणी ।
अनया हि परित्यक्तः शिवशर्मा महामतिः ॥ ११२

अहमेनां परित्यक्ष्ये ब्रह्म[2]चारिविनाशिनीम् ।
मात्रा त्वयाद्य किं ज्ञातं सुताया गुणदूषणम् ॥ ११३

तावद्धि लालयेत्पुत्रं यावत्स्यात्पञ्चवार्षिकः ।
गुणेषु योजयेत्कान्त सद्विद्यायां पिता सुतान् ॥ ११४

निस्नेहो गुणशिक्षार्थं पिता भवति सर्वदा ।
पालने पोषणे चैव सस्नेहो भवति ध्रुवम् ॥ ११५

गुणैर्न वर्णयेत्पुत्रं वचनैः परिपीडयेत् ।
निपुणो जायते यावत् सद्विद्यासु गुणेषु च ॥ ११६

तावन्न लालयेत्पुत्रं वंशास्थितिकरः पिता ।
माता च ताडयेत्कन्यां स्नुषां श्वश्रूश्च ताडयेत् ॥ ११७

अश्वञ्च ताडयेद्वीरः पतिर्भार्याञ्च ताडयेत् ।
गुरुश्च ताडयेच्छिष्यममात्यो नृपतिं तथा ॥ ११८

निरङ्कुशा धृता गेहे त्वयेयं नाशिता सुता ।
अष्टवर्षान्विता यावद् गृहे धार्या तु कन्यका ॥ ११९

अष्टवर्षाधिकां कन्यां पिता गेहे न धारयेत् ।
पतिगेहस्थिता सा चेत्पुत्रपौत्रान्विता भवेत् ॥ १२०

पिता च कीर्तिमाप्नोति सत्पुत्रास्सद्गुणैः प्रियः ।
तस्मान्न धारयेद्धीमान् गृहे पुत्रीं सभर्तृकाम् ॥ १२१

---

1. क. मया 2. क. चार

अस्मिन्नर्थे श्रूयते हि कान्ते पौराणिकी कथा ।
माथुरे विषये पुण्ये मथुरायां नृपोत्तमः ॥ १२२

उग्रसेन इति ख्यातो धर्मेणापालयत्प्रजाः ।
पद्मावती श्वेतकेतोस्सुता तस्याभवत्प्रिया ॥ १२३

तया सह बहून् भोगान् बुभुजे पृथिवीपतिः ।
श्वेतकेतुस्सुतां स्मृत्वा पतिगेहे च रोषिताम् ॥ १२४

आप्तैरानाययामास तदालोकनवाञ्छया ।
सा प्रियेण कृतानुज्ञा पितृगेहं समाश्रिता ॥ १२५

हर्षेण महता युक्ता निश्शङ्का विचचार ह ।
एकदा तु सखीयुक्ता रमणीयं वनं ययौ ॥ १२६

तत्र पद्मावती रेमे स्वसखीभिस्समावृता ।
ततस्तु गोभिलो नाम दैत्यो वियति सञ्चरन् ॥ १२७

पद्मावतीं समालोक्य हृदि कामातुरोऽभवत् ।
अहो भावमहो रूपमस्यास्तु परिदृश्यते ॥ १२८

अनया तु कथं रंस्य इति मत्वा स्वचेतसि ।
उग्रसेनाकृतिधरस्तया रेमे सलीलया ॥ १२९

सा तु कान्तस्य सङ्केतमपश्यन्ती वरानना ।
विवशा दुःखिता भूत्वा प्राह तं दानवाधमम् ॥ १३०

मद्भर्तृरूपव्याजाद्धि त्वयैवं परिवञ्चिता ।
ज्ञातश्च भवतो भावो भस्मसात्त्वां करोम्यहम् ॥ १३१

गोभिलः—

ज्ञाननेत्रं तु ते नष्टं पतिशुश्रूषणं विना ।
किं भवेत्तेन शापेन वृथैव परिखिद्यसे ॥ १३२

तवोदरे मया न्यस्तं स्ववीर्यमतिभीषणम् ।
तस्मादुत्पत्स्यते पुत्रो नाम्ना कंस इति श्रुतः ॥ १३३

एवमुक्त्वा जगामाथ गोभिलो दानवस्तथा ।
गते तस्मिन् दुराचारे गत्वा गेहं शुचाकुला ॥ १३४

सखीभिः श्रावयामास पित्रोर्दैत्यात्स्वदूषणम् ।
तौ तदाच्छाद्य तां भर्तुः प्रेषयामासतुर्गृहम् ॥ १३५

तस्माद्धि पितृगेहस्था पुत्री नाशं प्रयास्यति ।
एनामतः परित्यज्य परित्यक्त्वा सुखी भव ॥ १३६

एतद्वाक्यं पिता श्रुत्वा मामुवाच त्वरान्वितः ।
यत्र तिष्ठति ते भर्ता तत्र गच्छ दुराशये ॥ १३७

इत्युक्त्वा पितृमातृभ्यां परित्यक्ता गता वनम् ।
अटन्त्यां च बहून् देशान् द्रष्टुं भर्तृगृहं मया ॥ १३८

भिक्षार्थमागतां मां तु ज्ञात्वा भर्ता गृहे स्थितः ।
स त्वाहूय प्रियां नाम्ना मङ्गलामिदमब्रवीत् ॥ १३९

इमां प्रिये प्रीणयैतं[1] वस्त्रभूषणभोजनैः ।
इत्युदीर्य प्रियां तस्यै मद्वृत्तान्तं न्यवेदयत् ॥ १४०

सा स्नानवसनाकल्पभोजनैर्मामुपाचरत् ।
सत्कारमुभयोर्दृष्ट्वा हृदयं स्फुटितं मम ॥ १४१

गताः प्राणाः शरीरान्मे दुष्कृतेन स्वकर्मणा ।
अनुभूय महद्दुःखं नरकेषु महत्स्वपि ॥ १४२

इमाञ्च सूकरीं योनिमाश्रिता नृपनन्दिनी ।
तव हस्तोदकेनैव जातं ज्ञानं वरानने ॥ १४३

त्वया सुपूजितो भर्ता बहुकालं सुभक्तितः ।
एकस्य दिवसस्यापि पुण्येनोत्तारणं कुरु ॥ १४४

त्वं माता त्वं पिता देवि दुष्कृतादुद्धरस्व माम् ।
इत्युक्तानुज्ञया भर्तुः पुण्यं सा वार्षिकं ददौ ॥ १४५

तत्प्रभावेण महता दिव्यरूपेण शोभिता ।
सुदेवी पातकान्मुक्ता स्वर्गलोकं जगाम ह ॥ १४६

---

1. क. नां

एवं धर्मः श्रुतस्सह्यः पुराणेषु पुरा मया ।
तत्पत्या रहिता भोगान् कथं भोक्ष्ये निराकुला ॥
एवमुक्ता परं धर्मं पातिव्रत्ये स्थिताभवत् ॥ १४७

विष्णुः—

इन्द्रस्तस्या व्रते दार्ढ्यं दृष्ट्वा शङ्काविलोऽभवत् ।
सस्मार मन्मथं सोऽपि पुष्पचापः पुरोऽभवत् ॥ १४८

इन्द्रः—

सुकलेयं महाभागा पातिव्रत्यपरायणा ।
अन्याहार्यव्रताप्यस्या व्रतभङ्गं कुरु स्मर ॥ १४९

देवान् जेतुं समर्थोऽहं मुनीनपि महामते ।
किं पुनः कामिनीं जेतुं यस्याङ्गेषु वसाम्यहम् ॥ १५०

इत्युक्तः प्रेषयामास दूतीं ज्ञातुं तदन्तिकम् ।
सा दूती तां समासाद्य सुकलां वाक्यमब्रवीत् ॥ १५१

दूती—

का त्वं भवसि कल्याणि कस्यार्थे परितप्यसे ।
तस्यास्तु वचनं श्रुत्वा सुकला तामुवाच ह ॥ १५२

वैश्यजात्यां समुत्पन्नः कृकलो नाम मे पतिः ।
तीर्थयात्रां गतस्तस्य व्यतीता बहवस्समाः ॥ १५३

दूती—

गतस्ते निर्गुणो भर्ता त्वां त्यक्त्वा निष्ठुरो हि सः ।
किं करिष्यसि तेनाद्य तेन ते किं प्रयोजनम् ॥ १५४

किं वा हतो मृतो वापि प्रियोऽसौ तस्करैस्तु सः ।
कस्मादुपेक्षसे भद्रे देहं दिव्यसमप्रभम् ॥ १५५

यावत्तिष्ठति तारुण्यं तावद्भोगाय युज्यते ।
संप्राप्ते वार्धके बाल्ये कार्यं किञ्चिन्न सिध्यति ॥
तस्माद्भुङ्क्ष्व सुखानीह पिबस्व मधु माधवम् ॥ १५६

सुकला—

वक्तुं नार्हसि मत्पार्श्वे दूति कष्टमिदं वचः ।
व्रज त्वमात्मनः स्थानं न मां शिक्षितुमर्हसि ॥ १५७

इत्युक्ता सा तु शक्राय [1]मद्वृत्तान्तं न्यवेदयत् ।
तच्छ्रुत्वा चिन्तयाविष्टं कामः प्राह पुरन्दरम् ॥ १५८

कामः—

गच्छ त्वं तत्र देवेश यत्रास्ते सा पतिव्रता ।
गत्वाहं क्षोभयिष्यामि तत्पातिव्रत्यमञ्जसा ॥ १५९

एवं प्रतिज्ञां कुर्वाणे कामे शक्रस्य सन्निधौ ।
श्रद्धाशान्त्यादिसंयुक्तः [2]सत्यो धर्ममभाषत ॥ १६०

यस्य [3]धर्मस्मरोद्योगमनेनैव दुरात्मना(?) ।
गौतमस्य प्रियाहल्या चालिता हि [4]सतीव्रतात् ॥ १६१

अन्याः पतिव्रता भङ्गमनेन प्रापिताः स्त्रियः ।
पुनः कृकलपत्नीञ्च सुकलां व्रतपारगाम् ॥ १६२

भग्नसाध्वीव्रतां कर्तुमुद्योगं कुरुते स्मरः ।
यथैषा सह कामेन न प्रयाति तथा कुरु ॥ १६३

धर्मः—

सत्यं तेजस्तवैव स्यात् कामस्यापयशस्तथा ।
त(स्या)[द]न्तिकं प्रया(त्ये)[त्वे]षा प्रज्ञा शकुनरूपिणी ॥ १६४

भर्तुरागमनं तस्याः [5]शब्दैराख्यातु सुस्वरा ।
तद्वाक्यश्रवणात्सापि दृढचित्ता भविष्यति ॥ १६५

इति धर्माज्ञया प्रज्ञा शकुनीरूपधारिणी ।
तदन्तिकं समागत्य तया सम्भावितावदत् ॥ १६६

अचिरेणैव कालेन समेष्यति पतिस्तव ।
सुकले च सुचारित्रे पातिव्रत्ये स्थिरा भव ॥ १६७

---

1. क. तद्वृत्त तं
2. क. सत्वो
3. क. धर्मे
4. क. सतां
5. ख. शक्षै

इत्यु(क्ता)[क्त्वा] सा गता प्रज्ञा सुकला निश्चयं गता ।
इन्द्रमन्मथमुख्याश्च देवास्तत्र समागताः ॥ १६८

सुकलाव्रतभङ्गाय विघ्नं चक्रुरनेकधा ।
तस्याः पातिव्रत्यदार्ढ्याद्विघ्नाश्च विलयं ययुः ॥ १६९

ते च देवा ययुः स्वर्गं स्थानं तच्छापभीरवः ।
सुकला पुण्यशीला तु पातिव्रत्ये स्थिराभवत् ॥ १७०

विष्णुः—

कृकलस्सर्वतीर्थानि साधयित्वा गृहं गतः ।
मज्जन्मफलसन्तुष्टाः पितरस्त्रिदिवं गताः ॥ १७१

स्नानेन सर्वतीर्थानामिति चिन्तयते सदा ।
इति चिन्तयतस्तस्य धर्मः प्रत्यक्षतां गतः ॥ १७२

अब्रवीत्कृकलं तीर्थयात्रया नैव ते फलम् ।
श्रम एव फलं तस्मात्तुष्टिं किमिति यास्यसि ॥ १७३

इति तस्य वचः श्रुत्वा कृकलो दुःखपीडितः ।
कस्मात्तीर्थफलं नास्तीत्यवदद्धर्ममास्थितम् ॥ १७४

धर्मः—

पत्नीं पतिव्रतां त्यक्त्वा तीर्थयात्रां करोति यः ।
तस्य तीर्थफलं सर्वं वृथा भवति निश्चयात् ॥ १७५

पतिव्रता महापुण्या कुलाचारपरायणा ।
सर्वलक्षणसम्पूर्णा भर्तृचित्तानुवर्तिनी ॥ १७६

यस्य पुण्यवतो गेहे स्थिता तत्रैव वेश्मनि ।
ऋषयः पितरो देवा यज्ञाश्च वरदक्षिणाः ॥ १७७

गङ्गाद्याः पुण्यनद्यश्च तीर्थानि सकलान्यपि ।
तिष्ठन्ति सततं तत्तद्वहुपुण्यफलप्रदाः ॥ १७८

पुण्या भार्या स्थिता यत्र तत्र गार्हस्थ्यमेधते ।
न गार्हस्थ्यात्परो धर्मो विद्यते भुवनत्रये ॥ १७९

गार्हस्थ्यं समुपाश्रित्य सर्वे जीवन्ति जन्तवः ।
तादृशं नैव पश्यामि परमाश्रममुत्तमम् ॥ १८०

अग्निहोत्राश्च वेदाश्च सर्वे धर्माः स्थिता अपि ।
एकया भार्यया हीनं तत्सर्वं तु वरानने ॥ १८१

सदाचाराश्च यज्ञाश्च दानानि विविधानि च ।
[1]पुंसः कान्ताविहीनस्य न सिध्यन्ति महामते ॥ १८२

नास्ति भार्यासमं तीर्थं तारणाय हिताय च ।
श्राद्धदानादिकं यस्तु करोति प्रियया विना ॥ १८३

तृप्तिं न यान्त्यत्र तदा पितरश्च पितामहाः ।
गार्हस्थ्यस्य तु धर्मस्य गृहिणी स्वामिनी मता ॥ १८४

तां विना तद्गृहे भुक्ताश्चोरा एव पितामहाः ।
तस्मात्त्वं भार्यया सार्धं श्राद्धदानादिकं कुरु ॥ १८५

स्मृत्वा पूजय तीर्थानि पूजयस्व सुरोत्तमान् ।
तीर्थयात्राकृता सिद्धिर्भविष्यति तव ध्रुवम् ॥ १८६

एवमुक्त्वा गते धर्मे कृकलस्सुकलान्वितः ।
देवपूजादिकं सर्वं चकार च गृहे स्थितः ॥ १८७

ततो ब्रह्मा महेशश्च मया सह पुरन्दरः ।
पितरो देवगन्धर्वास्तत्रागत्याब्रुवन् वचः ॥ १८८

देवाः—

भार्यया सह भद्रं ते वरं वरय सुव्रत ।

कृकलः—

तुष्टा यदि महाभागा मम जन्मनि जन्मनि ॥ १८९

देवेषु सुदृढा भक्तिर्धर्मे सत्ये रतिर्भवेत् ।
पश्चाच्च वैष्णवं स्थानं भार्यया पुण्यशीलया ॥
गन्तुमिच्छाम्यहं सार्धं पितृभिश्च पितामहैः ॥ १९०

देवाः—

एवमस्तु महाभाग सर्वमेव भविष्यति ।
इत्युक्त्वा पुष्पवृष्टिश्च तयोरुपरि तेनिरे ॥
इति कृत्वा प्रजग्मुस्ते स्तूयमानाः पतिव्रताम् ॥ १९१

---

1. इदमर्धमनन्तरार्धं च क. पुस्तके नास्ति

सूतः—

तस्मात्पतिव्रता नारी सर्वतीर्थफलावहा ।
यो भार्यातीर्थसेवी स्यात्स तु पुण्यैर्विशिष्यते ॥ १९२

नारीतीर्थमिदं प्रोक्तं किमन्यत्प्रवदामि वः ।
यः शृणोति नरो भक्त्या भार्यातीर्थमनुत्तमम् ॥ १९३

स [1]तु भार्यासमायुक्तस्सर्वतीर्थफलं लभेत् ।
श्रद्धया शृणुयान्नारी सुकलाख्यानमुत्तमम् ॥ १९४

पुत्रपौत्रैः परिवृता भर्त्रा सह सुखं व्रजेत् ।
पतिव्रता भवेत्तस्य गृहे लक्ष्मीः प्रवर्तते ॥ १९५

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे भार्यातीर्थकथनं
नाम पञ्चदशोऽध्यायः

1. क. सुभार्या

## ॥ षोडशोऽध्यायः ॥

### पुत्रतीर्थकथनम्

सूतः—

पुत्रतीर्थं प्रवक्ष्यामि पितॄणां तारणाय वः ।
पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ॥ १

पुत्रहीनं जगच्छून्यमपुत्रस्य कुतस्सुखम् ।
धन्यास्त एव लोकेऽस्मिन् सुखिनश्च सुजातयः ॥ २

ये पुत्रमुखमीक्षन्ते स्वर्गद्वारमिवापरम् ।
पितॄंस्तारयते पुत्रो निमग्नान्नरकार्णवे ॥ ३

अत्र वः कथयिष्यामि इतिहासं पुरातनम् ।
सुकेश इति विख्यातो ब्राह्मणो ब्रह्मतत्परः ॥ ४

आसीद्दयापरो धीमान् जितक्रोधो जितेन्द्रियः ।
स कदाचिद्विदेशस्थश्चोरव्याघ्रादिभिर्युताम् ॥ ५

विवेश महतीं घोरामटवीं प्राणिवर्जिताम् ।
तत्रापश्यत्तु पुरतो वीरणस्तम्भमाश्रितान् ॥ ६

पुरुषान् लम्बमानांश्च क्रन्दमानान् सुदुःखितान् ।
के यूयमिति पप्रच्छ ते [1]चैवमिदमूचिरे ॥ ७

पितरस्ते वयं सर्वे नरकेऽस्मिन्नधोमुखाः ।
वीरणेऽस्मिन् विलम्बामस्तव दोषेण दुर्मते ॥ ८

पुत्रानिच्छन्ति पितरस्तारयिष्यन्ति ते पितॄन् ।
न हि नस्ते तपः पुत्र तारयिष्यति सत्तम ॥
तस्मादस्मात्तु नरकात् तारयास्मान् पितॄन् सुत ॥ ९

---

1. क. चैनं

सुकेशः—

ऊर्ध्वरेता अहमिति प्रतिज्ञातं मया व्रतम् ।
नाहं दारान् ग्रहीष्यामि तारयिष्यामि वै पितॄन् ॥ १०

ततस्स तान् सदोत्सृज्य दुःखेन महता वृतः ।
जगाम रुद्रं शरणं सर्वलोकैकनायकम् ॥ ११

वायुभक्षो निराहारः काष्ठलोष्टाश्मसंनिभः ।
सन्धाय मानसे रुद्रं निश्चले सुसमाहितः ॥ १२

हृदये[1]न जपन् रुद्रानाकाशे समतिष्ठत ।
तस्य वर्षे तदा मासि वातवर्षमभून्महत् ॥ १३

तेन वर्षेण महता नैव दुःखान्वितोऽभवत् ।
अथ तं भगवान् देवो मासे वर्तति [वर्तिनि] सप्तमे ॥ १४

विष्णुरूपधरो भूत्वा प्रोवाच द्विजसत्तमम् ।
तुष्टोऽस्मि तव भद्रं ते तपसानेन सुव्रत ॥ १५

वरं वरय विप्रर्षे यत्ते मनसि वर्तते ।
सुकेशस्तु ततो दृष्ट्वा नारायणमुपागतम् ॥ १६

अब्रवीच्छङ्करादिच्छे वरं त्वा न वृणोम्यहम् ।
तस्य तद्वचनं श्रुत्वा तुतोष भगवान् हरः ॥ १७

उवाच चैनं विप्रेन्द्रं गणपो मेऽक्षयो भव ।
अमरो जरया त्यक्तस्सर्वदुःखविवर्जितः ॥ १८

सुकेशस्तद्वचः श्रुत्वा प्रोवाच च महेश्वरम् ।
नरके मे पितॄन् मग्नानुद्धरस्व महेश्वर ॥
गाणापत्यपदं देहि पितॄणाञ्च विशेषतः ॥ १९

ईश्वरः—

एते भवन्तु गणपास्त्वं चैव गणपो भव ।
अमरत्वं तथाक्षय्यमैश्वर्यं तेऽस्तु सर्वदा ॥ २०

---

2. क. तज्जपन्

पितरस्तारितास्त्वेते सुपुत्रेण त्वयानघ ।
इत्युक्त्वा स महादेवस्सुकेशं गणनायकम् ॥ २१

जगामादर्शनं सोमस्सर्वेषामेव पश्यताम् ।
सुकेशं पितरः प्राहुर्गाणापत्यपदे स्थिताः ॥ २२

वयं तु नरके घोरे पतमानास्सुदारुणे ।
त्वया सन्तारिताः प्राप्ता गाणापत्यपदं सुत ॥ २३

पूतित्राणाद्धि पुत्रं तमित्याहुर्वेदवादिनः ।
सर्वतीर्थाभिगमनात्पुत्रतीर्थमतो वरम् ॥ २४

तारणत्वं पितृणाञ्च सर्वपापक्षयाय च ।
अङ्गादङ्गात्सम्भवति हृदया[1]न्मम जायते ॥ २५

आत्मा वै पुत्रनामासि त्वं जीव शरदश्शतम् ।
त्वं त्राता त्वं हि नो बन्धुस्त्वञ्च नेता महामते ॥ २६

देवमाराध्य नरकात्पितॄंस्तारितवानसि ।
काष्ठकूटोऽपि स मुनिस्त्वमिवोद्धृतवान् पितॄन् ॥ २७

सुकेशः—

काष्ठकूटोऽपि स मुनिः किं तपः कृतवान्पुरा ।
कियता चैव कालेन वरं लेभे महेश्वरात् ॥
श्रोतुमिच्छामि पितरः कथयन्तु सुविस्तरम् ॥ २८

पितरः—

गौतमस्यान्वये जातो [2]भुमन्युरिति विश्रुतः ।
तस्य पुत्र्यभवत्सुभ्रूरात्रेयी नाम नामतः ॥ २९

नाविन्दत सुतं तस्यां जरसा चातिपीडितः ।
अपुत्रः पुत्रकामोऽयं प्रपन्नो गरुडध्वजम् ॥ ३०

हरिर्हरिर्हरिरिति ध्यायन्नेव स तिष्ठति ।
एकादशीमु[3]पोष्याथ निशीथे त्वेवमम्बरात् ॥ ३१

अशरीरां ततो वाणीमश्शृणोत्प्रिययान्वितः ।
लक्षमेकं तु विप्राणां यदि त्वं भोजयिष्यसि ॥ ३२

---

1. क. दधिजायते 2. क. विभुमन्युरिति श्रुतः 3. ख. -पोष्येऽथ

प्रसादात्कौस्तुभाङ्कस्य भविष्यति सुतस्तव ।
श्रुत्वा वाक्यं ततो छादिरुदिते किरणाकरे ॥ ३३

[1]तद्वासिनो जनान् सर्वाना[2]मन्त्रयति हर्षितः ।
वालखिल्यान् समस्तांश्च सनकादींश्च सर्वतः ॥ ३४

असिधाराव्रतस्थांश्च ब्रह्मपुत्रान् मुमुक्षुकान् ।
भोजयित्वा स तान् विप्रान् क्षमाप्य च विसृष्टवान् ॥ ३५

ततः प्रीतमना विष्णुर्भुमन्युमिदमब्रवीत् ।
पुत्रस्ते भविता नूनं काष्ठकूट इति श्रुतः ॥ ३६

अथ हृष्टमना विप्रो गत्वा गेहं महातपाः ।
उत्पादयामास सुतं काष्ठकूट इति श्रुतम् ॥ ३७

संस्कृतस्स तु कालेन पितरं प्राह धर्मवान् ।
भवानध्यापनाशक्तो वृद्धभावाद्दिने दिने ॥ ३८

सोऽहमन्यं तपोनिष्ठं निरनुक्रोशमेव च ।
आचार्यं मतिसम्पन्नमाश्रयामीति मे मतिः ॥ ३९

एवमुक्तौ तु पितरौ पुत्रेण सुमहात्मना ।
आघ्रायालिङ्ग्य संमान्य स्नेहात्तत्र तमूचतुः ॥ ४०

गच्छाधुना श्रुतश्चैव स्मृतश्चैव सुकर्मणा ।
इति ताभ्यामनुज्ञात आघ्रातश्चैव मूर्धनि ॥ ४१

प्रदक्षिणमुपावृत्य जगाम [3]स तदात्मवान् ।
अधीत्य चतुरो वेदान् साङ्गोपाङ्गान् स कृत्स्नशः ॥ ४२

[4]कृतवान्सर्वशास्त्राणि कर्मणा विविधानि च ।
ततो रात्रौ प्रसुप्तस्तु मातरं पितरं तथा ॥ ४३

अपश्यन्नरके मग्नं पाशैर्बद्धं सुदारुणैः ।
प्रभाते विमले भूयो विबुद्धो विस्मयान्वितः ॥ ४४

---

1. क. तद्वाजिनो
2. क. मन्त्रयत
3. क. समतात्मवान्
4. क. क. ज्ञातवान्

किं दृष्टमिति सञ्चिन्त्य खिद्यमानो मुहुर्मुहुः ।
सत्वरश्चागतो गेहं पितरौ स न दृष्टवान् ॥ ४५

शुशोच बहुधा विप्रो ऋषिभिर्बहुभिस्तथा ।
संबोधितस्समाश्वस्तः सोऽकरोदुदकक्रियाम् ॥ ४६

इमां प्रतिज्ञां चक्रे च ऋषिमध्ये महातपाः ।
रुद्रं द्रष्टास्मि यावच्च मातरं पितरं तथा ॥ ४७

तावत्तपः करिष्यामि हृदि रुद्रं निधाय च ।
इत्येवं स विनिश्चित्य गतो मैनाक[1]पर्वते ॥ ४८

यत्र देवो विरूपाक्षः खण्डेन्दुकृतशेखरः ।
तपश्चकार तत्रैव पूजयित्वा तु शङ्करम् ॥ ४९

आदित्याभिमुखो भूत्वा रुद्रानावर्तयन्मुहुः ।
निमेषोन्मेषरहित ऊर्ध्वरेतोर्ध्वबाहुकः ॥ ५०

ततस्तुष्टो महादेवः शङ्करः करुणाकरः ।
समग्रतपसं विप्रं वरं ब्रूहीति चाब्रवीत् ॥ ५१

काष्ठकूटः—

भगवन्मृत्युना माता पिता च मम योजितौ ।
जीवतां तावुभौ देव वरमेतद्वृणोम्यहम ॥ ५२

ईश्वरः—

तावुभौ नरकं घोरं प्रपन्नौ मृत्युनार्दितौ ।
न तौ कर्तुं पुनर्जीवौ वरमन्यं वृणीष्व मे ॥ ५३

काष्ठकूटः—

नाहमन्यं वरं देव कथञ्चिदपि कामये ।
पित्रर्थोऽयं समारम्भो [2]नान्यार्थः परमेश्वर ॥ ५४

एवमुक्त्वा तु निर्विण्णो निराशः पितृजीवने ।
चिन्तयामास मरणं दुःखेन महतान्वितः ॥ ५५

---

1. क. पर्वतं    2. क. नान्योऽर्थः

स काष्ठकूटं सङ्गृह्य स्वात्मानं दग्धुमैच्छत ।
तस्य रुद्रस्समालोक्य व्यवसायं सुदुष्करम् ॥ ५६

प्रीतात्मा प्रत्युवाचेदं परीक्षेयं कृता तव ।
पितृभक्त्यानया सम्यक् तुष्टोऽस्मि शृणु मे वचः ॥ ५७

त्वमक्षयश्चाप्यमरो जरामृत्युविवर्जितः ।
ऐश्वर्येण च संयुक्तः प्रियो मे गणपो भव ॥ ५८

अयञ्च ते पिता [1]पुत्र भुमन्युस्सह भार्यया ।
गाणापत्यपदं प्राप्य त्वत्समीपे वसेत्सदा ॥ ५९

तमुवाच महादेवो वरमन्यं वृणीष्व माम् ।
ये ये चतुर्विधा जीवा मत्पित्रोरन्तिके स्थिताः ॥ ६०

नरके पच्यमानांस्तानुद्धरस्व महेश्वर ।
एवमुक्तो महादेवोऽप्यनुगृह्य चतुर्विधान् ॥ ६१

भूतग्रामान्नारकिणस्तत्रैवान्तरधीयत ।
ततो नारकिणो मुक्तास्तत्पापेभ्यो महामते ॥ ६२

काष्ठकूटोऽपि धर्मात्मा पितृभ्यां सहितस्तदा ।
गाणापत्यपदं प्राप्य जगाम च शिवान्तिकम् ॥ ६३

तथा वयं सुपुत्रेण तीर्थभूतेन कारिताः ।
गाणापत्यपदं प्राप्तास्त्वया सह महामते ॥
इत्येवमुक्त्वा पितरौ गाणापत्यं प्रयान्ति हि ॥ ६४

सूतः—

अत एव महात्मानः पुत्रतीर्थं परं विदुः ।
तीर्थसारं हि तत्पुण्यं पितॄणां धर्मवर्धनम् ॥ ६५

य इदं शृणुयान्नित्यं सर्वपापप्रणाशनम् ।
सुपुत्रं लभते सौम्यं सर्वान् कामांश्च विन्दति ॥ ६६

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे पुत्रतीर्थकथनं
नाम षोडशोऽध्यायः

---

1. ख. पुत्रो

## ॥ सप्तदशोऽध्यायः ॥

### पूज्यपूजाकथनम्

सूतः—

योनैव कुरुते पूजां पूजार्हाणां महात्मनाम् ।
स वै सर्वगुणाढ्योऽपि न श्रेयस्समवाप्नुयात् ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
पुरा स्वायम्भुवे प्राप्ते श्वेतरूपो जनार्दनः ॥ २

मन्वन्तरे महाभाग पुत्रार्थमनुचिन्तयन् ।
ततस्स भगवान् विष्णुर्देवदारुवने शुभे ॥ ३

सह लक्ष्म्या महाभाग चकार विपुलं तपः ।
पुत्रकामः समुद्दिश्य ध्यायमानो महेश्वरम् ॥ ४

संस्थाप्य परमं लिङ्गं श्रद्धया परया युतः ।
पञ्चाग्निसाधको ग्रीष्मे वर्षास्वासारमध्यगः ॥ ५

जलाश्रयश्च हेमन्ते स ध्यायति महेश्वरम् ।
ततो वर्षसहस्रान्ते तस्य तुष्टो महेश्वरः ॥ ६

प्रत्यक्षोऽभूत्समं गौर्या गणसङ्घैः समावृतः ।
उवाच वरदोऽस्मीति प्रार्थयस्व यथेप्सितम् ॥ ७

ततस्तं प्रणिपत्योच्चैः स्तुत्वा सूक्तैः स्तुतीरितैः ।
अनमस्कृत्य शर्वाणीमनङ्गीकृत्य चाब्रवीत् ॥ ८

त्वत्प्रसादात्सुरश्रेष्ठ यत्किञ्चिद्धरणीतले ।
यदाकाशे च पाताले तत्तदस्ति गृहे मम ॥ ९

शरीरं रोगनिर्मुक्तं पदं वैकुण्ठमेव च ।
एकं मे सुमहद्दुःखं यदपत्यं न विद्यते ॥ १०

तस्माद्देहि सुतं देव प्रसन्नो यदि शङ्कर ।

शङ्करः—

अचिरेण हृषीकेश पुत्रस्तव भविष्यति ॥ ११

मत्प्रसादान्न सन्देहस्तस्माद्गेहं द्रुतं व्रज ।
एतस्मिन्नन्तरे देवी कोपसंरक्तलोचना ॥ १२

भर्त्सयित्वा महादेवं पुनः प्रोवाच केशवम् ।
यस्मात्त्वया महामूर्ख न प्रणामः कृतो मम ॥ १३

हरादनन्तरं तस्मात्तव शापं ददाम्यहम् ।
श्रेयांसि न भवन्त्येव पूज्यपूजातिलङ्घनात् ॥ १४

तव सम्पत्स्यते पुत्रो यथोक्तः शूलपाणिना ।
परं तन्मृत्युजं दुःखं त्वं शिशुत्वेऽपि लप्स्यसे ॥ १५

एवमु(क्ता)[क्त्वा] भवानी सा सार्धं देवेन शम्भुना ।
अदर्शनं ययौ पश्चात्तथान्यैरपि पार्श्वगैः ॥ १६

विष्णुर्लब्धवरश्चापि पूज्यपूजातिलङ्घनात् ।
[1]शापञ्च लब्ध्वा निर्विण्णो भूयश्चक्रे महत्तपः ॥ १७

एकासनसमारूढौ कृत्वा गौरीमहेश्वरौ ।
पूजयामास विधिवद्गन्धपुष्पानुलेपनैः ॥ १८

श्रद्धया परया भक्त्या स्कन्दं माहेश्वरं हि सः ।
स्नानैर्नानाविधैर्धूपैर्दीपनैवेद्यसंयुतैः ॥ १९

भूमिशायी प्रसन्नात्मा षाट्कालिककृताशनः ।
ततस्संवत्सरस्यान्ते भगवान् वृषभध्वजः ॥ २०

पार्वत्या सहितो भूयस्तस्य संनिधिमागतः ।
ततस्स [[2]केशवो नम्रो] युगपद्विधिपूर्वकम् ॥ २१

[[3]चकार च नतिं ताभ्यां] वाक्यमेतदुवाच ह ।
मया देवि वरानन्दभरादाकुलचेतसा ॥ २२

---

1. क. शापं लब्ध्वा निर्विषण्णो 3. क. ख. स तु ताभ्यां नतिं चक्रे
2. क. ख. केशवस्ताभ्यां

अतो नतिस्ते न कृता तत्कोपं क्षन्तुमर्हसि ।
देहार्धधारिणी देवी सदा त्वं शूलधारिणः ॥ २३

तस्मान्नतिस्तस्य कृता कस्मात्ते न भविष्यति ।
[1]यस्त्वं नमति सर्वेशं तेन त्वं सर्वदा नता ॥ २४

नतायां त्वयि देवस्य नतिः स्यादिति मे मतिः ।
तथापि च पृथक्त्वेन मया त्वं शम्भुना सह ॥ २५

एकासनसमारूढा तत्समं देवि पूजिता ।
तस्मात्कुरु प्रसादं मे यः पुरोक्तः पुरारिणा ॥
सोऽस्तु वै नीरुजः पुत्रो दीर्घायुर्दृढविक्रमः ॥ २६

देवी—

नान्यथा मद्वचो विष्णो जायतेऽत्र कथञ्चन ।
तस्माद्बालोऽपि ते पुत्रः पञ्चत्वं समुपैष्यति ॥ २७

दर्शयित्वा तु तद्दुःखं तव मृत्युसमुद्भवम् ।
भूयस्संप्राप्स्यति प्राणानचिरान्मत्प्रसादतः ॥ २८

देहस्थस्सर्वभूतानामनङ्गत्वमुपैष्यति ।
तस्माद्विष्णो गृहं गच्छ सुखी भव न संशयः ॥ २९

इत्युक्त्वा पार्वती विष्णुं सह देवेन शम्भुना ।
प्रतिगृह्य कृतां पूजां तेन कैलासमभ्ययात् ॥ ३०

सोऽपि विष्णुः शिवं शान्तं ध्यायमानो महेश्वरम् ।
निजावासं स संप्रीत्या जगाम क्षीरसागरम् ॥ ३१

तस्मादेव न कर्तव्यः पूज्यपूजाव्यतिक्रमः ।
यदि कुर्यात्प्रमादेन न श्रेयस्समवाप्नुयात् ॥ ३२

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे पूज्यपूजा-
कथनं नाम सप्तदशोऽध्यायः

1. क. यस्मिन्

## ॥ अष्टादशोऽध्यायः ॥

### तरुपुत्रमाहात्म्यकथनम्

सूतः—

तरुपुत्रस्य माहात्म्यं प्रवक्ष्यामि द्विजोत्तमाः ।
पुरा प्रोक्तं महेशेन पार्वत्यै हृष्टचेतसा ॥ १

अथ भूतेशजननी खण्डेन्दुकृतभूषणम् ।
अपृच्छत्प्रियसम्बन्धं प्रश्नं ब्रह्मविदां वरम् ॥ २

किमर्थं गीयते देव गाथेयं सद्भिरुत्तमा ।
वरं भूमिरुहाः पञ्च न च कोष्ठ[1]रुहा दश ॥ ३

अङ्गिनः षोडशाङ्गानि हित्वा पुत्रो हि जायते ।
तस्मात्तरुः कथं श्रेयान् कोष्ठजाद्भूरुहस्सुतः ॥ ४

इत्येवमुक्तो देवेश इदं वचनमब्रवीत् ।

ईश्वरः—

सूक्ष्मार्थ एष संरम्भो यत्पृच्छसि वरानने ॥ ५

अहं ते तत्प्रवक्ष्यामि शैलेन्द्रतनयेऽव्यये ।
कोष्ठजात्तनयात्तस्माद्भूमिजस्तनयो वरः ॥ ६

शाल्मल्यां वैतरण्याञ्च असिपत्रवनेषु च ।
कुम्भीपाके रौरवे च महारौरव एव च ॥ ७

एवमादिषु चान्येषु दुष्कृतैरनुबन्धिताः ।
यान्त्येते मृत्युवचनाद्राक्षसैः क्रूरकर्मभिः ॥ ८

पितॄंस्तत्राशुभैर्घोरैर्वेष्टितान् रजसान्वितान् ।
सत्पुत्रस्तारये[2]देव नेतरः पापनिश्चयः ॥ ९

---

1. ख. रुह्यां दशाम्  2. क. देवि

एको भवति यः पुत्रो पितॄंस्तारयते भयात् ।
तत्र ये दुष्टचारित्राः पुत्रसंख्यां तु ते गताः ॥ १०

पुदिति प्रोच्यते दुःखं दुःखं तु नरकं विदुः ।
पितॄंस्तारयते यस्माद्यतः पुत्रस्ततः स्मृतः ॥ ११

एको भूमीरुहः पुत्रः शस्यते न हि कोष्ठजः ।
छेदनं भेदनं त्रासं पाटनं तु निशाचरैः ॥
कृतं नुदन्ति तरवः पितॄणां त्राणकाङ्क्षिणाम् ॥ १२

देवी—

छेदं भेदं त्रासनञ्च राक्षसैः[1]र्निरयोपमैः ।
कथं पितॄणां तरवस्तारयन्ति महाक्षये ॥ १३

ईश्वरः—

श्रृणुष्व च्छेदभेदौ च पितॄणां यमशासने ।
यथैव तारयन्त्येते तरवो मत्सकाशतः ॥ १४

एते हि तमसा देवि विहीनाः करणैः पुरा ।
व्यज्ञापयन्त देवेशं तरवो वै पितामहम् ॥ १५

दक्षशापेन भगवन् वयं ह्युपहतेन्द्रियाः ।
तमश्छन्नास्तु सम्प्राप्ता [2]निष्ठया निष्परिक्रमाः ॥ १६

[3]महिष्ठकरणैर्हीना महसा तमसावृताः ।
वयं त्वामनु सम्प्राप्ता धर्मयुक्तान् कुरुष्व नः ॥ १७

पितामहः—

इत्येवं वचनं श्रुत्वा देवः प्राह चतुर्मुखः ।
स्थावराः स्वागतं वोऽस्तु रक्षामि शरणैषिणः ॥ १८

नाशयाम्येष वो वृक्षा दक्षशापकृतं तमः ।
बिल्वादिवृक्षा ये चान्ये मदंशप्रभवास्तथा ॥ १९

---

1. क. र्नियमोपमैः
2. क. निष्क्रिया
3. क. मनुष्य

उपयुक्ता हि यज्ञेषु ([1]त्वत्पुत्र)[त्वक्पत्र]फलदायिनः ।
यज्ञोपयुक्ता गच्छध्वं तेषामेव सलोकताम् ॥ २०

देवायतनकृत्येषु उपयुक्ताश्च सर्वशः ।
धर्म्याः पुण्याः स्वर्गताश्च गतिं प्राप्स्यथ पुष्कलाम् ॥ २१

पुत्रकामो नरो यश्च पुत्रकामो भविष्यति ।
पितृंस्तस्य त्रायतां वो धर्मो [2]वो भविता महान् ॥ २२

वृक्षाः—

तथा वयं पुत्रकृतांस्तान् पितॄन् निरयोद्गतान् ।
तारयिष्यामि [3]सुखदा ऐश्वर्यपरिवर्जिताः ॥ २३

ब्रह्मा—

पुत्राः पुत्रकृते (युष्मन्)[युष्मान्] ये करिष्यन्ति मानवाः ।
ते मल्लोके निवत्स्यन्ति सर्वे सत्पुत्रिणो हि ते ॥ २४

[4]तर्षितान् वारिनिर्यासैः फलपुष्पैर्बुभुक्षितान् ।
उष्णार्तांश्छायया चैव पितॄन् मोक्ष्यथ कर्मणा ॥ २५

तत्कालदुर्लभैरेतैः पितॄनसुखपीडितान् ।
युष्माकं त्रायतां वृक्षा महान् धर्मो भविष्यति ॥ २६

इत्युक्ता देवदेवेन पादपास्ते प्रचक्रमुः ।
एतस्मात्कारणादेव कोष्ठजानां शतादपि ॥
पुत्राणां पुत्रजनने एको [5]भूमिरुहो वरः ॥ २७

सूतः—

इत्येवं रुद्रमहिषी तद्भूरुहसुतस्तवम् ।
श्रुत्वा पतिं तु लोकेशमिदमाह पतिव्रता ॥ २८

प्रोषिते त्वयि देवेश वसन्त्या मन्दरे मया ।
अशोकतरुको दृष्टो मनोरथफलप्रदः ॥ २९

---

1. क. त्वक्
2. क. वां
3. क. सुखद
4. क. तृषितान्
5. क. भूमिरुहावहः

तमहं देव गृह्णामि पुत्रत्वे देवसन्निधौ ।
इत्येवं वदतीमाह पार्वतीं परमेश्वरः ॥ ३०

अनुज्ञाता मया देवी कुर्वशोकतरुं सुतम् ।
अनुकूलं पतिं ज्ञात्वा तं तामरसलोचना ॥ ३१

प्रणिपत्य महादेवी प्रोवाच परमेश्वरम् ।
देव जानाम्यहं धर्मं यथा स्त्रीणां न विद्यते ॥ ३२

दैवतं पतिमुत्सृज्य पूजनीयं हि यद्भवेत् ।
निष्फलं विद्यते तस्या नार्या भर्ता हि दैवतम् ॥ ३३

या तु भर्तारमामन्त्र्य धर्मं नारी करिष्यति ।
तस्याश्च देवास्तृप्यन्ति धर्मश्च परिवर्धते ॥ ३४

अवमत्य तु या नारी भर्तारं दैवतं गुरुम् ।
स्वबुद्ध्या कुरुते पुण्यं नरकं सा प्रपद्यते ॥ ३५

[अनीति] आनीतिमपि या नारी भर्तारं परिपृच्छति ।
धर्मकृत्येषु वा तस्याः फलं भवति पुष्कलम् ॥ ३६

सूतः—

एवमुक्तो गिरिजया शङ्करो वाक्यमब्रवीत् ।
उक्षेन्द्र नागेन्द्रबल सिंहविख्यात[1]विक्रम ॥ ३७

शृणुष्वावहितो वाक्यं मम वाक्यविदां वर ।
पर्वतेन्द्रसुताशोकतरुपुत्रं ग्रहीष्यति ॥ ३८

यथा तुष्यन्ति विप्रास्ते यथा तुष्यति पार्वती ।
यथा तुष्याम्यहं [2]नन्दिन् तुभ्यं प्रीतिर्यथा भवेत् ॥ ३९

तथा यत्नस्त्वया कार्यः पुत्रस्वीकारकर्मणि ।
इत्युक्तस्सोऽप्यनुज्ञातः [प्रापा]प्राप्याशोकस्य सन्निधिम् ॥ ४०

भक्ष्यभोज्यादिकं सर्वं वस्त्ररत्नादिकञ्च यत् ।
[[3]सम्पादितेऽखिले देवो] नन्दिनं वाक्यमब्रवीत् ॥ ४१

---

1. क. विक्रमः
2. क. नन्दी
3. क. ख. सर्वं सम्पाद्य देवेशो

भो भो नन्दिन् महादेवी ब्राह्मणान् भोजयिष्यति ।
निमन्त्रय महाभागान् ब्राह्मणान् ब्रह्मसम्भवान् ॥ ४२

ये स्थिता वारुणे लोके पाताले संस्थिताश्च ये ।
स्थिता ये सप्तलोकेषु सप्तद्वीपेषु ये स्थिताः ॥ ४३

स्वर्गे च संस्थिता ये स्युस्तान्निमन्त्रय सुव्रत ।
वासिष्ठान् भार्गवान् काण्वानथर्वाङ्गिरसस्तथा ॥ ४४

भारद्वाजान् काश्यपांश्च वालखिल्यान्निमन्त्रय ।
इत्येवमुक्तो गणपो नन्दी दिनकरप्रभः ॥ ४५

सर्वान्निमन्त्रयामास प्रीतिपूर्वं शिवाज्ञया ।
आमन्त्रितेषु विप्रेषु नारायणपदत्रये ॥ ४६

इन्द्रादिलोकपालाश्च विद्याधरमहोरगाः ।
ब्राह्मणा ब्रह्मनिरता वालखिल्यास्समागताः ॥ ४७

समागतांस्तानालोक्य शिवः कालीमथाब्रवीत् ।
समागताः प्रिये सर्वे देवास्सर्षिपुरोगमाः ॥ ४८

अशोकतरुजं पुत्रं श्वः प्रभाते ग्रहीष्यसि ।
नियमं कुरु कल्याणि रात्रावस्यां विधानतः ॥ ४९

इत्युक्ता देववचनात्तद्रात्रौ गिरिजा शुभा ।
दर्भैराच्छाद्य पृथिवीं धरणीधरकन्यका ॥ ५०

सुष्वाप देववचनात्सोपवासा यतव्रता ।
ततस्सहस्रकिरण उदिते परमेश्वरः ॥ ५१

सन्ध्यामुपास्य विधिवत् संमान्य ब्राह्मणांस्तथा ।
उमामाह प्रयामोऽत्र यत्राशोकतरुः स्थितः ॥ ५२

इत्युक्त्वा स जगामाशु पादचारो महेश्वरः ।
तमशोकतरुं प्राप्तस्सनन्दी साम्बिकः शिवः ॥ ५३

ततः पितामहो देवः सह विष्णुपुरोगमैः ।
तत्रागान्मुदितो भूत्वा यत्र गौर्या युतः शिवः ॥ ५४

देवाः प्रणम्य देवेशं परिवार्योपतस्थिरे ।
दैत्यशोकप्रदा देवी तमशोकं गिरीन्द्रजा ॥ ५५

सर्वतो भूषयामास ह्यलङ्कारैः पृथग्विधैः ।
तस्य शाखाप्रशाखासु मुक्तादामानि पार्वती ॥ ५६

बबन्ध शुशुभे सोऽपि तैर्नक्षत्रैरिवांशुमान् ।
ततः शङ्खनिनादेन तूर्यत्रयरवेण च ॥ ५७

मुनीनां स्वस्तिवादैश्च व्याप्तमासीज्जगत्त्रयम् ।
नन्दिनाथ समाहूता ब्राह्मणा ब्रह्मसम्भवाः ॥ ५८

पुण्याहवाचनं चक्रुः स्वस्तिवादान् शिवाज्ञया ।
गौरी पुण्याहघोषान्ते ब्राह्मणान् प्राह पार्वती ॥ ५९

भगवन्तस्सुपुत्राहमशोकतरुकं सुतम् ।
इममन्यं ग्रहीष्यामि समनुज्ञातुमर्हथ ॥ ६०

इति ब्रुवन्तीं तां देवीं पार्वतीं पुत्रलोलुपाम् ।
सममूचुरिदं सर्वे पुत्रत्वे गृह्यतामिति ॥ ६१

ततः शङ्खरवस्तूर्णमाडम्बररवोद्भटः ।
प्रबभौ पूरयन्सर्वं नारायणपदत्रयम् ॥ ६२

नेदुश्च प्रमथास्सर्वे सगन्धर्वमहोरगाः ।
ऋतवः षट् च संहृष्टाः स्वैः स्वैः कुसुमसञ्चयैः ॥ ६३

अलञ्चक्रुरशोकञ्च तच्च दैवतमण्डलम् ।
तपोधनैः पूज्यमाना ह्यरुन्धत्यादिभिस्तदा ॥ ६४

समं सङ्गृह्य सुभगा ह्यशोकतरुकं सुतम् ।
गिरेस्सुता बभौ हृष्टा धरेव जलदोक्षिता ॥ ६५

अथ नन्दीश्वरादिष्टाः प्रमथास्ते सहस्रशः ।
आसनानि व्यरचयन् विप्राणां विप्रवत्सलाः ॥ ६६

तेषूपविविशुस्सर्वे ब्राह्मणा दैवतैस्सह ।
सहस्रं पङ्क्तयस्त्वासन् मन्दरे विस्तृते गिरौ ॥ ६७

अग्रासनेषु पङ्क्तीनां ये ये मुख्या द्विजातयः ।
तेषां तत्र स्थितानां तु नन्दीश्वरपथे स्थितैः ॥ ६८

[1]मुहूर्तेनैव दत्तानि भाजनानि शुभानि च ।
अन्यैः स्फाटिकशृङ्गारैः पद्मरेण्वधिवासितम् ॥ ६९

हस्तोदकं मुहूर्तेन दत्तं शङ्करकिङ्करैः ।
चन्दनैः कुङ्कुमयुतैर्लिलिपुर्भूमिदेवताः ॥ ७०

ऋतवः पुष्पदामानि ददुर्युगपदुद्यताः ।
दिव्यचन्दनपङ्कादिदिव्यगन्धावचूर्णिताः ॥ ७१

ब्राह्मणा रेजिरे स्वस्था एकस्था इव पावकाः ।
ततश्च भक्ष्यभोज्यान्नपानानि च समन्ततः ॥ ७२

गृहीत्वा प्रददुस्सर्वा अरुन्धतीपुरोगमाः ।
देवेभ्यो ब्राह्मणेभ्यश्च ददुर्भक्ष्याणि सर्वशः ॥ ७३

वेष्टिकापूरिकाभिश्च गोस्तनाः सिंहकेसराः ।
कर्पदाः शष्कुलीश्चैव पुष्पावर्ताश्च पीवराः ॥ ७४

उत्कारिका स्वयंयावा नन्द्यावर्ताः सपाटकाः ।
प्रदत्तैः पार्षदैः शूरैर्मुनीनां मुनिदैवतैः ॥ ७५

हृदयस्थं मनस्स्थं च वाक्संस्थं दृष्टिगोचरम् ।
ब्राह्मणानां विदुर्भावैर्ददुश्च प्रमथाधिपाः ॥ ७६

शृङ्गारैः काञ्चनैः केचित् पानीयं स्फाटिकप्रभम् ।
विचेरुर्दित्सवस्तत्र पानीयमिति वादिनः ॥ ७७

अपरे चन्द्ररश्म्याभैर्व्यजनैर्विविजुः शुभैः ।
अप्सरोवरसङ्घाश्च सर्वालङ्कारसंयुताः ॥ ७८

एकैकं ब्राह्मणं तत्र सेवन्ते स्म हरं यथा ।
ततः शाल्योदनं सोष्णं कुन्देन्दुरजतप्रभम् ॥ ७९

---

1. क. मुहूर्ते नैव

दीयते स्म द्विजेन्द्राणां चोष्यलेह्यानि चैव हि ।
तत्र तृप्तान् समालोक्य ब्राह्मणान् ब्रह्मणा समान् ॥ ८०

दत्तमाचमनं तेषां गणपैर्विधिचोदितम् ।
ताम्बूलं च शुभं दत्तं चन्द्रखण्डसमन्वितम् ॥ ८१

ततः प्रहृष्टा भूदेवा उक्त्वा स्वस्ति महेश्वरीम् ।
प्रशंसन्तो विरूपाक्षं ययुर्विप्रा यथागतम् ॥ ८२

सुराश्च पूजिता दानैर्वाक्प्रदानैश्च शूलिनः ।
सपितामहकास्ते तु यथावासं ययुस्तदा ॥ ८३

देवोऽपि नन्दिना सार्धमुमयापि सुरूपया ।
अशोकतरुक[1]स्याध उपविष्टो महेश्वरः ॥ ८४

देवी—

सुनिर्वृतास्मि सद्वृत्ता त्रिपुरान्तक शङ्कर ।
यन्मयाशोकतरुकः कृतकः पुत्रकः कृतः ॥ ८५

समस्तं व्यस्तमखिलं त्रैलोक्यं सचराचरम् ।
सन्तुष्टिमगमत्सर्वं मम पुत्रमहोत्सवे ॥ ८६

मया धन्यतरा देवा यास्त्वन्यास्त्रिदशाङ्गनाः ।
भवं भवानी प्रीत्यैवमुक्त्वा मुक्तावलीधरम् ॥ ८७

पपात तस्य पदयोः शिरसा मनसा दृशा ।
तामुत्थाप्य गिरीशस्तु परिष्वज्याब्रवीद्वचः ॥ ८८

तर्पिता ब्राह्मणा देवि सदेवास्सगणेश्वराः ।
गृहीतः पुत्रकश्चायं त्वयाशोकतरुः प्रिये ॥ ८९

सह देवि गृहं यामस्सम्पूर्णास्ते मनोरथाः ।
भूयस्सुतं ते द्रक्ष्यामः स्तबकैस्समलङ्कृतम् ॥ ९०

---

1. क. -स्याथ

गोपायस्व वरारोहे गजादनिलजाद्भयात् ।
इति सन्दिश्य देवेशः पार्षदैश्च समन्वितः ॥
विवेश भवनं देवी प्रभेवादित्यमण्डलम् ॥ ९१

त्रिदशगणपतिश्च देवदेवः
सह शिवया भगवान् विरूपनेत्रः ।
अचलदचलितव्रतो गिरीशो
निजभवनोपवने प्रहृष्टरूपः ॥ ९२

सूतः—

तस्मात्कोष्ठरुहात्पुत्रात्तरुपुत्रो विशिष्यते ।
यः शृणोत्येतदाख्यानं स सत्पुत्रः प्रमोदते ॥ ९३

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे तरुपुत्रमाहात्म्यकथनं नामाष्टादशोऽध्यायः

## ॥ एकोनविंशोऽध्यायः ॥

### ब्रह्मस्वहरणदोषकथनम्

ऋषयः—

सर्वेषां पापिनामत्र कः पापिष्ठतरः स्मृतः ।
एतं नस्संशयं ब्रूहि त्वं सर्वज्ञो महामते ॥ १

सूतः—

स पापिष्ठतरो ब्रह्मन् सर्वेषां पापिनामपि ।
ब्रह्मस्वं यो हरेत्प्रेत्य जायते ब्रह्मराक्षसः ॥ २

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
संवादं सम्प्रवृत्तं तु ब्रह्मराक्षसविप्रयोः ॥ ३

ब्रह्मस्वहारी पुरुषः कश्चिद्विन्ध्ये निराश्रये ।
अतिष्ठद्दुःखसन्तप्तो भूतो वै ब्रह्मराक्षसः ॥ ४

प्रतप्तवालुकासंस्थः सन्तप्तस्सूर्यरश्मिभिः ।
ददर्शात्यद्भुताकारो द्विजः कश्चित्तदा वने ॥ ५

दृष्ट्वोवाच च विप्रस्तं धर्मात्मा ब्रह्मराक्षसम् ।
कोऽसि त्वं केन पापेन प्राप्तोऽवस्थामिमामिति ॥ ६

सोऽप्याह पृच्छते तस्मै ब्राह्मणायात्मपातकम् ।
यथात्मना हृतं पूर्वं ब्रह्मस्वं द्विजसत्तम ॥ ७

किं वा तदिह पापेन तप्ये येनाहमत्र हि ।
किं हि पापञ्च न कृतं मया स्यादिह सुव्रत ॥ ८

यन्मयातिनृशंसेन कृतं पापं सुदारुणम् ।
तस्यापि कथने ब्रह्मंस्तवापि स्याद्भयं महत् ॥ ९

ब्रह्मस्वं प्रणयाद्भुक्तं बलादपि मया द्विज ।
तेन पापेन दह्येऽहं विन्ध्येऽस्मिंस्तोयवर्जिते ॥ १०

असिपत्रवनं घोरं कुम्भी[1]पाके महाभयम् ।
वीचीं चैव महावीचीं तप्तवालुकमेव च ॥ ११

कृमिराशिं पूयकूपं घनघातं तथैव च ।
तिलशः खण्डनश्चैव क्रकचोत्पाटनं तथा ॥ १२

अग्निप्रवेशनं तैलपाकः शस्त्रादिमारणम् ।
जिह्वाच्छेदं मोदनञ्च करयोः पादभञ्जनम् ॥ १३

एवं क्रमेण नरकाननुभूयापरानपि ।
अधुनेमां दशां प्राप्य परं दह्येऽतिदुःखितः ॥ १४

न विद्यते ममाहारो नोदकं न गृहं तथा ।
प्रतप्तवालुकामध्ये दह्ये ह्येकोऽत्र पापकृत् ॥ १५

ब्राह्मणः—

अहो ते दुःखमतुलं दृष्ट्वा भीतिं गतोऽस्म्यहम् ।
इत्युक्त्वाचकथद्दोषान् ब्रह्मस्वहरणे द्विजः ॥ १६

ब्रह्मस्वहरणादन्यत्पातकं किमु विद्यते ।
न हर्तव्यमतो ब्रह्मन् ब्रह्मस्वं पुरुषैर्भुवि ॥ १७

ब्रह्मस्वं भुक्तमभ्यासात् स्नेहाद्वा सप्तकं कुलम् ।
दहत्यतिक्रमेणैव दश पूर्वान् दशापरान् ॥ १८

ब्रह्मस्वहरणे वाञ्छा यस्य पुंसः प्रजायते ।
सद्यः पतेत्स मूढात्मा तावतैव हि केवलम् ॥ १९

ब्रह्मस्वहारिणं स्नेहाद्बलाद्वा पुरुषाधमम् ।
दृष्ट्वा सूर्यमुदीक्षेत स्पृष्ट्वा स्नानं समाचरेत् ॥ २०

ब्रह्मस्वेनैव यः पुष्टो ज्ञानतोऽज्ञानतोऽपि वा ।
स चण्डालत्वमाप्नोति मृतस्तत्रैव जन्मनि ॥ २१

मन्त्रौषधानि विद्यन्ते भुवि पीतविषस्य हि ।
ब्रह्मस्वविषपानस्य न मन्त्रो नापि चौषधम् ॥ २२

---

1. क. पाकं

हन्ति पीतं विषं लोके न ह्यपीतं कदाचन ।
ब्रह्मस्वविषमेतत्तु हन्ति यावत्कुलत्रयम् ॥ २३

कदाचिदुपकाराय भवत्यग्निर्दहन्नपि ।
कचिदप्युपकाराय न ब्रह्मस्वाशुशुक्षणिः ॥ २४

अत एव त्वमप्यत्र ब्रह्मस्वहरणाद्वने ।
इमामवस्थां संप्राप्य दह्यसे ब्रह्मराक्षस ॥ २५

ब्रह्मराक्षसः—

कियत्कालमिह ब्रह्मन् स्थास्यामि वद सुव्रत ।
मोक्षो हि मे कदा विप्र भविता दुःखनाशनः ॥ २६

ब्राह्मणः—

अत्रैव वासो विहितस्तव दुःखोत्तरात्मनः ।
यावत्सन्ततिविच्छेदो भविष्यति न चान्यथा ॥ २७

आत्मना विहितं दुःखमात्मनैव हि भुज्यते ।
न ह्यस्त्यत्र मया कार्यं तव गच्छाम्यहं ततः ॥ २८

सूतः—

एवं स कथयित्वा तु ब्राह्मणस्संशितव्रतः ।
ब्रह्मस्वहरणे (दोषात्) [दोषान्] जगाम स्वेच्छया ततः ॥ २९

एतन्मयापि कथितं विप्रास्सर्वमशेषतः ।
तस्मात्सर्वैर्न हर्तव्यं ब्रह्मस्वं द्विजसत्तमाः ॥ ३०

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे ब्रह्मस्वहरण-
दोषकथनं नाम एकोनविंशोऽध्यायः

## ॥ विंशोऽध्यायः ॥

### ऋतुकालपालनकथनम्

सूतः—

ऋतुकालपरित्यागाद्भवेत्पापं महत्तरम् ।
यस्त्यजेदृतुकालं तु ब्रह्महत्यां स विन्दति ॥ १

अस्मिन्नर्थे पुरावृत्तं कथयामि निबोधत ।
ब्रह्मर्षिर्विश्रवा नाम सर्वशास्त्रविशारदः ॥ २

निग्रहानुग्रहेशश्च सर्वज्ञानविदां वरः ।
पुष्पोत्कटेति विख्याता तस्य भार्या ऋषेः शुभा ॥ ३

रूपेणाप्रतिमा सा तु ऋषिकन्या पतिव्रता ।
एकदा स्वाश्रमे पत्नीं विहाय मुनिसत्तमः ॥ ४

ऋतुस्नातां प्रगल्भां तां प्रतस्थे तपसे वनम् ।
वृक्षाधस्तात् स्थितो भूत्वा विश्रम्य च जितेन्द्रियः ॥ ५

स तताप तपो घोरं वाय्वाहारो महान्मुनिः ।
कदाचिदथ वृक्षाग्रे कपोतः कामविह्वलः ॥ ६

उपगम्याब्रवीद्भार्यां कपोतीं गुर्विणीं त्वरन् ।

कपोतः—

इच्छामि सङ्गमं भद्रे कुरु मे सङ्गतौ मतिम् ॥ ७

अर्दितोऽस्मि बलादद्य कन्दर्पेण च पीडितः ।

पक्षिणी—

मा कुरुष्व मया सार्धं रतिं पत्रिपते शुभ ॥ ८

त्वत्संयोगात्पतिष्यन्ति दिव्यान्यण्डानि भूतले ।
गमिष्यन्त्युदरान्मृत्युमवशाः पक्षिणो वने ॥ ९

मया सह न कर्तव्या रतिस्तस्माद्विहङ्गम ।

सूतः—

निवारितोऽपि तामेव स यदा गन्तुमैहत ॥ १०

तदा तमाह सा क्रुद्धा कपोतं पक्षिणी द्विज ।

पक्षिणी—

मामाक्रम्य बलादेव नेष्यसे त्वं मुहुर्यदि ॥ ११

तपस्यतोऽस्य विप्रस्य पापैर्युक्तो भविष्यसि ।

कपोतः—

कानि पापानि घोराणि विप्रेणानेन शोभने ॥ १२

कृतानि तानि सर्वाणि विस्तरात्कथय प्रिये ।
कथं तवेदं दिव्यञ्च ज्ञानमप्रतिमं महत् ॥ १३

तिर्यग्योनिगतायाश्च सहसा चाभवत्प्रिये ।

पक्षिणी—

वार्धको नाम विप्रर्षिः सर्वज्ञानविदां वरः ॥ १४

तस्याहं दुहिता पूर्वं रूपयौवनगर्विता ।
तेनाहं द्विजवर्याय दत्तास्मि विधिना पते ॥ १५

परिचर्या मया तस्य न कृता च कदाचन ।
तेन कर्मविपाकेन मृताहं पक्षिणी प्रिय ॥ १६

जातास्मि तिर्यग्योनौ तु वने जातिस्मरा सती ।
मातापित्रोश्च शुश्रूषा न कृता च त्वया पुरा ॥ १७

तेनैवैवं पाप्मना त्वं तिर्यग्योनिं गतोऽसि वै ।
माता पिता परं तीर्थ[1]मग्निस्तीर्थं विशेषतः ॥ १८

ब्राह्मणस्तु परं तीर्थं न भूतं न भविष्यति ।
सर्वदेवात्मकं रूपं स्त्रीणां पतिरसंशयम् ॥ १९

नित्यं शुश्रूषयाराध्यस्सगुणो निर्गुणोऽपि वा ।
या पतिं तृणवत्कुर्याद्रूपयौवनगर्विता ॥ २०

---

1. क. मग्नितीर्थं

सा मृता जायते नारी सूकरी च पुनः पुनः ।
शुनो योनिशतं गत्वा तिर्यग्योनिशतं तथा ॥ २१

पत्युस्तिरस्कृतेर्भार्या रौरवं नरकं व्रजेत् ।
मातापित्रोस्तु शुश्रूषां यो न कुर्यात्कदाचन ॥ २२

तिर्यग्योनिशतं गत्वा स भवेद्ब्रह्मराक्षसः ।
अनेन ऋषिणा ज्ञात्वा स्वगृहे च पतिव्रताम् ॥ २३

त्यक्त्वा पत्नीमृतुस्नातां तपस्तप्तुमिहागतम् ।
तत्तपस्तप्यमानस्य ऋषेरप्रतिमौजसः ॥ २४

अस्याः पत्न्यास्तु ऋतवो दश नष्टास्ततो मुने ।
दशभिर्ब्रह्महत्याभिरभिलिप्तोऽ[1]भवत्प्रियः ॥ २५

[2]अतस्त्वमपि मा काङ्क्षीर्गर्भिणीं मां स्मरातुरः ।
पक्षिणोस्तद्वचः श्रुत्वा उत्पपात स चासनात् ॥ २६

[3]स चाह ब्रह्महत्या मे दश प्राप्ता न संशयः ।

विश्रवाः—

शुद्धिः स्यान्मे कथं पापाद् ब्रूहि त्वं मे विहङ्गमे ॥ २७

पक्षिणी—

तमुपायं न जानामि येन शुद्धिर्भवेद् द्विज ।
उपायं पापनाशाय ब्रह्मा ते कथयिष्यति ॥ २८

तपसा किं तथा तेन पापं कृत्वा न लज्जसे ।
क्षिप्रं पापविनाशाय ब्रह्माणं शरणं व्रज ॥ २९

सूतः—

इत्युक्तस्स तया तस्मात् पक्षिण्यातित्वरान्वितः ।
तपो विहाय पौलस्त्यो ब्रह्माणं शरणं ययौ ॥ ३०

तमायान्तं ततो दृष्ट्वा ब्रह्मा विश्रवसं मुनिम् ।
दूरादेव सकोपेन हुङ्कारेण न्यवारयत् ॥ ३१

---

1. क. न संशयः
2. क. पुस्तके अयं श्लोको न दृश्यते
3. क. पुस्तके इदमर्धं नास्ति

ब्रह्मा—

निर्गच्छ भवनात्तस्मात्पापकर्मन् न लज्जसे ।
दश पत्न्यश्च ऋतवस्तव नष्टा न संशयः ॥ ३२

अदुष्टां यः पुमान् भार्यां यौवनस्थां परित्यजेत् ।
सप्तजन्म भवेत्स्त्रीत्वं वैधव्यञ्च पुनः पुनः ॥ ३३

पत्या स्यात्पालनीया स्त्री रक्षणीया प्रयत्नतः ।
धर्मार्थकाममोक्षैश्च वञ्चनीया न कर्हिचित् ॥ ३४

विश्रवाः—

कृपां कुरुष्व मे ब्रह्मन् त्वमेव शरणं विभो ।
मयाज्ञानकृतं पापं त्वमेव क्षन्तुमर्हसि ॥ ३५

पापादस्माद्भवेच्छुद्धिर्यत्र मे चतुरानन ।
कृपया मम तद्ब्रूहि स्नातुं तीर्थमतो व्रजे ॥ ३६

ब्रह्मा—

मेखलं नाम तीर्थं यच्छार्ङ्गपाणेः समीपतः ।
सिद्धितीर्थञ्च विख्यातं सर्वतीर्थकरं परम् ॥ ३७

तत्र स्नात्वा हरं दृष्ट्वा पापादस्मात्प्रमुच्यसे ।
इत्युक्तो विश्रवास्तेन ब्रह्मणा मुनिसत्तमः ॥ ३८

स आगान्मेखलं तीर्थं तपः कर्तुं प्रियान्वितः ।
ब्रह्महत्याविनाशार्थं स ततापं तपो मुनिः ॥ ३९

यत्र विश्वेश्वरं देवं तपसाराधयन्मुनिः ।
विश्रवाः प्रार्थयामास स कराञ्जलिसंयुतः ॥ ४०

विश्रवाः—

प्रार्थयामि महादेव नीलकण्ठ नमोऽस्तु ते ।
दशभिर्ब्रह्महत्याभिर्विमुक्तं कर्तुमर्हसि ॥ ४१

ऋषिणा प्रार्थितस्त्वेवं तपसाराधितो मुनेः ।
हरः प्रत्यक्षरूपेण प्राह विश्रवसं तदा ॥ ४२

ईश्वरः—

प्रार्थितं यत्त्वया ब्रह्मंस्तत्तथा च भविष्यति ।
मत्प्रसादान्महावीर्यं पुत्रानुत्पादयिष्यसि ॥ ४३

राज्यं मत्प्रतिमं तेजस्तथा ब्रह्मन् पराक्रमम् ।
यदन्यदपि तत्सर्वं प्राप्स्यसे मत्प्रसादतः ॥ ४४

इति लब्धवरो ब्रह्मन् विश्रवा मुनिसत्तमः ।
विमुक्तो ब्रह्महत्याभिरश्वमेधमथाकरोत् ॥ ४५

सूतः—

दशभिर्ब्रह्महत्याभिरेवं मुक्तो महामुनिः ।
तस्माद्धि नैव त्याज्योऽयमृतुकालो मनीषिणा ॥
ऋतुकालं त्यजति चेन्महापापेन लिप्यते ॥ ४६

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे ऋतुकालपालनकथनं
नाम विंशोऽध्यायः

## ॥ [1]एकविंशोऽध्यायः ॥

### गुरोरधर्म्यवचनोल्लङ्घने दोषराहित्यम्

सूतः—

गुरुं धर्मोपदेष्टारं धर्मतत्त्वनिरूपकम् ।
धर्माचाररतं प्राज्ञाः प्रवदन्त्युत्तमोत्तमम् ॥ १

पर एव शिवस्साक्षाल्लोकानुग्रहकाम्यया ।
गुरुरूपं समाश्रित्य हितं वदति देहिनाम् ॥ २

हितधर्मोपदेष्टारं प्रवदन्ति गुरुं जनाः ।
अधर्माहितवाङ्नैव गुरुर्गुरुरपि द्विजः । ३

गुरोरधर्मवचनोल्लङ्घने न च दुष्कृतम् ।
अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ॥ ४

सोमवंशे समुद्भूतः शन्तनुर्नाम भूपतिः ।
आसीद्भागीरथी नाम तस्य भार्याभवद्द्विजाः ॥ ५

तस्यां देवव्रतो जज्ञे धर्मव्रतपरायणः ।
महाबलो महावीर्यो महासत्त्वो महायशाः ॥ ६

असौ कदाचित्पितरि प्रविश्य विपिनान्तरम् ।
दाशकन्यां समालोक्य क्षणाद्व्याकुल[2]मानसे ॥ ७

तस्याः पितुः स्वकन्यायाः पुत्रस्य श्रियमिच्छतः ।
[3]स्त्रीनिस्पृहो ब्रह्मचर्यं प्रतिज्ञाय [4]स्वधर्मतः ॥ ८

आनीय दाशकन्यां च पितुश्चक्रे मनोरथम् ।
स तेन कर्मणा सूनोः प्रीतस्तस्मै वरं ददौ ॥ ९

---

1. अस्मिन्नध्याये आद्यषट्श्लोका अ.पुस्तके नोपलभ्यन्ते
2. क. मानसः
3. क. श्री
4. क. ख. सतां मतः ।

तावन्न स्या[1]न्मृत्युबाधा यावदिच्छसि जीवितुम् ।
एवं पित्रा दत्तवरो भीष्मो धर्मरतोऽभवत् ॥ १०

[2]ततश्च शन्तनुस्सत्यवत्यां चित्राङ्गदाभिधम् ।
पुत्रं विचित्रवीर्यञ्च जनयामास धर्मवित् ॥ ११

ततः कतिपयाहस्सु गतेषु नृपसत्तमः ।
दिवं गतः परित्यज्य पुत्रावप्राप्तयौवनौ ॥ १२

स्वर्याते शन्तनौ भीष्मश्चित्राङ्गदमरिन्दमम् ।
स्थापयामास वै राज्ये सत्यवत्या मते स्थितः ॥ १३

राज्येऽभिषिक्तं तं कोऽपि गन्धर्वो माययावधीत् ।
[3]तस्मिंश्च नृपतौ युद्धे प्रहते भूरिवर्चसि ॥ १४

विचित्रवीर्यञ्च तदा बालमप्राप्तयौवनम् ।
कुरुराज्ये महाबाहुरभ्यषिञ्चदनन्तरम् ॥ १५

संप्राप्तयौवनं पश्यन् भ्रातरं धीमतां वरम् ।
भीष्मो विचित्रवीर्यस्य विवाहायोपचक्रमे ॥ १६

तस्मिन् काले काशिपतेस्तिस्रः कन्याः [4]सुरूपिणीः ।
स्वयंवरकृतोद्योगाः [5]शुश्राव सहसा तदा ॥ १७

[6]तत्राजगाम भीष्मोऽपि स्वानुजार्थं स्वयंवरम् ।
तं दृष्ट्वा पृथिवीपाला भीष्ममूचुरिदं वचः ॥ १८

[7]रथेनैकेन रथिनां श्रेष्ठो [8]वाराणसीं गतः ।
तत्र भूपान् वीर्ययुक्तान् सर्वतस्समुपागतान् ॥ १९

---

1. क. ख. न्मृतिरिति
2. अ. सोऽपि शान्तनवस्सत्यवाक्याचित्राङ्गदाभिधम्
3. क. ख. अस्मिंश्च नृपशार्दूले निहते
4. ख. स्वरूपिणीः
5. अ. शुचयस्सर्वदालसाः
6. अयं श्लोकः क. पुस्तके नास्ति
7. 19, 20 श्लोकौ अ. पुस्तके नोपलभ्येते
8. ख. वाराणसीगतः

दर्दर्श कन्यास्ताश्चैव भीष्मश्शन्तनुनन्दनः ।
कीर्त्यमानेषु राज्ञां तु नामधेयेषु भूसुराः ॥ २०

वृद्धः परमधर्मात्मा बली पलित[1]मूर्धजः ।
किं कारणमिहायातो निर्लज्जो भरतर्षभः ॥ २१

ब्रह्मचारीति भीष्मो हि वृथैव परिकीर्तितः ।
इत्येवं प्रब्रुवन्तस्ते हसन्ति [2]च नृपाधमाः ॥ २२

क्षत्रियाणां वचः श्रुत्वा भीष्मश्चुक्रोध वै द्विजाः ।
ततस्ते पार्थिवास्सर्वे समुत्पेतुरमर्षिताः ॥ २३

ततस्समभवद्युद्धं तेषां तस्य च भूसुराः ।
एकस्य च बहूनां च तुमुलं रोमहर्षणम् ॥ २४

सोऽचिरेणैव कालेन ह्यतिक्रम्य नराधिपान् ।
अक्षतः क्षपयित्वारीनसङ्ख्या[3]तान् स्वविक्रमात् ॥ २५

स्वपुरीमानयामास तिस्रः काशीन्द्रनन्दिनीः ।
मातरं च नमस्कृत्य दर्शयामास कन्यकाः ॥ २६

इमाः काशिपतेः कन्या मया निर्जित्य पार्थिवान् ।
विचित्रवीर्यस्य कृते वीर्य[4]शुल्का उपार्जिताः ॥ २७

दाशेय्यां तद्वचः श्रुत्वा त्वरितायां तदोत्सवे ।
उवाच वाक्यं सव्रीडा ज्येष्ठा काशीन्द्रकन्यका ॥ २८

मया [5]साल्वपतिः पूर्वं मनसाभिवृतो [6]नृपः ।
तेन चास्मि वृता पूर्वं [7]रहस्येऽविदिते पितुः ॥
एतद्विज्ञाय धर्मज्ञ धर्मतत्त्वं समाचर ॥ २९

सूतः—

एवमुक्तस्तया भीष्मः कन्यया विप्रसंसदि ।
अन्यभावयुता कन्या नोद्वाह्येति विचार्य च ॥ ३०

---

1. क. ख. धारकः
2. क. स्म नराधमाः ख. स्म नराधिपाः
3. ख. तांश्च विक्रमात्
4. क. शुल्कादु
5. ख. साल्वः पतिः
6. ख. नृप
7. क. ख. रहस्यविदिते

अम्बां काशीन्द्रतनयां स्वगृहान्निरकासयत् ।
अम्बिकाम्बालिके भार्ये प्रादाद्भ्रात्रे यवीयसे ॥ ३१

भीष्मो विचित्रवीर्याय विधिदृष्टेन वर्त्मना ।
अथाम्बा साल्वमागत्य जगाद मनसा वृतम् ॥ ३२

भीष्मं सानुजमुत्सृज्य त्वद्भावा त्वामुपा[1]गता ।
प्रतिगृह्णीष्व भद्रं ते विध्युक्तेन विधानतः ॥ ३३

तयैवमुक्तस्साल्वोऽपि प्रहस[2]न्निवमब्रवीत् ।
अन्येन विजिता भद्रे विसृष्टा तेन चाल्पयात् ॥ ३४

त्वां न गृह्णाम्यतो भद्रे पुनस्तत्रैव गम्यताम् ।
इत्युक्ता सा पुनः प्राप्य भीष्मं वचनमब्रवीत् ॥ ३५

[3]निर्जित्य हि रणाद्भीष्म त्वया[4]हं सहसा हृता ।
क्षत्रधर्ममवेक्षस्व भर्ता त्वमसि धर्मतः ॥ ३६

भीष्मः—

विसृष्टा ह्यसि गच्छ त्वं यथाकाममनिन्दिते ।
ऊर्ध्वरे[5]ता ह्यहमिति प्रत्युवाच पुनः पुनः ॥ ३७

सा भीष्मेण [6]पुनस्त्यक्ता निष्क्रामन्ती च [7]तत्पुरात् ।
तपसा [8]साधनेनापि दुःखं शान्तनवस्य हि ॥ ३८

करिष्यामीति निश्चित्य पार्श्वे हिमवतः शुभे ।
समाददे तपो घोरमतितीव्रं दुरासदम् ॥ ३९

सन्तुष्टस्तपसा तस्याः कुमारो वरदस्तदा ।
मानयन् राज[9]पुत्रीं तां ददौ [10]तस्यै शुभां स्रजम् ॥ ४०

दत्वा कुमारस्तां मालां पुनस्तस्यै वचोऽवदत् ।
एषा पुष्करणीमाला यथावत्समुपासिता ॥ ४१

---

1. क. ख. श्रिता
2. क. ख. न्निदम
3. ख. निर्जित्याहं
4. ख. हि
5. ख. तास्त्वहमिति
6. ख. परित्यक्ता
7. क. ख. तत्क्षणात्
8. क. ख. वायुधेनापि
9. ख. पुत्र्यै
10. तस्यां

[1]अम्बे त्वच्छोकशमनी भविष्यति न संशयः ।
इमां मालां यो बिभर्ति स भीष्मं निहनिष्यति ॥ ४२

[2]इत्युक्त्वादर्शनं यातः कुमारो वरदः प्रभुः ।
सा गृहीत्वाथ तां मालां क्षत्रियानिदमब्रवीत् ॥ ४३

[3]एषा वः क्षत्रिया माला यो भीष्मं निहनिष्यति ।
अहञ्च भार्या तस्य स्यामिति भूमिं चचार [4]ह ॥ ४४

एवञ्च क्रममाणायां समाः पञ्च गताः [5]पुरा ।
नाभवच्छरणं कश्चित् क्षत्रियो भीष्मजाद्भयात् ॥ ४५

सूतः—

अथागच्छत्सोमकं सा पाञ्चालेषु यशस्विनम् ।
भीष्मशोके मज्जमाना रक्ष रक्षेत्युवाच तम् ॥ ४६

सोऽप्याह नैव शक्तोऽहं रक्षितुं भीष्मजाद्भयात् ।

सूतः—

इत्युक्ता स्रजमासज्य द्वारि सा तस्य भूपतेः ॥ ४७

व्युदस्ता सर्वलोकेन मुनीनामाश्रमं ययौ ।
तां विलोक्याश्रमं प्राप्तां राजर्षि[6]र्होत्रवाहनः ॥ ४८

उदन्तमस्याः श्रुत्वा च जगाद सहसा वचः ।
कल्याणि पुत्रि मा [7]भैषीर्मातुस्ते जनको ह्यहम् ॥ ४९

अहं छेत्स्यामि ते दुःखमिति भूपे वदत्यपि ।
ततो रामः प्रादुरासीत्प्रज्वलन्निव तेजसा ॥ ५०

शिष्यैः परिवृतो विप्रो [8]जटी चीरसमन्वितः ।
धनुष्पाणिरदीनात्मा खड्गं बिभ्रत्परश्वथम् ॥ ५१

---

1. अ. अम्ब
2. अयं श्लोकः अ. पुस्तके न दृश्यते
3. इदमर्धं अ. पुस्तके नास्ति.
4. क. ख. सा.
5. क. ख. पराः
6. अ. हिंत्रवा
7. क. ख. भैस्त्वं
8. क. ख. जटा

[1]तत्रस्थास्तापसा दृष्ट्वा स च राजा महातपाः ।
तस्थुः प्राञ्जलयस्सर्वे पूजां चक्रुश्च भार्गवे ॥ ५२

पूजितश्च यथान्यायं निषसाद स तैस्सह ।
ततः कथान्तरे राजा [2]ऋषीणां सन्निधौ तदा ॥ ५३

उवाच मधुरं वाक्यं रामं [3]प्रति महाबलम् ।
रामेयं मम दौहित्री काशिराजसुता शुभा ॥ ५४

अस्याः श्रृणु यथा[4]न्यायं कार्यं कार्यविशारद ।
तच्छ्रुत्वा चाभ्यनुज्ञाते कथ्यतामिति भार्गवे ॥ ५५

तस्याभिवाद्य चरणौ कन्या [5]भार्गवमब्रवीत् ।
साल्वे निविष्टचित्तां मां भीष्मः शान्तनवो महान् ॥ ५६

वीर्य[6]शुल्कां समाहृत्य युधि निर्जित्य पार्थिवान् ।
[7]भार्यां मां न च गृह्णाति स्वयं भीष्मो महामनाः ॥ ५७

साल्वोऽपि न प्रगृह्णाति क्षात्रं धर्मं समाश्रितः ।
[8]अस्मिन् शोकार्णवे मग्नामुद्धरस्व महाप्रभो ॥ ५८

तच्छ्रुत्वा राजपुत्र्यास्तु वाक्यं राम[9]स्त्वरान्वितः ।
अभ्यगच्छत् कुरुक्षेत्रं यत्र भीष्मः प्रतिष्ठितः ॥ ५९

समागतञ्च तं बुद्ध्वा [10]विष्फुरन्तं महाबलम् ।
अभ्यगच्छज्जवेनैव भीष्मः पूजापुरस्सरम् ॥ ६०

स तञ्चाभिगतं दृष्ट्वा जामदग्न्यः प्रतापवान् ।
प्रतिजग्राह तां पूजां वचनञ्चेदमब्रवीत् ॥ ६१

भीष्म कां बुद्धिमास्थाय काशिराजसुता त्वया ।
अकामेयमिहानीता पुनश्चैव विसर्जिता ॥ ६२

---

1. क. ख. ततस्तं तापसी
2. क. ख. ऋषिं भृगुकुलोद्वहम्
3. अ. प्रीति
4. क. ख. तत्त्वं कार्याकार्यविदां वर
5. क. ख. वचन
6. क. ख. शुल्कात्
7. क. ख. भार्यार्थं
8. क. ख. तस्माद्दुःखार्णवे
9. क. ख. स्तया
10. क. ख. विषयं तं

[1]परामृष्टा त्वया हीना किं वा कर्तुमिहार्हति ।
प्रत्याख्याता हि साल्वेन त्वया नीतेति भारत ॥ ६३

[2]तस्मादिमां मन्नियोगात्प्रतिगृह्णीष्व भारत ।
न करिष्यसि [3]चेदेतद्वाक्यं मे कुरुपुङ्गव ॥ ६४

हनिष्यामि सहामात्यं त्वामद्येति पुनः पुनः ।
संरम्भादब्रवीद्रामः [4]क्रोधपर्याकुलेक्षणः ॥ ६५

ततस्तं क्रुद्धमनसं वीक्ष्य शान्तनवोऽब्रवीत् ।

भीष्मः—

न चैनां परिणेष्यामि व्रतं [5]मुक्त्वा मया धृतम् ॥ ६६

गुरो मया पितुः प्रीत्यै ब्रह्मचर्यव्रतं धृतम् ।
व्रतमेतन्न त्यजामि कामाल्लोभाद्भयादपि ॥ ६७

[6]इष्वस्त्रं तु त्वया ब्रह्मन् महावीर्य चतुर्विधम् ।
उपदिष्टं महाबाहो शिष्योऽस्मि तव भार्गव ॥ ६८

गुरो त्वयोपदेष्टव्यो धर्मः शिष्यस्य मे सदा ।
[7]उपदेशादेव गुरुर्गुरुत्वमुपगच्छति ॥ ६९

न ह्यधर्मोपदेष्टा हि गुरुर्गुरुतरोऽपि [8]सः ।
श्रोतव्यं [9]तु गुरोर्वाक्यं [10]धर्मयुक्तं विशेषतः ॥ ७०

न श्रोतव्यं गुरोर्वाक्यमधर्मसहितं [11]त्यजेत् ।
[12]गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ॥ ७१

उत्पथं प्रतिपन्नस्य [13]परित्यागो विधीयते ।
अतो धर्मं न मुञ्चामि न शृणोमि भवद्वचः ॥ ७२

---

1. क. ख. परामृष्टां त्वया भीष्म कोऽधिकर्तुमिहार्हति
2. इदमर्धं क. पुस्तके न दृश्यते
3. क. ख. चेत् त्वं तद्
4. ख. कोप-
5. क. ख. त्यक्त्वा
6. क. ख. इष्वस्त्रं मम बालस्य भवतैव
7. क, ख. धर्मोपदेष्टा हि
8. क. ख. सन्
9. क. ख. तद्
10. क. ख. धर्म्यमात्महितं तु चेत्
11. क. ख. तु चेत्
12. अयं श्लोकः 76. तम श्लोकादनन्तरं क. ख. पुस्तकयोर्दृश्यते
13. क. न्याय्यं भवति नाशनम्
ख. कार्यं भवति शासनम्

किं कारणं धर्मनिष्ठं योद्धुमिच्छसि भार्गव ।
ततस्तमब्रवीद्रामः क्रोधसंरक्तलोचनः ॥ ७३

[1]जानीहि मां गुरुं भीष्म न चैनां [2]परिगृह्यसे ।
न हि मे विद्यते शान्तिरन्यथा कुरुनन्दन ॥ ७४

भीष्मः—

गुरुत्वं त्वयि संप्रेक्ष्य जामदग्न्य महत्तरम् ।
प्रसादये त्वां भगवंस्त्यक्तैषा हि पुरा मया ॥ ७५

[3]न भयं वासवाद्वापि धर्मं [4]जानाम्यहं गुरो ।
स त्वं गुरुरिति प्रेम्णा मया सम्भावितो भृशम् ॥ ७६

गुरुवृत्तं न जानीषे तस्माद्योत्स्याम्यहं त्वया ।
[5]उद्यतेषुं रणे दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत् ॥ ७७

यो हन्यात्समरे क्रुद्धो युध्यन्तम[6]पलायिनम् ।
ब्रह्महत्या न तस्यास्तीत्येवं [7]धर्मेण निश्चितम् ॥ ७८

तस्माद्योत्स्यामि सहितस्त्वया राम [8]महाहवे ।
ततस्तमब्रवीद्रामः प्रदहन्निव भार्गवः ॥ ७९

[9]तथा भवतु ते भीष्म युद्धमद्यैव वर्तताम् ।
इति [10]ब्रुवन्तं तं भीष्मो रामं परपुरञ्जयम् ॥ ८०

नमस्कृत्यैव विधिवदुत्तमं वाक्यमब्रवीत् ।
योत्स्ये त्वया रणे [11]वीर विशिष्टेना[12]थ तेन च ॥
गुरुणा धर्मशीलेन जयमाशास्यमेव मे[13] ॥ ८१

---

1. क. ख. जानीषे
2. क. ख. प्रति
3. क. ख. न भयाद्वासवस्यापि
4. क. ख. जह्यां महामते
5. क. ख. उद्यतेषुरथं
6. क. पलायनम्
7. ख. धर्मेषु
8. क. ख. महामते
9. क. ख. एहि शीघ्रं मया
10. क. ख. ब्रुवाणं
11. क. राम
12. क. क. धिकेन
13. क. ख. हि

रामः—

एवमेव कुरुश्रेष्ठ कर्तव्यं भूतिमिच्छता ।
धर्मोऽ[1]प्येष महाबाहो [2]विशिष्टैस्सह युध्यताम् ॥ ८२

न तु ते जयमाशंसे त्वां [3]हि जेतुमहं स्थितः ।
धर्मेणागच्छ युध्यस्व प्रीतोऽस्मि चरितेन ते ॥ ८३

ततो रामं नमस्कृत्य रथमारुह्य सत्वरः ।
अकरो[4]द्रणमत्यर्थं [5]रामस्सज्जः प्रतापवान् ॥ ८४

ततो युद्धं समभवत्तुमुलं [6]रामभीष्मयोः ।
दिवसान् सुबहून् विप्राः परस्परजिगीषया ॥ ८५

न ज्ञातवन्तौ [7]दिवसान् शरान्धीकृतदिङ्मुखौ ।
अस्त्रै[8]र्बहुविधैर्घोरैः परस्पर[9]करोद्यतैः ॥ ८६

तुमुलं चक्रतुर्युद्धं दन्तैर्मत्तगजाविव ।
[10]त्रयोविंशे दिनेऽतीते चतुर्विंशे दिने ततः ॥ ८७

प्रावर्तत पुनर्युद्धं तुमुलं रोमहर्षणम् ।
ततश्शान्तनवो भीष्मो गन्धर्वैः प्रापितं तदा ॥ ८८

प्रस्वापमस्त्रं जग्राह भार्गवस्य जिगीषया ।
ततो हलहलाशब्दो दिवि विप्रा महानभूत् ॥ ८९

[11]प्रस्वापं भीष्म मा [12]स्वादीरिति कोलाहलान्वितः ।
[13]प्रस्वापास्त्रं मारणास्त्रसमानमिति कथ्यते ॥ ९०

भार्गवो नावमन्तव्यो ब्राह्मणश्च गुरुस्तथा ।
भीष्मोऽपि संजहारास्त्रं तच्छ्रुत्वा विस्मयान्वितः ॥ ९१

---

1. क. ख. ह्येषः
2. ख. विशिष्टस्सह
3. क. ख. च.
4. ख. द्रथ
5. ख. भीष्मःसज्जं
6. क. ख. रोमहर्षणम्
7. ख. तौ मुक्तशरा-
8. क. ख. श्शस्त्रैर्बहुविधैः
9. क. ख. करोद्यतैः
10. अ. त्रयोविंशद्दिने
11. अ. प्रस्वाद भीष्ममद्राक्षीरिति
12. ख. स्वाप्सीरिति
13. इदमर्धमनन्तरश्च श्लोकः अ. पुस्तके नोपलभ्यते

ततो ददर्श च दिवि त्रिदशान् सकलानपि ।
रामस्य पितरश्चापि सर्वानृषिगणानपि ॥ ९२

तस्मिन्नेव क्षणे रामं जमदग्निरुवाच ह ।
मा कार्षीस्साहसं [1]चैवं भीष्मेण क्षत्रियेण हि ॥ ९३

भीष्म त्वमपि मा कार्षीस्साहसं गुरुणा सह ।
इत्युक्त्वा वारयामास तयोर्युद्धं महामतिः ॥ ९४

सूतः—

ततस्तं गुरुमासाद्य ववन्दे कौरवोत्तमः ।
[2]धिगस्त्विति निजं कर्म निनिन्दात्मानमात्मना ॥ ९५

[3]रामोऽपि शाम्यतां युद्धे तुष्टोऽहं धर्मतस्तव ।
इत्युक्त्वा भीष्ममप्यम्बामवद[4]द्दिव्यया गिरा ॥ ९६

मयाद्य त्वत्कृते वत्से युद्धे भीष्मेण[5] कल्पितः ।
[6]त्वत्कार्यं पौरुषाच्छक्यं नैव कर्तुं महीतले ॥ ९७

दैवं पुरुषकारेण को निवर्तयितुं क्षमः ।
[7]सैवमुक्ता ययौ कन्या तपसे यमुनातटम् ॥ ९८

ध्यायन्ती मनसा भीष्मवधं जन्मान्तरेऽपि च ।
भार्गवोऽपि महावीर्यस्तत्रैवान्तरधीयत ॥ ९९

सूतः—

भीष्मः शान्तनवो धर्मं नाजहद्गुरुवाक्यतः ।
लोके स्थिरतरां कीर्तिं लब्धवान् धर्मवैभवात् ॥ १००

तस्माद्धर्मरतो यस्तु समुल्लङ्घ्य गुरोर्वचः ।
[8]अधर्म्यं श्रयते धर्मं स तु दोषैर्न लिप्यते ॥ १०१

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे गुरोरधर्म्यवचनोल्लङ्घने
दोषराहित्यकथनं नाम एकविंशोऽध्यायः

---

1. क. ख. त्वेवं
2. अ. धिगस्ति ते निजं कर्म किं वात्मानमात्मना
3. अ. रामोऽहं शाम्यता
4. क. ख. दीनया
5. क. च.
6. अ. पारुषं वाक्य नैव वक्तुं तले . . . .
7. क. ख. एव
8. क. अधर्मं श्रयते
   अ. अधर्मः श्रयते धर्मस्तु तु धर्मः प्रकीर्तितः

## ॥ द्वाविंशोऽध्यायः ॥

### गुरावननुकूलेऽपि शुभकर्मनिर्वाहकथनम्

सूतः—

स सद्गुरुर्यस्सत्कर्माण्युपदिश्य प्रवर्तयेत् ।
स एव काले कस्मिंश्चिन्नानुकूलो भवेद्यदि ॥ १

[1]आरब्धं कर्म शिष्यस्तु न त्यजेत्प्रतिभानवान् ।
अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ॥ २

आसीत्पुरा कृतयुगे मनुर्दण्डधरः प्रभुः ।
आविक्षि[2]न्नामतो राजा तस्य वंशे महाबलः ॥ ३

[3]तस्य वासवतुल्योऽभून्मरुत्तो नाम वै सुतः ।
स्पर्धते सततं यस्तु देवराजेन पार्थिवः ॥ ४

वासवोऽपि मरुत्तेन स्पर्धते भूसुरोत्तमाः ।
कदाचिदिन्द्रो देवेशः प्रोवाचेदं बृहस्पतिम् ॥ ५

[4]शुचिस्स गुणवानासीन्मरुत्तः पृथिवीपतिः ।
बृहस्पते मरुत्तस्य मा कार्षीस्त्वं कदाचन ॥ ६

दैवं कर्माथ पित्र्यं वा कर्तासि मम चेत्प्रियम् ।
अहं [5]तु त्रिषु लोकेषु सुराणामधिपो बली ॥ ७

[6]मां वृणीध्वं हि भद्रं वो मरुत्तं वा महीपतिम् ।
परित्यज मरुत्तस्य पौरोहित्यं भजस्व माम् ॥ ८

एवमुक्तस्तु [7]विप्रेन्द्रो देवेन्द्रेण बृहस्पतिः ।
[8]मुहूर्तं वाथ सञ्चिन्त्य देवराजमथाब्रवीत् ॥ ९

---

1. ख. आरब्धकर्म
2. क. ख. न्नाम राजासीत्
3. क. ख. अस्य
4. क. ख. शुद्ध
5. क. ख. च.
6. क. ख. मा वृणीष्व स्वभद्रं ते
7. क. ख. विप्रेन्द्राः
8. क. ख. मुहूर्तमिति

बृहस्पतिः—

त्वं [1]भूतानामधिपतिस्त्वयि लोकाः प्रतिष्ठिताः ।
पौरोहित्यं तु कृत्वा च तत्र देवगणेश्वर ॥ १०

[2]याजयेयं कथं मर्त्यं मरुत्तं पाकशासन ।
हिरण्यरेता [3]नोष्णः स्यात् परिवर्तेत मेदिनी ॥
भासनं न रविः कुर्यान्नाहं मर्त्यं च [4]याजये ॥ ११

सूतः—

देवराजस्य समयं कृतमाङ्गिरसेन हि ।
श्रुत्वा मरुत्तो नृपतिर्मन्युमाहारयंस्तदा ॥ १२

बृहस्पति[5]मुपागम्य वाग्मी वचनमब्रवीत् ।
भगवंस्त्वं वृतः पूर्वं पौरोहित्ये मया गुरो ॥ १३

[6]ततोऽहं यष्टुमिच्छामि सम्भाराः [7]सम्भृता मया ।
[8]याज्योऽस्मि भवता साधो तद्[9]भूयो विधिवित्तम ॥ १४

बृहस्पतिः—

न कामये [10]याजयितुं [11]त्वां महीं पृथिवीपते ।
वृतोऽस्मि देवराजेन प्रतिज्ञातश्च तस्य मे ॥ १५

मरुत्त गच्छ [12]वा मा वा निवृत्तोऽस्म्यद्य [13]याजनात् ।
न तु [14]याजयितास्म्यन्यं वृणु त्वं यमिहेच्छसि ॥ १६
उपाध्यायं महा[15]भागं यस्ते यज्ञं करिष्यति ।

सूतः—

एवमुक्तस्तु नृपतिर्मरुत्तो व्रीडितोऽभवत् ॥ १७

---

1. क. ख. लोकानाम
2. अ. याचयेयं
3. अ. नोष्म
4. अ. याचये
5. क. ख. मुपागत्य
6. क. ख. तदहं
7. क. ख. तु भृताः
8. अ. याच्यो
9. क. ख. ब्रूहि
10. अ. यचयितुं
11. क. ख. त्वामहं
12. क. ख. मा वा त्वं
13. अ. याचनात्
14. अ. याचयिता
15. क. ख. बाहो यस्ते

[1]प्रतिगच्छंस्तु संदीनो ददर्श पथि नारदम् ।
तं दृष्ट्वा प्रणतं भूमौ मरुत्तं नारदोऽब्रवीत् ॥ १८

नारदः—
राजर्षे नातितुष्टोऽसि कच्चित्क्षेमं तवानघ ।
क्व गतोऽसि कुतस्त्वेदमप्रीतिस्थानमागतम् ॥ १९

अपनेष्यामि ते मन्युं ब्रूहि मे पार्थिवोत्तम ।

राजा— —
गतोऽस्म्यङ्गिरसः पुत्रं ममाचार्यं बृहस्पतिम् ॥ २०

यज्ञार्थमृत्विजं कर्तुं स च मां नाभ्यनन्दत ।
प्रत्याख्यातश्च तेनाहं जीवितुं नाद्य कामये ॥ २१

परित्यक्तश्च गुरुणा [2]दूषितश्चापि नारद ।
एवमुक्तस्तु राज्ञा स नारदः प्रत्युवाच [3]ह ॥ २२

नारदः—
मा [4]रोषं त्वं कृथा राजन् गुरुमन्यं समाश्रय ।
[5]उत्पथग्राहिणं मूढं कार्याकार्यविचारिणम् ॥ २३

शिष्यस्याहितकर्तारं गुरुं धर्मातिलङ्घिनम् ।
त्यक्त्वा धर्मस्यानुकूलं गुरुमन्यं समाश्रयेत् ॥ २४

राजन्नङ्गिरसः पुत्रः संवर्तो नाम धार्मिकः ।
तं गच्छ यदि [6]याज्यं त्वां न वाञ्छति बृहस्पतिः ॥ २५

प्रसन्नस्त्वां महाराज संवर्तो याजयिष्यति ।

[7]राजा—
पश्येयं क्व [8]च संवर्तं शंस त्वं वदतां [9]वर ॥ २६

कथं च तत्र [10]वर्तेत कथं मां न [11]परित्यजेत् ।
प्रत्याख्यातस्तु तेनापि नाहं जीवितुमुत्सहे ॥ २७

---

1. क. ख. प्रत्यागच्छन् श्वसन्दीनो
2. क. दृषितश्चास्मि
   ख. दूषितश्चास्मि
3. ख. तम्
4. क. ख. विषादं
5. क. उत्पत्थग्राहिणं
6. क. ख. वा त्यक्त्वा
7. ख. मरुत्तः
8. क. ख. नु.
9. क. ख. वरम्
10. क. ख. वर्तेयं
11. क. परित्यजे

नारदः—

उन्मत्तवेषं बिभ्रद्यो वर्तते [1]स महामुनिः ।
वाराणसीं तु नगरीमभीक्ष्णमभिसेवते ॥ २८

तस्या [2]द्वारि समातिष्ठ [3]विन्यस्य कुणपं क्वचित् ।
तं दृष्ट्वा यो निवर्तेत [4]स संवर्तो महीपते ॥ २९

मुनिं [5]ततोऽनुगच्छ त्वं यत्र गच्छेत्स वीर्यवान् ।
तमेकान्ते समासाद्य प्राञ्जलिः शरणं व्रज ॥ ३०

पृच्छेद्वा यदि [6]त्वा नाहं तथा ख्यात इति [7]प्रभुः ।
ब्रूयास्त्वं नारदेनेति [8]संवर्त इति शत्रुहन् ॥ ३१

[9]स चेत्त्वामनुयुञ्जीत ममाधिगमने[10]च्छया ।
शंसेथा वह्निमा[11]रूढं मामपि त्वमशङ्कया ॥ ३२

स तथेति प्रतिश्रुत्य पूजयित्वा [12]च सादरम् ।
[13]अभ्यनुज्ञाय राजर्षिर्ययौ वाराणसीं [14]पुरीम् ॥ ३३

तत्र गत्वा यथोक्तं स पुर्या [15]द्वारे महायशाः ।
कुणपं स्थापयामास नारदस्य वचः स्मरन् ॥ ३४

यौगपद्येन [16]विप्राश्च तत्पुरद्वारमाविशन् ।
[17]अतस्स कुणपं दृष्ट्वा वेगेनैव न्यवर्तत ॥ ३५

स तं निवृत्तमालोक्य प्राञ्जलिः पृष्ठतोऽन्वगात् ।
स एनं विजने दृष्ट्वा पांसुभिः कर्दमेन च ॥ ३६

---

1. क. ख. च यथासुखम्
2. क. ख. द्वारं समासाद्य
3. क. न्यषेधाः ख. निंदध्याः
4. अ. न.
5. क. ख. तथानुगच्छेथाः
6. क. ख. केनाहं
7. कं. ख. स्म ह
8. क. ख. संतप्त
9. अ. न.
10. क. च्छया
11. अ. रुधि
12. क. तु नारदम्
13. क. ख. अभ्यनुज्ञाप्य
14. क. ख. प्रति
15. क. ख. द्वारं
16. क. ख. विप्रश्च स पुरीद्वार-माविशत्
17. क. ख. ततः स

श्लेष्मणा चापि राजानं ष्ठीवनैश्च समाकिरत् ।
स दूषितोऽपि [1]मुनिना अन्वगाच्च प्रसादयन् ॥ ३७

[2]ततो निवृत्य संवर्तः परिश्रान्त उपाविशत् ।
शीतलच्छायमासाद्य न्यग्रोधं बहुशाखिनम् ॥ ३८

संवर्तः—

कथमस्मि त्वया ज्ञातः केन वा [3]कथितोऽस्मि ते ।
एतदाचक्ष्व सत्यं ते सम्पत्स्यन्ते मनोरथाः ॥ ३९

[4]मिथ्या तु ब्रुवतो मूर्धा सप्तधा ते फलिष्यति ।

मरुत्तः—

नारदेन भवान्मह्यमाख्यातो ह्यटता [5]पथि ॥ ४०

कथयित्वा मुनिस्त्वां मे [6]प्रविष्टो हव्यवाहनम् ।
गुरु[7]प्रीतो ममेति त्वं [8]याजितुं प्रीतिरुत्तमा ॥ ४१

सूतः—

[9]तच्छ्रुत्वा पार्थिवेनोक्तं संवर्तः परया मुदा ।
एतावदहमप्येनं कुर्यामिति ततोऽब्रवीत् ॥ ४२

मया विकृतरूपेण कथं [10]याजितुमर्हसि ।
स त्वं बृहस्पतिं गच्छ [11]स मया पूज्य एव हि ॥ ४३

मरुत्तः—

बृहस्पति[12]र्याजितोऽपि मया वासव[13]पालितः ।
सोऽहमिच्छामि भवता [14]सर्वार्थेनापि वर्तितुम् ॥ ४४

---

1. क. ख. ऋषिणा
2. अ. निवर्त्य
3. क. ख. गदितो
4. क. ख. मिथ्यां
5. अ. विधि
6. अ. प्रतिष्ठो
7. क. ख. पुत्रो
8. क. ख. ततो मे
9. क. ख. श्रुत्वा तु
10. अ. याचितु
11. क. ख. समयः
12. अ. याचितो
13. क. चोदितः
    ख. वारितः
14. क. ख. सर्वस्वेनापि याजितुम्

संवर्तः—

[1]चिकीर्षसे त्वं कर्तुं वै यज्ञमेतं ध्रुवं मया ।
[2]याज्यमानं मया हि [3]त्वां बृहस्पतिपुरन्दरौ ॥

[4]द्विषेतां समभिक्रुद्धौ तत्र स्थैर्यं कथं वद ॥ ४५

मरुत्तः—

यावत्तपेत्सहस्रांशुस्तिष्ठेयुश्चापि [5]पर्वताः ।
तावत्तव कृपायुक्तो [6]न त्यजे सङ्गतं क्रतुम् ॥ ४६

संवर्तः—

आविक्षित शुभा बुद्धिर्दीयतां तव कर्मसु ।
संविधास्यामि ते राजन्नक्षय्यं द्रव्यसञ्चयम् ॥ ४७

येन देवान् सगन्धर्वान् शक्रं चाभि[7]भविष्यति ।
गिरेर्हिमवतः पृष्ठे मुञ्जवान्नाम पर्वतः ॥ ४८

तपते तत्र भगवांस्तपो नित्यमुमापतिः ।
तत्र गत्वा नमस्कृत्य महादेवाय शम्भवे ॥ ४९

सुवर्णमाहरिष्यन्ति तव दूता महाबलाः ।
इत्युक्तस्स वचस्तस्य चक्रे [8]कारंधमात्मजः ॥ ५०

ततोऽ[9]तिमानुषं सर्वं चक्रे यज्ञस्य संविधिम् ।
बृहस्पतिस्तदा श्रुत्वा मरुत्तस्य [10]महीपतेः ॥ ५१

समृद्धिमतिदेवस्य सन्तापमकरोद्भृशम् ।
तं दृष्ट्वा भृशसन्तप्तं देवराजो बृहस्पतिम् ॥
अभिगम्यामर[11]वृतः प्रोवाचेदं वचस्तदा ॥ ५२

---

1. अ. चिकीर्षसि त्वं यत्कामं सर्वमेतद्ध्रुवं मयि ।
2. अ. याच्यमानं
3. अ. त्वं
4. क. ख. द्विषतां
5. अ. पावकाः
6. अ. संत्यजे संगरं कृतम्
7. ख. भविष्यसि
8. अ. कारुण्यमात्मनः
9. अ. -वीव रुषन्
10. क. महीपते
11. क. ख. वृतं

इन्द्रः—

कुतो दुःखं [1]देहजं मानसं वा
पाण्डुर्विवर्णश्च [2]कृशस्त्वमद्य ।
आचक्ष्व मे [3]तद्विजयाय तेषां
निहन्मि सर्वांस्तव दुःखकर्तॄन् ॥ ५३

बृहस्पतिः—

मरुत्तमाहुर्मघवन् यक्ष्यमाणं
महायज्ञेनोत्तमदक्षिणेन ।
तं संवर्तो याजयति श्रुतं मे
[4]तदिच्छामि न स तं याजयेत ॥ ५४

अतोऽस्मि [5]देवेन्द्र विवर्णरूपः
संवर्तो मां स्पर्धते तन्निशम्य ।
सर्वोपायैर्मघवन् संनियच्छ
संवर्तं वा पार्थिवं वा मरुत्तम् ॥ ५५

इन्द्रः—

एहि गच्छ प्रहितो [6]जातवेदो
बृहस्पतिं परिदातुं मरुत्ते ।
अयं वै त्वां याजयते बृहस्पति-
र्यथा मेऽसौ तव [7]चेदं करिष्यति ॥ ५६

तस्य तद्वचनं श्रुत्वा मरुत्तस्यान्तिकं गतः ।
अग्निश्चाकथयद्राज्ञे वासवेन यदीरितम् ॥ ५७

[8]मरुत्तस्तु ततो [9]वाक्यं श्रुत्वा प्रोवाच पावकम् ।
संवर्तोऽयं याजयते वाक्पतेरयमञ्जलिः ॥ ५८

---

1. ख. मानसं देहजं
2. क. ख. कृतस्त्व-
3. अ. तद्विजयो वदेतां
4. अ. तदिच्छमानस्सततं याचये हि
5. क. ख. देवेश
6. ख. राजा तव देवो
7. क. ख. चैवं
8. क. मरुत्तस्य
9. क. ख. वाचं

सूतः—

अग्निरिन्द्रं पुनः प्राप्यावदत्तेनोदितं वचः ।

अग्निः—

[1]न ते वाचं रोचयते मरुत्तो
बृहस्पतेरञ्जलिं प्राहिणोच्च ।
संवर्तो [2]मे याजयतेत्यभीक्ष्णं
पुनः पुनस्स मया [3]चोद्यमानः ॥ ५९

उवाच[4]चैनां संविदं तेन कृत्वा
[5]तथा नेच्छेयमिति प्रतीतः ।
संवर्तो मामुक्तवांस्तत्र तीक्ष्णं
यद्यागच्छेश्चक्षुषा त्वा दहेयम् ॥ ६०

क्षत्त्रादेव ब्रह्मबलं गरीयो
न ब्रह्मतः किञ्चिदन्यद्गरीयः ।
सोऽहं जानन् ब्रह्मतेजो यथावत्
न संवर्तं गन्तुमिच्छामि शक्र ॥ ६१

एतच्छ्रुत्वा वचनं पावकस्य
गन्धर्वेशं प्राहिणोद्देवराजः ।
ततो गत्वा धृतराष्ट्रो नरेन्द्रं
प्रोवाचेदं वचनं वासवस्य ॥ ६२

बृहस्पतिं [6]याजयितुं न [7]गच्छेः
वज्रेण त्वां हन्ति शक्रो नरेन्द्र ।
घोरो नादः श्रूयते वासवस्य
नभःस्थले गर्जतो राजसिंह ॥ ६३

1. क. ख. ततो
2. क. ख. मां
3. क. ख. रोचमानः
4. क. ख. चैनं
5. क. ख. तथापि नेच्छामीति ततः प्रतीतः
6. अ. याचयितुं
7. क. ख. चेच्छेः

व्यक्तं वज्रं [1]मोक्ष्यते ते [2]महेन्द्र
क्षमो राजंश्चिन्त्यतामेष कालः ।
इत्येवमुक्तो धृतराष्ट्रेण राजा
श्रुत्वा नादं नदतो वासवस्य ॥
तपोनिष्ठं ब्रह्मविदां वरिष्ठं
स संवर्तं ज्ञापयामास कार्यम् ॥ ६४

संवर्तः—
अहं वै स्तम्भयिष्यामि मा भैस्त्वं शक्रतो नृप ।
सर्वेषामेव देवानां क्षपितान्यायुधानि मे ॥ ६५

वज्रादुदग्रादेतु भयं तवाद्य
वातो भूत्वा [3]हन्मि नरेन्द्र वज्रम् ।
भयं त्यक्त्वा वरमन्यं वृणीष्व
कं ते कामं सहसा साधयामि ॥ ६६

[4]राजा—
इन्द्रस्साक्षात् सहसाभ्येत्य यज्ञे
देवैस्सर्वैः प्रतिगृह्णातु सोमम् ।
संवर्तः—
[5]अयमिन्द्रो हरिभिर्यातु राजन्
देवैस्सर्वैस्सहितस्सोमपीथी ॥ ६७

मन्त्राहूतो यज्ञमिमं मयाद्य
पश्यैनं त्वं मन्त्रवित्तस्य कार्यम् ।
सूतः—
ततस्सर्वैस्सहितो देवराजः
प्राप्तो भीतो भूपतेर्यज्ञशालाम् ॥ ६८

तमायान्तं सहितं देवसङ्घैः
प्रत्युद्ययौ सपुरोधा मरुत्तः ।

---

1. ख. मोक्षते
2. क. नरेन्द्र
3. ख, न हन्मि
4. ख. मरुत्तः
5. अ. पुस्तके इदमर्धं 68, 69, तमश्लोकौ च न दृश्यन्ते

चक्रे पूजां देवराजाय चार्घ्यां
यथाशास्त्रं विधिवत्प्रीयमाणः ॥ ६९

[1]जानामि ते गुरुमेनं तपोधनं
बृहस्पतेरवरं तिग्मतेजसम् ।
यस्याह्वानादागतोऽहं नरेन्द्र
प्रीतिर्मेऽद्य त्वयि मन्युः प्रनष्टः ॥ ७०

संवर्तः—

यदि प्रीतस्त्वमसि देवराज
तस्मात्स्वयं शाधि यज्ञे विधानम् ।
त्वमेव सर्वैस्सहितो देवसङ्घै-
राविक्षितं तुष्टचित्तं विधेहि ॥

सूतः—

एवमुक्तस्त्वाङ्गिरसेन शक्रो
देवैस्सार्धं कृतवान् यज्ञकर्म ॥ ७१

गायकास्तत्र गन्धर्वास्तथा तुम्बुरुनारदौ ।
तद्यज्ञे लास्यशालिन्यः सर्वाः स्वर्लोकसुभ्रुवः ॥ ७२

देवाश्च स्वयमश्नन्ति स्वं स्वं भागमहर्निशम् ।
अग्निराह्वयते देवान् ब्राह्मणानां महात्मनाम् ॥ ७३

मरुतः परिवेष्टारो मरुत्तस्या[2]वसन्गृहे ।
[3]आविक्षितस्य [4]सामग्र्यैर्विश्वेदेवास्सभासदः ॥ ७४

एवं पीत्वा बलभित्सोममग्र्यं
ये चाप्यन्ये सोमपा देवसङ्घाः ।
सर्वेऽनुज्ञाताः प्रययुः पार्थिवेन
यथा जोषं तर्पिताः प्रीतिमन्तः ॥ ७५

ततो राजा जातरूपस्य राशीन्
पदे पदे कारयामास हृष्टः ।

---

1. अयं श्लोकः अ. पुस्तके नास्ति
2. अ. भवन्
3. अ. आदीक्षितस्य
4. क. ख. कामग्रे?

इति द्विजेभ्यो व्यसृजन् भूरि वित्तं
गुरोः प्रसादाद्धर्मयुक्तो बभूव ॥
अथानुज्ञातो गुरुणा सन्निवृत्य
शशास गामखिलां सागरान्ताम् ॥ ७६

सूतः—

तस्मादननुकूलेऽपि गुरौ धर्मं [1]समाश्रयेत् ।
सेन्द्रा देवाश्च धर्मेण तुष्यन्ति सततं द्विजाः ॥ ७७

तस्य विघ्नाः प्रणश्यन्ति धर्ममाचरतो ध्रुवम् ।
य इदं [2]शृणुयान्नित्यमितिहासं पुरातनम् ॥
स सुखी [3]धर्मवान् भूत्वा याति विष्णोः परं पदम् ॥ ७८

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे गुरावननुकूलेऽपि शुभकर्मनिर्वाह-
कथनं नाम द्वाविंशोऽध्यायः

---

1. ख. समाचरेत्
2. क. ख. शृणुते नित्य-
3. ख. शमवान्

## ॥ त्रयोविंशोऽध्यायः ॥

### शिवालयनिर्माणमाहात्म्यकथनम्

सूतः—

[1]देवालयस्य निर्माणमाहात्म्यं कथयामि वः ।
यस्य [2]श्रवणमात्रेण तत्फलं याति मानवः ॥ १

तृणैः काष्ठैश्च पाषाणैर्ये सृजन्ति शिवालयम् ।
[3]मोदन्ते रुद्रलोके तु ते नरा रुद्रसन्निधौ ॥ २

[4]मृद्दार्विष्टकशैलैर्वा यः करोति शिवालयम् ।
[5]त्रिस्सप्तकुलसंयुक्तः शिवलोके महीयते ॥ ३

मृन्मयात्कोटिगुणितं फलं स्याद्दारुभिः कृते ।
कोटिकोटिगुणं पुण्यं [6]दारुकादिष्टकामये ॥ ४

[7]ऐष्टकाद् द्विगुणं पुण्यं [8]शैलजं स्याच्छिवालयम् ।
मृच्छैलेयैस्समं पुण्यं कृतमाढ्यदरिद्रयोः ॥ ५

क्रीडन्पांसुमयं वापि यः करोति शिवालयम् ।
कल्पमेकं वसेत्सोऽपि शिवलोके गणेश्वरैः ॥ ६

यः कुर्यादालयं शम्भोः काष्ठदारुशिलादिभिः ।
स क्रीडते दिवि वरैर्विमानैस्सर्व[9]गामिभिः ॥ ७

---

1. क. ख. देवतालयनिर्माण-
2. क. ख. स्मरण
3. क. ख. कल्पमेकं वसेत्सोऽपि शिवलोके गणेश्वरैः
4. क. ख. पुस्तकयोरिदमर्धं नोपलभ्यते
5. क. ख. त्रिसप्त
6. क. दरुजादीष्टकामयम्
   ख. दारुजादिष्टकामयम्
7. अ. इष्टकाद्
8. क. ख. शैलेयं
9. क. ख. कालिकैः

[1]अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
अन्यथा भूमिकम्पाद्वा खण्डितं स्फुटितं भवेत् ॥ ८

शैलालयेऽपि देवस्य गर्भगेहस्य चोपरि ।
दारुभिस्तु दृढं कुर्यात्सर्वदोषापनुत्तये ॥ ९

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
रामो दृष्ट्वा विमानानि दिव्यभोगयुतानि च ॥ १०

पप्रच्छ शङ्करं पूर्वं हर्षेण महता [2]वृतः ।

रामः—

खे दृश्यन्ते विमानानि नानाश्चर्ययुतानि च ॥ ११

पुरुषास्तत्र दृश्यन्ते दिव्यनारी[3]समावृताः ।
[4]सहस्रवरनारीभिः पूज्यमानाः पदे पदे ॥ १२

गायन्ति विंशतिर्योषा रूपलावण्यकोमलाः ।
[5]करङ्कवाहिनी काचित् काचिच्चामर[6]धारिणी ॥ १३

तालवृन्तद्वयं नार्यौ वीजयेतां प्रगृह्य च ।
चक्रे चाङ्कमथै[7]कस्याप्युपधानमथा[8]परा ॥ १४

एकस्याः करयोर्हस्तं निधाय कृतसंस्तवः ।
नानाविधपरीहासकृतोत्फुल्लमुखाम्बुजाः ॥ १५

[9]एकैकस्य विमाने तु दृश्यते चन्द्रदीधितिः ।
[10]त्रिशतेषु विमानेषु दृश्यन्ते हीश्वराश्शुभाः ॥ १६

---

1. क. पुस्तके इदमेकमर्धं अष्टमश्लोकपूर्वार्धतया दशमश्लोकपूर्वर्धतया च द्विः दृश्यते ।
   अ. पुस्तके 8, 9-तमौ श्लोकौ न दृश्येते
2. क. ख. -न्वितः
3. क. ख. -समन्विताः
4. क. ख. सहस्रनर-
5. क. करण्ड ख. कारण्ड
6. क. ख. धारिका
7. ख. कस्या उप-
8. क. ख. परः
9. क. ख. एकैकत्र
10. अ. त्रिंशतेषु

एते किं पुण्यकर्तारो विष्णुमायाथ वा मुने ।

[1]शम्भुः—

एते हि ब्राह्मणाः शुद्धा गृहस्थाश्रमवासिनः ॥ १७

त्रिशतं ब्राह्मणा राम सौन्दर्यग्रामवासिनः ।
एषामेव हि सङ्ग्रामो दत्तो दशरथेन हि ॥ १८

तेषां तु समवेतानां कदाचिदभवन्मतिः ।
यथेह सुखिनस्सर्वे वयं नान्योपजीविनः ॥ १९

अस्मानेवोपजीवन्ति शतशो मनुजा[2]स्त्विह ।
येन पुण्येन च वयं सर्वकामानुमोदिनः ॥ २०

स्वर्गीकृतोपचाराश्च सर्वे [3]राज्यसुखान्विताः ।
जरामरणहीनाश्च युवान[4]स्सर्वथैव हि ॥ २१

विचार्यैवं द्विजास्सर्वे वसिष्ठस्याश्रमं ययुः ।
आगतानथ सम्पूज्य वसिष्ठो वाक्यमब्रवीत् ॥ २२

[5]किमर्थमागता यूयं शीघ्रं ब्रूत द्विजोत्तमाः ।
त ऊचु[6]र्निश्चितं पूर्वमात्मवृत्तं यथा[7]र्थतः ॥ २३

तेषां [8]तु तद्वचः श्रुत्वा वसिष्ठो वाक्यमब्रवीत् ।
पुराणं सर्वदा विप्राः श्रोतव्यं पापनाशनम् ॥ २४

धर्मश्चार्थश्च कामश्च मोक्षस्तत्रैव दृश्यते ।
ओमित्युक्त्वाथ मुनयः पुराणकुशलं मुनिम् ॥ २५

[9]जग्मुरङ्गिरसं श्रेष्ठं सर्वशास्त्रविशारदम् ।
सर्वागमपुराणज्ञं सदा सत्कर्मकारिणम् ॥ २६

---

1. क. ख. ईश्वरः-
2. क. ख. -स्त्विति
3. क. ख. चापि
4. क. ख. स्सर्वदैव-
5. इदमर्धं अ. क. पुस्तकयोर्नास्ति
6. क. ख. -श्चिन्तितं
7. क. ख. तथम्
8. ख. तद्वचनं
9. कं. जगु-

[1]इदमूचुर्नमस्कृत्य वयं सफल[2]जन्मिनः ।
कृतकृत्या वयं ब्रह्मन् साक्षाद्दृष्टोऽसि यन्मुने ॥

अङ्गिराः—
यत्कार्यादागता यूयं तत्कार्यं करवाण्यहम् ॥ २७

ब्राह्मणाः—
वयं श्रोतुं समायातास्त्वत्तः [3]श्रेयःपरम्पराम् ।
तदेवोपादिश विभो श्रेयः [4]स्वाकाङ्क्षितं हि नः ॥ २८

भो भो सर्वविदां श्रेष्ठ सर्वागमविशारद ।
कामगेन विमानेन सर्वसम्पत्समृद्धिना ॥ २९

नरः सुखसमृद्धेन केन पुण्येन वर्तते ।

अङ्गिराः—
एतदेव वसिष्ठेन दिलीपायोक्तमादरात् ॥ ३०

तदेव कथयाम्यद्य शृण्वन्तु ब्राह्मणोत्तमाः ।
नालं [5]द्रष्टुं द्विजश्रेष्ठा इतोऽप्यतिशयान्तरैः ॥ ३१

क्रीडमाना भविष्यन्ति येन तत्पुण्यमुच्यते ।
आत्मवित्तानुसारेण यः करोति शिवालयम् ॥ ३२

स तु तेनैव पुण्येन विमानैः क्रीडते दिवि ।
पूर्वापरकृतं वापि संस्कारैश्च विवर्जितम् ॥ ३३

सुधाधवलितं कृत्वा शिव[6]वेश्म समन्ततः ।
स्त्रियो रूपविलासाढ्यास्सर्वालङ्कारभूषिताः ॥ ३४

नानासुगीतकुशला नानारत्नोपशोभिताः ।
चतस्रोऽष्टौ षडथ वा मद्दलध्वनिकाः स्त्रियः ॥ ३५

---

1. क. ख. ते तमूचु-
2. क. ख. जन्मनः
3. अ. श्रोतुं परस्परम्
4. क. ख. -स्वाकाङ्क्षतां
5. क. ख. प्रष्टुं
6. क. ख. -मेति

[1]वासिक्ये द्वे च वासिक्ये काहलामथने उभे ।
आसिक्यश्च चतस्रः स्युरुत्कृष्टागाधगायिकाः ॥ ३६

एका द्वे वा सुगीते तु मुखरे तु प्रकीर्तिते ।
कोणवाद्यद्वये द्वे तु तूष्णीम्भूताष्षडष्ट वा ॥ ३७

सर्वा रूपविलासिन्यस्सर्वा वै यौवनोद्धताः ।
सुसूक्ष्मवस्त्रगन्धा[2]श्च विद्युच्चञ्चलदृष्टयः ॥ ३८

एतादृशीभिर्नारीभि[3]र्येन नृत्तादि कारितम् ।
एकस्मिन् दिवसे विप्रा [4]बहुवर्षविमानगः ॥ ३९

सर्वतः स्त्रीकृतसुखो युवा बहुभिरर्चितः ।
आनन्दसुखसम्पूर्णः क्रोधेर्ष्यादिविवर्जितः ॥ ४०

पञ्चगन्धेन लिप्ताङ्गः पञ्च[5]वर्णस्त्रगञ्चितः ।
घनसाराढ्यताम्बूलो दिव्यवस्त्रसमन्वितः ॥ ४१

स्वसमीपनिवासिन्यो योषास्तादृशभूषणाः ।
सद्यो[6]विकसिताम्लानरक्तसौगन्धिकस्रजः ॥ ४२

धम्मिल्ले वक्षसि [7]तथा बिभ्रत्य[8]स्सस्मिताधराः ।
[9]चरन्त्येतादृशीभिस्तु नृत्तगीतानुमोदिताः ॥ ४३

एवं विमानगो भूत्वा सुखित्वा कालमक्षयम् ।
पश्चाज्जायेत [10]नृपतिरेवं कृत्वा [11]पुरस्तथा ॥ ४४

[12]राज्यं स्वर्गफलं भुक्त्वा शिवभक्तो भवेन्नरः ।

---

1. अ. वांशिक्ये चावशिक्ये च काहलीसमली शुभे । आसक्यश्च चतस्रः स्युरुत्कटीगाढगायनः॥
2. क. ख. ढ्याः
3. क. ख. -र्नाना-
4. क. ख. वत्सरं सविमानगाः
5. क. ख. गन्धस्रगन्वितः
6. क. ख. विकसदामोदि-
7. क. -वदा- ख. सदा
8. क. ख. -स्सु-
9. क. ख. चरन्त्यस्ता-
10. अ. युवतीरेव कृत्वा
11. ख. अ. पुन-
12. क. ख. राज्यस्वर्गफलं त्यक्त्वा

शम्भुः—

दिलीपाय वसिष्ठोक्तमृषीणामङ्गिरोऽब्रवीत् ॥ ४५

[1]तच्छ्रुत्वा ब्राह्मणास्सर्वे कृतवन्तः शिवालयम् ।
तौर्यत्रि[2]तययुक्तञ्च नारीनिकरशोभितम् ॥ ४६

त एते ब्राह्मणा राम विमानानि समास्थिताः ।
दृश्यन्तेऽ[3]नेकसुखिनस्सदा मुदितमानसाः ॥ ४७

तस्य तद्वचनं श्रुत्वा रामो विस्मयमागतः ।

सूतः—

तस्मात्सर्वप्रयत्नेन कर्तव्यं शिवमन्दिरम् ॥ ४८

दर्शनादेव सर्वेषामभीप्सितफलप्रदम् ।
[4]सर्वक्रतुतपोदानतीर्थदेवेषु यत्फलम् ॥ ४९

तत्फलं कोटिगुणितं शिवालयवि[5]निर्मितौ ।
एवं विदित्वा परया भक्त्या कुर्याच्छिवालयम् ॥
सर्वयत्नेन विप्रेन्द्रा धर्मकामार्थ[6]मुक्तये ॥ ५०

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे शिवालयनिर्माणमाहात्म्य-
कथनं नाम त्रयोविंशोऽध्यायः

---

1. क. ख. तस्य तद्वचन श्रुत्वा
2. क. ख. कयुतं चैव
3. क. ख. नैक-
4. अ. पुस्तकेऽर्धमिदं नोपलभ्यते
5. क. ख. -निर्मितेः
6. ख. भुक्तये

## ॥ चतुर्विंशोऽध्यायः ॥

### देवालयसंमार्जनफलकथनम्

सूतः—

तपोयोगार्चनादिभ्यो ह्यधिकं सर्वसिद्धिदम् ।
संमार्जनस्य माहात्म्यं शृणुध्वमृषयो [1]यथा ॥ १

संमार्जनादिकर्तारो मार्गशोभाकराश्च ये ।
तेऽवश्यं [2]दिवि भूपाला भवन्ति [3]त्रिदशेश्वराः ॥ २

देवायतनभूमौ तु मार्जन्या [4]ऋजुसूक्ष्मया ।
[5]शनैस्संमार्जनं कृत्वा महत्पुण्यमवाप्यते ॥ ३

पांसूनां यावतां कुर्यान्नित्यं संमार्जनं [6]विभोः ।
तावन्त्यब्दसहस्राणि शिवलोके महीयते ॥ ४

शिव[7]माल्यापनयनं पूजान्ते [8]भूप्रमार्जनम् ।
एकैकमेव तुल्यं स्याच्चान्द्रायणशतेन तु ॥ ५

अहन्यहनि यः [9]पापं कुरुते मुनिसत्तमाः ।
गोचर्ममात्रं संमार्ज्य तत्तु हन्ति शिवालये ॥ ६

अबुद्धिपूर्वकं यो वा कुर्यात्संमार्जनक्रियाम् ।
तिर्यग्जातिरपि क्षिप्रं जायते सुमहाकुले ॥ ७

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
[10]पुरा पाञ्चालविषये नरवर्मेति भूपतिः ॥ ८

---

1. क. ख. -ऽधुना
2. क. ख. पृथिवीपालाः
3. क. ख. त्रिदशोपमाः
4. क. ख. मृदु-
5. क. ख. तेन सं-
6. ख. विभो
7. क. ख. मूल्योप-
8. क. ख. च प्रमा-
9. अ. पूजां
10. क. ख. पाञ्चालविषये पूर्वं

तस्याग्रमहिषी नाम्ना [1]या सुदेवीति [2]कीर्तिता ।
शिवे सुमहतीं भक्तिं सा दधार यशस्विनी ॥ ९

चकार च महाभागा प्रत्यहं शिवमन्दिरे ।
संमार्जनं विशेषेण यतवाक्काय[3]मानसैः ॥ १०

तत्राजगाम ब्रह्मर्षिर्गालवः शिवमन्दिरे ।
संमार्जनरतां राज्ञीं सुदेवीं प्राह सादरम् ॥ ११

भद्रे भक्तियुते देवि भवे त्वं भव्यया धिया ।
संमार्जने च ते [4]भक्तिरीदृशी नान्यकर्मसु ॥
कारणं वेत्तुमिच्छामि वक्तुमर्हसि सुव्रते ॥ १२

सुदेवी—

[5]हर्षेण सर्वमेवाहं वक्ष्याम्यद्य यथातथम् ।
साहं जन्मनि पूर्वस्मिन् गृध्रिकाप्येकचारिणी ॥ १३

सर्वत्र विचरा[6]म्येव दिग्भागेष्वकुतोभया ।
[7]कदाचिदागता ब्रह्मन् [8]भ्रमन्ती च ततस्ततः ॥ १४

किष्किन्धापर्वतं [9]तत्र हेमकूटो महागिरिः ।
दिव्यलिङ्गो विरूपाक्षो यत्र तिष्ठति सर्वदा ॥ १५

तस्य सन्दर्शनादेव यान्ति स्वश्रेयसं [10]द्विजाः ।
तस्य देवस्य यद्धाम तत्पार्श्वमहमीयुषी ॥ १६

न्यस्तं केनापि नैवेद्यं पूजकेन तदा स्थितम् ।
देवस्य पुरतो दृष्ट्वा तज्जिघृक्षोद्यता [11]ह्यहम् ॥ १७

प्रविश्याभ्यन्तरं तत्र दिव्यलिङ्गं प्रदक्षिणम् ।
अकामादेव कुर्वाणा [12]तदगृह्णां क्षुधार्दिता ॥ १८

---

1. क. ख. सा
2. क. ख. कीर्त्यते
3. क. ख. मानसा
4. क. ख. बुद्धि-
5. क. ख. महर्षे सर्ववेदी त्वं
6. क. ख. -म्येवं
7. क. ख. दैवादेवा-
8. अ. भ्राम्यन्ती च यतस्ततः
9. क. ख. यत्र
10. ख. बुधाः
11. क. ख. -ऽभवम्
12. क. ख. तथा-

तावदेव समायातस्तत्र देवस्य पूजकः ।
तं दृष्ट्वाहं भयोद्विग्ना [1]पक्षौ व्याधून्वती मुहुः ॥ १९

[2]उत्प्लुत्य निरगां तस्माद्देवागारात्कथञ्चन ।
[3]समुत्पतनवेगेन पक्षाभ्यां [4]वास्तुमार्जनम् ॥ २०

अभूद्देवस्य पुरतश्चलिताभ्याम[5]निच्छया ।
निर्गत्य स्वेच्छया [6]याता मृता कालेन कुत्रचित् ॥ २१

संमार्जनप्रभावेण संजाताहं [7]प्रभोः कुले ।
पित्रा [8]चाप्यनुरूपाय दत्ताहं नरवर्मणे ॥ २२

दशराज्ञीसहस्राणामुत्तमा तत्प्रभावतः ।
अभूवमिह विप्रेन्द्र भर्तुरत्यन्तवल्लभा ॥ २३

पुरा संमार्जनं कृत्वा देवागारे ह्यकामतः ।
जातिस्मरा च जाताहं तद्वेद्मि प्राक्तनं कृतम् ॥ २४

संमार्जने कृतेऽकामाद्देवागारे द्विजोत्तम ।
भवेत्कीदृक् फलमिति प्रत्यहं तत्परायणा ॥ २५

इत्येतत्कारणं प्रोक्तं मया संमार्जने मुने ।
चरितार्थास्मि येनाहं [9]महिषी नरवर्मणः ॥ २६

तस्यास्तद्वचनं श्रुत्वा मुनिराश्चर्यसंयुतः ।
आशीर्भिरभि[10]नन्द्यैनां हेमकूटमुपा[11]गमत् ॥ २७

एवं संमार्जनस्योक्तं माहात्म्यं देवमन्दिरे ।
तस्मात्संमार्जनं पुंसां सर्वाभीष्टफलप्रदम् ॥ २८

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे देवालयसंमार्जनफलकथनं नाम चतुर्विंशोऽध्यायः

---

1. अ. पक्षाभ्यां धूयते मुहुः
2. क. उत्पत्य
3. क. ख. समुत्पन्नेन
4. ख. पांसु-
5. क. निश्चला
6. अ. तस्मान्मृत्युः का तेन
7. क. ख. वसोः
8. अ. चं मेऽ-
9. क. ख. महर्षे
10. क. ख. -वर्ध्यैनां
11. क. -गतम्

## ॥ [1]पञ्चविंशोऽध्यायः ॥

### शिवाभिषेकफलकथनम्

सूतः—

चुलुकोदकमात्रेण ह्यभिषिक्तः शिवो यथा ।
सन्तुष्येन्न तथा दानाज्जपहोमार्चनादिभिः ॥ १

तस्मात्सर्वप्रयत्नेन भक्त्या परमयान्वितः ।
अभिषिच्य शिवं विप्रास्सर्वान् कामानवाप्नुयात् ॥ २

[2]द्विपोऽप्यनिच्छया कृत्वा शिवलिङ्गाभिषेचनम् ।
मुक्तः पूर्वकृतैः पापैः परमं पदमाप्नुयात् ॥ ३

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
वृषभाद्रिसमुद्भूता सर्वपापप्रणाशिनी ॥ ४

अस्ति पुण्या नदी काचित्सुवर्णमुखरी त्रिधा ।
रसालतालहिन्तालतमालवकुलादिभिः ॥ ५

पुंनागपूगनारङ्गपनसाशोकदाडिमैः ।
माधवीमल्लिकाजातियूथिकामरुवादिभिः ॥ ६

अलङ्कृततटोद्देशा बहुभिः पुण्यपादपैः ।
कृष्णपक्षत्रयोदश्यां श्रवणे विमलाशयाः ॥ ७

तस्यां स्नानं प्रकुर्वन्ति ये ते निर्धूतकल्मषाः ।
यः [3]कश्चिदपि वा तस्यां म्रियते स्वेन कर्मणा ॥ ८

कपालमोक्षस्तस्याशु [4]भवेद्व्यपगतैनसः ।
तस्यास्तीरे तथा पुण्ये लतागुल्मसमावृते ॥ ९

---

1. क. पुस्तकेऽयमध्यायो नोपलभ्यते
2. ख. नीचोऽप्य-
3. ख. कश्चिदभिघातस्य
4. ख. नुडश्यपतैनसः!

लिङ्गं तत्र स्थितं [1]गुप्तं लताभिः परिवेष्टितम् ।
तत्र कश्चिद्वनगजश्चरित्वा सकलं वनम् ॥ १०

क्रीडन् क्रीडन् समायातो गाहमानो नदीजलम् ।
क्रीडित्वा [2]सुचिरं कालं [3]ततः क्रीडालतावनम् ॥ ११

प्रकाशीकृत्य हस्तेन [4]सिषेवे क्रीडयाम्बुधिम् ।
तस्य क्रीडाविसृष्टानि सलिलानि ततस्ततः ॥ १२

गुप्तीकृतस्य लिङ्गस्य मूर्ध्नि पेतु[5]र्यदृच्छया ।
अभिषिञ्चति तल्लिङ्गमाहृतैस्तीर्थवारिभिः ॥ १३

एवं बहुतिथे काले गते पुण्येन कर्मणा ।
मुक्तदेहोऽभवत्तत्र ततस्तत्फलभोगतः ॥ १४

गजकर्णाभिधो जज्ञे गणानामग्रणी[6]र्गणः ।
तदा प्रभृति तल्लिङ्गं कालहस्तीश्वराख्यया ॥ १५

[7]पप्रथे त्रिषु लोकेषु प्रपन्नानां शुभङ्करम् ।
स्नापयित्वा शिवं हस्ती गन्धमत्तो ह्यनिच्छया ॥ १६

गाणपत्यं पदं लेभे स्पृहणीयं सुरैरपि ।
ये पुनः स्नापयन्तीशं भक्त्या परमया युताः ॥ १७

ते लब्ध्वा शिवसारूप्यं मोदन्ते शिववत्सदा ।
वस्त्रपूतेन यो लिङ्गं स्नापयेत्सकृदेव हि ॥ १८

सर्वकामसुतृप्तात्मा वारुणं लोकमाप्नुयात् ।
मन्त्राष्टशतजप्तेन विमलेनाम्भसा शिवम् ॥ १९

स्नापयित्वा सकृद्भक्त्या शिवलोके महीयते ।
पितॄनुद्दिश्य यो लिङ्गं स्नापयेच्छीतवारिणा ॥ २०

---

1. ख. पुण्यं महौन्नत्यपरिष्कृतम्
2. अ. -नुचितं
3. ख. तत्र
4. ख. सिषेच
5. ख. -रनिच्छया
6. ख. -र्गजः
7. ववृधे

तृप्ताः स्वर्गं गमिष्यन्ति पितरो नरकादपि ।
सर्वे देवाश्च सुप्रीतास्तस्य नित्यं शिवप्रदाः ॥ २१

अयुतं यो गवां दद्याद्दोग्ध्रीणां वेदपारगे ।
वस्त्रालङ्कारयुक्तानां क्षीरस्नानेन तत्फलम् ॥ २२

दध्ना च स्नापयेल्लिङ्गं सकृद्भक्त्या च यो नरः ।
सर्वपापविनिर्मुक्तो रुद्रलोकं स गच्छति ॥ २३

इहामुत्र कृतं पापं घृतस्नानेन देहिनाम् ।
क्षपयेच्छङ्करो यस्मात्तेन तत्स्नानमाचरेत् ॥ २४

ततः कुलैकविंशत्यानुचरैस्त्रिदशेश्वरान् ।
मधुना स्नापयेल्लिङ्गं सकृद्भक्त्या तु यो नरः ॥ २५

सर्वपापविनिर्मुक्तो वह्निलोके महीयते ।
स्नानमिक्षुरसेनापि यो लिङ्गस्य समाचरेत् ॥ २६

शिवाभिषेकं कुरुते स शैवं पदमाप्नुयात् ।
पुष्पोदकेन यो लिङ्गं स्नापयेत्प्रयतस्तु सः ॥ २७

विमानैश्चन्द्रसङ्काशैश्चन्द्रलोके महीयते ।
रत्नोदकेन संस्नाप्य शिवमैन्द्रपदं श्रयेत् ॥ २८

शिवाम्भसा शिवं स्नाप्य कौबेरपदमाप्नुयात् ।
कर्पूरागरुतोयेन [1]यो लिङ्गं स्नापयेत्सकृत् ॥ २९

सर्वपापविनिर्मुक्तः शिव[2]रूपमवाप्नुयात् ।
गन्धाम्भसा शिवं स्नाप्य गान्धर्वं लोकमाप्नुयात् ॥ ३०

[3]श्रियं प्राप्नोति संस्नाप्य शिवं कुङ्कुमवारिणा ।
फलतोयैः शिवं स्नाप्य बहुपुत्रयुतो भवेत् ॥ ३१

कपिलापञ्चगव्येन कुशवारियुतेन च ।
स्नापयेन्मन्त्रपूतेन ब्रह्मस्नानमिदं स्मृतम् ॥ ३२

---

1. ख. योऽभिषिञ्चेच्छिवं
2. ख. सारूप्यमाप्नुयात्
3. ख. शिवं

एकाहमपि यो लिङ्गे ब्रह्मस्नानं समाचरेत् ।
[1]स तु निर्धूय पापानि शिवलोके महीयते ॥ ३३

ब्रह्मस्नानमिदं [2]विप्रा ब्रह्महत्यादिपातकम् ।
मातापितृसमुद्भूतमस्थिमज्जागतं तथा ॥ ३४

दहेत्सत्यमिदं प्रोक्तं तूलराशिमिवानलः ।
कुशोदकेन यो लिङ्गं संस्नापयति भक्तितः ॥ ३५

काञ्चनेन विमानेन ब्रह्मलोकं स गच्छति ।
सितेन भस्मना [3]स्नाप्य सकृल्लिङ्गं प्रमोदते ॥ ३६

चन्द्रांशुनिर्मलं श्रीमान् शिववत् सोममण्डले ।
तस्मात्सर्वप्रयत्नेन शम्भोः स्नानं समाचरेत् ॥
तेनैवाप्नोति पुरुषः पुरुषार्थांश्चतुर्विधान् ॥ ३७

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे शिवाभिषेकफलकथनं
नाम पञ्चविंशोऽध्यायः

1. ख. यस्तु
2. ख. विप्र
3. ख. -लिप्य

## ॥ षड्विंशोऽध्यायः ॥

### गन्धोपचारफलकथनम्

यज्ञेभ्योऽपि महादानाद्ध्यानादपि विशेषतः ।
सर्वस्मात्तपसोऽप्याहुर्गन्धार्चनमभीष्टदम् ॥ १

गन्धेन प्रीणयेद्देवं शम्भुं यस्सकृदेव वा ।
स सर्वकामसम्पूर्णो जायते पृथिवीपतिः ॥ २

अस्मिन्नर्थे पुरावृत्त[1]माख्यानं प्रवदामि वः ।
श्रूयते हि पुरा नाम्ना धुंधुमारो महीपतिः ॥ ३

धर्मज्ञस्सत्यसन्धश्च देवे भक्तिं वहन् शिवे ।
स च सर्वैर्महादेवमुपचा[2]रैः प्रहर्षयन् ॥ ४

दिव्यगन्धोपचारेण विशेषात्पर्यपूजयत् ।
तं द्रष्टुकामा मुनयः श्रुतज्ञास्संशितव्रताः ॥ ५

[3]अगच्छन् भावितात्मानः कौतूहलसमन्विताः ।
तं पूजाभवने रम्ये शङ्करार्चनतत्परम् ॥ ६

आलोक्य मुनयस्तस्थुर्यावत्समयमुत्सुकाः ।
ते [4]वीक्ष्य वीक्ष्य पूजायां राज्ञा शम्भोः प्रकल्पितम् ॥ ७

गन्धोपचारमखिलं परं विस्मयमाययुः ।
तावत्सम्पूज्य देवेशं नियतो धरणीपतिः ॥ ८

पूजयामास विधिव[5]न्महर्षीन् विमलाशयः ।
सर्वोपचारैस्सम्पूज्य विनीतः प्रत्युवाच तान् ॥ ९

---

1. क. ख. -मितिहासं वदामि
2. ख. -रैश्च हर्षयन्
3. क, ख. आगच्छन्
4. अ. वीक्ष्य पूजनं रम्यं
5. अ. न्महर्षिर्निर्मलाशयः

राजा—

अहो धन्योऽस्मि धन्योऽस्मि पूजया फलितं मम ।
[1]महान्तस्सर्वधर्मज्ञा यतो यूयमिहागताः ॥ १०

इत्याकर्ण्य वचस्तस्य प्रहृष्टा मुनयोऽब्रुवन् ।

मुनयः—

राजन् [2]कतिविधाः ख्याता राजानः पृथिवीतले ॥ ११

तेभ्योऽपि त्वं समधिकस्सदाचारेण भूयसा ।
काले वर्षति पर्जन्यः पृथिवी सस्यशालिनी ॥ १२

देशाश्च क्षोभरहितास्त्वयि पृथ्वीं प्रशासति ।
एवंविधं त्वामाशीर्भिरभिवर्धयितुं वयम् ॥ १३

आगतास्त्वं च दृष्टोऽसि सन्तुष्टाः स्म इमे वयम् ।
प्रष्टव्य[3]मिति राजेन्द्र श्रृणु युक्तेन चेतसा ॥ १४

शम्भोस्सर्वोपचारेषु क्रियमाणे[4]षु च त्वया ।
गन्धोपचारस्सुमहान् क्रियते स्म विशेषतः ॥ १५

किमियं वासना वापि पूर्वजन्मानुबन्धिनी ।
अथ वा कस्यचिद्वाचा क्रियते या गरीयसी ॥ १६

इति तेषां वचः श्रुत्वा धुंधुमारोऽ[5]भ्यभाषत ।

धुन्धुमारः—

साधु पृष्टं मुनिवरा युष्माभिर्धर्म[6]चारिभिः ॥ १७

पूर्वजन्मानुबन्धा मे वासनैवात्र कारणम् ।
कलिङ्गेषु पुरा कश्चित् करालो नाम लुब्धकः ॥ १८

नृशंसः पापकर्मा च नित्यं प्राणिवधे रतः ।
सिन्धुमल्यास्तटे नित्यमास्ते तरुलतावने ॥ १९

---

1. क. ख. भवन्तस्स-
2. क. ख. कति कति
3. ख. -मस्ति
4. ख. -ष्वपि
5. क. -प्य-
6. क. ख. -दर्शिभिः

निहतास्तेन पापेन [1]परमं बहवो मृगाः ।
मारितास्तेन लुब्धेन पथिकाश्च परश्शतम् ॥ २०

न शुभं विहितं किञ्चित् कामतो वाप्यकामतः ।
तेन दुर्दान्तचित्तेन पापमेव महत्कृतम् ॥ २१

स कदाचिद्वने भ्राम्यन्निदाघपरिपीडितः ।
शून्यं शिवालयं तत्र प्रविवेश यदृच्छया ॥ २२

श्रमातुरः स्थितस्तत्र स ददर्श वनेचरः ।
चन्दनं पथिकैर्मुक्तं [2]गमनव्यापृताशयैः ॥ २३

विनिनीषुः श्रमं स्वीयं तदादाय स लुब्धकः ।
पिनष्टि स्म [3]स संमूढः शिवलिङ्गस्य मूर्धनि ॥ २४

तेन चन्दनपङ्केन लिप्ताङ्गोऽपि गतश्रमः ।
सोऽभवद्गन्धशेषस्तु स्थितो [4]लिङ्गस्य मूर्धनि ॥ २५

ततस्तत्रातपं प्रौढमपवाह्य वनेचरः ।
गन्धानुलिप्तसर्वाङ्गस्स जगाम यथागतम् ॥ २६

स कालेन मृतस्तत्र व्याधो निर्मुक्त[5]कल्मषः ।
स एवाहं नृपो जात[6]स्ततो गन्धोपचारतः ॥ २७

जातिस्मरश्च संवृत्तः परमेशप्रसादतः ।
सैवात्राप्यनुबध्नाति वासना मां शुभप्रदा ॥ २८

तस्माद्गन्धोपचारेण विशेषात्परमेश्वरम् ।
पूजयामि मुनिश्रेष्ठा येनेदं सुकृतं मम ॥ २९

सूतः—

इत्याकर्ण्य वचस्तस्य मुनयस्तुष्टमानसाः ।
आशीर्भिरभि[7]नन्द्यैनं स्वं स्वमाश्रममाययुः ॥ ३०

---

1. क. ख. नित्यं च
2. क. ख. -गमने
3. क. ख. विमूढात्मा
4. क. ख. -भूलिङ्गमूर्धनि
5. ख. -किल्बिषः
6. क. ख. -स्तथा
7. क, ख. -वर्ध्यैनं

पुनरन्यत्प्रवक्ष्यामि पुरावृत्तं महीसुराः ।
अवाच्यमपि विप्रेन्द्राः प्रवृत्तं यत् प्रजापतेः ॥ ३१

दाक्षायणीं पुरा ब्रह्मा कामयित्वा तु तत्क्षणात् ।
प्रबुद्धो मनसा ध्यात्वा कन्दर्पं स शशाप ह ॥ ३२

कन्दर्पोऽपि विधेः शापाद्धरनेत्राग्निसात्कृतः ।
शशाप गौरी ब्रह्माणं पुत्रीसक्तो भवेति तम् ॥ ३३

शापान्मृग्यां दुहित[1]रि संसक्तोऽभूत्पितामहः ।
सा मृगी दीनदीना च सस्मार परमेश्वरम् ॥ ३४

शिवोऽपि हन्तुकाम[2]स्तु मृगरूपधरं विधिम् ।
प्रमुमोचास्त्रमाग्नेयं ज्वालामालाभयङ्करम् ॥ ३५

ततो[3]ऽस्त्रपातमालक्ष्य भीतभीतः पितामहः ।
शरणं प्राप्य देवेशं लिङ्गरूपिणमीश्वरम् ॥ ३६

सुगन्धैरर्चयामास तेन तुष्टोऽभवच्छिवः ।
आजहार [4]च वेगात्तं [5]कण्ठोपान्तचरं शरम् ॥ ३७

[6]त्वयालिप्तेन गन्धेन तुष्टोऽस्मि कमलासन ।
विधूतकल्मषो भूया इत्युक्त्वान्तर्दधे शिवः ॥ ३८

ब्रह्मापि तेन [7]शापेन [8]विमुक्तः शिवशासनात् ।
ससर्ज सकलाँल्लोकान् यथापूर्वमनिन्दितः ॥ ३९

पुरा किल द्विजो भूत्वा[9]गात्पुत्रीं मनसैव तु ।
तया दत्तेन शापेन नितरां परिपीडितः ॥ ४०

[10]गन्धैरालिप्य देवेशं विमुक्तः पापतोऽ[11]भवत् ।
अयाचत [12]परं देवं गुरुतल्पगपापहम् ॥ ४१

---

1. क. -र्यासक्तो
2. क. ख. -स्तं
3. क. ख. -ऽस्त्रं घोर-
4. ख. स्ववेगा-
5. क. ख. कर्णोपान्त-
6. क. ख. त्वदा-
7. अ. पापेन
8. क. ख. निर्मुक्तः
9. ख. गायत्रीं
10. क. ख. गन्धेनालिप्य
11. अ. ख. -भवम्
12. ख. वरं

अर्चयेद्यस्सुगन्धाद्यैस्तत्पापं क्षम्यतामिति ।

सूतः—

तस्माद्गन्धैर्महादेवमालिप्य सकृदर्चयन् ॥ ४२

गुरुतल्पगतैः पापैरपि मुच्येत पातकी ।
गन्धोपचारमात्रस्य फलमेतदुदाहृतम् ॥
अष्टगन्धोपचारस्य फलं कियदुदीर्यते ॥ ४३

गोरोचना[1]चन्दनकुङ्कुमैला-
कर्पूरकृष्णागरुदेवकाष्ठैः ।
कस्तूरिकाद्यैरनुलिप्य शम्भुं
प्राप्नोति पुण्यं हयमेधकोट्याः ॥ ४४

देवदारुमयं गन्धं शिवाय विनिवेदयेत् ।
शिवलोकमवाप्नोति [2]शिवसायुज्यमाप्नुयात् ॥ ४५

बिल्वमूलमयं गन्धमुमामाहेश्वराय वै ।
महदैश्वर्यमाप्नोति [3]दत्वा शिवपुरं व्रजेत् ॥ ४६

आरग्वधमयं गन्धं लेपयेन्मृत्युजिद्धरम् ।
मृत्युजित्स भवेद्भक्त्या गाणापत्यमवाप्नुयात् ॥ ४७

सूतः—

तस्मात्सर्वोपचारेभ्यो गन्धपूजा विशिष्यते ।
[4]यथैव पामरो वापि सर्वान् कामान् समश्नुते ॥ ४८

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे गन्धोपचारफल-
कथनं नाम षड्विंशोऽध्यायः

---

1. क. ख. कुङ्कुमचन्दनैला-
2. क. ख. कल्पमेकं न संशयः
3. अ. पुनः
4. क. ख. यो यो वा पामरो

## ॥ सप्तविंशोऽध्यायः ॥

### पुष्पार्चनफलकथनम्

सूतः—

अथ वक्ष्ये विशेषेण पुष्पारोपणजं फलम् ।
यस्य श्रवणमात्रेण नरो याति परां गतिम् ॥ १

यद्[1]द्वारे मत्तमातङ्गा वायुवेगास्तुरङ्गमाः ।
पूर्णेन्दुवदना नार्यः शम्भोः पुष्पार्चनाफलम् ॥ २

तपश्शीलगुणोपेते पात्रे वेदस्य पारगे ।
सुवर्ण[2]कोटीं यद्दत्वा तत्फलं कुसुमेन हि ॥ ३

यो दद्यात्काञ्चनं मेरुं [3]रत्नपूर्णां वसुन्धराम् ।
लिङ्गन्यस्तैकपुष्पस्य [4]सहस्रांशेन पूरयेत् ॥ ४

[5]चैत्रादिऋतुसम्भूतैः प्रसूनैर्नित्यमर्चयेत् ।
आयुः कीर्तिं श्रियं भूमिं विजयं शश्वदश्नुते ॥ ५

अज्ञानादथ वा मोहाच्छाठ्याद्वानिच्छयापि वा ।
यः पूजयेच्छिवं पुष्पैर्जायते स महीपतिः ॥ ६

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
[6]आसीत्पूर्वं महीपाल इक्ष्वाकुकुलसम्भवः ॥ ७

भद्रसेन इति ख्यातस्सर्वशत्रुनिबर्हणः ।
समुद्र इव गाम्भीर्ये सौम्यत्वे शशिसन्निभः ॥ ८

---

1. क. ख. द्वारि
2. क. ख. कोटिं
3. क. ख. वित्त-
4. क. ख. सहस्रांशं न
5. क. ख. पुस्तकयोरयं श्लोको नोपलभ्यते
6. क. ख. आसीत्पुरा

शौर्ये यथा सहस्राक्षो रूपे कन्दर्पसन्निभः ।
तस्य [1]काञ्चीति विख्याता पुरी सर्वगुणान्विता ॥ ९

राजधान्यभवच्छ्रेष्ठा प्रोच्चप्राकारतोरणा ।
[2]पृथ्वीभङ्गविभागेन स्फाटिकेनोपशोभिता ॥ १०

[3]मणिप्रवालमुक्ताद्यै[4]र्विमानैरुपशोभिता ।
तथैवासीत्प्रिया तस्य [5]राज्ञः परमशोभना ॥ ११

[6]भार्या पद्मावती नाम रूपौदार्यगुणान्विता ।
स तया सहितो नित्यं समर्चयति शङ्करम् ॥ १२

[7]पुण्यैर्मनोहरैर्नैकैः पद्मैरपि विशेषतः ।
यथा पुष्पैः पूजयति महादेवं त्रियम्बकम् ॥ १३

तथास्य सम्पदां वृद्धिस्सहसैव प्रजायते ।
शत्रवो निधनं यान्ति तथैव समराङ्गणे ॥ १४

सूतः—

एकस्मिन् दिवसे सर्वे मुनयश्संशितव्रताः ।
समागम्य महीपालमिदमूचुस्सविस्मयाः ॥ १५

राजन् सर्वगुणाधार त्यक्त्वान्या[8]स्सकलाः क्रियाः ।
स्नानादिकाः किमित्येवं करोषि कुसुमाञ्जलिम् ॥ १६

पुष्पार्पणात्किं फलं स्यादेतद्वै [9]विस्तराद्वद ।

राजा—

रहस्यं परमञ्चैतद्यत्पृष्टोऽहं द्विजोत्तमाः ॥ १७

[10]युष्माकं कीर्तयिष्यामि तथाप्यखिलमेव हि ।
अहमासं [11]वणिग्जात्या पुरा वै [12]वैदिशे पुरे ॥ १८

1. क. ख. कान्तिरिति ख्याता
2. अ. विधिं
3. ख. पुस्तके इदमर्धं नास्ति
4. क. -र्वितानै-
5. क. ख. भार्या परमसंमता
6. क. ख. ख्याता
7. ख. पुष्पै-
8. क. स्सफलाः
9. क. ख. वद विस्तरात्
10. क. ख. युष्माभिः
11. क. ख. वणिग्जात्यां
12. क. चेदिशे ख. वेदिशे

निर्धनो बन्धुभिस्त्यक्तः सभार्योऽहं वनं गतः ।
[1]जीवितार्थं महाभागा मया पद्मानि तत्र हिं ॥ १९

आसादितानि दिव्यानि तानि विक्रेतुमुद्यतः ।
वल्मीकेशपुरं प्राप्तो भार्यया चानया [2]सह ॥ २०

विक्रेतुं तानि पद्मानि कमनीयानि वै द्विजाः ।
भ्रान्तं मया च सर्वेषु चत्वरेषु गृहेषु च ॥ २१

न कश्चित्प्रतिगृह्णाति तानि पद्मानि मानवः ।
मम भाग्यवशाज्जातो लोकः क्रयपराङ्मुखः ॥ २२

क्षुत्क्षामकण्ठे श्रान्ते तु मयि पद्माकरप्रियः ।
अस्ताचलमनुप्राप्तस्सन्ध्याकालस्ततोऽभवत् ॥ २३

ततो वैराग्यमापन्नस्सुप्तोऽहं भग्नमन्दिरे ।
तानि पद्मानि भूपृष्ठे निधाय सह भार्यया ॥ २४

अर्धरात्रे तु सम्प्राप्ते श्रुतो गीतध्वनिर्मया ।
[3]ततस्तु चिन्तितं चित्ते जागरोऽयमसंशयम् ॥ २५

तस्माद्गच्छामि चेत्कश्चित् पद्मान्येतानि मे नरः ।
मूल्येन प्रतिगृह्णाति भोजनं जायते ततः ॥ २६

एवं [4]विनिश्चितं कृत्वा पद्मान्यादाय सादरम् ।
सभार्यः प्रस्थितस्तत्र यत्र गीत[5]ध्वनिः श्रुतः ॥ २७

ततश्चायतने तस्मिन् प्राप्तोऽहं द्विजपुङ्गवैः ।
[6]अपश्यं देवदेवेशं महा[7]काले प्रपूजितम् ॥ २८

एके नृत्तं प्रकुर्वन्ति गीतमन्ये जपं परे ।
[8]अन्ये होमं द्विज[9]श्रेष्ठा धर्माख्या[10]नमथापरे ॥ २९

---

1. कः ख. जीवनार्थे
2. क. ख. युतः
3. अ. ततः स्तुतं तताश्चित्ते
4. क. ख. विनिश्चयं
5. क. ख. ध्वनिश्च सः
6. क. ख. अवश्यं
7. क. ख. कालं
8. क. ख. अन्यो
9. क. श्रेष्ठ
10. क. ख. नं तथापरे

ततः कश्चिन्मया पृष्टः क्रियते जागरोऽत्र किम् ।
क एते जागरासक्ता लोकाः कीर्तय मे द्रुतम् ॥ ३०

तेनोक्त[1]मेषु देवस्य आनन्देशस्य जागरः ।
क्रियते ब्राह्मणैर्भक्त्या उपवासपरायणैः ॥ ३१

स त्वं पद्मानि मे यच्छ मूल्यमादाय भद्रक ।
भोजनार्थमहं दद्मि कलधौत[2]पणत्रयम् ॥ ३२

[3]तन्नावधारितं चित्ते मया ब्राह्मणसत्तमाः ।
पूजयामि महादेवं पद्मै[4]रेत्र महेश्वरम् ॥ ३३

न मया [5]सुकृतं किञ्चिद[6]न्यदेहान्तरे कृतम् ।
नियतं तेन सम्भूता ह्येवम्भूता च दुर्गतिः ॥ ३४

परं क्षुत्क्षामकण्ठीयं भार्या मे प्रियवादिनी ।
[7]अन्नाभावान्न सन्देहः प्रातर्यास्यति संक्षयम् ॥ ३५

एवं चिन्तयमानस्य [8]मनसा दयिता ततः ।
प्रोवाच मधुरं वाक्यं विनयावनता स्थिता ॥ ३६

मा नाथ कुरु पद्मानां विक्रयं धनलोभतः ।
कुरुष्व च हितं वाक्यं यत्ते वक्ष्यामि साम्प्रतम् ॥ ३७

उपवासो बला[9]ज्जातः अन्नाभावादसंशयम् ।
[10]अकस्माज्जागरश्चापि भविष्यति बुभुक्षया ॥ ३८

अत्रावाभ्यां कृतं स्नानं दिवा सरसि शोभने ।
[11]धर्मः प्राप्तः श्रमार्ताभ्यां कृतं देवार्चनं [12]तदा ॥ ३९

---

1. क. ख. -मेष
2. क. ख. -पल-
3. क. ख. ततोऽव-
4. क. ख. -रेतैर्महे-
5. अ. नु
6. क. ख. -न्यदेहा-
7. अ. अन्नाभावादसद्देहं प्रातर्यातौ च संक्षयम्
8. क. ख. मम सा
9. अ. -ज्ञातः
10. क. ख. अस्माकं जा-
11. क. ख॰ धर्मार्ताभ्यां
12. क. ख. तथा

तस्मादेव महेशानं [1]पूजयानोऽधुना [2]हरम् ।
पद्मैरेतैः परं श्रेय आवयोर्येन जायते ॥ ४०

राजा—

उभाभ्यामथ [3]हृष्टाभ्यां [4]पूजितः परमेश्वरः ।
तैः पद्मैस्सत्त्वमास्थाय त्यक्त्वा [5]मूल्यं द्विजोत्तमाः ॥ ४१

[6]क्षुत्पीडया समायाता नैव निद्रा कथञ्चन ।
स्वल्पाप्यलङ्कारयुते स्थितयोर्हरमन्दिरे ॥ ४२

ततः प्रभातसमये प्रोद्गते रविमण्डले ।
[7]मृतोऽहं क्षुधयाविष्टः स्थाने तत्र द्विजोत्तमाः ॥ ४३

अथ सा दयि[8]ताप्येवं तदादाय कलेबरम् ।
हर्षेण महताविष्टा [9]प्रविष्टा हव्यवाहनम् ॥ ४४

तत्प्रभावादहं जातः काञ्चीनाथो महीपतिः ।
दशार्णाधिपतेः कन्या सापि जातिस्मरा सती ॥ ४५

[10]तत्र स्वयंवरं प्राप्ता मां विज्ञाय निजं पतिम् ।
मयापि [11] सैव विज्ञाय पूर्वपत्नी समाहृता ॥ ४६

एतस्मात्कारणात्पुष्प[12]पूजया फलमीदृशम् ।
तस्मादेव करोम्यत्र नित्यं पुष्पार्पणं शिवे ॥ ४७

यः [13]पद्ममेकं देवस्य समर्पयति मूर्धनि ।
सोऽश्वमेधफलं [14]लब्ध्वा प्रयाति ब्रह्मणः पदम् ॥ ४८

---

1. क. पूजयामो
2. क. वयम्
3. क. हृष्टा-
4. अ. -जीवितः
5. क. ख. लौल्यं
6. अ. इतस्सार्धः श्लोकः अ. पुस्तके नास्ति
7. अ. ततोऽहं मरणं प्राप्तः परेद्युरुपवासतः
8. कं. ख. ता मह्यं-
9. क. प्रतिष्ठा
10. क. ख. ततः
11. अ. नैव
12. क. ख. पूजायाः
13. क. ख. पुष्प-
14. क. क. भुङ्क्त्वा

तस्य तद्वचनं श्रुत्वा विप्रास्सर्वे मुदान्विताः ।
[1]शिवभक्तिं परां कृत्वा पुष्पैः पूजां वितेनिरे ॥ ४९

सूतः—

तस्माद्धि पुष्पपूजायाः फलं सर्वोत्तमोत्तमम् ।
श्रवणादपि सर्वेषां सद्यस्सर्वतमोऽपहम् ॥ ५०

आन्दोलिकादियानेषु [2]विमानेषु महत्सु च ।
कामिनीकुचभारेषु वर्तन्ते कुसुमप्रदाः ॥ ५१

यज्ञकोटिसहस्रेषु बहुदानेषु यत्फलम् ।
लिङ्गन्यस्तैकपुष्पस्य कोट्यंशेनापि [3]नोपमम् ॥ ५२

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे पुष्पार्चनफलकथनं
नाम सप्तविंशोऽध्यायः

---

1. क. ख. शिवे
2. क. ख. हर्म्येषु परमेश्वराः
3. क. ख. नो समम्

27

## ॥ अष्टाविंशोऽध्यायः ॥

### धूपमाहात्म्यकथनम्

सूतः—

प्रीणयेच्छङ्करं [1]प्रीत्या यो धूपेन समाहितः ।
समस्तपापनिर्मुक्तो गाणापत्यमवाप्नुयात् ॥ १

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यक्षराट् पूर्णभद्राख्यस्तस्यासीत्पिङ्गलस्सुतः ॥ २

जन्मप्रभृति देवेशं पूजयामास शङ्करम् ।
पूर्णभद्रस्सुतं दृष्ट्वा शङ्करार्चनतत्परम् ॥ ३

प्रदहन्निव नेत्राभ्यां प्रोवाचेदं वचस्तदा ।

पूर्णभद्रः—

[2]ब्राह्मणाभिहितं [3]तत्र नेदं [4]वृत्तं वदामि ते ॥ ४

विहितं [5]ब्राह्मणानां हि यक्षाणां नेदृशं शुभम् ।
त्यक्त्वा कर्म स्वकं कुर्वन् विप्राणां पुरुषाधमः ॥ ५

जन्तुर्नरकगामी स्यात् धनहानिमवाप्य च ।
तस्मान्नार्हसि यक्षाणां कुरु वृत्तं महामते ॥ ६

न चेत्पिङ्गल गच्छ त्वं यत्र कुत्रापि दुर्मते ।
श्रुत्वा पितु[6]स्तदा वाक्यं पिङ्गलः परमार्थवित् ॥ ७

गमिष्यामीति पितरं [7]त्यक्त्वा वाराणसीं ययौ ।
उद्दिश्य तत्र ब्रह्माणं तताप परमं तपः ॥ ८

---

1. क. ख. देवं
2. क. ब्रह्मणा विहित
   ख. ब्राह्मणाविहितं
3. क. ख. पुत्र
4. क. ख. युक्तं
5. क. ख. दुर्जनानां
6. क. ख. -स्तथा
7. क. ख. नत्वा

तपसा तस्य घोरेण प्रतुतोष पितामहः ।
वरं वरय भद्रं ते वरदोऽस्मीत्यभाषत ॥ ९

पिङ्गलोऽपि शिवे भक्तिं ययाचे कमलासनात् ।
तथैवास्तु तवेत्युक्त्वा ब्रह्मा तत्र तिरोदधे ॥ १०

पिङ्गलोऽपि महादेवं प्रतिष्ठाप्य यथाविधि ।
सम्पूजयन् ददौ धूपं [1]द्विजाः कृष्णागरूद्भवम् ॥ ११

मासार्धमासं विधिना मधुकर्पूरसंयुतम् ।
कृष्णागरूद्भवेनैव धूपेन परमेश्वरम् ॥ १२

[2]सोमस्सनन्दी संतुष्टो धूपेन स महेश्वरः ।
पिङ्गलोऽपि तथा दृष्ट्वा सोमं सगणमीश्वरम् ॥ १३

प्रणम्य शिरसा भूमौ तुष्टाव च कृताञ्जलिः ।
तस्य स्तोत्रेण सन्तुष्टो भगवान्नीललोहितः ॥ १४

गाणापत्यं ददौ तस्मै देवानामपि दुर्लभम् ।
गाणापत्यमवाप्तोऽसौ ययाचे वृषभध्वजम् ॥ १५

गाणापत्यं पितृभ्यां त्वं देहीति विहिताञ्जलिः ।
तद्वाचा शङ्करस्ताभ्यामविनाशिपदं ददौ ॥ १६

तस्माद्दत्त्वा महेशाय धूपं कृष्णागरूद्भवम् ।
गाणापत्यमवाप्नोति नात्र कार्या विचारणा ॥ १७

गोमूत्राद्गुग्गुलुर्जातः सुगन्धिः प्रियदर्शनः ।
आग्नेयस्सर्वदेवानां शिवस्य च विशेषतः ॥ १८

[3]भवं गुग्गुलुधूपेन साज्येन [4]प्रीणयेन्नरः ।
निर्मुक्तकल्मषस्सोऽयं मोदते शिवसन्निधौ ॥ १९

द्विसहस्रपलेनैव धूपयेत्परमेश्वरम् ।
यस्तु गुग्गुलुना तस्य ब्रह्महत्या व्यपोहति ॥ २०

---

1. अ. द्विजास्तमगरू-
2. अ. सोमस्सनन्दिनं तुष्टो ददौ दर्शनमीश्वरः
3. क. ख. शिवं
4. क. ख. प्रीणयेत यः

चन्दनं सर्वरोगघ्नं सर्वसिद्धिकरं परम् ।
सौगन्धिकस्तथा धूपस्सर्वकामार्थसाधकः ॥ २१

श्वेतागरूद्भवो धूपस्साक्षान्निर्वाणदायकः ।
सघृतं सर्जधूपञ्च लिङ्गमभ्यर्च्य यो [[1]दिशेत् ] ॥ २२

सप्तजन्मकृतं पापं भस्मीभवति तस्य हि ।
लाक्षाप्राण्यङ्गसम्भूतं धूपं दद्यात्सकृच्छिवे ॥ २३

चतुर्वेदिगृहे जन्म प्राप्नोति सततं सुखी ।
[2]अगरुं देवदारुञ्च सर्जं श्रीवास[3]कन्दुकम् ॥ २४

[4]श्रीफलं चाज्यसंमिश्रं दत्त्वाप्नोति परां श्रियम् ।
[5]एभिस्सौगन्धिकोपेतं षट्सहस्रगुणोत्तरम् ॥ २५

मांसीगुग्गुलुदेवदारुविजया तुल्या चतुर्भिर्घनं
[6]भागैर्द्वादशभि[7]श्चयं समुदितं कुष्ठं तदर्धं भवेत् ।
शैलेयं त्रिगुणं द्विभागमुदितं लाक्षा[8]रसं पञ्चभिः
सर्वं संमिलितं वदन्ति विबुधा धूपं दशाङ्गाह्वयम् ॥ २६

सूतः—

तस्मात्सर्वोपचारेषु धूप एव प्रशस्यते ।
[9]तं दत्त्वा परमेशाय शिवसायुज्यमाप्नुयात् ॥ २७

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे धूपमाहात्म्यकथनं नाम
अष्टाविंशोऽध्यायः

---

1. अ. क. ख. ददेत्
2. क. सितागरुं देवदारुं
3. क. ख. कुङ्कुमम्
4. अ. पुस्तके इदमर्धं न दृश्यते
5. क. ख. एभ्यः
6. क. भङ्गैर्द्वा-
7. क. ख. -गुडं
8. क. ख. नखं
9. क. ख. पुस्तकयोर्नेदमर्धं दृश्यते

## ॥ एकोनत्रिंशोऽध्यायः ॥

### दीपमाहात्म्यकथनम्

सूतः—

यस्तु देवालये विष्णोः कुरुते दीपमालिकाम् ।
वक्ष्यामि तत्फलं सर्वं शृणुध्वं [1]मुनिपुङ्गवाः ॥ १

गरुडे[2]नेरितं सर्वं मान्धा[3]तृचरितं प्रति ।
सपत्नीभ्यो ललितया प्रोक्तमित्येव सादरम् ॥ २

गरुडः—

प्रज्ञामायुः श्रियं धर्मं धैर्यं [4]शान्तिं तथा यशः ।
जातिस्मरत्वं [5]चारुत्वं दीपदस्य भवन्ति [6]वै ॥ ३

चक्रवर्ती महावीर्यो मान्धाता युवनाश्वजः ।
[7]अपालयन्महाभागः सप्तद्वीपां वसुन्धराम् ॥ ४

वदन्ति हि पुराणेषु मान्धातु[8]र्दिव्यमुत्तमम् ।
सौभाग्यं धर्मशीलत्वं दयालुत्वं सुशीलताम् ॥ ५

पुरन्दरसहायत्वे स्वर्गं गत्वा सहा[9]मरैः ।
अनाहारो विनिद्रश्च युयुधे दिव्यवत्सरम् ॥ ६

जित्वा च राक्षसान् सर्वान् स्तूयमानो मरुद्गणैः ।
इन्द्रेण [10]पूजितस्सम्यग्विवेश स्वपुरं ततः ॥ ७

सपर्वतवनामुर्वीं मान्धाता धर्मतत्परः ।
शशास धर्ममार्गेण आलोकालोकपर्वतात् ॥ ८

---

1. ख. ऋषिसत्तमाः
2. ख. -नोदितं पूर्वं
3. क. ख. -त्राचरितं
4. ख. श्रद्धां
5. अ. चारत्वं
6. ख. हि
7. ख. आ-
8. क. ख. -वीर्य-
9. क. ख. -सुरैः
10. अ. -पूजितास्सर्वे

[1]नान्यद्वक्ता न चाशक्तो न चादानी न [2]कर्कशः ।
तस्यासीत्पुरुषो लोके सम्यग्धर्मानु[3]वर्तिनः ॥ ९

मान्धाता स्वश्रियं दृष्ट्वा सुवीर्यं [4]सुकुलं तथा ।
बभूव विस्मयाविष्टो महाधर्मपरायणः ॥ १०

चिन्तयामास नृपतिस्समृद्ध्या विस्मितस्तदा ।
कथं स्यात्सम्पदेषा मे पुनरप्यन्यजन्मनि ॥ ११

एवं स बहुशो राजा मान्धाता सुमहायशाः ।
चिन्तयन्नपि तन्मूलं स नासीन्निश्च[5]यं गतः ॥ १२

अथागतं महाराजो वसिष्ठं तु पुरोहितम् ।
ततः पप्रच्छ तत्सर्वमर्घ्यं दत्त्वा यथाविधि ॥ १३

यदि ब्रह्मन् मुने तुभ्यमनुग्राह्योऽस्मि सत्तम ।
अवधार्य तत्सर्वं मद्वाक्यं तत्त्वतो वद ॥ १४

ज्ञानिनं गुरुमासाद्य [6]त्वामहं यदि मूढधीः ।
मत्पूर्वार्जितपापानां संशयो न हि विद्यते ॥ १५

अर्कः स्वकर[7]जातेन दिवा हन्ति बहिस्तमः ।
सन्तस्तु दर्शनादेव बहिरन्तर्दिवानिशम् ॥ १६

सन्तस्तु ज्ञानदानेन सर्वेषामुपकारिणः ।
रविरालोकदानेन सर्वेषामुपकारवान् ॥ १७

त्वं तु मन्त्र[8]कृतां श्रेष्ठो ज्ञानी ज्ञानप्रदायकः ।
अतस्त्वां प्रष्टुकामोऽहं तन्ममाचक्ष्व विस्तरात् ॥ १८

---

1. क. ख. नान्यायकृन्न
2. क. कीकटः
   ख. कीटकः
3. क. ख. -सारिणः
4. क, अ. स्वबलं ततः
5. क. ख. -यान्वितः
6. क. अ. मत्वाहं
7. क. ख. जालेन
8, ख. -विदां

वसिष्ठः—

यस्ते मनसि सन्देहस्तं पृच्छाद्य महामते ।
[1]वदिष्यामि यथान्यायं यत्ते [2]संशयितं हृदि ॥ १९

[3]संपृष्टो ब्राह्मणो येन विच्छिन्द्याद्धर्मसंशयम् ।
हितं वोपदिशेद्धर्म[4]मधर्माद्वा निवारयेत् ॥ २०

गरुडः—

ततो विवक्षुं भूपालं प्रणम्यास्य प्रियावदत् ।
न स्त्रीणां पृथिवीपाल वक्तुमीदृग्गिहेष्यते ॥ २१

तथापि त्वत्प्रसादेन वक्ष्ये किञ्चिदभीप्सितम् ।
स प्रसादं यदि भवान् करोति मयि भूपते ॥ २२

तन्मदीयमिमं प्रष्टुं सन्देहं पुरतोऽर्हसि ।

मान्धाता—

ब्रूहि [5]यत्ते मतं भद्रे प्रष्टव्यं मुनिसत्तमात् ॥ २३

भूयोऽहमात्मसन्देहं शृणोमि द्विजसत्तमात् ।

पत्नी—

श्रूयन्ते पृथिवी[6]पाला भूभुजो ये चिरन्तनाः ॥ २४

न तेषामीदृशी सम्पद्या स्थिता त्वयि भूपते ।
येन कर्मविपाकेन त्वमशेषक्षितीश्वरः ॥ २५

त्वमीदृक्सम्पदां धाम तद्वदन्तु महर्षयः ।
अहं तु भवतो भार्या सर्वभोगसमन्विता ॥ २६

मया च यत्कृतं कर्म तद्विज्ञाने कुतूहलम् ।
स तथोक्तस्तया पत्न्या राजा विस्मितमानसः ॥ २७

---

1. क. ख. गदिष्यामि
2. ख. संशयकं
3. अ. संपृष्टो येन विच्छिन्द्यां हृदि ते धर्मसंशयम्
4. क. ख. महिताद्वा
5. अ. यत्नेन तं
6. ख. -पाल

यथावदेतदखिलं कथयेत्यब्रवीन्मुनिम् ।

गरुडः—

स ज्ञात्वा चेष्टितं ताभ्यां ज्ञानदृष्ट्याब्रवीन्नृपम् ॥ २८

शृणु भूपाखिलं वृत्तं येनेदं कर्मणार्जितम् ।
तव कान्त्यादिकं भूप [राजन्] अनया च [1]पुरस्कृतम् ॥ २९

[2]पुरा हि शूद्रजातीयः परहिंसापरायणः ।
नास्तिको निर्दयः क्रूरो निष्ठुरस्सर्वजन्तुषु ॥ ३०

इयञ्च भवतो भार्या तव पूर्वं पतिव्रता ।
त्वद्वाक्या[3]देव सर्वेषु सत्कर्मसु सदोद्यता ॥ ३१

नैष्ठुर्या[4]दसतो यस्य त्याजितस्य [5]स्वबान्धवैः ।
एकाकिनस्तव धनं पितृदत्तं ननाश [6]च ॥ ३२

तस्मिन्गते कृषिपरस्त्वमासीः पृथिवीपते ।
सापि कर्मविपाकेन विफलत्वमुपागता ॥ ३३

ततो निस्स्वः परिक्षीणः परेषां भृत्यतां गतः ।
[7]तत्रापि या न तत्याज त्यज्यमानापि पार्थिव ॥ ३४

तत्रापि विफलं प्राप्तो जीवनोपायवर्जितः ।
चौर्यबुद्ध्या वनं गत्वा सशस्त्रः स्थितवांश्चिरम् ॥ ३५

त्वया तत्रापि [8]किमपि न किञ्चित्साधितं धनम् ।
ततो दुःखाभिसन्तप्त[9]स्सभार्यो निर्जने वने ॥ ३६

तत्रापि सेयं सुभगा तव दुःखापहारिणी ।
न त्यजन्ती त्यज्यमाना जगाद मधुरं वचः ॥ ३७

---

1. क. ख. पुरा कृतम्
2. क. ख. त्वं पुरा
3. क. ख. -दनु
4. क. ख. -दसहायस्य
5. क. ख. च बा-
6. क. ख. ह
7. क. ख. तत्रापीयं
8. क. ख. विपिने
9. क. ख. -स्त्वं भवेर्नि-

मन्नाथ मा कृथा दुःखं तव स्वस्ति भविष्यति ।
उपायं तव वक्ष्यामि जीवनोपायदायकम् ॥ ३८

यस्यानुकूलो गोविन्दस्तस्य स्यादक्षयं धनम् ।
विमुखो यस्य गोविन्दस्तस्य स्याद्दुःखमक्षयम् ॥ ३९

[1]अनुकूले यदा दैवे सर्वं साधयते नरः ।
प्रतिकूले यदा दैवे साधितं च विनश्यति ॥ ४०

दैवानुकूलयुक्तानां किं धनैर्बहुविस्तरैः ।
येन यद्यत् कृतं कर्म सुकृतं दुष्कृतं च वा ॥ ४१

यस्मिन् कस्मिन् स्थितश्चापि जन्तुस्तत्फलमश्नुते ।
इति श्रुतं मया पूर्वं पण्डितैर्भावितात्मभिः ॥ ४२

दृष्ट्वा त्वां दीनवदनं तदिदं स्मृतिमागतम् ।
पूर्वकर्मार्जितफलं दैवमेव [2]ददाति यत् ॥ ४३

तामेव देवतां भर्तः प्रार्थया[3]वः सुखाप्तये ।
एहि भद्र महाभाग मद्वाक्यं यदि रोचते ॥ ४४

देवताप्रार्थनादेव सर्वैश्वर्यं प्रवर्धते ।
इत्याश्वस्यातिदुःखार्तं त्वामियं भर्तृवत्सला ॥ ४५

त्वयैव सहिता सद्यः प्रययौ देवमन्दिरम् ।
[4]अनया च समं साध्व्या विष्णोरायतने त्वयां ॥ ४६

कृतं शुश्रूषणं वीर परिव्राड्ब्रह्मचारिणाम् ।
निःस्पृहः सर्वकार्येषु तन्मय[5]स्त्वं तदर्पणः ॥ ४७

शुश्रूषां कृतवान्नित्यं विष्णोरायतने भवान् ।
तद्वृत्तिलिप्सुशुश्रूषां [6]जनयन् सर्वहेतुकाम् ॥ ४८

---

1. अ. पुस्तके 40, 41 श्लोकाविमौ न स्तः
2. अ. वदन्ति
3. अ. व
4. अ. अनयाचमनं
5. क. ख. -स्त्वमनुत्सुकः
6. क. ख. जनरञ्जनहेतुकाम्

[1]सर्वेषाञ्च कृता विष्णोर्योगिनाञ्च नृपोत्तम ।
वासुदेवालये नित्यं कृतं [2]संमार्जनं त्वया ॥ ४९

तथैवाभ्युक्षणञ्चैव नित्यञ्चैवानुलेपनम् ।
पत्न्यानया च भूपाल तव चित्तानुवृत्तया ॥ ५०

अहन्यहनि तत्कर्म चरितं वै त्वया सह ।
तत्रैव युवयोः कालात्पापहानिरजायत ॥ ५१

ततो गोविन्द[3]शुश्रूषा ह्यधिकौन्नत्यमागता ।
इदं कार्यमिदं कार्यमहन्यहनि शार्ङ्गिणः ॥ ५२

इति चिन्ता समजनि तव भार्यासहायिनः ।
त्वयि शुश्रूषणपरे सपत्नीके महेशितुः ॥ ५३

आगतः पुरुजिन्नाम सौवीराधिपतिर्नृपः ।
तं देवतानमस्कारं कर्तुं भूपं समागतम् ॥ ५४

महत्या सेनया युक्तं सर्वाभरणभूषितम् ।
सर्वसम्पदुपे[4]तञ्च स्त्रीसहस्रेण संयुतम् ॥ ५५

स्तूयमानं भटैश्शश्वत् स्रक्चन्दनविराजितम् ।
एवंविधं पुरुजितं त्वया दृष्ट्वा स्पृहा कृता ॥ ५६

गोविन्दपूजावेलायामनया च महीश्वर ।
सर्वकामप्रदं कर्म कृतं स्याज्जा[5]ग्रतां प्रभो ॥ ५७

सम्प्राप्तमखिलं राज्यमैश्वर्यं निरुपद्रवम् ।
तव चास्याश्च या कान्तिरतीव सुमनोहरा ॥ ५८

लब्धा तच्छृणु राजेन्द्र ज्ञातं योगानु[6]भावतः ।
तस्मिन् देवगृहे राजन् निशीथे तैलवर्जितः ॥ ५९

---

1. क. ख. सहर्षं कृतवान्
2. क. ख. संपूजनं
3. क. ख. शुश्रूषामकरोन्नित्य- मागतः
4. क. ख, -तं तं
5. अ. -ग्रता
6. अ. -भारतः

शशाम च दशाहीनो दीपस्सद्यो महामते ।
निजभोजनतैलेन [1]सत्वरं ज्वलितस्तया ॥ ६०

अनया चोत्तरीया[2]न्तजीर्णवस्त्युपबृंहितः ।
जज्वाल पूर्ववद्दीपः पुरुषोत्तमसन्निधौ ॥ ६१

युवयोरुत्तमा कान्तिस्तव जाता नृपोत्तम ।
तेनेयं धर्म[3]बुद्धिश्च [4]तेनेदं चोर्जितं यशः ॥ ६२

तेनायं विक्रमो राजन् तेनेदमखिलं तव ।
आराध्य जगतामीशं सर्वधातारमच्युतम् ॥ ६३

यं यं काममभिध्यायेत्तत्तदाप्नोति मानवः ।
आराधिते जगन्नाथे सर्वदेवेश्वरेश्वरे ॥ ६४

अनासाद्यं महीपाल किमस्ति जगतीतले ।
[5]अनर्थिना त्वया पूर्वं कृतं शुश्रूषणं नृप ॥ ६५

तेनेदमखिलं प्राप्तं माहात्म्यमनुपप्लवम् ।
किं पुनर्यो नरो भक्त्या [6]विष्णोः शुश्रूषणे रतः ॥ ६६

करोति सततं पूजां निष्कामोऽनन्यमानसः ।
बलं बुद्धिं यशो धैर्यं परमैश्वर्यसम्पदम् ॥ ६७

अवशेनापि चाप्नोति किं पुनस्सम्यगर्चनात् ।
तस्माद्राजंस्त्वमद्यापि सम्यगाराधयाच्युतम् ॥ ६८

जन्मजन्मान्तरेऽप्येवं [7]परमामृद्धिमाप्स्यसि ।
पूजाकर्मसमर्थानां नराणां स्मृतिसंस्तवैः ॥ ६९

तोषितोऽभिमतान्कामान्ददाति परमेश्वरः ।
वसुभिर्धनरत्नाद्यैर्न पुष्पैर्नानुलेपनैः ॥ ७०

---

1. क. ख. पुनः प्रज्वलितस्त्वया
2. अ. -न्तात् जरयत्युपबृंहितः
   ख. -न्तर्जीर्ण-
3. अ. -पत्नी च
4. अ. तेनायं त्वार्जितस्त्वया
5. अ. अन्नार्थिना
6. क. ख. विष्णुशु-
7. क. ख. परामृद्धिमवाप्स्यसि

तोषमायाति गोविन्दः [1]सद्भावैरपि संस्मृतः ।
[2]तस्मात्त्वमनया देव्या सहात्यन्तविनीतया ॥
केशवाराधने यत्नं कुरुष्व सुसमाहितः ॥ ७१

गरुडः—

एवं वसिष्ठेन पुरा मान्धाता परिबोधितः ।
विशेषाद्दीपदानेन तोषयामास केशवम् ॥ ७२

सूतः—

अन्यच्च वः प्रवक्ष्यामि श्रृणुध्वमृषिसत्तमाः ।
पुरा ललितया प्रोक्तं [3]सुतायाः खलु भूपतेः ॥ ७३

एवं विदर्भतनया काशिदेशपतेः प्रिया ।
दीपदानस्य माहात्म्यं सपत्नीनामुवाच [4]ह ॥ ७४

भो भो सपत्न्यः श्रृणुत कौतुकं पापनाशनम् ।
यन्मया विष्णुभवने क्रियते दीपमालिका ॥ ७५

ललिता—

पुरा [5]सौवीरराजस्य मैत्रेयोऽभूत् पुरोहितः ।
तेन चायतनं विष्णोः कारितं [6]गौतमीतटे ॥ ७६

अहन्यहनि शुश्रूषां पुष्पधूपादिभिस्सह ।
दीपदानादिभिश्चैव चक्रे तत्र स वै द्विजः ॥ ७७

कार्तिके दीपदो भक्त्या [7]प्रयुक्तस्तेन चैकदा ।
आसीन्निर्वाणभूयिष्ठो देवस्य पुरतो निशि ॥ ७८

देवस्यायतने चाहमभूवं तत्र मूषिका ।
प्रदीपवर्तिहरणे कृतबुद्धिर्वरानना: ॥ ७९

गृहीता च मया वर्तिर्दीपसंयोगमागता ।
जज्वाल पूर्ववत्सा च देवस्य पुरतस्तदा ॥ ८०

---

1. अ. सच्छिवैरपि केशवः
2. अ. पुस्तके 71, 72 श्लोकौ न स्तः
3. क. ख. सुतायाः काशिभूपतेः
4. क. ख. हि
5. अ. सौन्दर्य-
6. क़. ख. देविका-
7. क. ख. प्रदत्त-

तेनेयमीदृशी कान्तिः संप्राप्ता मे वरानना ।
तथा जातिस्मरत्वञ्च तस्माद्दीपं ददाम्यहम् ॥ ८१

इत्युक्तास्तु सपत्न्यस्तां परिष्वज्येदमब्रुवन् ।
त्वत्प्रसादाद्वयं सर्वाः कृतार्था नात्र संशयः ॥ ८२

अतो ब्रह्ममुने त्वं च विष्णो[1]रायतने सदा ।
दीपं देहि सदा भक्त्या कार्तिके तु विशेषतः ॥ ८३

घृताभावे तु तैलं [2]वा तैलाभावे तथा दशाम् ।
तयोरभावे तत्पात्रं यो दद्यात्सोऽपि दीपदः ॥ ८४

यस्तु विष्णुगृहे दत्तं दीपं दृष्ट्वानुमोदते ।
सोऽपि तत्फलमाप्नोति किं पुनर्दीपदायिनः ॥ ८५

कारयन्ति परैर्दीपानृजुत्वेन बलेन वा ।
अथ वा बुद्धिदानेन तेऽपि दीपप्रदायिनः ॥ ८६

सूत ;—

कार्तवीर्यार्जुनोऽप्येवं भद्रदीपप्र[3]भावतः ।
पृथिवीं पालयन् सर्वां प्रपेदे चक्रवर्तिताम् ॥ ८७

नलनाभाग[4]नहुषाः पुरुकुत्सादयः पुरा ।
शम्भोर्दीपप्रदानेन सर्वे तेजस्विनोऽभवन् ॥ ८८

तस्मात्सर्वप्रयत्नेन दीपदानं प्रशस्यते ।
[5]दीपदानेन भगवान् ददाति श्रेय उत्तमम् ॥ ८९

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे दीपमाहात्म्य-
कथनं नाम एकोनत्रिंशोऽध्यायः

---

1. क. ख. -राराधने
2. अ. स्यात्तै-
3. क. ख. -दानतः
4. ख. -नहुषपुरु-
5. क. ख. पुस्तकयोरिदमर्धं नास्ति

## ॥ त्रिंशोऽध्यायः ॥

### नैवेद्यदानप्रशंसा

सूतः—

नैवेद्यं षड्रसोपेतं यो देवाय निवेदयेत् ।
उपचारैस्सुसम्पूज्य तत्फलं श्रृणुत द्विजाः ॥ १

सनकाय पुरा प्रोक्तं गरुडेन महात्मना ।

गरुडः—

भूयः श्रृणु[1]ष्व विप्रेन्द्र हरिशुश्रूषणं परम् ॥ २

अल्पायासेन मर्त्यानां बहुपुण्य[2]फलप्रदम् ।
ब्राह्मणक्षत्रियविशां शूद्राणाञ्चैव योषिताम् ॥ ३

पूजितो भक्तिभावेन तोषमायाति केशवः ।
अनाराध्य हृषीकेशं लोकानुग्रहकारिणम् ॥ ४

निर्व्यलीकेन चित्तेन कः प्रयाति परां गतिम् ।
विषयग्राहि वै यस्य [3]न मनः केशवार्पणम् ॥ ५

स कथं पापपङ्कानि [4]निरस्यति च [5]दुर्गतिम् ।
यदि संसारदुःखार्तः सद्गतिं गन्तुमिच्छति ॥ ६

निवेदयेच्च नैवेद्यं देवाय परमात्मने ।
श्रूयतां सिंहनादोऽयं भुजमुद्धृत्य वक्ष्यते ॥ ७

निवेदयेच्च नैवेद्यं [6]विष्णवे तुष्टिहेतवे ।
[7]पक्वमृष्टान्ननैवेद्यैर्यथाविभवमच्युतः ॥ ८

---

1. क. ख. ·त विप्रेन्द्राः
2. क. ख. ·प्रदायकम्
3. अ. समस्थैः
4. अ. समायास्यति
5. अ. सद्गतिम्
6. अ. यथाविभवमुच्यते
7. अ. पुस्तके इदमर्धं न दृश्यते

पूजितस्तुष्टिमतुलां भक्त्या यात्येकचेतसा ।
भक्ष्यभोज्यान्नपानानि श्रद्धया यो निवेदयेत् ॥ ९

सकृत्तेनार्चितो विष्णुर्दशजन्मसु भक्तितः ।
घृतोदनं निवे[1]द्यं स्याद्विष्णोरमिततेजसः ॥ १०

स तु स्वर्गं समासाद्य कामधेनोः पतिर्भवेत् ।
यः क्षीरघृतसंयुक्तं परमान्नं निवेदयेत् ॥ ११

स तु क्षीराब्धिनाथः स्यान्महाविष्णोः प्रसादतः ।
दधिभक्तं तु यो दद्याद्वामनाय महात्मने ॥ १२

इहान्नं महदाप्नोति परत्र ब्रह्मणः पदम् ।
वैशाखे पौर्णमास्याञ्च श्रवणद्वादशीव्रते ॥ १३

दध्यन्नं हेहयो दत्त्वा तच्छृणुष्व यदाप्तवान् ।
उत्पत्तौ कार्तवीर्यस्य हेहयस्य महात्मनः ॥ १४

कृतवीर्यो महीपालः प्रादान्नैवेद्यमच्युते ।
तस्य शीलधरा नाम बभूव वरवर्णिनी ॥ १५

महिषी गुणसम्पन्ना सुशीलालङ्कृता सती ।
सा स्वपुत्रा महाभागा मैत्रेयीं [2]परिपृच्छति ॥ १६

गुणवत्पुत्रलाभाय कृतासनपरिग्रहाम् ।

शीलधरा—

मैत्रेयि भद्रे [3]धर्मज्ञे ममोपदिश [4]सुव्रतम् ॥ १७

येनाभिज्ञानिनं पुत्रं प्राप्स्याम्यैश्वर्यसंयुतम ।
सप्तद्वीपाधिपं वीरं गुणिनं वीतमत्सरम् ॥ १८

[5]लोकानुग्रहकर्तारं सर्वज्ञं धर्मतत्परम् ।
एतद्वद महाभागे दुःखिताया ममानघे ॥ १९

---

1. क. ख. -द्यास्य वि-
2. ख. पर्यपृच्छत
3. कं. ख. ब्रह्मज्ञे
4. अ. नु व्र-
5. अ. पुस्तके इदमर्धं नास्ति

अपुत्रता बाधते मां स्थितायामपि सम्पदि ।
दानायोग्याः क्रियायोग्या ह्यपुत्रा लोकवर्जिताः ॥ २०

तस्मादपुत्रता दुःखदायिनी वरवर्णिनि ।
अपुत्रता [1]महद्दुःखमतिदुःखं कुपुत्रता ॥ २१

कुपुत्रस्सर्वदुःखानां हेतुभूतो विशेषतः ।
धन्यास्ते ये [2]सुतं प्राप्तास्सर्वदुःखविवर्जिताः ॥ २२

शक्तं प्रशान्तं बलिनं परां निर्वृतिमागतम् ।
स्वकर्मनिरतं नित्यं देवद्विजपरायणम् ॥ २३

शास्त्रज्ञं [3]सर्वतत्त्वज्ञं दीनानाथ[4]महाश्रयम् ।
विनिर्जितारिं सर्वेषां मानसानन्ददायकम् ॥ २४

मित्रस्वजनसं[5]मानलब्धनिर्वाणमुत्तमम् ।
यः प्राप्नोति सुतं तस्मान्नैव धन्यतरो भुवि ॥ २५

[6]एतदिच्छाम्यहं श्रोतुं त्वत्तः सर्वार्थकोविद ।
येनैतल्लक्षणं पुत्रं संप्राप्स्याम्यविलम्बितम् ॥ २६

एवं पृष्टा तु मैत्रेयी प्रत्युवाच वराङ्गना ।
प्रत्याख्यातं पुरा स्मृत्वा याज्ञवल्क्यमहर्षिणा ॥ २७

[7]सत्यमेतत् त्वया प्रोक्तं राजपुत्रि तलोदरि ।
वक्ष्यामि यत्त्वया पृष्टं तच्छृणुष्व समाहिता ॥ २८

यो [8]हि देवो जगन्नाथः सर्वभूतात्मकोऽव्ययः ।
अदितेर्देवमातुर्यो विष्णुः पुत्रत्वमागतः ॥ २९

बलिर्विरोचनसुतो राक्ष[9]सोऽनन्तविक्रमः ।
आक्रम्य पृथिवीं सर्वां शशास त्रिदिवं च सः ॥ ३०

---

1. क. ख. महादुःख-
2. क. ख. सुखं
3. क. ख. धर्म-
4. क. ख. जना-
5. क. -मानं ल-
6. अ. पुस्तके 26-27-तमौ श्लोकौ न स्तः
7. अ. एतमिच्छामि सत्प्रोक्तं
8. क. ख. देवो जगतां नाथः
9. क. ख. सो दण्ड-

जग्राह हव्यं कव्यञ्च स्वयमेव [1]च राक्षसः ।
निर्जितास्तेन शक्राद्या [2]आज्ञातत्वमुपाययुः ॥ ३१

ततो निर्वेदमापन्ना तेषां मातादितिर्भुवि ।
वृथापुत्राहमस्मीति निर्वेदात्प्रणता हरिम् ॥ ३२

अदितिर्देवमाता सा वाग्यता वायुभोजना ।
तपश्चचार [3]वर्षाणां सहस्रं वरवर्णिनि ॥ ३३

[4]अस्तावीच्च जगन्नाथं नारायणमनामयम् ।
नमो नारायणायेति [5]सदा कल्याणदायिने ॥ ३४

नमः स्मृतार्तिनाशाय भक्तानामिष्टदायिने ।
नमोऽनन्ताय देवाय गोविन्दाय नमो नमः ॥ ३५

एवं [6]स्तुतो हि भगवान् वासुदेव उवाच ताम् ।
अदृश्यः सर्वभूतानां तस्यास्सन्दर्शने स्थितः ॥ ३६

श्रीभगवान्—

अदिते मङ्गलं तेऽस्तु त्यज दुःखं मनोगतम् ।
यद्यदिच्छसि तत्सर्वं मत्प्रसादाद्भविष्यति ॥ ३७

[7]मद्दर्शनं हि विफलं न कदाचिद्भविष्यति ।

अदितिः—

प्रसन्नो यदि देवेश भक्तायै भक्तवत्सल ॥ ३८

त्रैलोक्याधिपतिः पुत्रः सदास्तु मम वासवः ।
हृतं राज्यं हृतश्चास्य यज्ञभागो महासुरैः ॥ ३९

त्वयि प्रसन्ने शक्रोऽसौ सर्वं प्राप्नोति तद्धरे ।

विष्णुः—

[8]कृतः प्रसादो हि मया तव देवि यथेप्सितम्॥ ४०

---

1. क. ख. स
2. क. ख. अज्ञातत्व-
3. क. वर्षाणि
4. क. ख. अस्मार्षीच्च
5. क. ख. सर्वकल्याण-
6. क. ख. स्तुतोऽथ
7. अ. पुस्तके इदमर्धं नास्ति
8. अ. पुत्रः

स्वांशेन देवि ते गर्भः सम्भविष्यति काश्यपात् ।
निहनिष्यामि च बलादसुरान् बलगर्वितान् ॥ ४१

अदितिः—

प्रसीद देवदेवेश शङ्खचक्रगदाधर ।
नाहं त्वामुदरे वोढुं [1]शक्नोमि करुणाकर ॥ ४२

यस्मिन्नधिष्ठितं विश्वं यो विश्वमखिलं यतः ।
तमहं नोदरेण त्वां वोढुं शक्ष्यामि दुर्धरम् ॥ ४३

विष्णुः—

सत्यमात्थ महाभागे मयि सर्वमिदं जगत् ।
प्रतिष्ठितं मां ते शक्तिर्नास्ति वोढुं वरानने ॥ ४४

[2][गङ्गादि]पुण्यतीर्थेषु त्वया स्नानं विधीयताम् ।
गर्भग्लानिर्न ते [3]खेदात् गर्भस्थे भविता मयि ॥ ४५

दाक्षायणि प्रसन्नोऽहं तव दुःखं परित्यज ।
इदं कुरु महाभागे तव स्वस्ति भविष्यति ॥ ४६

मम तुष्टिकरं नित्यं सर्वकामफलप्रदम् ।
वैशाखे पौर्णमास्यां च श्रवणद्वादशीदिने ॥ ४७

अन्यासु पुण्यतिथिषु मम पूजा विधीयताम् ।
घृतान्नं परमान्नञ्च दध्यन्नं द्वादशीदिने ॥ ४८

दशम्यां पौर्णमास्याञ्च पञ्चम्याञ्च [4]निवेदय ।
निवेदिते मासमेकं त्वया दक्षवरात्मजे ॥ ४९

[5]भविष्यामि सुतोऽहं ते महत्सुखसम्पदः ।
इत्युक्त्वा दक्षतनयां तत्रैवान्तरधीयत ॥ ५०

अदितिस्त्वल्पकालेन चेष्टं गर्भं दधार [6]ह ।
अदितेर्गर्भसम्भूतो वामनो जगतां पतिः ॥ ५१

---

1. क. ख. शक्ष्यामि
2. क. ख. पुस्तकयोरिदमर्धं नास्ति
3. क. ख. भूयात्
4. अ. निवेदयेत्
5. क. ख. भविष्यन्ति सुताश्चान्ते
6. क. ख. सा

अशेषऋषिसंयुक्तो बलेर्यज्ञं समाययौ ।
ततः स्तुतो ऋषिगणैर्ययाचे दीक्षितं बलिम् ॥ ५२

पदत्रयं तस्य ददौ तदा वैरोचनो हरेः ।
सुमहद्रूपमास्थाय सप्तद्वीपां वसुन्धराम् ॥ ५३

आक्रम्य [1]पादेनैकेन चैकेन दिवमाक्रमत् ।
गन्धर्वाप्सरसो यक्षा विश्वेदेवा मरुद्गणाः ॥ ५४

ब्रह्मादयश्चन्द्रसूर्यौ तथा नक्षत्रमण्डलम् ।
एते चान्ये च देवस्य जानुदेशे व्यवस्थिताः ॥ ५५

एतत्स्वरूपमास्थाय गोविन्दो [2]जितवान् बलिम् ।
दत्त्वा बलेश्च पातालं भगवान् भूतभावनः ॥ ५६

पुरन्दराय त्रैलोक्यं दत्त्वा चान्तर्दधे हरिः ।
एवं निवेद्य दध्यन्नं क्षीरान्नं च घृतोदनम् ॥ ५७

[3]अदितिः परमां तुष्टिं जगामाक्षयसम्पदम् ।
एवं त्वमपि कल्याणि [4]सत्यशील[5]धरेऽच्युतम् ॥ ५८

उप[6]चारैर्बहुविधैस्सम्यगर्चय सुव्रते ।
तस्मिंस्तुष्टे जगद्धाम्नि त्वया सम्प्रार्थितः सुतः ॥ ५९

समस्तगुणसंयुक्तो लभ्यते नात्र संशयः ।
एतच्छ्रुत्वा शीलधरा मैत्रीर्यी प्रणिपत्य च ॥ ६०

तदाप्रभृत्येव हरिं पूजयामास भक्तितः ।
पुत्रार्थिन्यास्ततस्तस्यास्सन्तुष्टो भगवान् हरिः ॥ ६१

कृतवीर्येण वै [7]तस्यास्सञ्जातो हरिरेव सः ।
तस्य वै जातमात्रस्य प्रववुर्मरुतस्सुखाः ॥ ६२

---

1. क. ख. पादयुग्मेन
2. अ. गतवान्
3. क. ख. अदितिश्च परां तुष्टिं
4. अ. गति-
5. क, ख. धराच्युतम्
6. क. अ. हारै-
7. ख. तस्यां स-

विरजस्कमभू[1]द्व्योम मुदं प्रापाखिलं जगत् ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात ह ॥ ६३

प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ।
धर्मे मनस्समस्तस्य लोकस्य च तदाभवत् ॥ ६४

पिता तस्यार्जुन इति नामधेयं चकार च ।
कृतवीर्यसुतत्वाच्च कार्तवीर्यो बभूव [1]च ॥ ६५

तेनैव नाम्ना जगति प्रसिद्धिं समुपागमत् ।
तेनापि पूजितो विष्णुः कार्तवीर्येण भूभृताम् ॥ ६६

तथैव तपसा तुष्टो दत्तात्रेयस्वरूपवान् ।
तस्यैव कार्तवीर्यस्य ददौ च त्रिविधं वरम् ॥ ६७

तपसा श्रद्धया विष्णुः पूजया परितोषितः ।
कार्तवीर्यस्य यन्नाम प्रातरुत्थाय यः पठेत् ॥ ६८

अनष्टद्रव्यता तस्य जायते नात्र संशयः ।

सूतः—

इत्येवं गरुडस्योक्त्या सनको मुदमाप्तवान् ॥ ६९

विष्णुश्च तोषयामास नैवेद्यनोक्तकर्मवित् ।
तस्मान्नैवेद्यदानेन तोषयेन्मधुसूदनम् ॥ ७०

शुद्धौदनसहस्रेभ्यः पायसान्नं विशिष्यते ।
[2]पायसान्नसहस्रेभ्यः कृसरान्नं विशिष्यते ॥ ७१

कृसरान्नसहस्रेभ्यो गौडमन्नं विशिष्यते ।
गौडौदनसहस्रेभ्यो मुद्गान्नं [3]च विशिष्यते ॥ ७२

बहुनात्र किमुक्तेन केवलौदनमात्रतः ।
अपि देवः परं [4]तुष्यन् सर्वान् कामान् प्रयच्छति ॥ ७३

1. क. ख. द्व्यौश्च मुदं प्राप्ता-
2. क. ख. पुस्तकयोरिदमर्धं नास्ति
3. क. ख. तु.
4. क. ख. तुष्टः

[1]व्यञ्जनानि च शुद्धानि देवाय विनिवेदयेत् ।
सर्वां सिद्धिमवाप्नोति नात्र कार्या विचारणा ॥ ७४

सुपक्वान् मोदकांश्चैव घृतपूर्णांश्च शोभनान् ।
अन्यानपि च गोधूमान् गौडानपि घृताप्लुतान् ॥ ७५

[2]अन्यान्यपि विचित्राणि भक्ष्याणि विनिवेदयेत् ।
[3]स सर्वसिद्धिमाप्नोति सत्यं देवस्य भाषितम् ॥ ७६

पानानि च मनोज्ञानि देवाय विनिवेदयेत् ।
अदत्त्वा योऽन्न[4]मश्नीयाद्गृहे गृहपतिः स्वयम् ।
पच्यते रौरवे घोरे यावदाभूतसंप्लवम् ॥ ७७

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे नैवेद्यदानप्रशंसा
नाम त्रिंशोऽध्यायः

---

1. क. ख. पुस्तकयोरयं श्लोकः अनन्तरार्धं च नास्ति ।
2. अ. अन्यानपि च विक्षिप्य
3. क. ख. इष्टसिद्धिमवाप्नोति
4. क. ख. -मश्नाति

## ॥ एकत्रिंशोऽध्यायः ॥

### गीतफलकथनम्

सूतः—

गीतं सर्वोपचारेभ्यो देवानां प्रीतिकार[1]णम् ।
गीतेनैव सदा कुर्याद्ब्रह्मविष्णुशिवार्चनम् ॥ १

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञ[2]श्चाप्रयासेन [3]मोक्षं प्राप्नोति दुर्लभम् ॥ २

देवा गीतेन सन्तुष्टाः प्रदास्यन्ति समीहितम् ।
अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ॥ ३

पूर्वमुक्तं वराहेण मह्यै माहात्म्यशालिना ।

वराहः—

भद्रे ममाश्रमे कश्चिच्चण्डालो [4]गीततत्परः ॥ ४

[5]दूरजागरितो गानपूजायां सुदृढोऽभवत् ।
एवं तु गायमानस्य गतास्संवत्सरा बहु ॥ ५

श्वपाकस्य गुणज्ञस्य मद्भक्तस्य वसुन्धरे ।
[6]कार्तिकस्य तु मासस्य [7]शुक्लपक्षे चतुर्दशीम् ॥ ६

सुप्ते [8]जानार्दने यामे गातुमुद्योगवानभूत् ।
ततो [9]जगाद चण्डालो गृहीतो ब्रह्मरक्षसा ॥ ७

अल्पप्राणः श्वपाको [10]हि बलवान् ब्रह्मराक्षसः ।
दुःखेन च सुसन्तप्तो न शक्नोति विचेष्टितुम् ॥ ८

---

1. क. -कम्
2. क. ख. श्च विशेषेण
3. क. ख. मोक्षमाप्नोति
4. क. ख. गीति-
5. अ. पुरा
6. क. ख. कौमुदस्य
7. क. ख. शुक्ले पक्षे चतुर्दशी
8. क. जने गते
9. क. ख. जागर-
10. क. ख. वै

स वै चोक्तः श्वपाकेन बलवान् ब्रह्मराक्षसः ।
किं तवाभिमतं ब्रह्मन् [1]यत् स्वैरं परिधावसि ॥ ९

श्वपाकवचनं श्रुत्वा स तुं वै ब्रह्मराक्षसः ।
उवाच मधुरं वाक्यं मानुषाहारलोलुपः ॥ १०

[2]अद्याहारं दिश त्वं मे निराहारस्य गच्छतः ।
धात्रा विहितमाहारं तवेदं कल्पितं मम ॥ ११

अद्य [3]त्वां भक्षयिष्यामि [4]सवसामांसशोणितम् ।
ब्रह्मरक्षोवचः श्रुत्वा श्वपाको गीतलालसः ॥ १२

राक्षसं [5]छन्दयामास मम भक्त्या च संयुतः ।
एवमेतन्महाभाग भक्ष्योऽहं समुपागतः ॥ १३

अवश्यमेव कर्तव्यं धात्रा [6]यदुदितं वचः ।
पश्चात् खादस्व मां रक्षो [7]जागरो विनिवर्तते ॥ १४

विष्णोस्सन्तोषणार्थाय मयेदं [8]व्रुतमाहितम् ।
जागरे विनिवृत्ते [9]तु तत् कुरुष्व यदिच्छसि ॥ १५

तस्य तद्वचनं श्रुत्वा प्रोवाच ब्रह्मराक्षसः ।
[10]मोघं तत्पुनरेष्यामीत्युक्तं यद्भवता वचः ॥ १६

को हि रक्षोमुखाद्भ्रष्टो [11]मनुष्यो विनिवर्तते ।
बहु वै विद्यते पन्था [12]देशो वै विद्यते बहु ॥ १७

आत्म[13]देशं परित्यज्य परेषां गन्तुमिच्छसि ।
राक्षसस्य वचः श्रुत्वा चण्डालः पुनरब्रवीत् ॥ १८

---

1. क. ख. यः
2. क. ख. अद्यायं दशरात्रं मे
3. ख. त्वा
4. अ. सहसा मांस-
5. अ. छिन्द-
6. अ. यद्विहितं
7. ख. जागरे विनिर्वितते
8. क. ख. व्रत-
9. क. ख. मां त्वं भक्षय यदीच्छसि
10. अ. मोहं
11. क. ख. मानुषो
12. ख. देशास्तिष्ठन्ति वै बहु
13. अ. देवं

दूराज्जागरणं कृत्वा लोकनाथस्य राक्षस ।
प्रभाते पुनरेष्यामि शपे सत्येन वै मम ॥ १९

सत्येन तपते सूर्यः सोमः सत्येन रज्जति ।
[1]सत्ये प्रतिष्ठितं सर्वं जगत् स्थावरजङ्गमम् । २०

व्रजेद्रजस्वलां यो वै यो गच्छेत्परकामिनीम् ।
पूर्वभुक्तां स्त्रियं यस्तु निन्दते रूपशालिनीम् ॥ २१

पूर्वदत्तां तु यः कन्यामन्यस्मै संप्रयच्छति ।
यः पाकभेदं कुरुते [2]ह्यात्मनश्च परस्य च ॥ २२

[3]श्वो ददामीति वचनमु[4]क्त्वा तन्न प्रयच्छति ।
तेन पापेन [5]लिप्येय यद्यहं नागतः पुनः ॥ २३

तच्छ्रुत्वा वचनं तस्य विस्मितो ब्रह्मराक्षसः ।
गच्छेति मधुरं वाक्यमुवाच नतिपूर्वकम् ॥ २४

स श्वपाको गीतवेदी सद्यः प्राप्य [6]ममान्तिकम् ।
[7]भक्तिप्रवणचित्तस्सन् पुनर्गायन् व्यवस्थितः ॥ २५

अथ प्रभाते विमले गीते [8]नृत्ते च जागरे ।
नमो नारायणेत्युक्त्वा श्वपा[9]कोऽयं न्यवर्तत ॥ २६

ततस्तं पुरुषं कश्चिन्मध्ये[10]मार्गं स्थितोऽवदत् ।
[11]कुतो गच्छसि तत्त्वेन द्रुतं गमननिश्चयः ॥ २७

एतदाचक्ष्व तत्त्वेन [12]यत्र ते वर्तते मनः ।
तस्य तद्वचनं श्रुत्वा श्वपाकस्सत्यसंमतः ॥ २८

---

1. क. ख. सम्यक् प्रतिष्ठितं चैव सत्येन सकलं जगत्
2. क. ख. ह्यातुरस्य
3. क. ख. यो
4. क. ख. -क्त्वान्नं न
5. क. ख. लिप्येऽहं
6. क. ख. मदन्तिकम्
7. क. ख. भक्त्या
8. क. ख. वृत्ते
9. क. ख. -को विनिवर्तते
10. क. -मार्गे
11. अ. ततो
12. क. ख. यत्ते मनसि वर्तते

उवाच मधुरं वाक्यं [1]पुरुषं तत्र संसदि ।
समयो मे कृतस्तत्र ब्रह्मराक्षससंसदि ॥ २९

ततस्स पद्मपत्राक्षः श्वपाकं प्रत्युवाच तम् ।
मधुरं गीतमादाय मधुरेणान्तरात्मना ॥ ३०
नार्हसि त्वं भद्र गन्तुं समीपं [2]ब्रह्मरक्षसः ।
तत[3]स्तस्य वचः श्रुत्वा श्वपाकस्संशितव्रतः ॥ ३१

उवाच मधुरं वाक्यं मरणे कृतनिश्चयः ।
नाहं [4]वचः करिष्यामि यन्मां त्वं परिभाषसे ॥ ३२

[5]नाद्याहं नाशये सत्यमेतन्मे निश्चितं व्रतम् ।
शीले सत्यं प्रवृत्तं वै शीले सत्यं प्रतिष्ठितम् ॥ ३३

[6]शीले सत्यं [7]प्रवृद्धं वै आत्मा सत्ये प्रतिष्ठितः ।
नाहं समयमुल्लङ्घ्य स्यामसत्यः कदाचन ॥ ३४

नाहं मिथ्या करिष्यामि गच्छ तात यथेप्सितम् ।
इत्युक्त्वा निकटं प्राप्तस्तत्क्षणाद्ब्रह्मरक्षसः ॥ ३५

उवाच मधुरं वाक्यं श्वपाको ब्रह्मराक्षसम् ।
विष्णवे लोकनाथाय मम पूर्णो मनोरथः ॥ ३६

[8]एतानि मम गात्राणि भक्षयस्व [9]यथेच्छतः ।
श्वपाकस्य वचः श्रुत्वा ततस्स ब्रह्मराक्षसः ॥ ३७

उवाच मधुरं वाक्यं श्वपाकं तदनन्तरम् ।
साधु तुष्टोऽ[10]स्मि हे वत्स सत्यं धर्मश्च पालितः ॥ ३८

चण्डाल[11]स्यात्रिविधिज्ञस्य यस्य वै बुद्धिरीदृशी ।
यत्त्वया गीयते रात्रौ विष्णोर्जागरणं प्रति ॥ ३९

---

1. अ. परुषं
2. क. ख. तत्र
3. क. ख. -स्तद्वचनं
4. क. ख. त्वेयं
5. ख. नामाहं
6. क. ख. कुले
7. ख. प्रवृत्तं
8. क. ख. साङ्गानि
9. क. ख. यथेष्टतः
10. क. ख. -स्म्यहं
11. क. ख. -स्य विधिज्ञस्य

फलं गीतस्य मे देहि यदीच्छा [1]जीवितुं तव ।
ब्रह्मरक्षोवचः श्रुत्वा श्वपा[2]कः पुनरब्रवीत् ॥ ४०

यत्त्वया भाषितं पूर्वं मया सत्यञ्च यत् कृतम् ।
[3]खादस्वाद्यं हि मन्मांसं न दास्ये गीतजं फलम् ॥ ४१

राक्षसः—

अर्धरात्रार्जितं वापि एक[4]यामार्जितं तु वा ।
फलं वाप्येकगीतस्य [5]देहीति प्रार्थयत्सुधीः ॥ ४२

इत्युक्तवन्तं तं [6]प्राह श्वपाको ब्रह्मराक्षसम् ।
किं तेऽद्य विकृतं कर्म तद्ब्रूहि ब्रह्मराक्षस ॥ ४३

कर्मणो यस्य दोषेण ब्रह्मरक्षस्त्व[7]मागतम् ।
श्वपाकवचनं श्रुत्वा ह्यवदद्ब्रह्मराक्षसः ॥ ४४

नाम्ना वै सोमशर्माहं [8]मन्त्रतन्त्रविवर्जितः ।
ततोऽहं कारये यज्ञं लोभमोहप्रपीडितः ॥ ४५

[9]यज्ञे प्रवर्तमाने तु मम शूलोऽभ्यजायत ।
अकृत्वा विपुलं यज्ञं ततः पञ्चत्वमागतः ॥ ४६

मन्त्रहीनो मया यज्ञः स्वरहीनं च यत्कृतम् ।
तेन पापेन चण्डाल ब्रह्मराक्षसतां गतः ॥ ४७

तव गीत[10]प्रदानेन निस्तारयितुमर्हसि ।
तस्य तद्वचनं श्रुत्वा श्वपाकः पुनरब्रवीत् ॥ ४८

यन्मया पञ्चमं गीतं [11]वरं कैशिकमुत्तमम् ।
फलेन तेन भद्रं ते [12]मोक्ष्ये राक्षस दुष्कृतात् ॥ ४९

---

1. क. जीवितं
2. क. ख. -को वाक्यम-
3. क. ख. खाद त्वरन् हि
4. क. ख. -रात्रा-
5. क. ख. देहीति प्रार्थयन् स्थितः
6. अ. प्राप
7. क. ख. -मागतः
8. क. ख. सूत्रमन्त्र-
9. 46, 47 -तमौ श्लोकौ अ. पुस्तके न स्तः
10. अ. प्रगाधेन
11. ख. परं
12. ख. मोक्षो

यस्तु गायति संयुक्तं कैशिकं विष्णुसन्निधौ ।
त्वां ब्रह्मराक्षसाद्घोरात् तत्फलं तारयिष्यति ॥ ५०

एवं दत्ते श्वपाकेन फले गीतस्य तत्क्षणात् ।
रक्षो[1]भावाद्विनिर्मुक्तः सोमशर्मा महायशाः ॥ ५१

[2]श्वपाकश्चैव सुश्रोणि मम चैवोपगायिनः ।
कृत्वा सुविपुलं कर्म स ब्रह्मत्वमुपागतः ॥ ५२

अद्धान्गीताक्षरोद्देश्यान् स्वर्गलोके चिरं स्थितः ।
एतद्गीतफलं भूमे नीयमानो महायशाः ॥ ५३

यस्तु गायति गीतानि मामुद्दिश्य नरः सकृत् ।
स तु सर्वफलोपेतो मम लोकञ्च गच्छति ॥ ५४

सूतः—

श्रुत्वैतद्गीतमाहात्म्यं सा मही विस्मिताभवत् ।
कम्बलाश्वतरौ पूर्वं गीतेनैव शिवं क्षणात् ॥ ५५

प्रीणयित्वा शिवञ्चापि लब्धवन्तौ मदालसाम् ।
गीतेनैव शिवप्रीतिं कृत्वा तुम्बुरुनारदौ ॥ ५६

प्राप्तौ शिवस्य सामीप्यं [3]गतिमव्याहता[4]मिति ।
एवमन्येऽपि बहवो गीततत्त्वविचक्षणाः ॥ ५७

प्राप्ताः परतरां [5]सिद्धिं तोषयित्वा महेश्वरम् ।
तस्माद्गी[6]तप्रियान् देवान् गीतेनैव समर्चयेत् ॥
ते तस्य तेन सन्तुष्टाः कुर्वन्त्येव समीहितम् ॥ ५८

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे गीतफलकथनं नाम
एकत्रिंशोऽध्यायः

---

1. ख. भागा
2. 52, 53, तमौ श्लोकौ अ. पुस्तके न स्तः
3. क. ख. गीति-
4. क. ख. -मपि
5. क. ख. प्रीतिं
6. क. -ति-

## ॥ द्वात्रिंशोऽध्यायः ॥

### जपमाहात्म्यकथनम्

सूतः—

यो मन्त्रपरिनिष्ठात्मचित्त[1]स्स पुरुषोत्तमम् ।
प्रयाति ब्रह्मणः स्थानं त्रिदशैरपि पूजितः ॥ १

अस्मिन्नर्थे पुरावृत्तमुपाख्यानं वदामि वः ।
भीष्मेण कथितं पूर्वं धर्मपुत्राय धीमते ॥ २

भीष्मः—

ब्राह्मणो जापकः कश्चित् पैप्पलादिस्सकौशिकः ।
वेद[2]वेदान्ततत्त्वज्ञो दान्त्यादिगुणसंयुतः ॥ ३
हिमवत्पादमाश्रित्य जजाप स तु [3]संहिताम् ।
एवं जपपरस्यास्य बहवो वत्सरा गताः ॥ ४

ततः प्रीता प्रसन्नास्य वेदमाता जगन्मयी ।
वरदाहं समायाता वरं ब्रूहीति चाब्रवीत् ॥ ५

तच्छ्रुत्वा जपशीलोऽपि तां देवीमभिवाद्य च ।
[4]संप्रार्थयामास ततो जपे श्रद्धायुतं मनः ॥ ६

[5]तत्तथेति ततो देवी मधुरं प्रत्यभाषत ।
यास्यसि ब्रह्मणः स्थानमिति तस्मिन् क्षणेन तु ॥ ७

धर्मः प्रत्यक्षतां गत्वा जपशीलमुवाच [6]ह ।
जपस्यास्य फलं यत्ते संप्राप्तं तच्च मे श्रृणु ॥ ८

जिता लोकास्त्वया सर्वे ये दिव्या ये च मानुषाः ।
तस्मात्प्राणान्परित्यज्य गच्छ लोकान् यथेप्सितान् ॥ ९

---

1. अ. -स्सन् पुरु-
2. क. ख. वेदाङ्ग-
3. अ. संहितः
4. क. ख. प्रार्थयामास सततं
5. क. ख. तं तथेति
6. क. ख. च

ब्राह्मणः—

कृतं [1]लोकैर्हि मे धर्म गच्छ [2]त्वं हि यथागतम् ।
बहुदुःख[3]सहं देहं नोत्सृजेऽहमिह प्रभो ॥ १०

धर्मः—

अवश्यं ते शरीरं भो त्यक्तव्यं मुनिपुङ्गव ।
स्वर्ग आरुह्यतां विप्र किं वा ते रोचतेऽनघ ॥ ११

ब्राह्मणः—

न रोचये स्वर्गवासं विना देहमहं विभो ।
रमे जपन्महाभाग कृतं लोकैस्सनातनैः ॥ १२

सशरीरेण गन्तव्यः [4]स्वर्गलोको मया विभो ।

धर्मः—

यदि त्वं नेच्छसि त्यक्तुं शरीरं पश्य वै द्विज ॥ १३

[5]एष कालस्तथा मृत्युर्यमश्च त्वामुपागतः ।

भीष्मः—

ततस्ते तु समायाताः प्रत्येकमवदन् द्विजम् ॥ १४

यमः—

फलं प्राप्तं जपस्यास्य यमोऽहं त्वामुपागतः ।

कालः—

प्राप्तं [6]त्वया जपफलं कालोऽहं समुपस्थितः ॥ १५

मृत्युः—

कालेन चोदितो विप्र त्वां मृत्युरहमागतः ।
इत्युक्तवन्तस्तान् विप्रः पूजयामास पूजया ॥ १६

एतस्मिन्नेव काले तु तीर्थयात्रामुपागतः ।
इक्ष्वाकुरगमत्तत्र समेता यत्र [7]ते विभो ॥ १७

सर्वानेव तु राजर्षिस्सम्पूज्याभिप्रणम्य च ।
कुशलप्रश्नमकरोत्सर्वेषां राजसत्तमः ॥ १८

---

1. क. ख. लोकैस्तु
2. क. ख. च त्वं यथासुखम्
3. क. सुखं
4. अ. मया स्वर्गे न वा
5. अ. एक-
6. ख. तथा
7. क. ख. वै

[1]तस्मै विप्रोऽपि दत्त्वैव पाद्यमर्घ्यं तथासनम् ।
अब्रवीन्मधुरं वाक्यं कृत्वा कुशलसंविदम् ॥ १९

स्वागतं ते महीपाल ब्रूहि यद्यदिहेच्छसि ।
स्वशक्त्या किं करोमीह तद्भवान् वक्तुमर्हति ॥ २०

राजा—

राजाहं ब्राह्मणश्च त्वं [2]षड्धर्मनिरताशयः ।
ददामि वसु किं तेऽद्य प्रार्थितं तद्ब्रवीतु मे ॥ २१

ब्राह्मणः—

द्विविधो ब्राह्मणो राजन् धर्मश्च द्विविधः स्मृतः ।
[3]प्रवृत्तिश्च निवृत्तिश्च निवृत्तोऽस्मि प्रतिग्रहात् ॥ २२

तेभ्यः प्रयच्छ दानानि ये प्रवृत्ता नराधिप ।
अहं न प्रतिगृह्णामि किमिष्टं किं ददामि ते ॥ २३

राजा—

स्वशक्त्याहं ददामीति त्वया पूर्वं प्रभाषितम् ।
याचे त्वां [4]काङ्क्षितं मह्यं जप[5]प्रीतिफलं द्विज ॥ २४

ब्राह्मणः—

परमं गृह्य[6]तामस्य फलं यज्जपितं मया ।
[7]प्रतिगृह्णीष्व भूपाल ह्यर्धं वा सर्वमेव वा ॥ २५

राजा—

[8]कृतं सर्वेण भद्रं ते दत्तं यद्याचितं मया ।
स्वस्ति तेऽस्तु गमिष्यामि किं तस्य च फलं वद ॥ २६

ब्राह्मणः—

[9]फलप्राप्तिं न जानामि दत्तं यज्जपितं मया ।
अयं धर्मश्च कालश्च [10]यमो मृत्युश्च साक्षिणः ॥ २७

---

1. क. ख. तस्य
2. क. ख. षट्कर्म-
3. क. ख. प्रवृत्तश्च निवृत्तश्च
4. क. ख. दीयतां
5. क. ख. वृत्त-
6. ख. तां तस्य
7. अ. पुस्तके इदमर्धं नास्ति
8. अ. पुस्तकेऽयं श्लोको नास्ति
9. अ. पुस्तके इदमर्धं नास्ति
10. अ. ययौ

राजा—

अज्ञा[1]तस्य च धर्मस्य फलं किं मे करिष्यति ।
[2]फलं त्वं ब्रूहि धर्मस्य नाहमिच्छामि तत्फलम् ॥ २८

ब्राह्मणः—

नादधे परवित्तं वै नाभिसन्धिं करोम्यहम् ।
मया दत्तं जपफलं प्रतिगृह्णीष्व भूपते ॥ २९

भीष्मः—

न राजा प्रतिगृह्णाति ब्राह्मणोऽपि ददाति चं ।
एवं तयोर्महाराज विवादः सुमहानभूत् ॥ ३०

तस्मिन् क्षणे ताववदद्धर्मो मधुरया गिरा ।
द्विजो [3]दानफलैर्युक्तो राजा च फलसंयुतः ॥ ३१

अविवादोऽस्तु भवतोः सत्यमार्गरतात्मनोः ।

स्वर्गः—

स्वर्गं मां विद्धि राजेन्द्ररूपिणं स्वयमागतम् ॥ ३२

अविवादोऽस्तु [4]भवतोरुभौ तुल्यफलौ भुवि ।

राजा—

कृतं स्वर्गेण मे कामं गच्छ स्वर्ग यथागतम् ॥ ३३
विप्रो यदिच्छते[दीहते] यातु चीर्णं गृह्णातु मे फलम् । ?

भीष्मः—

एतस्मिन्नन्तरे प्राप्तौ [5]पुरुषौ विकृताकृती ॥ ३४

गृहीत्वान्योन्य[6]मावेश्य कुचेलावूचतुर्वचः ।
आवयोः शासिता राजन् शृणुष्वेति महीपतिम् ॥ ३५

विरूपः—

विकृतेन हि गौरेका दत्ता पूर्वमृणाय वै ।
मया निष्कृतये तस्य दत्तं होमकृतं फलम् ॥ ३६

---

1. क. ख. तमस्य
2. अ. फलप्रभा हि
3. अ. राज-
4. क. ख. युवयो-
5. क. ख. विकृतौ पुरुषाकृती
6. क. ख. मावेष्ट्य

न गृह्णाति किमर्थं तच्छ्रुत्वा त्वं शासिता भव ।

विकृतः—

न प्रार्थितमृणं राजन् पूर्वदत्तमपि प्रभो ॥ ३७

[1]मयात्र दत्तं राजर्षे गृह्णीयां तत् कथं पुनः ।

राजा—

दीयमानमृणं यस्तु न गृह्णाति [2]स चाधमः ॥ ३८

इत्युक्तवति राजेन्द्रे ब्राह्मणस्तं वचोऽवदत् ।
श्रुतमेतत्त्वया राजन्ननयोः कथितं त्विह ॥ ३९

प्रतिज्ञातं मया यन्मे तद्गृहाणाविचारितम् ।

राजा—

[3]धिक् त्यक्तराजधर्मं मां प्रतिग्रह[4]हताशयम् ॥ ४०

इत्युक्त्वा प्रतिजग्राह जपसिद्धिं द्विजार्पिताम् ।

सूतः—

एतस्मिन्नन्तरे शक्रस्सर्वदेवसमन्वितः ॥ ४१

तयोस्समीपमगमत् पुष्पवृष्टिः पपात [5]ह ।
तस्मिन् क्षणे विप्रदेहाज्ज्योतिर्योगात्समुत्थितम् ॥ ४२

ब्राह्म[6]णं चाविशद्राज्ञस्तेजश्चापि तथैव हि ।
एवं गतौ तौ शक्राद्याः पूजयामासुरादृताः ॥ ४३

विरूपविकृतौ तौ च रागद्वेषौ महीसुराः ।
तयोर्विवादशान्त्यर्थं पुरुषाकारतां गतौ ॥ ४४

एवमुक्तं महीदेवा जापकस्य फलं महत् ।
तस्माज्जपपरो विप्रः परं ब्रह्माधिगच्छति ॥ ४५

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे जपमाहात्म्यकथनं
नाम द्वात्रिंशोऽध्यायः

---

1. क. ख. मयास्य
2. अ. नराधमः
3. क. ख. धिक्कृत्य
4. क. -रता-
5. क. ख. च
6. क. ख. -णस्यापि यद्राज्ञ-

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

### स्तोत्रमाहात्म्यकथनम्

सूतः—

सर्वेषामुपचाराणां स्तोत्रमेव परं मतम् ।
तेनैव [1]स महेशोऽपि प्रीतस्सर्वं प्रयच्छति ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
हते हिरण्यकशिपौ प्रह्लादो दैत्य[2]संमतः ॥ २

हिरण्याक्षं महाबाहुं राज्ये समभ्यषेचयत् ।
सोऽपि देवान् रणेऽजैषीद्[3]युद्धाद्देवाः पलायिताः ॥ ३

हिरण्याक्षो महादेवं तपसाराध्य चान्धकम् ।
लेभे पुत्रं महाबाहुं [4]सर्वामरनिषूदकम् ॥ ४

हिरण्याक्षभयाद्देवाः शार्ङ्गिणं शरणं गताः ।
दृष्ट्वाथ देवान् भगवान् हिरण्याक्षवधाय वै ॥ ५

वाराहं रूपमास्थाय हिरण्याक्षमसूदयत् ।
हते तस्मिन् हिरण्याक्षे प्रह्लादो वैष्णवाग्रणीः ॥ ६

त्यक्त्वा [5]तत्तामसीं वृत्तिं स्वकीयं राज्यमास्थितः ।
ततः कदाचिद्देवानां मायया मोहितोऽभवत् ॥ ७

कञ्चन ब्राह्मणं दृष्ट्वा कृशाङ्गं गृहमागतम् ।
अवज्ञामकरोद्दैत्यः शप्तस्तेनाग्रजन्मना ॥ ८

बलं यस्य समाश्रित्य दैत्य मामवमन्यसे ।
भक्तिर्विनश्यतु क्षिप्रं [6]देवदेवे जनार्दने ॥ ९

---

1. क. ख. मे
2. क. ख. -सत्तमः
3. क. ख. स्वर्गाख्या वै पलायिता
4. क. ख. सर्वमाननिषूदनम्
5. क. ख. तु तामसीं
6. क. ख. तव

इति शप्त्वा ययौ विप्रस्स्वाश्रमं मुनिपुङ्गवाः ।
अथ दैत्यपतिर्युद्धमकरोद्विष्णुना सह ॥ १०

पितुर्वधमनुस्मृत्य [1]दैत्याश्चान्ये च निर्जिताः ।
अनुग्रहाद्भगवतः पूर्वस्माद्दैत्यराट् पुनः ॥ ११

त्यक्त्वा मायामयं सर्वं शार्ङ्गिणं शरणं ययौ ।
अभिषिच्यान्धकं राज्ये योगयुक्तोऽभवत्स्वयम् ॥ १२

अथ देवो महादेवः शरण्यस्सर्वदेहिनाम् ।
केनापि हेतुना भिक्षामकरोद्ब्राह्मणैस्सह ॥ १३

संस्थाप्य मन्दिरे देवीं गिरिजां गिरिजापतिः ।
सनारायणकान् देवानकरोत्पार्श्वगान् शिवः ॥ १४

स्त्रीरूपधारिणो देवाः सेवन्ते पार्वतीं तदा ।
संस्थाप्य नन्दिप्रमुखानसङ्ख्यातान् गणेश्वरान् ॥ १५

भैरवञ्च समादिश्य नन्दिनं द्वारदेशतः ।
एतस्मिन्नन्तरे प्राप्तो मन्दरं चान्धकासुरः ॥ १६

आहर्तुकामं शर्वाणीं तं दृष्ट्वा कालभैरवः ।
ताडयामास [2]शूलेनापतत्स भुवि मूर्च्छितः ॥ १७

पुनरुत्थाय वेगेन गदामादाय दैत्यराट् ।
भैरवं ताडयामास [3]स तथान्यान् गणेश्वरान् ॥ १८

दृष्ट्वा तदद्भुतं युद्धं [4]तदा दानवमर्दनः ।
असृजद्विविधाश्शक्तीस्ताभि[5]र्दैत्यः पराजितः ॥ १९

ततो [6]विधाय भगवान् [7]क्रीडां मन्दरपर्वतम् ।
प्राप्तो यत्र स्थिता देवी सह देवगणेश्वरैः ॥ २०

---

1. क. ख. देवाश्चान्ये वि-
2. क. ख. शूलेन सोऽपतद्भुवि
3. क. ख. तथा चान्यान्
4. क. ख. विष्णुर्दानव-
5. क. ख. -र्दैत्याः पराजिताः
6. क. ख. वधाय
7. क. ख. क्रीडन्

दृष्ट्वा [1]तमीश्वरं देवी शीघ्रं परमया मुदा ।
ननाम शिरसा भक्त्या भर्तुश्चरणपङ्कजम् ॥ २१

ततो विष्णुः शिवायैव यद्वृत्तं तन्न्यवेदयत् ।
[2]तच्छ्रुत्वा विस्मितो भूत्वा सह देव्या वरासने ॥ २२

उपविष्टस्तदा देवास्सर्वे प्राञ्जलयः स्थिताः ।
[3]एतस्मिन्नन्तरे प्राप्तो हिरण्याक्षसुतो बली ॥ २३

युयुधे च सुरै[4]स्सार्धं मातृभिश्च गणैस्सह ।
तेन ते निर्जिता देवाः शक्राद्यास्सह मातृभिः ॥ २४

[5]युद्धे तदद्भुतं दृष्ट्वा शार्ङ्गी शङ्करमब्रवीत् ।
यथासौ हन्यते दैत्यस्तथोपायं वद प्रभो ॥ २५

एवं हरेर्वचः श्रुत्वा शङ्करः कालभैरवम् ।
वधाय प्रेषयामास दैत्येन्द्रस्य बलीयसः ॥ २६

ततस्स भैरवः शम्भोः [6]शिरस्यङ्घ्रिं निधाय च ।
आदाय सहसा शूलं ययौ दैत्यस्य सङ्गरम् ॥ २७

शूलाग्रेण [7]विनिर्भिद्य ननर्त स्वात्मलीलया ।
तं दृष्ट्वा भैरवं [8]देवा ब्रह्माद्या मुनय[9]स्तथा ॥ २८

अस्तुवन् विविधैः स्तोत्रैर्हृष्टकायास्तदाभवन् ।
[10]शूलाग्रे स्थापितो दैत्यो भैरवेण महात्मना ॥ २९

[11]विनष्टं दुष्कृतं शीघ्रं प्रसादाच्छूलधारिणः ।
उत्पन्नमैश्वरं ज्ञानं दुर्लभञ्चाकृतात्मनाम् ॥
तुष्टाव स्तोत्रवर्येण भगवन्तमुमापतिम् ॥ ३०

---

1. क. ख. -पि चेश्वरं
2. क. ख. श्रुत्वा तत्
3. क. ख. अथास्मिन्
4. क. ख. -स्साकं
5. क. ख. युद्धं
6. क. ख. शिरसाशं
7. अ. विनिर्भेद्य
8. क. ख. देवं
9. क. ख. -स्तदा
10. क. ख. शूलाग्रस्था-
11. अ. विनष्टो दुष्कृतः

अन्धकः—

[1]नमामि मूर्ध्ना भगवन्तमेकं
समाहिता यं विदुरीशतत्त्वम् ।
पुरातनं पुण्यमनन्तरूपं
कालं कविं योगविमोहहेतुम् ॥ ३१

दंष्ट्राकरालं दिवि नृत्यमानं
हुताशवक्त्रं ज्वलनार्करूपम् ।
सहस्रपादाक्षिशिरोऽभियुक्तं
भवन्तमेकं प्रणमामि रुद्रम् ॥ ३२

[2]सदैव दैत्यामरपूजिताङ्घ्रे
विभागहीनामलतत्त्वरूप ।
त्वमग्नि[3]रूपो बहुधाभिपूज्यसे
वाय्वादिरूपैरखिलात्मरूपः ॥ ३३

[4]त्वामेव चाहुः पुरुषं [5]पुराण-
मादित्यवर्णं तमसः परस्तात् ।
त्वं [6]पश्यसीदं परिपास्यजस्रं
[7]त्वमन्तको योगिगणाभिजुष्टः ॥ ३४

[8]एकान्तरात्मा बहुधा निविष्टो
देहेषु [9]मोहादिविशेषहीनः ।
[10]त्वमात्मतत्त्वं परमात्मशब्दं
भवन्तमाहुः शिवमेव केचित् ॥ ३५

---

1. अ. पुस्तके अस्य द्वितीयादित्रयः पादाः अनन्तरश्लोकस्याद्यपादश्च नोपलभ्यन्ते ।
2. क. ख. भवादिदेवामर-
3. क. ख. -रेको बहुधा निविष्टो
4. क. ख. त्वामेकमाहुः
5. क. ख. पुराणं त्वादित्य-
6. अ. सर्जसीदं
7. अ. आजन्मको
8. क. ख. एकोऽन्त-
9. क. देहादि. ख. दोहादि
10. क. ख. पुस्तकयोः इदमर्धं नास्ति

[1]त्वमक्षरं ब्रह्म परं पवित्र-
मानन्दरूपं प्रणवाभिधानम् ।
त्वमीश्वरो वेदपदेषु सिद्धः
स्वयंभुवो........शेषहीनः ॥ ३६

त्वमिन्द्ररूपो वरुणा[2]दिरूपो
[3]हंसः प्राणो मृत्युरन्ताधिप[4]स्य ।
प्रजापतिर्भगवानेकरुद्रो
नीलग्रीवः स्तूयसे वेदविद्भिः ॥ ३७

नारायणस्त्वं जगतामनादिः
पितामहस्त्वं प्रपितामहश्च ।
वेदान्त[5]गुह्योपनिषत्स्वरूपः
सदाशिवस्त्वं परमेश्वरो [6]यः ॥ ३८

नमः परस्मा[7]त्तमसः परस्मै
परात्मने पञ्च [8]परंतपाय ।
त्रिमूर्त्यतीताय निरञ्जनाय
सहस्रशक्त्या[9]खिलसंस्थिताय ॥ ३९

त्रिमूर्तयेऽनन्तपदात्ममूर्तये
जगन्निवासाय जगन्मयाय ।
नमो ललाटार्पितलोचनाय
नमो जनानां हृदि संस्थिताय ॥ ४०

फणीन्द्रहाराय नमोऽस्तु तुभ्यं
मुनीन्द्रसिद्धार्चितपादपद्म ।
ऐश्वर्यधर्मासनसंस्थिताय
नमः पुरान्ताय भवोद्भवाय ॥ ४१

---

1. क. ख. पुस्तकयोः अयं श्लोको न दृश्यते
2. क. -ग्निरूपो
3. क. ख. हंसप्राणो
4. क. ख. श्च
5. क. ख. गीतोपनिषत्सु गीतः
6. क. ख. -ऽसि
7. ख. -त्तपसः
8. क. ख. परान्तराय
9. क. ख. -सुन-

सहस्रचन्द्रार्कसहस्रमूर्तये
नमोऽग्निचन्द्रार्कविलोचनाय ।
नमोऽस्तु [1]वेदस्वरमध्यमाय
नमोऽस्तु देवाय [2]हिरण्यबाहवे ॥ ४२

नमोऽस्तु गुह्याय गुहान्तराय
वेदान्तविज्ञान[3]विनिश्चयाय ।
[4]त्रिकालहीनामलधामधात्रे
नमो महेशाय नमः शिवाय ॥ ४३

सूतः—

[5]स्तोत्रेणानेन भगवान् प्रीतो भूत्वाथ भैरवः ।
अवरोप्य च शूलाग्रादुवाच परमेश्वरः ॥ ४४

त्वयाहं स्तोत्रवर्येण तोषितो दैत्यपुङ्गव ।
[6]प्रीतोऽस्मि तव दास्यामि गाणपत्यं सुदुर्लभम् ॥ ४५

नन्दीश्वरसमो वत्स [7]भृङ्गिनामगणो भव ।
एवं लब्धवरो दैत्यः कोटिसूर्यसमप्रभः ॥ ४६

[8]नीलकण्ठस्त्रिणेत्रश्च वृषकेतुर्जटाधरः ।
तं दृष्ट्वा देवतास्सर्वा हर्षनिर्भरमानसाः ॥ ४७

तुष्टुवुर्गणराजं ते भैरवस्य समीपगम् ।
अथ शम्भोः शरीरस्थां देवीं विश्वेश्वरीं शिवाम् ॥ ४८

संस्तूय सर्वभावेन शरणागतवत्सलाम् ।
पुत्रत्वे जगृहे दैत्यं प्रीतेन मनसा शिवा ॥ ४९

ततोऽनुज्ञां महेशस्य लब्ध्वासौ कालभैरवः ।
मातृभिस्सह [9]विख्यातः पातालं स्वगृहं ययौ ॥ ५०

---

1. क. ख. देवाय सुमध्यमाय
2. क. ख. सुवर्ण-
3. क. सुनिश्चिताय
4. क. ख. त्रिधाम-
5. क. ख. स्तवेना-
6. क. प्रीतो वरं ते
7. क. ख. भृङ्गी नाम
8. अ. पुस्तके 47, 48 -तमौ श्लोकौ न दृश्येते
9. क. ख. विश्वात्मा पाताले स्वपुरं

विष्णो[1]र्भगवतो मूर्तिर्यत्रास्ते वैष्णवी परा ।
अथ तां भैरवो दृष्ट्वा मुदा तु परिषस्वजे ॥ ५१

एकैकमूर्तिरभवत् [2]तत्र भैरवशार्ङ्गिणोः ।
[3]कालाग्निभैरवो योऽसौ स एव नृहरिः स्वयम् ॥ ५२

भगवान्नृहरिर्योऽसौ स एव [4]किल भैरवः ।
नृहरेः पूजना[5]न्नासंप्रीतो भवति भैरवः ॥ ५३

पूजनाद्भैरवस्यापि नृसिंहः पूजितो [6]भवेत् ।
ये पश्यन्ति तयोर्भेदं मायया मोहिता जनाः ॥ ५४

निरये ते विपच्यन्ते यावदाभूतसंप्लवम् ।
तस्मात् पूज्या सदा मूर्तिः रुद्रनारायणात्मिका ॥ ५५

प्रीता भगवती भूत्वा भवत्यज्ञानहारिणी ।

सूतः—
इत्युक्तं हि मया विप्रा भवतां स्तोत्र[7]वैभवम् ॥ ५६

यः स्तोत्रपूजां कुरुते नीचोऽपि परमेष्ठिनः ।
[8]स शिवस्तस्य सन्तुष्टस्सर्वसम्पत्प्रदो भवेत् ॥
तस्मात्पूज्यो महादेवः स्तोत्रेणोदयमिच्छता ॥ ५७

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे स्तोत्रमाहात्म्यकथनं
नाम त्रयस्त्रिंशोऽध्यायः

---

1. क. ख. -र्भगवती
2. क. ख. तयोर्भैरव-
3. क. ख. कालेन
4. अ. काल-
5. क. ख. -न्नूनं प्रीतो
6. ख. -ऽभवत्
7. ख. भैरवम्
8. अ. स्तवेन तस्य

## ॥ चतुस्त्रिंशोऽध्यायः ॥

### प्रदक्षिणफलकथनम्

सूतः —

[1]ततोऽहं संप्रवक्ष्यामि प्रदक्षिणफलं द्विजाः ।
सर्वेषा[2]मेव देवानां सद्यः प्रीतिकरं [3]हि तत् ॥ १

यानि [4]यानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे ॥ २

तीर्थानि यानि पुण्यानि तपोयज्ञ[5]मयानि च ।
प्रदक्षिणफलस्यैव कलां नार्हन्ति षोडशीम् ॥ ३

कृत्वा प्रदक्षिणं भक्त्या शिवस्यायतने सकृत् ।
अश्वमेध[6]स्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ४

जडोऽप्यनिच्छया कुर्वन् प्रदक्षिणमनुत्तमम् ।
येन केना[7]पि कामेन स याति परमां गतिम् ॥ ५

अस्मिन्नर्थे पुरावृत्तमितिहासं [8]वदामि वः ।
अस्तिं सर्वसुराधीशसेवितस्य महेशितुः ॥ ६

निवासभूतं वल्मीकपुरं सर्वपुरोत्तमम् ।
अस्मिन्नेव पुरा कश्चिद्वैश्यजातिसमुद्भवः ॥ ७

बभूव पुरुषो मूको दारिद्र्येण समन्वितः ।
स दौःस्थ्यात्सर्वलोकानां करोति पशुपालनम् ॥ ८

कुटुम्बभरणार्थाय सन्तुष्टो येन केनचित् ।
कदाचिद्रक्षतस्तस्य पशूं[9]स्तान् वनभूमिषु ॥ ९

---

1. क. ख. अथाहं
2. क. ख. -मपि
3. क. ख. तु
4. क. ख. कानि
5. क. ख. फलानि
6. क. ख. सहस्रस्य फलमाप्नोति
7. क. ख. -प्यकामेन
8. क. ख. पुरातनम्
9. क. ख. -स्तु वन-

पशुरेको विनिष्क्रान्तः [1]सुदूरात्तृणलोभतः ।
तमदृष्ट्वा भयत्रस्तः स मूकः पशुपालकः ॥ १०

निष्क्रान्तो यष्टिमादाय निराहारोऽपि मन्दिरात् ।
समासाद्य ततोऽरण्यमीक्षाञ्चक्रे समन्ततः ॥ ११

सूक्ष्मदृष्ट्या सुदुर्गाणि वनानि गहनानि च ।
अथ तेन क्वचिद्दृष्टं स्फुटं तस्य पशोः पदम् ॥ १२

अटव्यां भ्रमता तेन परिज्ञातं च कृत्स्नशः ।
ततश्च तत्पदान्वेषी [2]स जगाम वनाद्वनम् ॥ १३

पञ्चालयपुरस्यास्य समन्ताद् द्विजसत्तमाः ।
एवं प्रदक्षिणं तस्य जातं पशुदिदृक्षया ॥ १४

स्थानस्य [3]दुर्निवेशस्य पशोश्चापि द्विजोत्तमाः ।
[4]प्रदक्षिणावसाने तु पशुर्लब्धश्च तेन सः ॥ १५

[5]निशान्तेऽथ गृहं गत्वा स्वामिने विनिवेदितः ।
एवमज्ञानभावेन [6]कृतं ताभ्यां प्रदक्षिणम् ॥ १६

पशुपालपशुभ्यां च दैवगत्या द्विजोत्तमाः ।
निराहारस्य मूकस्य साहारस्य पशोस्तदा ॥ १७

विना [7]ज्ञानेन भक्त्या च [8]दैवाद् द्विजवरोत्तमाः ।
ततः [9]कालेऽप्यतिक्रान्ते [10]कियन्मात्रेण कर्मणा ॥ १८

उभौ पञ्चत्वमापन्नौ पृथक्त्वेनायुषः क्षये ।
तत[11]स्तु पशुपालोऽत्रे दशार्णाधिपतिर्नृपः ॥ १९

---

1. क. ख. -स्वयूथा-
2. क. जगाम च
3. अ. निर्विशेषस्य
4. अ. पुस्तके इदमर्धं नास्ति
5. अ. निशीथे तु
6. अ. जातं
7. क. ख. स्नानेन
8. क. ख. देवे
9. क. ख. काले व्यति-
10. क. कियत्तत्र स्वकर्मणा
11. क. ख. -स्स

सञ्ज्ञा[1]तस्तत्प्रभावेण पूर्वजातिमनुस्मरन् ।
सोऽपि जातः पशु[2]स्तत्र सचिवो द्विजसत्तमाः ॥ २०

जातिस्मरो यथा राजा सर्वदा नृपसत्तमः ।
अथा[3]गत्य स राजेन्द्रः पुनस्तस्याः प्रदक्षिणम् ॥ २१

करोति सर्वलिङ्गानां देवानाञ्च विशेषतः ।
भक्त्या परमया युक्तः पद्भ्यामङ्गेन चासकृत् ॥ २२

एकदा तत्र चायाता मुनयस्संशितव्रताः ।
प्रदक्षिणोपचारेण पूजयन्तं महेश्वरम् ॥ २३

ददृशुस्तं महा[4]राजमकुटं च तथाविधम् ।
तान् दृष्ट्वा [5]च महीपालः प्रणिपत्य कृताञ्जलिः ॥ २४

[6]तथा ज्येष्ठक्रमेणैव पूजयामास भक्तितः ।
ततस्तेषां स मध्ये च संनिविष्टो महीपतिः ॥ २५

ततश्चक्रुः [7]कथा दिव्या मुनयस्ते महीपतेः ।
पुरतो मुनिमुख्यानां चरितानि महात्मनाम् ॥ २६

राजर्षीणां पुराणानां धर्मशास्त्रसमुद्भवाः ।
आनन्दं तस्य राजर्षेर्जनयन्तो द्विजोत्तमाः ॥ २७

अथ क्वापि कथांते च पप्रच्छुर्मुनयो नृपम् ।
भूप सर्वोपचारेषु सत्स्वपि प्रीतिसंयुतः ॥ २८

प्रदक्षिणोपचारन्तु विशेषाद्भक्ति[8]भावतः ।
किमर्थं कुरुषे शम्भोस्तथा पद्मालये पुरे ॥ २९

एतन्नः कौतुकं जातं न चेद्गुह्यं प्रकीर्तय ।
ततस्स कथयामास वृत्तान्तं स्वं मुनीश्वराः ॥ ३०

---

1. क. ख. -तोऽस्मात्प्र-
2. क. ख. -स्तस्य
3. क. ख. -गम्य
4. क. ख. -राजं मन्त्रिणं च
5. क. ख. स
6. क. ख. यथाज्येष्ठ-
7. क. ख. कथां दिव्यां
8. क. ख. भावितः

[1]यथा नष्टपशोस्तस्य कृतं यत्तत्प्रदक्षिणम् ।
यथा प्रदक्षिणाज्जाता द्विजा जातिस्मृतिस्तथा ॥ ३१

इत्युक्त्वा पूर्ववृत्तान्तं पुनराह महीपतिः ।
यस्मान्मुनीश्वरा भक्तिं विना ज्ञानं च यत्कृतम् ॥ ३२

प्रदक्षिणं शिवपुरे जाता जातिस्मृतिर्मम ।
तस्मात्प्रदक्षि[2]णासक्तः शम्भोः पद्मालये पुरे ॥ ३३

तच्छ्रुत्वा ते मुनीन्द्राश्च प्रदक्षिणपरायणाः ।
महेशितुः [3]पुरे तस्य भक्त्या परमया युताः ॥ ३४

तेनैव प्राप्तवन्तश्च सर्वयज्ञफलं द्विजाः ।
सोऽपि राजा स मन्त्री च प्रदक्षिणपरायणौ ॥ ३५

शम्भोर्भक्त्यायत्तचित्तौ जातौ वैमानिकौ सुरौ ।
अद्यापि तौ हि दृश्येते तारारूपौ नभः[4]स्थितौ ॥ ३६

सूतः—

अनिच्छयापि सुमहत् प्रदक्षिणविधौ फलम् ।
किं पुनः कामतः [5]क्लृप्ते तस्मिन् फलसमृद्धयः ॥ ३७

प्रदक्षिणस्य वक्ष्यामि लक्षणं द्विजसत्तमाः ।
सोमसूत्रं समारभ्य सोमसूत्रावधि क्रमात् ॥ ३८

अनुलोमविलोमाभ्यां प्रदक्षिणमुदाहृतम् ।
चत्वार[6]स्तत्र भेदाः स्युः पाददण्डाङ्ग[7]मिश्रिणः ॥ ३९

वाङ्मनःकर्मभिस्सम्यग्ध्यायतां परमेश्वरम् ।
पादाभ्यामेव विहितं प्रोक्तं पादप्रदक्षिणम् ॥ ४०

उत्थायोत्थाय भक्त्या च नमता नमता पुनः ।
कृतमव्यग्रचित्तेन स्मृतं दण्डप्रदक्षिणम् ॥ ४१

---

1. अ. पुस्तके 31, 32. -तमौ श्लोकौ न स्तः
2. अ. -णे भक्तिः
3. क. ख. पुरस्तस्या-
4. क. ख. -स्थले
5. क. ख. प्राप्ते
6. क. ख. -स्तस्य
7. क. ख. -मिश्रणैः

पूर्वोक्तैस्सात्त्विकैरङ्गैर्न्यावृत्तैश्च तलैः क्रमात् ।
प्रदक्षिणं सुविहितमङ्गाख्यं शिवतुष्टये ॥ ४२

पदानि कानिचिद्गत्वा दण्डवन्नमतां पुनः ।
ततो व्यावृत्तमानेन कृतं मिश्रप्रदक्षिणम् ॥ ४३

[1]प्रदक्षिणेषु चैतेषु सोमसूत्रं न लङ्घयेत् ।
प्रदक्षिणेषु बल्यर्थे द्वारमारभ्य कल्पितम् ॥ ४४

प्रदक्षिणं न दोषाय सोमसूत्रविलङ्घने ।
अथ वा सोमसूत्रस्य सीमान्तं हस्तमात्रतः ॥ ४५

मुक्त्वानुलोमेन कृतं दोषकृन्न प्रदक्षिणम् ।
रत्नादिवरलिङ्गेषु भावयन् भक्तिमात्मनः ॥ ४६

सोमं वितस्तिमात्रेण मुक्त्वा कुर्यात्प्रदक्षिणम् ।
प्रदक्षिणक्रमो ह्येष भुक्तिमुक्तिप्रदो नृणाम् ॥ ४७

मुक्तिदं ह्यपसव्यं तु [2]ख्यातं पशुपतेर्मते ।
स्वस्ववर्णेषु यो ज्येष्ठस्तस्य कुर्यात्प्रदक्षिणम् ॥ ४८

दशजन्मकृतं पापं स व्यपोहत्ययत्नतः ।
उत्तमं जन्म चाप्नोति [3]तपोयोगाच्च दुर्लभम् ॥ ४९

दशप्रदक्षिण[4]फलमेकस्य ब्राह्मणस्य तु ।
एकप्रदक्षिणेनैव यज्वनः प्राप्नुयान्नरः ॥ ५०

[5]आश्रमं ज्येष्ठमुद्दिश्य कुर्वन्नेकप्रदक्षिणम् ।
[6]प्राप्नोति तद्दशगुणं फलं कल्पान्तसुस्थितम् ॥ ५१

फलं स्यात्तद्दशगुणमश्वत्थैकप्रदक्षिणम् ।
तद्दशोत्तरमाख्यातं गोप्रदक्षिणतः [7]परम् ॥ ५२

---

1. अ. पुस्तके 44, 45-तमौ श्लोकौ 46 -तमश्लोकपूर्वार्धं च नोपलभ्यन्ते
2. क. ख. उक्तं पाशुपते मते
3. क, ख, तपसापि सुदु-
4. क. ख. फलान्येतस्य
5. क. ख. आश्रमज्ये-
6. अ. पुस्तके इदमर्धम् अनन्तरश्लोकपूर्वार्धं च न दृश्यते
7. क. ख, फलम्

भूमिप्रदक्षिणकृतं [1]फलं स्यात्तद्दशोत्तरम् ।
तद्दशोत्तरमाख्यातं कुलशैलप्रदक्षिणम् ॥ ५३

श्रीशैलं हेमकूटञ्च पश्यन् य[2]स्तु प्रदक्षिणम् ।
कुर्वन् स लभते धन्यस्तद्दशोत्तरसंमतम् ॥ ५४

पितृप्रदक्षिणं कुर्वंस्तद्दशोत्तरसिद्धिभाक् ।
[3]गुरुप्रदक्षिणं तद्वत्तद्दशोत्तरसिद्धिदम् ॥ ५५

मातुः प्रदक्षिणा[4]द्वापि तत्फलं तद्दशोत्तरम् ।
तद्दशोत्तरसिद्धिः स्याद्विष्णोरेकं प्रदक्षिणम् ॥ ५६

तद्दशोत्तरसिद्धिः स्याच्छिवलिङ्गप्रदक्षि[5]णम् ।
तद्दशोत्तरसंसिद्धिरम्बिकायाः प्रदक्षि[6]णम् ॥ ५७

[7]तस्माद्दशोत्तरफलं दिव्यलिङ्गप्रदक्षि[8]णम् ।
[9]मुक्तिदं सव्यमाख्यातं शम्भोश्चैव प्रदक्षिणम् ॥ ५८

उदयास्तमयं भानोर्यावत्तावत् प्रदक्षिणम् ।
कुर्वन् पापविनिर्मुक्तः सर्वसिद्धिं प्रयास्यति ॥ ५९

सूतः—

तस्मात्सर्वप्रयत्नेन प्रदक्षिणपरो भवेत् ।
प्रदक्षिणफलेनैव [10]सर्वसिद्धिमवाप्नुयात् ॥ ६०

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे प्रदक्षिणफलकथनं
नाम चतुस्त्रिंशोऽध्यायः

---

1. क. ख. स्यात्फलं त-
2. क. ख. -स्तत्
3. क. ख. पुस्तकयोः इदमर्धं नास्ति
4. क. ख. -द्याति
5. क. -णात्
6. क. ख. -णात्
7. क. ख. दशोत्तरफलं तस्मात्
8. क. ख. -णात्
9. क. ख. पुस्तकयोरिदमर्धम् अनन्तरश्लोकश्च न दृश्येते
10. क. ख. सर्वो

## ॥ [1]पञ्चत्रिंशोऽध्यायः ॥

### ध्वजारोपणफलकथनम्

सूतः—

ततः परं प्रवक्ष्यामि ध्वजा[2]रोपणजं फलम् ।
यस्य श्रवणमात्रेण तत्फलं याति मानवः ॥ १

अलंकरोति यो भक्त्या शिवप्रासादमुत्तमम् ।
ध्वजैः सकिंकिणीजालैः स्फूर्जशाङ्करलाञ्छनैः ॥ २

स सुखी मोदते नित्यमिह लोके परत्र च ।
न तथा तोषमायाति शिवः सर्वोपचारतः ॥ ३

यथा संतोषमायाति शाङ्करध्वजपूजया ।
ध्वजं शिवाय यो दद्याद्भक्तिपूतेन चेतसा ॥ ४

स तु तत्तन्तुमानानि वर्षाणि सुखभाग्भवेत् ।
मलिनेनापि जीर्णेन वाससा वाप्यकामतः ॥ ५

यो ध्वजं कुरुते शंभोः स तु सर्वाधिको भवेत् ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ ६

स्वारोचिषेऽन्तरे पूर्वं [3]कैवर्तो मत्स्यघातकः ।
कश्चिदासीत्कदाचित्स वेत्रवत्यास्तटे शुभे ॥ ७

ददर्श शाङ्करं वेश्म लतापादपसंकुले ।
[4]जालं तत्र प्रभूतेन जीर्णं कालेन यत्तदा ॥ ८

---

1. अ. पुस्तके इममध्यायमारभ्य आधर्मस्कन्धपरिसमाप्ति मुद्रितो भागः नोपलभ्यते
2. क. -रोहण-
3. क. वैवर्तो
4. क. जातं

ध्वजवत्तत्स्फुटं कृत्वा ह्यवालम्बयदत्र तत् ।
ततस्तु स्वायुषि क्षीणे जातश्चासौ नराधिपः ॥ ९

जयध्वज इति ख्यातो नेपालविषये पुरा ।
स हि स्फूर्जध्वजाग्रेण वित्रासितनरामरः ॥ १०

कामलोभाभिभूतात्मा राज्यं चक्रे प्रतापवान् ।
तथापि शंभुभवने ददौ श्रद्धासमन्वितः ॥ ११

ध्वजान् शुद्धान्विचित्रांश्च नान्यत्किञ्चिदपि क्वचित् ।
राज्यलुब्धैस्ततो भृत्यैर्दायादैः स जयध्वजः ॥ १२

निहतो जाह्नवीतीरे खड्गपट्टसधारिभिः ।
ततो मृतः स एवासीत् गन्धर्वाधिपतिर्दिवि ॥ १३

श्रीमांश्चित्ररथो नाम प्रख्यातो भुवनत्रये ।

सूतः—

एतं महाध्वजं दद्यात्कृत्वा वै पाञ्चरङ्गिकम् ॥ १४

किङ्किणीरवकोपेतं मायूरच्छत्रभूषणम् ।
शाश्वतेन विमानेन सर्वदेवोपरि स्थितः ॥ १५

मन्वन्तरसहस्रैकं मोदते दिवि रुद्रवत् ।
ध्वजमालाकुलं दिव्यं यः प्रान्तेषु शिवालयम् ॥ १६

महाध्वजाष्टकं वापि दिक्षु दिक्षु निवेदयेत् ।
स विमानसहस्रेण दिव्यध्वजविभूषितः ॥ १७

कल्पायुतसहस्रैकं मोदते दिवि रुद्रवत् ।
व्यजनालोकचमरान् वाद्यानि विविधानि च ॥ १८

शङ्खच्छत्रध्वजैः सार्धमन्यद्यदुपयोगि च ।
शिवपूजोपकरणं दत्त्वाल्पं यदि वा बहु ॥ १९

[1]भावाद् द्रव्यानुसारेण राजैव स्याद्दिवौकसाम् ।
विष्णवे लोकनाथाय वैनतेयेन लाञ्छितम् ॥ २०

दत्त्वा ध्वजपटं छत्रं तत्तल्लोके महीयते ।
तस्मात्सर्वप्रयत्नेन ध्वजदानं विशिष्यते ॥ २१

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे ध्वजारोपणफलकथनं
नाम पञ्चत्रिंशोऽध्यायः

---

1. क. भावद्रव्या-

## ॥ षट्त्रिंशोऽध्यायः ॥

### शिवपूजाफलकथनम्

ऋषयः—

श्रुतानि सर्वशास्त्राणि पुराणान्यखिलानि च ।
धर्मशास्त्राणि सर्वज्ञ त्वत्तः सूत महामते ॥ १

सोऽस्माकं संशयः कश्चित्सुमहान् हृदि वर्तते ।
येनाज्ञा इव संजाताश्छेत्तुं तत्त्वमिहार्हसि ॥ २

को देवः परमो ज्यायान् कथं चाराध्यते हि सः ।
आराधिते फलं किं स्यादेतत्सत्यं वदाद्य नः ॥ ३

सूतः—

अत्र ते कथयिष्येऽहमितिहासं पुरातनम् ।
विष्णोः सनत्कुमारस्य संवादं पापनाशनम् ॥ ४

इममेव पुरा प्रश्नं पृष्टवान् विष्णुमव्ययम् ।
सनत्कुमारो भगवान् परापरविभागकृत् ॥ ५

मुनेस्तस्य वचः श्रुत्वा विष्णुः सर्वविदां वरः ।
यदुवाच महाभागास्तच्छृणुध्वमतन्द्रिताः ॥ ६

श्रीविष्णुः—

एक एव शिवो ज्यायान् द्विधा च बहुधा श्रुतः ।
वेदेषु च पुराणेषु साङ्गोपाङ्गेषु गीयते ॥ ७

पूजयन्ति तमेवेशं देवा ब्रह्मर्षयोऽपि च ।
तत्त्वज्ञा विधिवन्नित्यमिज्याचारव्रतादिभिः ॥ ८

प्रधानाव्यक्तपुरुषकालानां परमो हि सः ।
ज्यायान् स एव षट्त्रिंशच्छिव इत्यभिधीयते ॥ ९

तस्मादेव जगत्सर्वं [1]सर्गकाले प्रजायते ।
तस्मिन्नेव पुनश्चैव प्रलये संप्रलीयते ॥ १०

यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्यास्तेऽसौ महेश्वरः ॥ ११

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि पञ्चैव ज्ञेयश्चैको महेश्वरः ॥ १२

स ईशानः स वै विष्णुः कृष्णो नारायणो हरिः ।
ब्रह्मा चतुर्मुखो धाता वेदोऽग्निर्हव्यवाहनः ॥ १३

क्षेत्रज्ञोऽर्कोऽष्टमूर्तिश्च कपाली शाश्वतो हरः ।
इत्याद्या आदिमुनिभिः संज्ञाभेदाः प्रकीर्तिताः ॥ १४

शास्त्रेषु कथिता विप्रा लोकव्यामोहकारकाः ।
एकं यदि भवेच्छास्त्रं ज्ञानं निस्संशयं भवेत् ॥ १५

बहुत्वादिह शास्त्रस्य ज्ञानतत्त्वं सुदुर्लभम् ।
बहवोऽपि यथा मार्गा विशन्त्येकं महत्पुरम् ॥ १६

तथा ज्ञानानि सर्वाणि विशन्त्येकं महेश्वरम् ।
श्रुतिस्मृतिपुराणानां यदेकं वाच्यमव्ययम् ॥ १७

अविकारमिति ज्ञात्वा न मुह्यन्तीह[पण्डिताः] पीडिताः ।
प्रतिभात्यन्यथा चैष कुतर्क[2]भ्रान्तचेतसाम् ॥ १८

श्रद्दधानैस्ततः सद्भिः पूज्यो देवः सदा शिवः ।
शिवज्ञानरताः सन्तः शिवशास्त्रविदश्च ये ॥ १९

तेषां वाक्यं सदा कार्यं श्रेयः परमिहेच्छता ।
सर्वाकारो निराकारो महात्मा पार्वतीपतिः ॥ २०

तस्मात्परतरं नास्ति ज्ञानज्ञेयात्सदाशिवात् ।
विष्णुर्जातोऽस्य वामाङ्गे ब्रह्मा चैवास्य दक्षिणे ॥ २१

---

1. क. सर्व-    2. क. भ्रान्ति-

मुखेभ्यश्च चतुर्वेदाः साङ्गोपाङ्गास्तु कृत्स्नशः ।
ब्रह्मादयस्तथा देवाः पितरोऽथ महर्षयः ॥ २२

पूजयन्ति शिवं भक्त्या सदा सिद्धाश्च [1]चारणाः ।
जितारीन्द्रियषड्वर्गा योगिनोऽप्यनहंक्रियाः ॥ २३

यजन्ति ज्ञानयोगेन तमेवात्मस्वरूपिणम् ।
सर्वतीर्थव्रतज्ञानयज्ञदानस्वरूपिणम् ॥ २४

योगेश्वरं यजन्त्यत्र कर्मयोगेन साधवः ।
शिवागमरताः शान्ताः शिवभक्ता जितेन्द्रियाः ॥ २५

यजन्ति सकलं देवमीप्सितार्थफलप्रदम् ।
कीर्तिर्जने रतिस्स्वर्गे गतिर्मनसि चोत्तमा ॥ २६

इति सर्वार्थविज्ञानं शिवः[त]कस्माद्धि पूज्यते ।
अनेकजन्मसाहस्रैर्नानायोन्यन्तरेषु च ॥ २७

जन्तोः कल्मषहीनस्य भक्तिर्भवति शंकरे ।
नाधन्यः शंकरं स्तौति नाधन्यः सेवते शिवम् ॥ २८

नाधन्यः पश्यति त्र्यक्षं नाधन्यो वेत्त्युमापतिम् ।
पृथुर्मरुत्तो भरतः शशबिन्दुर्गयः शिबिः ॥ २९

रामोऽम्बरीषो मान्धाता दिलीपोऽङ्गो भगीरथः ।
सुहोत्रो रन्तिदेवश्च ययातिस्सगरस्तथा ॥ ३०

षोडशैते महीपालाः शिवमिष्ट्वा दिवं गताः ।
व्यापारान् सकलांस्त्यक्त्वा पूजयध्वं सदाशिवम् ॥ ३१

निकटा इव दृश्यन्ते कृतान्तनगरद्रुमाः ।
एवं विलपतोऽप्युच्चैर्येैं शृण्वन्ति न मे वचः ॥ ३२

सन्धुक्ष्यन्ते कृतान्तेन तदर्थं निरयाग्नयः ।
क्रियतां मद्वचः कर्णे श्रेयस्यन्यो न युज्यताम् ॥ ३३

---

1. ख. वारणाः

आदीप्ते भवने कूपः खनितुं केन शक्यते ।
सत्यं वच्मि हितं वच्मि सारं वच्मि पुनः पुनः ॥ ३४

असारे चात्र संसारे सारं शंभोः पदार्चनम् ।
तदस्य दग्धसंसारग्रन्थेरत्यन्तदुर्गतेः ॥ ३५

पदनिर्मूलविच्छेदि क्रियतां शङ्करार्चनम् ।
पश्य शंकरमाराध्य मोदमानं शचीपतिम् ॥ ३६

यमं च वरुणं सूर्यं सोमं वैश्रवणं मुनीन् ।
देवेन्द्रत्वादिकं स्फीतं सर्वभूतेप्सितं पदम् ॥ ३७

सकृदेवार्चितो देवो हेलया वा नमस्कृतः ।
कुरुते वरनारीभिः प्राप्यं वैद्याधरं पदम् ॥ ३८

अस्य भावनया नम्राः स्मरणादपि वा न वा ।
रत्नपर्यङ्कशय्यानां महाभोगाश्च भोगिनः ॥ ३९

वीक्ष्यन्ते वरनारीभिः शङ्करस्मरणादपि ।
चतुःसमुद्रवसनां हिमविन्ध्यपयोधराम् ॥ ४०

[1]धरां ये भुञ्जते भूपा तच्छम्भोरर्चनाफलम् ।
तस्य चिन्तामणिर्गेहे तस्य कल्पतरुः कुले ॥ ४१

कुबेरः किङ्करस्तस्य भक्तिर्यस्य शिवे स्थिरा ।
रिपवस्तं न हिंसन्ति न च खादन्ति राक्षसाः ॥ ४२

न दंशन्ति च नागेन्द्रा नरं रुद्रपरायणम् ।
विकारकटुकाञ्शून्यान् विषयान् विषसन्निभान् ॥ ४३

सन्त्यज्य धारयेद्देवं शङ्करं लोकशङ्करम् ।
तस्मात्तवाहं वक्ष्यामि यद्यदाचरतस्तव ॥ ? ४४

पुरुषार्थस्य भगवान् सुतोषस्तोष्यते शिवः । ?

सूतः—

अहिंसा सत्यमस्तेयं दया भूतेष्वनुग्रहः ॥ ४५

1. क. ये भुञ्जते धरां

यस्यैतानि सदा ब्रह्मंस्तस्य तुष्यति शङ्करः ।
मातापित्रोर्गुरूणां च यः सम्यगभिवर्तते ॥ ४६

संविभागी च भृत्यानां तस्य तुष्यति शङ्करः ।
स्ववर्णाश्रमधर्मस्थः स्वदारनिरतः शुचिः ॥ ४७

तत्परस्तद्गतप्राणस्तस्य तुष्यति शङ्करः ।
असंपूज्य क्रियां कांचिद्यस्तु नाभिष्टुते शिवम् ॥ ४८

असम्भिन्नस्वमर्यादस्तस्य तुष्यति शङ्करः ।
तत्कथायां च रमते तत्कथां च करोति यः ॥ ४९

दृष्ट्वा संपूजितं लिङ्गं भक्त्या यश्चाभिवन्दते ।
तौर्यत्रयं वा यः कुर्यात्तस्य तुष्यति शङ्करः ॥ ५०

वाङ्मनःकर्मकायस्था यस्य भक्तिर्महेश्वरे ।
व्यसनोपहतस्यापि तस्य तुष्यति शङ्करः ॥ ५१

अर्थानेके समाराध्य सकृदप्यत्र शूलिनम् ।
प्रापुः कामं तथा चान्ये धर्मं मोक्षं तथापरे ॥ ५२

ये वामदेवं हि यजन्ति नित्यं
[1]सवृत्तशीलाः किल लिङ्गमूर्तिम् ।
ते ध्वस्तदुःखा हि भवन्ति मर्त्या
भवाम्बुराशिं विषमं तरन्ति ॥ ५३

स्वाचारशीलाश्च सदैव भक्ताः
शैवाश्च ये पाशुपतप्रवीणाः ।
सर्वे च ते वन्द्यतमा द्विजेन्द्रा
मुक्तिं प्रयान्त्येव न संशयोऽत्र ॥ ५४

यः सकृत्पूजयेद्देवं देवदेवं महेश्वरम् ।
स सर्वपापनिर्मुक्तो नीलकण्ठप्रसादतः ॥ ५५

सर्वैश्वर्यसमायुक्तः शिवसायुज्यमाप्नुयात् ।
अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ॥ ५६

---

1. क, सद्वृत्त-

पुरा कश्चिद्द्विजवरो धुंधुमूक इति श्रुतः ।
आसीत्तृतीये त्रेतायामावर्ते च मनोः प्रभोः ॥ ५७

मेघवाहनकल्पे वै धुन्धुमूकसमुद्भवः ।
धौन्धुमूक इति स्तेनो दुरात्मासौ बभूव ह ॥ ५८

धुन्धुमूकः [1]परो गर्भं स्थापयामास मोहितः ।
अमायां स्वकुटुम्बिन्यामह्नि रौद्रे मुहूर्तके ॥ ५९

असूत सा च तनयं विशालायां प्रयत्नतः ।
रौद्रे मुहूर्ते मन्देन वीक्षिते मुनिसत्तमाः ॥ ६०

मातुः पितुस्तथारिष्टमभूत्तज्जन्म चात्मनः ।
ऋषी तावूचतुर्विप्रं धुन्धु[2]मूकं मिथस्तथा ॥ ६१

मित्रावरुणनामानौ दुष्पुत्र इति सत्तमौ ।

वसिष्ठः—

विसृष्टः प्रागदुष्टोऽपि प्रभावाद्वै बृहस्पतेः ॥ ६२

अतस्तवापि दुष्टोऽपि मुने मुच्येत किल्बिषात् ।
धुन्धुमूकस्तस्य कृत्वा जातकर्मादिकाः क्रियाः ॥ ६३

सषडङ्गरहस्यांश्च वेदानग्राहयत्पिता ।
स दुष्टो धौन्धुमूकोऽपि स्वकीयदुरितोदयात् ॥ ६४

भुक्तवान् वृषलीं दुष्टां स्वभार्यां च विनानिशम् ।
एकशाय्यासनगतो माध्वीपानारुणेक्षणः ॥ ६५

त्यक्त्वा स्वीयां धर्मगतिमसद्वृत्तिरतोऽभवत् ।
केनापि कर्मणा तेन तामुद्दिश्य द्विजोत्तमाः ॥ ६६

ततस्तस्यास्तत्र तदा भ्राता तु निहतः पिता ।
माता च तस्य भार्या च बालाश्चासन्नवर्तिनः ॥ ६७

ततो राज्ञां क्षणान्नष्टं कुलं तस्याश्च तस्य च ।
गत्वासौ धौन्धुमूकस्तु येन केनापि हेतुना ॥ ६८

---

1. क. पुरो    2. क. -मूकमित-

दृष्ट्वा गुरुं मुनिश्रेष्ठं रुद्रजाप्यपरायणम् ।
लब्ध्वा षडक्षरं मन्त्रं पूजयित्वा तु शङ्करम् ॥ ६९

गन्धैः पुष्पैश्च नैवेद्यैस्त्रिसन्ध्यमपि नित्यशः ।
तच्चित्तस्तद्गतप्राणः [1]सर्वदैकमनास्स्वयम् ॥ ७०

कालधर्मं गतः कालात्पूजितश्च यमेन सः ।
उद्वृत्ताश्च पिता माता भार्या स्यालाश्च सुव्रताः ॥ ७१

ताभिर्विमानमारुह्य देवैस्सर्वैरभिष्टुतः ।
गाणापत्यमनुप्राप्तः शिवपूजाप्रभावतः ॥ ७२

इत्युक्तं विष्णुना सर्वं श्रुत्वा मुनिवरोत्तमः ।
सनत्कुमारस्सर्वेशं शङ्करं शरणं गतः ॥ ७३

अवाप च परं धर्ममवाङ्मनसगोचरम् ।
पर्वतान् दर्शयद्(?)दत्त्वा महादानानि षोडश ॥ ७४

धेनूनां दश दत्त्वा यत्तल्लभेच्छिवपूजया ।
स्वनामकृतचिह्नानि लिङ्गानीन्द्रादिभिः पुरा ॥ ७५

स्थापितानि यथा स्थाणोस्तथा कस्येह कथ्यताम् ।
पूजनाद्ब्रह्महत्यां च भ्रूणहत्यां तथैव च ॥ ७६

महापापानि चान्यानि क्षीयन्ते हीशतेजसा ।
यद्द्वारि मत्तमातङ्गा वायुवेगास्तुरङ्गमाः ॥ ७७

पूर्णेन्दुवदना नार्यः शिवपूजाविधेः फलम् ।
विद्या रूपं धनं सौख्यं सत्कुलं रोगनाशनम् ॥ ७८

स्वर्गभोगश्च राज्यं च शिवपूजाविधेः फलम् ।
सौभाग्यं कान्तिमद्रूपं सत्यं त्यागः प्रवक्तृता ॥ ७९

शौर्यं च जगति ख्यातिः शिवपूजाविधेः फलम् ।
ब्रह्मणः सृष्टिकर्तृत्वं विष्णोर्दानवमर्दनम् ॥ ८०

---

1. क. सर्वदेव-

इन्द्रस्य स्वर्गराज्यं च शिवपूजाविधेः फलम् ।
शिवभक्तिद्रुमात्पुष्पं राजसात्सात्त्विकात्फलम् ॥ ८१

अणिमा महिमा प्राप्तिः प्राकाम्यं लघिमा तथा ।
ईशत्वञ्च वशित्वञ्च यत्रकामावसायिता ॥ ८२

इत्येवमुदितं सर्वं शिवपूजाविधेः फलम् ।
हतपत्यश्वमातङ्गरुधिरारुणमण्डले ॥ ८३

सङ्ग्रामे विजयश्चैव शिवपूजाविधेः फलम् ।
सुश्रोण्यो हंसगमनाः पीनोन्नतपयोधराः ॥ ८४

अकलङ्कशशाङ्काभवदना लोलमूर्धजाः ।
अनिर्देश्यवयोरूपलावण्याः कमलेक्षणाः ॥ ८५

रमयन्ति नरं स्वर्गे सुररामा मनोरमाः ।

सूतः—

तस्मात्सम्पूजयेन्नित्यं शिवं भक्तिसमन्वितः ।
यस्य प्रसादादाप्नोति शिवसायुज्यमव्ययम् ॥ ८६

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे शिवपूजाफल-
कथनं नाम षट्त्रिंशोऽध्यायः

## ॥ सप्तत्रिंशोऽध्यायः ॥

### तिलदानफलकथनम्

सूतः—

सर्वेषामेव दानानां तिलदानं विशिष्यते ।
तस्मात्सर्वप्रयत्नेन तिलान्दद्याद्द्विजातये ॥ १

शृणुतावहिता विप्राः सर्वदानाद्विशेषतः ।
तिलप्रभावमतुलं सर्वपातकनाशनम् ॥ २

पुरा कृतयुगे विप्राः पितरः सर्व आगताः ।
तपश्चरन्ति विपुलं तिलार्थेऽन्योन्यमागताः ॥ ३

ब्रह्मा स्वयं समागत्य तानुवाच [तपस्विनः] तपोद्यतान् ।
परितुष्टोऽस्मि वो दद्मि प्रार्थयध्वमितो वरम् ॥ ४

पितरः—

तिलान् देहि महाभाग काङ्क्षितं वै न संशयः ।
तिलैर्विना न जीवामो नस्तिष्ठन्ति तिला हृदि ॥ ५

ब्रह्मा—

गच्छध्वं वै तिला दत्ताः सर्वेषां वै द्विजोत्तमाः ।
परितुष्टाश्च पितरस्तिलदानात्स्वयंभुवः ॥ ६

तिलान् यस्तु प्रयच्छेत विप्राणां च विशेषतः ।
अग्निष्टोमसहस्रस्य फलमाप्नोति मानवः ॥ ७

वैशाख्यां पौर्णमास्यां वा तिलान् क्षौद्रेण संयुतान् ।
यः प्रयच्छेद्द्विजातिभ्यः सर्वपापैः प्रमुच्यते ॥ ८

कृषिभागी बहुधनो जायते नात्र संशयः ।
धर्मराजाय च तिलान् दत्त्वा चैवेह मानवाः ॥ ९

पुरा कश्चिद्द्विजवरो धुंधुमूक इति श्रुतः ।
आसीत्तृतीये त्रेतायामावर्ते च मनोः प्रभोः ॥ ५७

मेघवाहनकल्पे वै धुन्धुमूकसमुद्भवः ।
धौन्धुमूक इति स्तेनो दुरात्मासौ बभूव ह ॥ ५८

धुन्धुमूकः [1]परो गर्भं स्थापयामास मोहितः ।
अमायां स्वकुटुम्बिन्यामह्नि रौद्रे मुहूर्तके ॥ ५९

असूत सा च तनयं विशालायां प्रयत्नतः ।
रौद्रे मुहूर्ते मन्देन वीक्षिते मुनिसत्तमाः ॥ ६०

मातुः पितुस्तथारिष्टमभूत्तज्जन्म चात्मनः ।
ऋषी तावूचतुर्विप्रं धुन्धु[2]मूकं मिथस्तथा ॥ ६१

मित्रावरुणनामानौ दुष्पुत्र इति सत्तमौ ।

वसिष्ठः—

विसृष्टः प्रागदुष्टोऽपि प्रभावाद्वै बृहस्पतेः ॥ ६२

अतस्तवापि दुष्टोऽपि मुने मुच्येत किल्बिषात् ।
धुन्धुमूकस्तस्य कृत्वा जातकर्मादिकाः क्रियाः ॥ ६३

सषडङ्गरहस्यांश्च वेदानग्राहयत्पिता ।
स दुष्टो धौन्धुमूकोऽपि स्वकीयदुरितोदयात् ॥ ६४

भुक्तवान् वृषलीं दुष्टां स्वभार्यां च विनानिशम् ।
एकशाय्यासनगतो माध्वीपानारुणेक्षणः ॥ ६५

त्यक्त्वा स्वीयां धर्मगतिमसद्वृत्तिरतोऽभवत् ।
केनापि कर्मणा तेन तामुद्दिश्य द्विजोत्तमाः ॥ ६६

ततस्तस्यास्तत्र तदा भ्राता तु निहतः पिता ।
माता च तस्य भार्या च बालाश्चासन्नवर्तिनः ॥ ६७

ततो राज्ञां क्षणान्नष्टं कुलं तस्याश्च तस्य च ।
गत्वासौ धौन्धुमूकस्तु येन केनापि हेतुना ॥ ६८

---

1. क. पुरो 2. क. -मूकमित-

दृष्ट्वा गुरुं मुनिश्रेष्ठं रुद्रजाप्यपरायणम् ।
लब्ध्वा षडक्षरं मन्त्रं पूजयित्वा तु शङ्करम् ॥ ६९

गन्धैः पुष्पैश्च नैवेद्यैस्त्रिसन्ध्यमपि नित्यशः ।
तच्चित्तस्तद्गतप्राणः [1]सर्वदैकमनास्स्वयम् ॥ ७०

कालधर्मं गतः कालात्पूजितश्च यमेन सः ।
उद्वृत्ताश्च पिता माता भार्या स्यालाश्च सुव्रताः ॥ ७१

ताभिर्विमानमारुह्य देवैस्सर्वैरभिष्टुतः ।
गाणापत्यमनुप्राप्तः शिवपूजाप्रभावतः ॥ ७२

इत्युक्तं विष्णुना सर्वं श्रुत्वा मुनिवरोत्तमः ।
सनत्कुमारस्सर्वेशं शङ्करं शरणं गतः ॥ ७३

अवाप च परं धर्ममवाङ्मनसगोचरम् ।
पर्वतान् दर्शयद्(?)दत्त्वा महादानानि षोडश ॥ ७४

धेनूनां दश दत्त्वा यत्तल्लभेच्छिवपूजया ।
स्वनामकृतचिह्नानि लिङ्गानीन्द्रादिभिः पुरा ॥ ७५

स्थापितानि यथा स्थाणोस्तथा कस्येह कथ्यताम् ।
पूजनाद्ब्रह्महत्यां च भ्रूणहत्यां तथैव च ॥ ७६

महापापानि चान्यानि क्षीयन्ते हीशतेजसा ।
यद्द्वारि मत्तमातङ्गा वायुवेगास्तुरङ्गमाः ॥ ७७

पूर्णेन्दुवदना नार्यः शिवपूजाविधेः फलम् ।
विद्या रूपं धनं सौख्यं सत्कुलं रोगनाशनम् ॥ ७८

स्वर्गभोगश्च राज्यं च शिवपूजाविधेः फलम् ।
सौभाग्यं कान्तिमद्रूपं सत्यं त्यागः प्रवक्तृता ॥ ७९

शौर्यं च जगति ख्यातिः शिवपूजाविधेः फलम् ।
ब्रह्मणः सृष्टिकर्तृत्वं विष्णोर्दानवमर्दनम् ॥ ८०

---

1. क. सर्वदेव-

इन्द्रस्य स्वर्गराज्यं च शिवपूजाविधेः फलम् ।
शिवभक्तिद्रुमात्पुष्पं राजसात्सात्त्विकात्फलम् ॥ ८१

अणिमा महिमा प्राप्तिः प्राकाम्यं लघिमा तथा ।
ईशत्वञ्च वशित्वञ्च यत्रकामावसायिता ॥ ८२

इत्येवमुदितं सर्वं शिवपूजाविधेः फलम् ।
हतपत्त्यश्वमातङ्गरुधिरारुणमण्डले ॥ ८३

सङ्ग्रामे विजयश्चैव शिवपूजाविधेः फलम् ।
सुश्रोण्यो हंसगमनाः पीनोन्नतपयोधराः ॥ ८४

अकलङ्कशशाङ्काभवदना लोलमूर्धजाः ।
अनिर्देश्यवयोरूपलावण्याः कमलेक्षणाः ॥ ८५

रमयन्ति नरं स्वर्गे सुररामा मनोरमाः ।

सूतः—

तस्मात्सम्पूजयेन्नित्यं शिवं भक्तिसमन्वितः ।
यस्य प्रसादादाप्नोति शिवसायुज्यमव्ययम् ॥ ८६

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे शिवपूजाफल-
कथनं नाम षट्त्रिंशोऽध्यायः

## ॥ सप्तत्रिंशोऽध्यायः ॥

### तिलदानफलकथनम्

सूतः—

सर्वेषामेव दानानां तिलदानं विशिष्यते ।
तस्मात्सर्वप्रयत्नेन तिलान्दद्याद्द्विजातये ॥ १

शृणुतावहिता विप्राः सर्वदानाद्विशेषतः ।
तिलप्रभावमतुलं सर्वपातकनाशनम् ॥ २

पुरा कृतयुगे विप्राः पितरः सर्वे आगताः ।
तपश्चरन्ति विपुलं तिलार्थेऽन्योन्यमागताः ॥ ३

ब्रह्मा स्वयं समागत्य तानुवाच [तपस्विनः] तपोद्यतान् ।
परितुष्टोऽस्मि वो दद्मि प्रार्थयध्वमितो वरम् ॥ ४

पितरः—

तिलान् देहि महाभाग काङ्क्षितं वै न संशयः ।
तिलैर्विना न जीवामो नस्तिष्ठन्ति तिला हृदि ॥ ५

ब्रह्मा—

गच्छध्वं वै तिला दत्ताः सर्वेषां वै द्विजोत्तमाः ।
परितुष्टाश्च पितरस्तिलदानात्स्वयंभुवः ॥ ६

तिलान् यस्तु प्रयच्छेत विप्राणां च विशेषतः ।
अग्निष्टोमसहस्रस्य फलमाप्नोति मानवः ॥ ७

वैशाख्यां पौर्णमास्यां वा तिलान् क्षौद्रेण संयुतान् ।
यः प्रयच्छेद्द्विजातिभ्यः सर्वपापैः प्रमुच्यते ॥ ८

कृषिभागी बहुधनो जायते नात्र संशयः ।
धर्मराजाय च तिलान् दत्त्वा चैवेह मानवाः ॥ ९

यमलोकं न पश्यन्ति ब्रह्मलोकं व्रजन्ति ते ।
ज्येष्ठे मासि तिलान् दत्त्वा पौर्णमास्यां विशेषतः ॥ १०

अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ।
माघमासे तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति ॥ ११

सर्वसत्त्वसमाकीर्णं नरकं स न पश्यति ।
सर्वकामैः स यजते यस्तु तैर्यजते पितॄन् ॥ १२

तिलाः पापहरा नित्यं विष्णोर्देहसमुद्भवाः ।
ततो दिव्यं गता भात्रं प्रदानेषु तिलाः परम् ॥ १३

पौष्टिका रूपदाश्चेति तिलाः पापविनाशनाः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ १४

ब्राह्मणस्य च संवादं यमस्य च महात्मनः ।
मध्यदेशे महाग्रामो ब्राह्मणानां बभूव ह ॥ १५

गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरधः ।
विद्वांसस्तत्र भूयिष्ठा ब्राह्मणाश्चावसंस्तदा ॥ १६

अथ प्राह यमः कंचित्पुरुषं कृष्णपिङ्गलम् ।
रक्ताक्षमूर्ध्वरोमाणमजङ्घाक्षमनासिकम् ॥ १७

गच्छ त्वं ब्राह्मणग्रामं गत्वा ब्राह्मणमानय ।
अगस्त्यगोत्रजं विप्रं नामतश्चापि शाल्मलम् ॥ १८

शमे निविष्टं विद्वांसमध्यापकमनागसम् ।
न चान्यमानयेथास्त्वं सगोत्रं तस्य पार्श्वतः ॥ १९

सहितोऽष्टगुणैश्चैव समोऽध्ययनजन्मतः ।
आकृत्या च तथा वृत्तैः समस्तैरपि तत्समः ॥ २०

तमानय यथोद्दिष्टं पूजा कार्या हि तस्य वै ।
गत्वा स प्रतिकूलश्च चकार यमशासनम् ॥ २१

तमाक्रम्यानयामास प्रतिषिद्धो यमेन यः ।
तस्मै यमः समुत्थाय पूजां कृत्वा स धर्मवित् ॥ २२

प्रोवाच नीयतामेष सोऽन्यस्त्वानीयतामिति ।
एवमुक्ते तु वचने धर्मराजेन स द्विजः ॥ २३

उवाच धर्मराजं तं निर्विण्णो गमनेन वै ।
यो मे कालो भवेच्छेषस्तं वसेयं त्वया सह ॥ २४

यमः—

गच्छ विप्र त्वमद्यैव निलयं स्वं महामुने ।
ब्रूहि बाढं यथास्वैरं करवाणि किमित्यलम् ॥ २५

ब्राह्मणः—

यत्कृत्वा सुमहत्पुण्यं स्वर्गः स्याद्ब्रूहि तन्मम ।
सर्वस्य त्वं प्रमाणञ्च धर्माधर्मविनिर्णये ॥ २६

यमः—

शृणु तत्त्वेन विप्रर्षे प्रधानविधिमुत्तमम् ।
तिलदानात्परं दानं न भूतं न भविष्यति ॥ २७

तिलं पवित्रमतुलं प्रवदन्ति मनीषिणः ।
तान् प्रयच्छति विप्रेभ्यो विधिदृष्टेन कर्मणा ॥ २८

वैशाख्यां पौर्णमास्यां वा अयने चोत्तरायणे ।
तिला भक्षयितव्याश्च सदात्मालम्भनं च [1]तैः ॥ २९

कार्यं सततमिच्छद्भिः श्रेयः सर्वात्मनात्र हि ।
तिला नित्यं प्रदातव्या यथाशक्ति द्विजर्षभ ॥ ३०

नित्यदानात्सर्वकामफला[2]न्निर्वर्तये [फलं निर्वर्तयेत्] पुनः ।
शृणु धर्मरहस्यं च यद्द्यात्कथयामि ते ॥ ३१

तिलाः पवित्रमतुलं मा तेऽभूदत्र संशयः ।
तिलेभ्यः प्राप्यते स्वर्गः स्वर्गान्मोक्षस्तथैव च ॥ ३२

तिलाश्च गावो विद्याश्च कन्यान्नं च वसुन्धरा ।
दत्तान्येतानि विधिवत् तारयन्ति महाभयात् ॥ ३३

---

1. ख. तौ 2. क. न्निर्वर्तयेत्

अत एव महाबुद्धे तिलदानं सदा कुरु ।

सूतः—

इति तद्वचनं श्रुत्वा ब्राह्मणोऽपि महायशाः ॥ ३४

भूमावागत्य विधिवत् तिलदानं चकार सः ।
तेन पुण्यप्रभावेण पुण्याँल्लोकानवा[1]प्तवान् ॥ ३५

तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी ।
तिलभुक् तिलदाता च षट्तिलाः पापनाशनाः ॥ ३६

असकृत् षट्तिलो भूत्वा सर्वपापविवर्जितः ।
समात्रिंशत्सहस्राणि स्वर्गे लोके महीयते ॥
तस्मात्सर्वप्रयत्नेन तिलदानं विशिष्यते ॥ ३७

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे तिलदानफल-
कथनं नाम सप्तत्रिंशोऽध्यायः

---

1. क. -प्नुयात्

## ॥ अष्टात्रिंशोऽध्यायः ॥

### अन्नदानफलकथनम्

सूतः—

सर्वेषामेव दानानामन्नदानं प्रशस्यते ।
योऽन्नं ददात्ययं प्राणान् ददाति हि शरीरिणाम् ॥ १

न दानेन न होमेन न जपध्यानपूजनैः ।
तदाप्नोति परं सत्यमन्नदानेन यद्भवेत् ॥ २

इह लोके परां कीर्तिममुत्र च परं सुखम् ।
अन्नदानादवाप्नोतीत्याह देव्यै सदाशिवः ॥ ३

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
श्रूयते भुवि नाभागः सोमवंशविवर्धनः ॥ ४

पालयन्नायतां भूमिं प्रतापाच्छान्तशात्रुकः ।
इतिहासपुराणानां श्रोता विद्याविशेषदृक् ॥ ५

ब्राह्मणानां हितकरः सर्वभूतानुकम्पनः ।
स सुश्राव महाभागो ब्राह्मणेभ्यो महायशाः ॥ ६

अन्नदानात्परं दानं नान्यदस्तीति भूसुराः ।
श्रुत्वान्नदानं परमं लोकद्वयसुखावहम् ॥ ७

महार्हेणान्नदानेन तोषयामास भूसुरान् ।
चतुर्विंशतिसाहस्रं ब्राह्मणानां दिने दिने ॥ ८

इच्छानुरूपैर्मृष्टान्नैर्भोजयामास सुव्रतः ।
एवंविधेप्सितैरन्नैः सर्वान् [1]प्राणयतो द्विजान् ॥ ९

अतीयाय महान् कालस्तस्य निस्सीमसम्पदः ।
एकदा तु द्विजः कश्चिद्गुणः शान्तः क्षुधान्वितः ॥ १०

---

1. क. प्रीणयतो

आशीर्भिरभिवर्ध्यैनं राजानमिदमब्रवीत् ।
राजन् श्रान्तोऽस्मि रुग्णोऽस्मि क्षुधा च मम वर्तते ॥ ११

अन्नमात्रमिदं देहि जलमुष्णं च दीयताम् ।
इत्याकर्ण्य वचस्तस्य द्विजस्य पृथिवीपतिः ॥ १२

यथाभिलषितं तस्य पूजयामास हृष्टधीः ।
स शुष्कान्नेन तेनैव स्वल्पेनोष्णेन वारिणा ॥ १३

आप्यायितेन्द्रियग्रामः सन्तुष्टो भूपमब्रवीत् ।

ब्राह्मणः—

परं तृप्तोऽस्मि राजेन्द्र क्षुधा शान्ता गतः श्रमः ॥ १४

लब्धेनान्नेन ते किञ्चिन्मनश्चापि समाहितम् ।
भूयादनन्यसामान्यं राजंस्ते सुमहत्फलम् ॥ १५

इति राजानमाशीर्भिः सन्तोष्य प्रययौ द्विजः ।
तस्मिन् द्विजवरे याते विचारमकरोन्नृपः ॥ १६

इयतैवान्नदानेन फलं मे सुमहत् किल ।
अन्नदानं तथाभीष्टं बहुकालं कृतं मया ॥ १७

ब्राह्मणेभ्यो महार्हेभ्यः कियद्वा तत्फलं भवेत् ।
एवं विचार्य विप्रेन्द्रानाजुहाव महीपतिः ॥ १८

आहूता ब्राह्मणास्सर्वे नाभागेन महाधिया ।
तेषां सहस्रमाभाष्य ब्राह्मणान् वेदपारगान् ॥ १९

तान् प्रशस्य च धर्मात्मा बभाषेऽन्तर्गतं तदा ।
मया दत्तेन यः कश्चिच्छुष्केणान्नेन यद् द्विजः ॥ २०

फलं ते महदस्तीति प्रोवाच गतकल्मषः ।
एकस्मै ब्राह्मणायैव दत्तमन्नं महाफलम् ॥ २१

अन्नदानं यथाभीष्टं असंख्येभ्यः कृतं मया ।
ब्राह्मणेभ्यः फलं तस्य कियद्वक्तुमिहार्हथ ॥ २२

निशम्य वचनं तस्य सर्वे ब्राह्मणपुङ्गवाः ।
इयत्तां न च निश्चेतुमन्नदानफलस्य ते ॥ २३

अशक्ता नो[शक्ता न चो]त्तरं तस्मै ददुरालोकिनो मिथः ।
किं जोषमास्यते विप्रा युस्माभिश्चा[1]श्रामान्वितैः ॥ २४

उदीर्याथ महीपालः पुनस्तानब्रवीत्तदा ।
मासावधि विचार्यार्थमिमं सम्यग्विचारितम् ॥ २५

ब्रूथ सर्वेऽपि संभूय जिज्ञासा महती हि मे ।
इत्युक्ता भूमिपालेन स्वं स्वं धाम समाययुः ॥ २६

तथेति प्रतिगृह्याज्ञां मिथश्चक्रुर्विचारणाम् ।
विमृशन्तोपि ते सर्वे शास्त्रेषु कृतनिश्चयाः ॥ २७

अन्नदानफलं शक्ता न निश्चेतुमियत्तया ।
मासेऽतीते पुनर्विप्रानाहूय क्षितिपोऽब्रवीत् ॥ २८

मम प्रश्नस्य निर्व्यूढिर्निश्चिता किं द्विजैरिति ।
मौनमुद्रा[2]मवष्टभ्य तथैवासन्मिथो द्विजाः ॥ २९

अथ राजा कथं यूयं संमताः शास्त्रदर्शिनः ।
इत्यु[3]क्तं कुरुते तावत्तत्र काचन बालिका ॥ ३०

मातृहीना स्वपित्रैव स्कन्धमारोप्य बालिका ।
प्राह त्रिवर्षदेशीया श्रृण्वतां च द्विजन्मनाम् ॥ ३१

बालिका—

राजन्नेते न जानन्ति वक्तुमर्थमिमं द्विजाः ।
यो जानाति तमाख्यास्ये श्रृणु युक्तेन चेतसा ॥ ३२

अवन्तीषु पुरी नाम्ना काचिदुज्जयिनीति या ।
तां गच्छ नृपतिश्रेष्ठ त्वमेकाकी धृताशयः ॥ ३३

यस्मिन्दिने प्रवेशस्ते भविता धरणीपते ।
तस्मिन्नेव पुरेशस्य राज्ञः पुत्रो भविष्यति ॥ ३४

स दास्यत्युत्तरं राजन् तव नान्योऽत्र विद्यते ।
इत्युक्त्वा पुनरेवास्ते मौनमालम्ब्य बालिका ॥ ३५

---

1. क. -श्रया- 2. क. -विनष्टभ्य 3. क. -क्तिं

बालिकावचनेनासन् सर्वे विप्राः सविस्मयाः ।
राजापि विस्मयाविष्टो बभूवाश्चर्यदर्शनात् ॥ ३६

यूयं गच्छत विप्रेन्द्रा इति सर्वानुदीर्य सः ।
यातेषु तेषु सचिवे निक्षिप्य निखिलां धुरम् ॥ ३७

एकाकी निर्ययौ तूर्णमुज्जयिन्यां कुतूहली ।
स खड्गपाणिर्युक्तात्मा नृपो धैर्यवतां वरः ॥ ३८

तांस्तान् देशान् बहून् पश्यन् सुखान्यविगणय्य च ।
आर्तः श्रमेण क्षुधया भूयस्या च पिपासया ॥ ३९

अजानन् प्रहतं मार्गमरण्यं प्रविवेश सः ।
तत्रासौ सरितो बह्वीः समुत्तीर्य प्रयत्नतः ॥ ४०

आरुह्य परुषान् शैलानुल्लङ्घ्य विषमस्थलीः ।
स बहून् दिवसानेवं बभ्राम च ततस्ततः ॥ ४१

कदाचिद्गहने तत्र वसन्तमतिभीषणम् ।
ददर्श विकृताकारं सभार्यं रजनीचरम् ॥ ४२

स नाम्ना तालजंघो हि सर्वलोकेऽपि विश्रुतः ।
प्रकृत्या दारुणः पापः सर्वभूतभयप्रदः ॥ ४३

दृष्ट्वा राजानमायान्तं सुचिरात् क्षुधयार्दितः ।
उच्छ्वसन्निव हर्षेण राक्षसीमिदमब्रवीत् ॥ ४४

अग्निदंष्ट्रे महद्भाग्यमस्माकं समुपस्थितम् ।
प्रसन्नेन विधात्राद्य दत्ता शोणितपारणा ॥ ४५

इदानीमेव हन्म्येनं खड्गेनानेन मानुषम् ।
पाकं कुरु यथाहं मे येन तृप्तिं व्रजाम्यहम् ॥ ४६

इत्युक्त्वा सुकुमाराङ्गं राजानं वीक्ष्य राक्षसी ।
तदा केनापि भावेन कृपार्द्रहृदयावदत् ॥ ४७

हस्ताभ्याशे निपतितः क्व यास्यत्येष मानुषः ।
त्वं गच्छ मृगयां कर्तुमनुतिष्ठामि ते वचः ॥ ४८

इति भार्यावचः श्रुत्वा स तथेति ययौ बली ॥
सा श्रुत्वा नृपवृत्तान्तं तन्मुखेनैव राक्षसी ॥ ४९

पुनरार्द्रमना भूत्वा तं निक्षिप्य गुहान्तरे ।
पुरैव संभृतं मांसं गृहे तत्र कृतादरा ॥ ५०

ऊर्जितं रसवत्कृत्वा तस्थौ भर्त्रागमोन्मुखी ।
तावत्कृत्वा स मृगयां निहत्य प्राणिनो बहून् ॥ ५१

दक्षः श्रान्तः क्षुधायुक्तः स्वस्थानं पुनरागमत् ।
आनीतं सर्वमादाय तस्य हस्तान्निशाचरी ॥ ५२

सोपचारमुखी तैस्तैरुपचारैरतोषयत् ।
सरसाहारसन्तुष्टो मध्ये तामाजुहाव सः ॥ ५३

[1]अद्य सार्धं मया भुङ्क्ष्व रसवत्पक्वमद्य हि ।
इत्याकर्ण्य वचस्तस्य निराहारं महीपतिम् ॥ ५४

चिन्तयन्ती स्वमनसा राक्षसं प्रत्यभाषत ।
कान्त भुङ्क्ष्व यथार्हं त्वं भुक्तशेषं ददस्व मे ॥ ५५

भर्तुः प्रसादः स्त्रीणां हि सर्वदापि प्रशस्यते ।
इति तद्वचसा हृष्टः स भूयोऽपि निशाचरः ॥ ५६

भुक्त्वा क्षुर्धातः सुष्वाप संवाहितपदस्तया ।
सुप्तं ज्ञात्वाथ भर्तारमार्द्रचित्ता निशाचरी ॥ ५७

शरीरमतिमात्रं त्वं पिधेहीत्यब्रवीन्नृपम् ।
राजा रक्षोव्यवसिताद्बहुमानादतः परम् ॥ ५८

कर्तव्यं नास्त्यतो भद्रे तुष्टोऽहं पुण्यदर्शने ।
किञ्चात्र [2]योगं पश्यामि नान्यं राक्षसवेश्मनि ॥ ५९

क्षुधा गता पिपासा च [3]प्रशान्ता तव दर्शनात् ।
विषवृक्षवने सा त्वं दृष्टा सञ्जीविनी लता ॥ ६०

---

1. क. आस्व  2. क. योग्यं  3. क. पिपासा

इत्युक्ता सा प्रविश्यान्तर्गृहीत्वा वेणुतण्डुलान् ।
प्रसृतित्रयमात्रेण संमिश्रान् मधुना च तान् ॥ ६१

राजन् योग्यस्तवाहार इति तस्मै न्यवेदयत् ।
अनुल्लङ्घ्यगिरं मत्वा तां राजा श्रमकर्शितः ॥ ६२

आहारमकरोद्धीमान् मध्वक्तान् वेणुतण्डुलान् ।
सा च तस्मिन् कृताहारे प्रसन्नहृदये नृपे ॥ ६३

स्वभर्तृभुक्तशेषं यत् तदभुङ्क्त शुभाशया ।
तावत्सुप्तोत्थितं तत्र तालजङ्घं तमाह सा ॥ ६४

राक्षसी—

पुरुषोऽसौ मम भ्राता कनीयान् रक्षितो मया ।
स्कन्धमारोप्य चैनं त्वमवन्तीं मद्गिरा नय ॥ ६५

ततस्तं प्रत्यभिज्ञानमादाय विहितं मया ।
आगच्छ पुनरेवात्र यथा मे प्रीतिरस्ति वै ॥ ६६

इत्येवं स तया प्रोक्तमनुल्लङ्घ्यममन्यत ।
प्रकृत्यैव तमोरूपा स्त्रीप्रधाना हि राक्षसाः ॥ ६७

ततस्तं स्कन्धमारोप्य जगामाकाशवर्त्मना ।
स गत्वा दूरमध्वानं गाढं श्रान्तो बुभुक्षया ॥ ६८

अवरोप्य च राजानं स्कन्धात्क्वापि वनस्थले ।
तत्र व्यापादितैर्हिंस्रैस्तृप्तः पीत्वा सरोजलम् ॥ ६९

निपात्य तत्र गात्राणि सुष्वाप भयवर्जितः ।
राजापि फलमूलाद्यैस्तुष्टस्तत्र चचार ह ॥ ७०

क्षणेऽस्मिन् सुमहान्व्याघ्रः साक्षादन्तकसन्निभः ।
निहत्य राक्षसं तत्र पपौ तच्छोणितं बहु ॥ ७१

न ददर्श तु राजानं वृक्षान्तरितविग्रहम् ।
अथ प्रयाते शार्दूले राक्षसासृङ्मदोद्धते ॥ ७२

राजायं किञ्चि[1]दालम्ब्य पन्थानं प्रययौ जवात् ।
ततो भ्राम्यन् वनोद्देशेष्वेकाकी निश्चिताशयः ॥ ७३

कालेन बहुना राजा जगामोज्जयिनीं पुरीम् ।
प्रवेशसमये तत्र श्रूयते स्म महाध्वनिः ॥ ७४

वीणावेणुरवोन्मिश्रस्तूर्यनादपुरस्कृतः ।
नादवादित्रसंघुष्टः पुरवीथीषु सर्वदा ॥ ७५

उत्सवोद्योतकं श्रुत्वा ध्वनिं पूरितदिङ्मुखम् ।
क एष इति शुश्राव नृपतिः [2]संमुखागतम् ॥ ७६

वर्षीयसः कुमारोऽभूद्विमोरुज्जयिनीपतेः ।
तेनायमुत्सवो भूयानित्यूचुस्ते मुदान्विताः ॥ ७७

राजापि बालिकावाक्यं सप्रश्रयमुदारधीः ।
भावयन् ब्राह्मणेष्वेको भूत्वा राजगृहं ययौ ॥ ७८

पुत्रजन्मप्रहृष्टेन तत्र राज्ञा महाधिया ।
दीयमानानि दानानि सुमहान्ति ददर्श तम् [सः] ॥ ७९

सर्वैरादीयमानेषु बहुधा तेषु वै द्विजैः ।
द्वारवेदीमवष्टभ्य तस्थौ राजा द्विजाकृतिः ॥ ८०

धनानि वर्षति क्ष्मापे तूष्णीं किं स्थीयते त्वया ।
इत्युक्तोऽपि द्विजैस्तेभ्यो नोत्तरं दत्तवानसौ ॥ ८१

सर्वेष्वेवात्तदानेषु निर्गतेषु द्विजातिषु ।
द्वाःस्थैरभ्यर्थितोऽप्येष तथैवास्त विनिश्चलः ॥ ८२

प्रतिहाराः प्रविश्यान्तस्ते भूपाय न्यवेदयन् ।
दानानपेक्षी विप्रेन्द्रो द्वारि कश्चन तिष्ठति ॥ ८३

इत्याकर्ण्य वचस्तेषां त्वरयोज्जयिनीपतिः ।
समुत्थायागतस्तत्र यत्र विप्राकृतिर्नृपः ॥ ८४

---

1. क. दुल्लङ्घ्य 2. क. स्वसुखागमत्

राजा—

द्विजेन्द्र वर्तमानेषु दानेष्वत्र महत्सु वै ।
तिष्ठस्युदासितैव त्वं कस्ते भाव इहोच्यताम् ॥ ८५

नाभागः—

न दानेषु स्पृहा राजन् मम सम्प्रति वर्तते ।
क्रियते यदि वाक्यं मे ततो वक्ष्यामि[म्य]शङ्कितम् ॥ ८६

निश्शङ्कं वद ते वाक्यं करोमीत्याह भूपतिः ।
कुमारं दर्शयाद्येति नाभागोऽप्यब्रवीत्तदा ॥ ८७

ततस्तस्य प्रधानाश्च सुहृदो बान्धवा अपि ।
सम्भूय सर्वे राजानमवोचन्नाकुलाशयाः ॥ ८८

कोऽयं किं वा मतं केन प्रेरितो वा समागतः ।
इत्यज्ञात्वा कुमारोऽसौ विभो नास्मै प्रदर्श्यताम् ॥ ८९

कुमारस्ते समुत्पन्नः प्रजानां भाग्यगौरवात् ।
सुचिरेणैव कालेन तद्विचारे मतिं कुरु ॥ ९०

चरन्ति राक्षसा राजँल्लोके मानुषकञ्चुकाः ।
कः केन पार्यते ज्ञातुं दैवस्य कुटिला गतिः ॥ ९१

इति तेषां वचः श्रुत्वा तान् प्रत्याह महीपतिः ।
अकृत्रिमोऽयं भव्यात्मा न पिशाचो न राक्षसः ॥ ९२

प्रमाणमन्तःकरणं प्रत्याययति मामिह ।
मायावी राक्षसोऽयं चेत्केन वात्र निवार्यते ॥ ९३

तस्मात्प्रदर्शयाम्यद्य कुमारं गतसंशयः ।
कस्य प्रयोजनं केन स [1]तदस्मादवाप्नुयात् ॥ ९४

इत्युक्त्वा तं प्रवेश्यान्तस्तस्मै पुत्रमदर्शयत् ।
स शिशुः सहसोत्थाय तं दृष्ट्वा प्राह सम्मुखः ॥ ९५

---

1. क. तत्तस्माद-

आगतोऽसि महाभाग नाभागेत्यब्रवीद्वचः ।
सर्वेषु विस्मयाविष्टेष्वन्तःपुरनिवासिषु ॥ ९६

शिशुर्महानिवाभाष्य नाभागं पुनरब्रवीत् ।
अहं जानामि राजेन्द्र त्वदागमनकारणम् ॥ ९७

वक्ष्यामि शृणु धर्मज्ञ भावयुक्तेन चेतसा ।
अन्नदानफलं ज्ञातुमवाप्तोऽसीह मन्मुखात् ॥ ९८

तत्सहस्रमुखेनापि वक्तुं न खलु शक्यते ।
तथापि किञ्चिद्वक्ष्यामि स्वानुभूतं महीपते ॥ ९९

मन्मुखादिममर्थं त्वं विज्ञातुं बालिकागिरा ।
आगच्छन्नटवीं घोरां प्रविष्टो हि पथश्च्युतः ॥ १००

अग्निदंष्ट्रा तथैवैका त्वामालोक्य निशाचरी ।
रक्षित्वा राक्षसाद्भर्तुस्तस्यां निशि [1]यताशय ॥ १०१

क्षुधार्ताय ददौ तुभ्यमादराद्वेणुतण्डुलान् ।
समार्जितान् [2]स्वभक्त्यैव प्रसृतित्रयमात्रतः ॥ १०२

आहारेण च तेन त्वं प्रीतियुक्तेन हृष्टधीः ।
ततः स्वभार्यावचनादावहं[3]स्त्वां निशाचरः ॥ १०३

[4]श्रान्तः क्वचिद्वने सुप्तो व्याघ्रेण विनिषूदितः ।
स एवाहं कुमारोऽद्य जातोऽस्म्युज्जयिनीपतेः ॥ १०४

वेणुतण्डुलदानस्य भार्यादत्तस्य वैभवात् ।
क्षुद्रमन्नं परं स्त्री सा न जानामि कृतं तया ॥ १०५

तथाप्यस्यास्तस्य दानात्प्राप्तोऽहं राजपुत्रताम् ।
तत्त्वं प्रथमगण्योऽसि भूपानां पुण्यकर्मणाम् ॥ १०६

विज्ञातधर्मतत्त्वार्थः प्रजानां पालने रतः ।
यथाभिरक्षितैरन्नैर्बहुकालं दिने दिने ॥ १०७

---

1. क. यताशया
2. क. स भक्त्यैव
3. क. -स्त्वा
4. ख. भ्रातः

चतुर्विंशतिसाहस्रं ब्राह्मणान् प्रीणय[1]स्थलम् ।
त्वमेव पश्य राजेन्द्र कियत्तत्र फलन्त्विति ॥ १०८

इत्युक्त्वा शैशवं भावमालम्ब्य स रुरोद ह ।
नाभागोऽप्यन्नदानस्य माहात्म्यं सनिदर्शनम् ॥ १०९

श्रुत्वा शिशोर्मुखात्तुष्टो विस्मयाविष्टमानसः ।
तेन च ज्ञातवृत्तेन राज्ञा [2]भूपः सभाजितः ॥ ११०

अवन्तीशेन मुदितः स्वपुरीं पुनरागमत् ।
आहूय सचिवांस्तेभ्यः स्ववृत्तान्तं निवेद्य च ॥ १११

प्रशस्यमानस्तैर्हृष्टैः पालयामास मेदिनीम् ।
तदाप्रभृति सर्वेषु दानेष्वपि महीपतिः ।
अन्नदानं परं चक्रे सर्वसिद्धिप्रदायकम् ॥ ११२

सूतः—

तस्मात्सकलसिद्धीनां कारणं परमं विदुः ।
अन्नदानं महाभाग सर्वशास्त्रेषु निश्चितम् ॥ ११३

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे अन्नदानफल-
कथनं नाम अष्टात्रिंशोऽध्यायः

---

1. क. -स्थलम्          2. क. भूयः

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

### गोदानमाहात्म्यकथनम्

सूतः—

गोदानस्य च महात्म्यं प्रवक्ष्यामि महीसुराः ।
पुंसां श्रवणमात्रेण सद्यः सर्वार्थसिद्धिदम् ॥ १

अज्ञाः पापरताश्चापि धर्माधर्म[धर्मा]विवेकिनः ।
यदि कुर्वन्ति गोदानं ते यान्ति परमां गतिम् ॥ २

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
भार्गवश्च्यवनो नाम महर्षिः सुमहातपाः ॥ ३

बहुवर्षसहस्राणि उपवासपरोऽभवत् ।
गङ्गायमुनयोर्मध्ये कामक्रोधादिवर्जितः ॥ ४

तं गङ्गा यमुना चैव सरितश्चानुगास्तथा ।
प्रदक्षिणमिमं चक्रुर्न चैनं पर्यपीडयन् ॥ ५

तत्रास्य वसतः कालः समतीतो महांस्ततः ।
परेण ध्यानयोगेन स्थाणुभूतस्य तिष्ठतः ॥ ६

ततः कदाचित्तं देशमागता मत्स्यजीविनः ।
प्रसार्य सुमहज्जालं सर्वे च चक्रुषुर्बलात् ॥ ७

अथ तैः सह मत्स्यैश्च निषादा बलगर्विताः ।
तस्मादुत्तारयामासुः सलिलाद्भृगुनन्दनम् ॥ ८

तं दृष्ट्वा तेऽपि कैवर्ता भयविह्वलचेतसः ।
शिरोभिः प्रणिपत्योर्व्यामिदं वचनमब्रुवन् ॥ ९

कैवर्ताः—

अज्ञानात्कृतपापानामस्माकं क्षन्तुमर्हसि ।
किं कुर्मस्ते प्रियं चाद्य तदाज्ञापय सुव्रत ॥ १०

सूतः—

स मुनिस्तन्महद्दृष्ट्वा मत्स्यानां कदनं कृतम् ।
कृपया परयाविष्टस्तानुवाच सुदुःखितः ॥ ११

स्वकृतं विक्रियं चैव मत्स्यैर्यास्याम्यसंशयम् ।
संवसन्नोत्सहे त्यक्तुं मीनानेतान् सुदुःखितान् ॥ १२

केवलात्मसुखेच्छो यः स नृशंसतमो मतः ।
अहो [1]सत्त्वेषु कारुण्यमात्मार्थं हितमिच्छताम् ॥ १३

ज्ञानिनामपि यच्चैषां केवलात्महितैषिणाम् ।
सत्त्वास्संसारदुःखार्ताः कं यान्ति शरणं तदा ॥ १४

को नु स स्यादुपायो हि सत्त्वानां दुःखितात्मनाम् ।
अन्तः प्रविश्य सत्त्वानां भवेयं दुःखभाक् सदा ॥ १५

दृष्ट्वा तु बधिरान् व्यङ्गाननाथान् रोगिणस्तथा ।
दया न जायते यस्य मूढः स इति मे मतिः ॥ १६

प्राणसंशयमापन्नान् प्राणिनो भयविह्वलान् ।
यो न रक्षति शक्तस्सन् स पापां गतिमाप्नुयात् ॥ १७

अपहृत्यार्तिमार्तानां सुखं यदुपजायते ।
तस्य स्वर्गोऽपवर्गो वा कलां नार्हति षोडशीम् ॥ १८

तस्मान्नैनानहं दीनांस्त्यक्ष्ये मीनान् सुदुःखितान् ।
ब्रह्मणोऽपि पदं यास्ये किमत्र त्रिदशालये ॥ १९

सूतः—

एवं निशम्य वचनं निषादा जातसम्भ्रमाः ।
गत्वा यथावत्तत्सर्वं नहुषाय न्यवेदयन् ॥ २०

नहुषोऽपि ततः श्रुत्वा विस्मयाविष्टचेतनः ।
आजगाम त्वरायुक्तः स्वसैन्यपरिवारितः ॥ २१

---

1. क. सत्त्वेष्वका-

नहुषः—

कोऽसावत्यद्भुताकारो जलवासमकल्पयत् ।
इति सञ्चिन्त्य धर्मात्मा धर्मभक्तिसमन्वितः ॥ २२

भयेन च समाविष्टो मुनिप्रवरशङ्कया ।
विसृज्य सेनां तत्रैव राजा लघुपरिच्छदः ॥ २३

त्वरितं प्रययौ तत्र सामात्यस्सपुरोहितः ।
तं दृष्ट्वा सूर्यसङ्काशं च्यवनं संशितव्रतम् ॥ २४

ध्यात्वा भार्गवमेकाग्रध्यानयोगपरायणम् ।
तं पूजयित्वा विधिवद्देवकल्पं नरेश्वरः ॥ २५

प्रोवाच भगवन् ब्रूहि किं करोमि तवाज्ञया ।

च्यवनः—

श्रमेण महता युक्ताः कैवर्तास्तु सुदुःखिताः ॥ २६

मम मूल्यं प्रयच्छैभ्यो यथावद्राजसत्तम ।
यथामूल्यप्रदानेन मत्स्यसाधर्म्यमास्थितः ॥ २७

येभ्यो मूल्यं यथाकामं मरिष्ये वाथवान्यथा । ?
यथामूल्यप्रदानेन करोम्यात्मविमोक्षणम् ।
तथा मीनांश्च रक्षामि तन्मे मनसि निश्चितम् ॥ २८

नहुषः—

सहस्राणां शतं मूल्यं निषादेभ्यः प्रदीयताम् ।
विक्रयार्थं भगवतो यथार्हं भृगुनन्दन ॥ २९

च्यवनः—

नाहं शतसहस्रेण नियम्यः पार्थिव त्वया ।
सदृशं दीयतां मूल्यममात्यैः सह चिन्तया ॥ ३०

नहुषः—

कोटिः प्रदीयतां मूल्यं निषादेभ्यः प्रणिश्चितम् ।
यदेतदपि नो मूल्यं ततो भूयः प्रदीयताम् ॥ ३१

च्यवनः—

आत्ममूल्यं न वक्तव्यं न तं लोकः प्रशंसति ।
तस्मान्नाहं प्रवक्ष्यामि न चात्मस्तुतिमुत्सहे ॥ ३२

नाहमर्हामि कोटिं वाप्यधिकं वापि [1]पार्थिव ।
सदृशं दीयतां मूल्यं ब्राह्मणैः सह चिन्तया ॥ ३३

अर्धराज्यं समस्तं वा निषादेभ्योऽथ दीयताम् ।
एतन्मूल्यमहं मन्ये ऋषिभिः सह चिन्तया ॥ ३४

च्यवनस्य वचः श्रुत्वा नहुषो भृशदुःखितः ।
चिन्तयामास शोकार्तः सहामात्यपुरोहितैः ॥ ३५

गत्वा तत्र ऋषिः कश्चिदविज्ञातो महातपाः ।
प्रोवाच नहुषं वाग्भिस्तोषयिष्याम्यहं मुनिम् ॥ ३६

नहुषः—

ब्रवीतु भगवन् मूल्यं मुनेरस्य महात्मनः ।
परित्रायस्व चास्माकं विषयांश्च कुलं च मे ॥ ३७

हन्याद्वंशमपि क्रुद्धस्त्रैलोक्यं चापि शाश्वतम् ।
किं पुनर्मां तपोहीनं बाहुवीर्यपरायणम् ॥ ३८

मुनिः—

अनर्घ्या वै [2]महावीर्या जगत्पूज्या द्विजोत्तमाः ।
गावः सवत्सास्तस्माद्गोमूल्यमस्य प्रदीयताम् ॥ ३९

तच्छ्रुत्वा च्यवनं राजा सहामात्यपुरो[3]हितः ।
हर्षेण च समाविष्टः प्रोवाचेदं वचो मुनिम् ॥ ४०

नहुषः—

उत्तिष्ठोत्तिष्ठ विप्रर्षे गवा क्रीतोऽसि भार्गव ।
एतन्मूल्यमहं मन्ये तव धर्मभृतां वर ॥ ४१

च्यवनः—

उत्तिष्ठाम्येष राजेन्द्र सम्यक् क्रीतोऽस्मि ते नृप ।
गोभिस्तुल्यं न पश्यामि पवित्रं पावनं भुवि ॥ ४२

---

1. क. पार्थिवे 2. ख. महावीर्य जगत्पूजा 3. क. हितैः

गावः प्रदक्षिणीकार्या वन्दनीयाश्च नित्यशः ।
मङ्गल्याश्चैव गोदेव्यः सृष्टा याश्च स्वयम्भुवा ॥ ४३

अग्न्यगाराणि विप्राणां देवतायतनानि च ।
पूयन्ते शकृता येषां किं भूतमधिकं ततः ॥ ४४

गोमूत्रं गोमयं क्षीरं दधि सर्पिस्तथैव च ।
गवां पञ्च पवित्राणि पुनन्ति सकलं जगत् ॥ ४५

गावो ममाग्रतो नित्यं गावः पृष्ठत एव वा ।
गावो मे हृदये चैव गवां मध्ये वसाम्यहम् ॥ ४६

एवं नरो जपेन्मन्त्रं त्रिसन्ध्यं नियतः शुचिः ।
विमुक्तः सर्वपापेभ्यः स्वर्गलोकं स गच्छति ॥ ४७

तेनाग्नयो हुताः सम्यक् पितरश्चापि पूजिताः ।
शीतवर्षातपत्राणं यः कुर्याच्छरणं गवाम् ॥ ४८

सर्वदुःखविनिर्मुक्तः सुखमत्यन्तमश्नुते ।
[1]घासमुष्टिं परगवे यो दद्यान्नियतः सदा ॥ ४९

अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति ।
देवाश्च पूजिताः सर्वे यः करोति गवां हितम् ॥ ५०

आदौ गावो हि यज्ञस्य मध्ये चान्ते च रक्षकाः ।
तासां देयं गवां क्षीरमाज्यं च मुनयोऽब्रुवन् ॥ ५१

तस्माद्गावः प्रदातव्याः पूजनीयाश्च यत्नतः ।
स्वर्गस्य ब्रह्मणा ह्येताः सोपानाय विनिर्मिताः ॥ ५२

प्रासादा यत्र सौवर्णाः सदा रत्नोज्ज्वलास्तथा ।
वराश्चाप्सरसस्तत्र यत्र गच्छन्ति गोप्रदाः ॥ ५३

सम्प्राप्य भारतं खण्डं मानुषं जन्म चोत्तमम् ।
ददाति यो नरो धेनुं स तु मार्ताण्डमण्डलम् ॥ ५४

---

1. क. समुद्दिष्टं

भित्त्वा याति विमानेन सेव्यमानो गवादिभिः ।
अमृतं वै गवां क्षीरमित्युवाच प्रजापतिः ॥ ५५

तस्माद्ददाति यो धेनुममृतत्वं स गच्छति ।
एतच्छ्रुत्वा निषादास्ते गवां माहात्म्यमुत्तमम् ।
प्रणिपत्य महात्मानं ततस्तमृषिमब्रुवन् ॥ ५६

निषादाः—

संभाषा दर्शनं स्पर्शः कीर्तनं स्मरणं तथा ।
पावनानीति चैतानि साधूनामिति शुश्रुम ॥ ५७

संभाषा दर्शनं स्पर्शः सहास्माभिः कृतं त्वया ।
प्रसीद भगवंस्तस्माद्गौरेषा प्रतिगृह्यताम् ॥ ५८

च्यवनः—

गामेतां प्रतिगृह्णामीत्युक्त्वा च [1]पुनरब्रवीत् ।
कैवर्ता गच्छत स्वर्गं मत्स्यैः सार्धं जलोद्धृतैः ॥ ५९

ततो धेनुप्रदानेन मुनये भावितात्मने ।
निषादाः किल्बिषं त्यक्त्वा सह मत्स्यैर्दिवं गताः ॥ ६०

तस्माद्गौर्येन केनापि पात्रे तु प्रतिपादिता ।
कुलान्युत्तारयेत्तस्य सप्त सप्त च सप्त च ॥ ६१

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे गोदानमाहात्म्य-
कथनं नाम एकोनचत्वारिंशोऽध्यायः

1. क. मुनि-

## ॥ चत्वारिंशोऽध्यायः ॥

### भूमिदानमाहात्म्यकथनम्

सूतः—

[1]सर्वेषामेव दानानां भूमिदानं प्रशस्यते ।
तस्मात्सर्वप्रयत्नेन भूमिं दद्याद्द्विजातये ॥ १

भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति ।
तावुभौ पुण्यकर्माणौ स्वर्गभोगांश्च विन्दतः ॥ २

अनेकसस्यसम्पूर्णां फलवृक्षसमन्विताम् ।
यो ददाति महीं भक्त्या स याति ब्रह्मणः पदम् ॥ ३

अत्र वः कथयिष्यामि इतिहासं पुरातनम् ।
प्रोक्तं वाक्पतिना पूर्वं महेन्द्राय महात्मने ॥ ४

बृहस्पतिः—

अस्ति मालवदेशे तु कस्मिंश्चिद्गहने वने ।
सुमहान् शाल्मलीवृक्षः शाखाभिरुपशोभितः ॥ ५

निवसन्ति च तच्छाखोपशाखासु मदान्विताः ।
शुका निजनिजोत्क्षिप्तपक्षश्यामलितान्तराः ॥ ६

तेषां गरुत्प्रभाजालैस्तुण्डांशुनिचयैरपि ।
सदा पुष्पफलाढ्येव सा चकास्ति वनस्थली ॥ ७

तत्रास्ते विटपे क्वापि ताम्रतुण्डाह्वयः शुकः ।
पोषयन् पोष्यवर्गं स्वं नीवारकलमादिभिः ॥ ८

---

1. क. पुस्तके इतश्चत्वारः श्लोका: न सन्ति

धान्यैरधस्तमुद्देशं कृत्वा स्वविषयं सदा ।
दीयमानेषु धान्येषु स्वशाबानां मुखान्तरे ॥ ९

पतन्ति तान्यधोभूमौ गलितान्यन्तरान्तरा ।
कदाचिद्वर्षयोगेन प्ररोहन्ति स्म तान्यपि ॥ १०

पृथुस्तम्बप्रतानानि कालेन फलितान्यपि ।
एतस्मिन्नन्तरे कापि क्षुत्पिपासासमन्विता ॥ ११

उपाजगाम गौः श्रान्ता भ्रमन्ती च ततस्ततः ।
अन्वेषयन्ती सर्वत्राप्यलब्धतृणसञ्चया ॥ १२

सा तानि फलसस्यानि दृष्ट्वा हर्षमुपागता ।
शुकचञ्च्वग्रगलितप्ररूढफलितान्यपि ॥ १३

अथ जग्ध्वा यथाकामं तानि सस्यफलानि सा ।
प्रहृष्टा गलितश्रान्तिर्जगाम च यथागतम् ॥ १४

तज्जग्धशेषान् व्याकीर्णान् यवान् किल इतस्ततः ।
उञ्छवृत्तिर्द्विजोऽप्यादात् पञ्च यज्ञांश्च तैर्व्यधात् ॥ १५

ततः कालेन महता ताम्रतुण्डो महाशुकः ।
भुक्त्वा यथोचितान् भोगान् कालधर्ममुपेयिवान् ॥ १६

ततः स पुण्ययोगेन वैश्यानामुत्तमे कुले ।
धनिको नाम धर्मात्मा स शुकः समजायत ॥ १७

महाजनपरीवारो महाविभवसंयुतः ।
महायशा महातेजाः सोऽभूत्सांयात्रिकेश्वरः ॥ १८

स धनं च महद्दत्त्वा क्रीत्वा बह्वीर्भुवः कृती ।
फलाढ्यास्ता द्विजेन्द्रेभ्यो नित्यं जातिस्मरो ददौ ॥ १९

पुत्रपौत्राभिसंयुक्तः पुण्येन महतामुना ।
भुक्त्वा सर्वोत्तरान् भोगान् कृत्वा भूदानमुत्तमम् ॥ २०

जगाम वैष्णवं लोकं पुनरावृत्तिवर्जितम् ।
एवमज्ञानतस्तस्य शुकस्य वदनाच्च्युतैः ॥ २१

धान्यैः स्वविषयोद्भूतैस्तुष्टायां गवि च द्विजे ।
तं दृष्ट्वा तादृशं मुक्तिं सदशः[स शुक्रः]प्रत्यपद्यत ॥ २२

किं पुनर्ज्ञानपूर्वं तु भूदाने विहिते हरे ।
वेत्ति तस्य फलं वक्तुं देवो विश्वाधिकः शिवः ॥ २३

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे भूमिदानमाहात्म्य-
कथनं नाम चत्वारिंशोऽध्यायः

## ॥ एकचत्वारिंशोऽध्यायः ॥

### कन्यादानफलकथनम्

सूतः—

अतः परं प्रवक्ष्यामि कन्यादानफलं द्विजाः ।
यस्य श्रवणमात्रेण तत्फलं याति मानवः ॥ १

सहस्रमेव धेनूनां शतं चानडुहां समम् ।
दशानडुत्समं यानं दशयानसमो हयः ॥ २

दशवाजिसमा कन्या भूमिदानं च तत्समम् ।
सर्वेषामेव दानानां कन्यादानं विशिष्यते ॥ ३

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
आसीन्महर्षिः श्रुतवान् मन्दपाल इति श्रुतः ॥ ४

धर्मज्ञानां मुख्यतमस्तपस्वी संशितव्रतः ।
सर्वज्ञानां स्थितो विप्रा ऋषीणामूर्ध्वरेतसाम् ॥ ५

स्वाध्यायवान् कर्मरतस्तपस्वी विजितेन्द्रियः ।
गत्वा च तपसः पारं देहमुत्सृज्य भूसुराः ॥ ६

जगाम पितृलोकाय न लेभे तत्र तत्फलम् ।
स लोकानखिलान् दृष्ट्वा तपसा निर्जितानपि ॥ ७

[1]पप्रच्छ धर्मराजस्य समीपस्थान् दिवौकसः ।

मन्दपालः—

किमर्थमावृता लोका ममैते तपसा जिताः ॥ ८

किं मया न कृतं तत्र यस्येदं कर्मणः फलम् ।
तत्राहं तत्करिष्यामि यदर्थमिदमावृतम् ॥ ९

---

1. क. प्रयच्छ

फलमेतस्य तपसः कथयध्वं दिवौकसः ।

देवाः—

ऋणिनो मानवा ब्रह्मन् जायन्ते येन तच्छृणु ॥ १०

ब्रह्मचर्येण यज्ञेन प्रजया च न संशयः ।
तदपाक्रियतां सर्वं यज्ञेन तपसा सुतैः ॥ ११

तपस्वी यज्ञकृच्चासि न तु ते विद्यते प्रजा ।
तस्य ते प्रसवस्यार्थे तपोलोकाः समावृताः ॥ १२

प्रजायस्व तपोलोकानुपभोक्तासि शासनात् ।
पुंनाम्नो नरकात्पुत्रस्त्रायते पितरं मुने ॥ १३

तस्मादपत्यसन्ताने यतस्व द्विजसत्तम ।

सूतः—

तच्छ्रुत्वा मन्दपालस्तु तेषां वाक्यं दिवौकसाम् ॥ १४

क्व नु शीघ्रमपत्यं स्याद्बहुलं चेत्यचिन्तयत् ।
सञ्चिन्तयन्नभ्यगच्छद्बहुलप्रसवान् खगान् ॥ १५

शार्ङ्गिकां शार्ङ्गिको भूत्वा जरितां समुपेयिवान् ।
तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिनः ॥ १६

जरितारिं स्तम्बमित्रं द्रोणं च सुमहामतिम् ।
शारीसृपं च नाम्ना तान् कृत्वा कृत्यविदां वरः ॥ १७

उपदिश्य परं ज्ञानं तेभ्यो ब्रह्मविदां वरः ।
तानपास्य च तत्रैव सह मात्रा वनं ययौ ॥ १८

जरितारिप्रभृतयः पुत्रा ब्रह्मविदो मुनेः ।
स्तुत्वा स्वेन प्रभावेण वह्निं खाण्डवदाहिनम् ॥ १९

तस्मादुपप्लवान्मुक्ता बभूवुर्दीप्ततेजसः ।
मन्दपालोऽपि धर्मात्मा मुनीनामुत्तमोत्तमः ॥ २०

ये सन्ति पुत्रिणां लोकास्तेषु तेषु च सञ्चरन् ।
अजैषीदावृताँल्लोकान् भोगांश्च बुभुजे बहून् ॥ २१

धान्यैरधस्तमुद्देशं कृत्वा स्वविषयं सदा ।
दीयमानेषु धान्येषु स्वशाबानां मुखान्तरे ॥ ९

पतन्ति तान्यधोभूमौ गलितान्यन्तरान्तरा ।
कदाचिद्वर्षयोगेन प्ररोहन्ति स्म तान्यपि ॥ १०

पृथुस्तम्बप्रतानानि कालेन फलितान्यपि ।
एतस्मिन्नन्तरे कापि क्षुत्पिपासासमन्विता ॥ ११

उपाजगाम गौः श्रान्ता भ्रमन्ती च ततस्ततः ।
अन्वेषयन्ती सर्वत्राप्यलब्धतृणसञ्चया ॥ १२

सा तानि फलसस्यानि दृष्ट्वा हर्षमुपागता ।
शुकचञ्च्वग्रगलितप्ररूढफलितान्यपि ॥ १३

अथ जग्ध्वा यथाकामं तानि सस्यफलानि सा ।
प्रहृष्टा गलितश्रान्तिर्जगाम च यथागतम् ॥ १४

तज्जग्धशेषान् व्याकीर्णान् यवान् किल इतस्ततः ।
उञ्छवृत्तिर्द्विजोऽप्यादात् पञ्च यज्ञांश्च तैर्व्यधात् ॥ १५

ततः कालेन महता ताम्रतुण्डो महाशुकः ।
भुक्त्वा यथोचितान् भोगान् कालधर्ममुपेयिवान् ॥ १६

ततः स पुण्ययोगेन वैश्यानामुत्तमे कुले ।
धनिको नाम धर्मात्मा स शुकः समजायत ॥ १७

महाजनपरीवारो महाविभवसंयुतः ।
महायशा महातेजाः सोऽभूत्सांयात्रिकेश्वरः ॥ १८

स धनं च महद्दत्त्वा क्रीत्वा बह्वीर्भुवः कृती ।
फलाढ्यास्ता द्विजेन्द्रेभ्यो नित्यं जातिस्मरो ददौ ॥ १९

पुत्रपौत्राभिसंयुक्तः पुण्येन महतामुना ।
भुक्त्वा सर्वोत्तरान् भोगान् कृत्वा भूदानमुत्तमम् ॥ २०

जगाम वैष्णवं लोकं पुनरावृत्तिवर्जितम् ।
एवमज्ञानतस्तस्य शुकस्य वदनाच्च्युतैः ॥ २१

धान्यैः स्वविषयोद्भूतैस्तुष्टायां गवि च द्विजे ।
तं दृष्ट्वा तादृशं मुक्तिं सदृशः[स शुकः]प्रत्यपद्यत ॥ २२

किं पुनर्ज्ञानपूर्वं तु भूदाने विहिते हरे ।
वेत्ति तस्य फलं वक्तुं देवो विश्वाधिकः शिवः ॥ २३

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे भूमिदानमाहात्म्य-
कथनं नाम चत्वारिंशोऽध्यायः

## ॥ एकचत्वारिंशोऽध्यायः ॥

### कन्यादानफलकथनम्

सूतः—

अतः परं प्रवक्ष्यामि कन्यादानफलं द्विजाः ।
यस्य श्रवणमात्रेण तत्फलं याति मानवः ॥ १

सहस्रमेव धेनूनां शतं चानडुहां समम् ।
दशानडुत्समं यानं दशयानसमो हयः ॥ २

दशवाजिसमा कन्या भूमिदानं च तत्समम् ।
सर्वेषामेव दानानां कन्यादानं विशिष्यते ॥ ३

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
आसीन्महर्षिः श्रुतवान् मन्दपाल इति श्रुतः ॥ ४

धर्मज्ञानां मुख्यतमस्तपस्वी संशितव्रतः ।
सर्वज्ञानां स्थितो विप्रा ऋषीणामूर्ध्वरेतसाम् ॥ ५

स्वाध्यायवान् कर्मरतस्तपस्वी विजितेन्द्रियः ।
गत्वा च तपसः पारं देहमुत्सृज्य भूसुराः ॥ ६

जगाम पितृलोकाय न लेभे तत्र तत्फलम् ।
स लोकानखिलान् दृष्ट्वा तपसा निर्जितानपि ॥ ७

[1]पप्रच्छ धर्मराजस्य समीपस्थान् दिवौकसः ।

मन्दपालः—

किमर्थमावृता लोका ममैते तपसा जिताः ॥ ८

किं मया न कृतं तत्र यस्येदं कर्मणः फलम् ।
तत्राहं तत्करिष्यामि यदर्थमिदमावृतम् ॥ ९

---

1. क. प्रयच्छ

फलमेतस्य तपसः कथयध्वं दिवौकसः ।

देवाः—

ऋणिनो मानवा ब्रह्मन् जायन्ते येन तच्छृणु ॥ १०

ब्रह्मचर्येण यज्ञेन प्रजया च न संशयः ।
तदपाक्रियतां सर्वं यज्ञेन तपसा सुतैः ॥ ११

तपस्वी यज्ञकृच्चासि न तु ते विद्यते प्रजा ।
तस्य ते प्रसवस्यार्थे तपोलोकाः समावृताः ॥ १२

प्रजायस्व तपोलोकानुपभोक्तासि शासनात् ।
पुंनाम्नो नरकात्पुत्रस्त्रायते पितरं मुने ॥ १३

तस्मादपत्यसन्ताने यतस्व द्विजसत्तम ।

सूतः—

तच्छ्रुत्वा मन्दपालस्तु तेषां वाक्यं दिवौकसाम् ॥ १४

क नु शीघ्रमपत्यं स्याद्बहुलं चेत्यचिन्तयत् ।
सञ्चिन्तयन्नभ्यगच्छद्बहुलप्रसवान् खगान् ॥ १५

शार्ङ्गिकां शार्ङ्गिको भूत्वा जरितां समुपेयिवान् ।
तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिनः ॥ १६

जरितारिं स्तम्बमित्रं द्रोणं च सुमहामतिम् ।
शारीसृपं च नाम्ना तान् कृत्वा कृत्यविदां वरः ॥ १७

उपदिश्य परं ज्ञानं तेभ्यो ब्रह्मविदां वरः ।
तानपास्य च तत्रैव सह मात्रा वनं ययौ ॥ १८

जरितारिप्रभृतयः पुत्रा ब्रह्मविदो मुनेः ।
स्तुत्वा स्वेन प्रभावेण वह्निं खाण्डवदाहिनम् ॥ १९

तस्मादुपप्लवान्मुक्ता बभूवुर्दीप्ततेजसः ।
मन्दपालोऽपि धर्मात्मा मुनीनामुत्तमोत्तमः ॥ २०

ये सन्ति पुत्रिणां लोकास्तेषु तेषु च सञ्चरन् ।
अजैषीदावृताँल्लोकान् भोगांश्च बुभुजे बहून् ॥ २१

जरितां परिजग्राह मन्दपालो मुनिर्यतः ।
तेन पुण्यफलेनैव तस्याश्च पितरो द्विजाः ॥ २२

न दत्ता विधिवत्सा तु मात्रा पित्रापि वा तदा ।
तथापि कन्यादातॄणां पुण्याँल्लोकान् सुदुर्लभान् ॥ २३

अवाप्य पितरौ तस्याः सम्प्राप्तावक्षयं सुखम् ।

सूतः—

वालुकाभिः कृतो राशिर्यावत्सप्तर्षिमण्डलम् ॥ २४

गते वर्षसहस्रे तु फलमेकं विशीर्यते ।
क्षयश्च दृश्यते तस्य कन्यादानं विशिष्यते ॥ २५

करन्धमस्य [1]पुत्रस्तु मरुत्तो नृपतिस्तथा ।
कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम ह ॥ २६

मदिराक्षश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम् ।
हिरण्यहस्ताय गतो लोकान् देवैरभिष्टुतान् ॥ २७

लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः ।
ऋश्यशृङ्गाय विपुलां सर्वकामैरभिष्टुताः[2] ॥ २८

तिस्रः कन्या यथान्यायं पालयित्वा निवेद्य च ।
न कश्चिन्नरकं याति नारी वा स्त्रीप्रसूयिनी ॥ २९

सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटकक्षितिकन्यानां सप्तजन्मानुगं फलम् ॥ ३०

अलङ्कृत्य तु यः कन्यामलङ्कृत्य प्रयच्छति ।
सप्त पूर्वान् भविष्यांश्च स्वकुले सप्त मानवान् ॥ ३१

तेन कन्याप्रदानेन तारयिष्यत्यसंशयः ।
लोकमाप्नोति च तथा दक्षस्यैव प्रजापतेः ॥ ३२

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे कन्याप्रदानफलकथनं
नाम एकचत्वारिंशोऽध्यायः

---

1. ख. पक्षस्तु 2. क. -ताः

## ॥ द्विचत्वारिंशोऽध्यायः ॥

### गृहदानफलकथनम्

सूतः—

रसान्नोपस्करयुतं गृहं विप्राय योऽर्पयेत् ।
न हीयते तस्य वंशः स्वर्गं प्राप्नोत्यनुत्तमम् ॥ १

यस्य नैवेशिकोद्देशे ह्येकरात्रोषितो द्विजः ।
यदि तस्य फलं वक्तुं देवैरपि न शक्यते ॥ २

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
कन्यका सुव्रता नाम वराङ्गी वरवर्णजा ॥ ३

सुशीला च सुवेषा च सौन्दर्येणोपशोभिता ।
तस्याः पिता महा[1]भागः सर्वशास्त्रार्थतत्त्ववित् ॥ ४

व्याख्यानशीलश्च सदा वेदाध्ययनतत्परः ।
तस्य विप्रस्य राजेन्द्र भार्या परमशोभना ॥ ५

पतिव्रता महाभागा कालधर्मेण योजिता ।
ततस्तेनैव शोकेन गृहस्थाश्रमविह्वलः ॥ ६

तपोवनं जगामाथ विप्रेन्द्रः संयतेन्द्रियः ।
स तस्मिन् मुनिभिः सार्धं ध्यानयोगपरायणैः ॥ ७

निवासं कृतवान् प्राज्ञः सुव्रतायाश्च रक्षणे ।
तेन संवर्धिता बाला सानुक्रोशेन धीमता ॥ ८

बाल्ये वयसि सञ्जाता मातृहीना विधेर्बलात् ।
पुत्रिकैः कृत्रिमैरेनां [2]लीलाभाण्डैश्च शोभनैः ॥ ९

अन्यैश्च विविधैर्हृद्यैः पिता समुपलालयन् ।
पालयामास धर्मात्मा पुत्रिकां हृदयोपमाम् ॥ १०

---

1. क. भाग 2. क. नीला

तामेव [1]सन्ततिं साध्वीं मन्यमानो महातपाः ।
शिशुत्वात्सुव्रतायाश्च पिता दुहितृवत्सलः ॥ ११

पाणिं न ग्राहयामास मातृहीनेति चिन्तयन् ।
विरक्तोऽपि महाप्राज्ञस्संसारासारविद्द्विजः ॥ १२

पुत्रिकापेक्षया [2]सम्यक् संन्यासं नाकरोद्वशी ।
इति संरक्षयन् बालां मातृहीनां तपस्विनीम् ॥ १३

संयुक्तः कालधर्मेण पिता स्वर्लोकमाश्रितः ।
ततः सा कन्यका दीना पितृहीना सुदुःखिता ॥ १४

विललापाकुला बाला पतिता शोकसागरे ।
अहो मम पिता बालां विचरन्तीं निराश्रयाम् ॥ १५

आगत्य करुणाविष्टो धर्मः सर्वहिते रतः ।
स्थविरो ब्राह्मणो भूत्वा प्राह चेदं वचस्तदा ॥ १६

ब्राह्मणः—

अलं बाले विशालाक्षि रोदनेनातिविह्वला ।
न भूयः प्राप्यते सोऽपि तस्मान्नार्हसि शोचितुम् ॥ १७

अनित्यं यौवनं रूपं मानुष्यं द्रव्यसञ्चयः ।
आरोग्यं प्रियसंवासो बाले नार्हसि शोचितुम् ॥ १८

त्वया चैतत् कृतं कर्म पूर्वजन्मनि शोभने ।
येन पित्रा वियोगः स्यादरण्ये मुनिगोचरे ॥ १९

वृद्धः कारुणिकोऽतीव तव तातो महातपाः ।
त्वत्पाणिग्रहणं कृत्वा दृष्ट्वा जामातरं शुभे ॥ २०

संन्यस्य सर्वकर्माणि समलोष्टाश्मकाञ्चनः ।
यास्यामि परमो वाहं परमित्यकरोन्मतिम् ॥ २१

ततः कालवशाद्विप्रस्तपस्वी करुणो मृदुः ।
स्वर्लोकमगमद्बाले त्वामेव परिचिन्तयन् ॥ २२

---

1. ख. सन्नतिं 2. क. मासकन्यासन्ना करोद्वशी।

इदं कृतमिदं कार्यमिदमन्यत् कृताकृतम् ।
एवमीहासमायुक्तं कृतान्तः कुरुते [1]वशम् ॥ २३

तस्मात्त्वं दुःखमुत्सृज्य श्रोतुमर्हसि सुव्रते ।
पितृभ्यां विप्रयोगोऽसौ येनाभूद्धेतुना तव ॥ २४

पुरा त्वं सुन्दरी नाम वेश्या परमशोभना ।
नृत्तगेयादिनिपुणा वीणावेणुविचक्षणा ॥ २५

स्वर्गादिव च्युता शापाद्रूपलावण्यपेशला ।
त्वां दृष्ट्वा रूपसम्पन्नां सुवेषां सुविभूषणाम् ॥ २६

ब्राह्मणो रूपसम्पन्नस्सहसा काममोहितः ।
त्वं वीक्ष्य तं तथाभूतं ब्राह्मणं काममोहितम् ॥ २७

आढ्यश्च रूपसम्पन्नमिति मत्वाविमृश्य च ।
आनयित्वा गृहं शीघ्रं वशीकृत्वा सखीजनैः ॥ २८

सम्यगाश्रित्य तेनैव त्वया हि रममाणया ।
हृतार्थसम्पदस्तस्य त्वया धर्मगुणा हृताः ॥ २९

सोऽपि पापरतिर्मूढो ब्राह्मणो विषयात्मकः ।
हतः शूद्रेण वर्णेन कामिना तव वेश्मनि ॥ ३०

विहाय भार्यामप्रौढां शुभां द्वादशवार्षिकीम् ।
प्रयातो नरकं घोरं वेश्यासंसर्गगर्हितः ॥ ३१

ततस्तस्य पिता विद्वान् माता च वरवर्णिनी ।
वृद्धौ पुत्रवियोगेन भार्या च पतिदेवता ॥ ३२

दुःखाभिभूतमनसस्ते त्वामत्यन्तदुर्मतिम् ।
प्राहुः क्रुद्धेन मनसा जानन्तस्तव वञ्चनाम् ॥ ३३

माता—

औषधानि प्रयोज्यैवमवमत्य ममात्मजम् ।
यदस्मद्विप्रयोगाय वञ्चितो दुष्टचारिणि ॥ ३४

---

1. क. वंशे

तेन जन्मान्तरे चण्डी मातृहीना भविष्यसि ।
[1]बाल्ये वयसि पुष्यन्ती पितृहीना सुदुःखिता ॥ ३५

स्वजनस्यापि दूरस्था भविष्यसि विमोहिता ।
कन्या भवतु सा चण्डी विवाहेन बहिष्कृता ।
अनाथा शोकसन्तप्ता सातिमात्रविमोहिता ॥ ३६

ब्राह्मणः—

तस्मात्पूर्वकृतेनैव कर्मणा परिवर्तिता ।
एवं दुःखमनुप्राप्ता कन्यका चाभवत्ततः ॥ ३७

सुव्रता—

त्वया जन्मान्तरे वृत्तं प्रोक्तमन्वग्यथोचितम् ।
तस्मात्त्वं ब्रूहि भगवन् व्रजन्त्या मम निश्चितम् ॥ ३८

इत्थं सुघोरकर्माहं पापाचाररता सदा ।
कथं नु ब्राह्मणस्याहमुत्पन्ना ब्रह्मवादिनः ॥ ३९

दशसूनासमश्चक्री दशचक्रिसमो ध्वजः ।
दशध्वजसमा वेश्या दशवेश्यासमो नृपः ॥ ४०

एवं वदन्ति धर्मज्ञा ब्राह्मणाः शंसितव्रताः ।
तस्माद्द्विजोत्तमादस्मात्कथं जन्माभवन्मम ॥ ४१

ब्राह्मणः—

पापाचाररतापि त्वं ब्राह्मणानां श्रुते कुले ।
उत्पन्ना तस्य वक्ष्यामि हेतुं गूढं शुचिस्मिते ॥ ४२

शृणु तस्य महाप्राज्ञे निमित्तं वदतो मम ।
येन त्वं समभूर्वंशे ब्राह्मणस्य महात्मनः ॥ ४३

ब्राह्मणो ज्ञानसम्पन्नस्सत्यवागनसूयकः ।
समः सर्वेषु भूतेषु ज्ञाननिर्धूतकल्मषः ॥ ४४

उन्मत्तवेषोऽनुन्मत्तो विचचार महीमिमाम् ।
ग्रामैकरात्रन्यायेन पर्यटन् पृथिवीमिमाम् ॥ ४५

1. ख. पुस्तके इदमर्धं समनन्तरार्धद्वयं च नास्ति

प्राप्तवान्नगरीं रम्यां त्वया जन्मान्तराश्रिताम् ।
स कदाचिन्महाभागे [1]त्वद्गेहं प्राप्य शोभने ॥ ४६

प्राग्द्वारवेदिकोत्सङ्ग उवास निरवद्यधीः ।
चीरवासा महासत्त्वः कृशोऽथ मलिनस्तथा ॥ ४७

निर्धूतो भस्मनाच्छन्नो हुताशन इवापरः ।
सा त्वं गृहाद्विनिष्क्रम्य समालोक्य महामतिम् ॥ ४८

कस्त्वं महात्मन् विप्रेन्द्र किमर्थमिह चागतः ।
अन्धकारे निरालोके किमत्र स्थीयते त्वया ॥ ४९

अन्तः प्रविश्य विप्रेश स्थित्वा चेमां कृतार्थय ।
इत्यब्रवीस्त्वं कल्याणि प्राविक्षद्ब्राह्मणो गृहम् ॥ ५०

स्वीयां शय्या[2]मदास्तस्मै पूजया चापि तोषितः ।
फलभक्ष्यादिभिस्तुष्टो नितरां कारितस्त्वया ॥ ५१

तत्र रात्रिमुषित्वा तु प्रभाते विमले सति ।
आशीर्भिरभिनन्द्य त्वां गतो ग्रामान्तरं प्रति ॥ ५२

जन्मप्रभृति यत्पापं पातकं चोपपातकम् ।
निर्धक्ष्यति च तत्सर्वमेकरात्रोषितो यतिः ॥ ५३

आसनं पादशौचं च दीपदानं प्रतिश्रयम् ।
दद्यादेतानि यः पञ्च स यज्ञः पञ्चदक्षिणः ॥ ५४

अश्वमेधसहस्राच्च वाजिमेधशतादपि ।
पौण्डरीकसहस्राच्च द्विजस्याश्रयदो वरः ॥ ५५

तेन पुण्यफलेन त्वं सञ्जाता ब्राह्मणान्वये ।
अनुग्रहाद्द्विजेन्द्रस्य परं ब्रह्माधिगच्छसि ॥ ५६

एतच्छ्रुत्वा महाभागा सुव्रतात्यन्तनिःस्पृहा ।
उवाच दुःखनिर्मुक्ता ब्राह्मणं ब्राह्मणात्मजा ॥ ५७

---

1. ख. त्वद्गेहे 2. क. मदात्तस्मै

सुव्रता—

भगवन् सर्वधर्मज्ञ ममापि च हिते रत ।
कस्त्वमत्यन्ततेजस्वी जन्मान्तरविदां वर ।
अनुगृह्णीष्व मे ब्रह्मन् ब्रूहि तत्त्वं महामते ॥ ५८

ब्राह्मणः—

यमोऽहमिह सम्प्राप्तस्त्वानुग्रहकाम्यया ।
वरं वृणीष्व भद्रं ते यत्ते मनसि वर्तते ॥ ५९

सुव्रता—

भगवन् मम माता च पिता च निरवद्यधीः ।
अन्ये च बान्धवास्सर्वे सुहृदः सर्व एव हि ॥ ६०

प्राप्तास्तव पुरं ये च ये च प्राप्स्यन्ति सर्वशः ।
स्वर्गे तिष्ठन्तु भगवन् यावदाभूतसंप्लवम् ॥ ६१

सूतः—

तथेति चोक्त्वा कृपया यमः सर्वजनेश्वरः ।
अर्चितश्च यथान्यायं तत्रैवान्तरधीयत ॥ ६२

सुव्रता च महाभागा विशोका सर्वनिस्स्पृहा ।
अचिरेणैव कालेन सम्यग्ज्ञानमवाप्य च ॥ ६३

प्रतिश्रयप्रदानेन विमुक्ता कर्मबन्धनैः ।
सम्प्राप्ता तत्पदं विष्णोर्यत्काङ्क्षन्ति मुमुक्षवः ॥ ६४

सूतः—

[1]यस्मात्प्रतिश्रयगृहं पथिकानां हितावहम् ।
निजगेहैकदेशे वा कृत्वा पान्थान्निवासयेत् ।
अक्षय्यं पुण्यमुद्दिष्टं तस्य स्वर्गापवर्गदम् ॥ ६५

नैवेशिकं सर्वगुणोपपन्नं
ददाति यश्चापि नरो द्विजाय ।
स्वाध्यायचारित्रगुणान्विताय
तस्यापि लोकाः कुरुजाङ्गलेषु ॥ ६६

---

1. क. तस्मात्

यस्तु नैवेशिकं शुद्धं ब्राह्मणाय प्रयच्छति ।
त्रिंशत्कोट्योऽथ[कोटीर्हि] वर्षाणां स्वर्गलोके महीयते ॥ ६७

ततोऽवतीर्णः कालेन मानुषं लोकमाप्नुयात् ।
स नराधिपतिः श्रीमान् महाराजो भवेद्ध्रुवम् ॥ ६८

गृहं वा गृहभूमिं वा गृहोपकरणानि वा ।
यज्ञोद्धखलशूर्पाणि स श्रीमान् स्वर्गभाङ्नरः ॥ ६९

यत्किञ्चिद्भूमिदानार्थं गृहीत्वा वस्तु दुर्मतिः ।
उपक्षयः स विज्ञेय उभयोर्ब्रह्मलोकदः ॥ ७०

उपक्षयोद्भवं दानं कन्यादानं च सुव्रताः ।
सममेव विजानीयाद्दत्तमात्रेण शुध्यति ॥ ७१

गृहं कृत्वा शुभस्तम्भं बहुचित्रं सुशोभितम् ।
सप्राकारप्रतोलीकं कवाटार्गलयन्त्रिकम् ॥ ७२

सुधावलिप्तं चतुरं विस्तीर्णं बहुशोभितम् ।
दत्त्वा द्विजातिमुख्याय न शोचति कृताकृते ॥ ७३

पक्वेष्टकामयं कृत्वा शैलजं वापि दारुजम् ।
मृन्मयं वापि भवनं शुभलक्षणसंयुतम् ॥ ७४

पूजयित्वा यथान्यायं ततो दद्याद्गृहं गृही ।
कुलैकविंशतिं मुक्त्वा ब्रह्मलोके महीयते ॥ ७५

पक्वेष्टकामयं कृत्वा गृहं सर्वगुणान्वितम् ।
कल्पकोटिशतं यावत्स्वर्गलोके महीयते ॥ ७६

शैलजं सुदृढं गेहं यो दद्याद्विधिपूर्वकम् ।
द्विजाय वेदविदुषे दरिद्राय कुटुम्बिने ॥ ७७

नरो विष्णुपदं प्राप्य सेव्यमानोऽप्सरोगणैः ।
तत्र कल्पत्रयं भुङ्क्ते भोगान् देवैः सुदुर्लभान् ॥ ७८

रचयित्वा बहुस्तम्भं शुभं पक्वेष्टकामयम् ।
प्रतिश्रयं सुविस्तीर्णं सुभूमिं लक्षणान्वितम् ॥ ७९

सुधानुलिप्तं गुप्तं तु [1]मुखशालाविराजितम् ।
दद्यादनन्तफलदं शैववैष्णवयोगिनाम् ॥ ८०

दीनानाथजनार्थाय कारयित्वा शुभं गृहम् ।
निवेदयेत्परं तेभ्यः शुभद्वारं मनोहरम् ॥ ८१

एवं कृते फलं तस्य वक्तुं नैव हि शक्यते ।
तस्मात्सर्वप्रयत्नेन गृहदानं समाचरेत् ।
एतस्मादधिकं नास्ति दानानां सर्वकामदम् ॥ ८२

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे गृहदानफलकथनं
नाम द्विचत्वारिंशोऽध्यायः

1. क. सुख-

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

### विद्यादानफलकथनम्

सूतः—

अतः परं प्रवक्ष्यामि विद्यादानफलं द्विजाः ।
यस्तु पुण्यपरो मर्त्यो जिगीषुः कीर्तिसाधकः ॥ १

स विधानेन वै दद्याद्विद्यां विविधकामदाम् ।
नित्यं विद्याप्रदानं वै सर्वकामफलप्रदम् ॥ २

यतेत पात्रे संन्यस्तुं रहस्यं चैतदुत्तमम् ।
यथा वरिष्ठो देवानां विष्णुः कारणपूरुषः ॥ ३

यथा च योषित्प्रवरा कमला पङ्कजालया ।
वायुर्बलवतां श्रेष्ठो यथा ज्योतिष्मतां रविः ॥ ४

जलाशयानां प्रथमो यथायं सरितां पतिः ।
तथा विद्याप्रदः श्रेष्ठो गरीयांश्च गरीयसाम् ॥ ५

पुण्यश्चापि स सर्वत्र योऽपि विद्यां प्रयच्छति ।
इहामुत्र सुखक्षेममाहुर्विद्याधनं धनम् ॥ ६

विद्ययामलया युक्तो विमुक्तिं याति संयमी ।
मग्नान् दुःखार्णवे घोरे जनान् सुकृतदुष्कृतैः ॥ ७

तयैव विद्यया सद्यो मोचयेत्कृपया गुरुः ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ॥ ८

पुरा कल्पान्तरे कश्चित्सङ्गिरो नाम भूसुरः ।
सद्भिः[1] र्विवदमानोऽभूदहंयुस्तर्ककर्कशः ॥ ९

हेतुभिः कल्पितैर्युक्त्या खण्डयन् सुधियां मतम् ।
सर्वग्रन्थिलया बुद्ध्या चचार पृथिवीमिमाम् ॥ १०

---

1. विविध-

दुस्तर्कवासनायोगाद्दुर्मोहाक्रान्तचेतसः ।
कदाचिदपि जज्ञेऽस्य न दृष्टिः पारमार्थिकी ॥ ११

स्ववेदान् दूषयामास निराकाङ्क्षी तथा स्मृतीः ।
पुराणानि निनिन्दोच्चैरितिहासं जहास सः ॥ १२

तिरश्चकार गतभीर्योगाननुपपत्तिभिः ।
द्वेषं बबन्ध मन्त्रे च गायत्रीं चापि दूषयन् ॥ १३

वेदं शिवं सदाचारं मातरं पितरं गुरुम् ।
दुराग्रहविमूढात्मा नान्वमन्यत किञ्चन ॥ १४

एवं बहिर्मुखैर्भावैरर्थसंस्पर्शिभिर्हतः ।
लौकिकं वैदिकं धर्मं तत्याज स्वयमप्यसौ ॥ १५

पापिष्ठोऽयं नृशंसात्मा निन्द्योऽयं कुलपांसनः ।
इति तं ब्राह्मणाः सर्वे तत्यजुर्धर्मदूषकम् ॥ १६

स बन्धुभिः परित्यक्तस्तांश्च निन्दन् कुतर्कतः ।
मर्यादां स्वामतिक्रम्य पापगर्ते ममज्ज ह ॥ १७

स सञ्चरन् महीं सर्वां म्लेच्छदेशं गतो द्विजः ।
तत्रापि भ्रष्टमर्यादो रोगार्तो विजहावसून् ॥ १८

स घोरैर्घोरनिर्ह्रादैः कूटमुद्गरपाणिभिः ।
कृतान्तकिङ्करैर्नैकैर्नीतोऽभूद्यमसादनम् ॥ १९

तेनापि तस्य पापानां नान्तः किमपि दृश्यते ।
दण्डः को वास्य सुमहानिति चक्रे विचिन्तनम् ॥ २०

यानि यानि च पापानि कर्ता तेषामयं खलु ।
तत्सर्वदण्डयोग्योऽसावित्यन्तर्निश्चिकाय सः ॥ २१

स किङ्करान् समाहूय पापोऽयं ब्राह्मणब्रुवः ।
निपात्यतां दुरन्तेषु निरयेष्वित्यभाषत ॥ २२

यमस्य वचनात्तेऽपि गृहीत्वा भयसङ्कुलम् ।
दण्ड्यं निपातयामासुर्नरकेषु यथातथम् ॥ २३

पाशैर्निबध्यमानस्य भिद्यमानस्य मुद्गरैः ।
कुठारैश्छिद्यमानस्य तुद्यमानस्य कण्टकैः ॥ २४

सायकैर्विध्यमानस्य दंश्यमानस्य च श्वभिः ।
कृमिभिर्भक्ष्यमाणस्य सूचिवक्त्रैरनेकशः ॥ २५

हठादाकृष्यमाणस्य कूश्माण्डैर्निरयाधिपैः ।
पच्यमानस्य घोरेषु भ्राष्ट्रेषु ज्वलदग्निषु ॥ २६

पापपङ्ककृतं सर्वं किं न स्मरसि कामतः ।
उग्रे तु मज्जमानस्य कृतान्ताज्ञाधुरन्धुरैः ॥ २७

हा हेति वदतः क्लेशाल्लुठतश्च ततस्ततः ।
तस्यान्तर्मुह्यमानस्य भूयान् कालोऽत्यवर्तत ॥ २८

पुनः पुनश्च पापात्मा नरकेषु बहुष्वपि ।
क्लेशाननुभवंस्तांस्तान्नान्तं तेषामवैक्षत ॥ २९

तं च नारकिणोऽप्यन्ये दृष्ट्वा निलयमेनसाम् ।
पापीति च निनिन्दुस्ते किं ब्रूमस्तस्य पापिताम् ॥ ३०

काले चास्मिन् विशुद्धात्मा शतानन्दो महातपाः ।
यदृच्छया समागच्छत्तं देशं तस्य वेदिता ॥ ३१

तेषु तेषु च घोरेषु नरकेषु निपातितान् ।
आर्द्रधीः पापिनः पश्यन् सङ्गिरं च ददर्श सः ॥ ३२

वेदानभिरतं ताभिर्दुर्दृढदाभिरितस्ततः ।
आयास्यमानं तं दृष्ट्वा विशेषाद्यमकिङ्करैः ॥ ३३

प्राहों नमः शिवायेति निर्विण्णः करुणार्द्रधीः ।
स तं पञ्चाक्षरं श्रुत्वा मन्त्रं सप्रणवं द्विजाः ॥ ३४

विधूयोदपतत्सद्यस्तास्ता नरकवेदनाः ।
सर्वे नारकिणश्चापि विधूय स्वस्ववेदनाः ॥ ३५

सद्यस्सुखमयाकाराः शैवविद्याश्रुतेर्बलात् ।
स एव देशः स्वर्गोऽभूत्तेऽप्यासन् पुण्यदर्शनाः ॥ ३६

सङ्गिरोऽपि विशुद्धात्मा सोऽभून्निर्धूतकल्मषः ।
शैवविद्याप्रदातारं शतानन्दं प्रणम्य सः ॥ ३७

सङ्गिरो ब्राह्मणश्रेष्ठः पुण्यां प्रकृतिमाप्तवान् ।

सूतः—

या विद्या दुःखयुक्तानां निरयेषु निमज्जताम् ॥ ३८

अज्ञानिनामहंयूनां गतिदानं परं खलु ।
अज्ञानादथ वा ज्ञानात्प्रसङ्गाद्विषयादपि ॥ ३९

दत्ता विद्या मुक्तिकरी किं पुनर्ज्ञानपूर्विका ।
सा विद्या स गुरुर्लोके या श्रुतापि गतिप्रदा ॥ ४०

[1]यस्त्वत्यन्तकृपायुक्तस्तारयेन्नरकार्णवात् ।
सिद्धान्तं मोक्षशास्त्रं च शब्दाः स्वर्गादिसाधकाः ॥ ४१

वेदाङ्गानीतिहासाश्च देया धर्मविवृद्धये ।
एकोऽपि जीवति प्राणी तथापि किल कुत्रचित् ॥ ४२

विप्राणामपि सा विद्या कुलानां शतमुद्धरेत् ।
शिल्पविद्यां नरो दत्वा याति वै ब्रह्मगोऽन्तिकम् ॥ ४३

कलाविद्यां नरो दत्वा वैष्णवं लोकमाप्नुयात् ।
आयुर्वेदं नरो दत्वा लोकान् प्राप्नोत्ययाचकान् ॥ ४४

दत्वा तर्कं च मीमांसां वारुणं लोकमाप्नुयात् ।
धर्मशास्त्रं नरो दत्वा स्वर्गलोके महीयते ॥ ४५

दश मन्वन्तरं मर्त्यस्तारयेन्नरकात्पितॄन् ।
वेदविद्यां नरो दत्वा स्वर्गे कल्पत्रयं वसेत् ॥ ४६

आत्मविद्यां तु यो दद्यात्तस्य सङ्ख्या न विद्यते ।
पुण्यस्य गदितुं सम्यगपि वर्षशतैरपि ॥ ४७

विद्यानां [2]प्रवरा विद्या ब्रह्मविद्या समीरिता ।
अतस्तद्दानतो विप्रास्सर्वदानफलं लभेत् ॥ ४८

---

1. क. यस्त्वन्तः कृपया युक्तः 2. क. च वरा

उपाध्यायस्य यो वृत्तिं दत्वाध्यापयते द्विजान् ।
छात्राणां भोजनाभ्यङ्गे वस्त्रं भिक्षां तथापि वा ॥ ४९

दत्वा प्राप्नोति पुरुषो विद्यादानफलं द्विजाः ।
अष्टादश पुराणानि लिखित्वा यः प्रदापयेत् ॥ ५०

भुक्त्वा स विपुलान् भोगान् विद्यावान् पुण्यवान् भवेत् ।
पुराणान् श्रावयेद्यस्तु वृत्तिं दत्वा द्विजातये ॥ ५१

स तु सर्वाधिको भूत्वा विद्यादानफलं लभेत् ।
तस्माद्दानेषु सर्वेषु विद्यादानं प्रशस्यते ॥ ५२

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे विद्यादानफलकथनं
नाम त्रिचत्वारिंशोऽध्यायः

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

### तटाकनिर्माणमाहात्म्यकथनम्

सूतः—

तटाकस्य प्रतिष्ठां ये कुर्वन्ति यतमानसाः ।
ते विन्दन्ति परं श्रेय इह लोके परत्र च ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
श्रूयते हि पुरा नाम्ना श्रुतसेनः क्षितीश्वरः ॥ २

उज्जयिन्याः पतिस्तस्य सुदेवीति सुताभवत् ।
सा सुरूपा सुचारित्रा सुस्वभावा सुभाषिणी ॥ ३

सुशीला सुमुखी साध्वी धर्मे पति[पथि]दृढव्रता ।
बाल्यात्प्रभृति केनापि बालेन परिबृंहिता ॥ ४

पानीयदानमकरोत्सर्वधर्मोत्तमोत्तमम ।
बाला चङ्क्रममाणा सा राजपुत्री स्मितानना ॥ ५

वयस्याः प्रीणयामास हेमपात्राहृतैर्जलैः ।
गृहाङ्गणेषु रम्येषु विहरन्ती ततस्ततः ॥ ६

सखीराह्लादयामास भृङ्गारभरितैर्जलैः ।
परित्यक्तान्यकार्या तु सा केलिहरिणार्भकान् ॥ ७

लीलाशुकांश्च हरितान् वासयष्टिशिखण्डिनः ।
मञ्जीरनादानुगतान् हंसानपि सुचङ्क्रमा ॥ ८

वारिभिः प्रीणयामास घर्मेषु दिवसेषु सा ।
स्यन्दिनीस्सारिणीः कुल्याः कृत्वा कूलङ्कषोदकाः ॥ ९

चक्रे हृष्टमुखी ताभिर्हृष्टानुद्यानपादपान् ।
जानन्ती परमं धर्मं शृण्वन्ती भूयसा च तम् ॥ १०

मार्गेषु कारयामास प्रपाः सन्तापहारिणीः ।
गम्भीरान् सुस्थितैर्बालैः सार्वकालं जलीकृतान् ॥ ११

अनन्यसाध्यानकरोत् कूपा[1]न्मरुषु भूमिषु ।
कान्तारेषु दुरन्तेषु पान्थानन्दविधायिनीः ॥ १२

पुण्याः पुष्करिणीश्चक्रे फुल्लपङ्कजकैरवाः ।
अकारयन्निजश्रीभिर्निदाघपरिपन्थिनः ॥ १३

तटाकांस्तटबन्धेन दृढान् गाढाम्बुशीतलान् ।
भुवि राष्ट्रेषु राष्ट्रेषु तेषु तेषु दृढव्रता ॥ १४

जनान् जलप्रतिष्ठाभिरुदजीवयदुत्सुका ।
एवं बहुविधं कालं यापयन्ती यशस्विनी ॥ १५

तोयदानात्परं धर्मं नान्यं सा बह्वमन्यत ।
तस्याः पिता च माता च सख्यः पौराश्च विस्मिताः ॥ १६

तथा जनपदः सर्वस्तद्भावं बह्वमन्यत ।
सायंप्रहाश्च बहवस्तीर्थयात्रापराश्च ये ॥ १७

मुनयश्च [2]प्रशस्तास्तां प्रशशंसुरितस्ततः ।
एकदा ऋषयः ख्याताः शूरसेनदिदृक्षवः ॥ १८

[3]अगच्छन् धर्मतत्त्वज्ञाः श्लाघ्यामुज्जयिनीं पुरीम् ।
दृष्ट्वा राजानमात्मज्ञाः [4]श्लाघ्यं धर्मं निवेद्य च ॥ १९

आशीर्भिरभिवर्ध्यैनममुना च सभाजिताः ।
सर्वेऽपि गन्तुमुद्युक्तास्तत्समीपे स्थितास्तदा ॥ २०

प्रभया दीप्यमानाङ्गीं प्राज्यां दीपशिखामिव ।
सुदेवीं ददृशुर्दिक्षु श्रुतपूर्वामनेकशः ॥ २१

सा तदापि कराम्भोजधृतभृङ्गारवारिभिः ।
तोषयन्ती स्थिता तत्र राज्ञः पार्श्वचरान् जनान् ॥ २२

---

1. क. न्मरुतभूमषु
2. क. प्रशस्तां तां
3. क. आगच्छन्
4. क. कार्यं धर्म्यं

तां दृष्ट्वा मुनयः सर्वे कौतूहलसमन्विताः ।
निवृत्तगमनोद्योगाः प्रशशंसुर्यशस्विनीम् ॥ २३

तान् प्रशंसापरान् दीनान् मुनीन्द्रान् दीप्ततेजसः ।
युक्तियुक्तेन चित्तेन प्राञ्जलिः प्रणनाम सा ॥ २४

सत्सु सर्वेषु धर्मेषु सर्वाभीष्टविधायिषु ।
जलदानपरो भावः कथमस्याः प्रवर्तते ॥ २५

पृच्छामस्तावदेवैनां राज्ञोऽप्यत्रैव शृण्वतः ।
इति [1]सर्वेऽपि सम्भूय भूभुजाप्यनुमोदिताः ॥ २६

तामपृच्छन् सुतपसः सुन्दरीं धर्मचारिणीम् ।

ऋषयः—

भद्रे सर्वेषु धर्मेषु श्रूयमाणेषु ते कथम् ॥ २७

जलप्रतिष्ठाधर्माय रोचते मतिरुत्तमा ।
अयं हि संशयोऽस्माकं त्वमिमं छेत्तुमर्हसि ॥ २८

इत्युक्ता सा मुनिवरैर्ज्ञात्वा च हृदयं पितुः ।
तं भावं वक्तुमारेभे तान् प्रणम्य शुभानना ॥ २९

सुदेवी—

सर्वे शृणुत धर्मज्ञा यथा मे भाव ईदृशः ।
युष्माभिः श्रुतपूर्वा हि तुङ्गकल्लोलमालिनी ॥ ३०

भागीरथी सुखी पुण्या कालिन्दीति सरिद्वरा ।
चरन्ति बहवस्तस्या वा[ग]हने तटकानने ॥ ३१

पुलिन्दास्त्रासयन्तो ये पक्षिणोऽपि मृगानपि ।
तेषु कश्चित् पुलिन्दस्तु भार्यया सह दारुणः ॥ ३२

मृगान् मृगयया निघ्नन्नगमत् सरितं क्षणात् ।
तत्र घर्माभिसन्तप्तः सहभार्यो वनेचरः ॥ ३३

1. क. सर्वे च

स्नात्वोत्थाय तटोपान्ते मृगं कञ्चिद्ददर्श ह ।
हन्तुकामः स सहसा भार्यां मुक्त्वा धनुर्धरः ॥ ३४

अथ दुद्राव हरिणं दुरन्तेन च हारितः ।
सा पुलिन्दी च घर्मार्ता स्नात्वोत्तीर्य ससम्भ्रमम् ॥ ३५

भर्तारमनुगच्छन्ती पुलिनेऽङ्गारसन्निभे ।
पदात् पदं च चलितुमपारीणा [1]तृषाकुला ॥ ३६

स्थिता सरित्तटोपान्ते कस्यापि च तरोरधः ।
तत्र दीप्तैः करैर्भानोः कठोरैः परिपीडितः ॥ ३७

दीनः कण्ठलुठत्प्राणो निश्चेष्टः स्रस्तपक्षतिः ।
बकोटः कोऽपि दृष्टोऽभूत् पिपासागाढमूर्छितः ॥ ३८

तं दृष्ट्वा गाढकारुण्यात पुलिन्दी पतितं भुवि ।
अहो गाढातपार्तोऽयमिति चिन्ताकुलाभवत् ॥ ३९

पापिनोऽपि मतिः पुण्या कदाचिज्जायते भृशम् ।
तस्मिन् कृपावती जाता यत्तथा जीवघातिनी ॥ ४०

अथ सा कचबन्धस्थं सद्यः स्नानोज्ज्वलज्जलम् ।
परिमुच्यायतं कृत्वा कराभ्यामवलम्ब्य च ॥ ४१

तन्निर्गतैर्जलापूरैः सिषेचोन्मोहितं खगम् ।
अम्बुसेकेन तेनासावाश्वस्तः किञ्चिदुन्मुखः ॥ ४२

उन्मील्य नयने किञ्चित् कथञ्चिद्भुग्ननारके ।
शयान एव स्रस्ताङ्गो व्यात्तचञ्चुपुटोऽभवत् ॥ ४३

सा पुनः कृपयाविष्टा श्रेणीकृत्य शिरोरुहान् ।
निष्पीड्य च तदम्बूनि तर्पयामास तन्मुखे ॥ ४४

शनैश्शनैर्बकोटस्तदम्बु चञ्चुपुटागतम् ।
पायं पायं जहौ श्रान्तिं प्रत्यापन्नधृतिस्तदा ॥ ४५

---

1. क. ·नपाकुला

ततश्चिरायिते भर्तर्यनवेक्ष्य तथातपम् ।
गवेषमाणा भर्तारं तस्माद्देशाज्जगाम सा ॥ ४६

ततः सा दिवसैः कैश्चित् कालधर्ममुपागता ।
सैवाहमस्य राजर्षेः पुत्री जाता यशस्विनी ॥ ४७

जातिस्मरैव विप्रेन्द्राः सदाचारानुबन्धिनी ।
तादृशेनाम्बुदानेन पक्षिणः श्रान्तिहारिणा ॥ ४८

क्रूरयापि मया जन्म लब्धमेतदनुत्तमम् ।
जातिस्मरा च तद्भावं न मुञ्चाम्यहमद्य हि ॥ ४९

तस्मादल्पस्य तोयस्य दानेन फलमीदृशम् ।
प्रपाकूपतटाकादिप्रतिष्ठासु किमुच्यते ॥ ५०

नाहं जानामि धर्मस्य गतिं सूक्ष्मां सनातनीम् ।
युष्मादृशमुखादेव श्रुतं धर्मं ब्रवीमि वः ॥ ५१

सकृत्पानीयदानेन प्रीणयेद्यः पिपासितम् ।
अश्वमेधसहस्रस्य संप्राप्नोति फलं ध्रुवम् ॥ ५२

यथोक्तया यः प्रपया तोषयेत्तृषितान् जनान् ।
सकृत्पानीयदातुः स फलं विन्देच्छताधिकम् ॥ ५३

अशोष्यसलिलं कूपं यः करोत्यार्द्रमानसः ।
फलं सहस्रगुणितं संप्राप्नोति प्रपाकृतम् ॥ ५४

क्रियन्ते सुधिया येन पुष्करिण्यः शुभोदकाः ।
सङ्ख्यातः कूपकर्तुश्च प्राप्नुयादयुतं फलम् ॥ ५५

यः प्राणिनां हितं कुर्यात्सरः पूर्णं जलैः शुभैः ।
स च पुष्करिणीकर्तुः प्रयुताधिकपुण्यभाक् ॥ ५६

प्रवर्तयति यः कुल्यां परिवाहवतीं भुवि ।
शक्तस्तस्य फलं वक्तुं सहस्रवदनः फणी ॥ ५७

सुजातवारि विप्रेन्द्रास्तटाकं यः करोत्यलम् ।
फलं तस्य परिज्ञातुं शक्नोति परमः शिवः ॥ ५८

तस्मात्तटाकनिर्माणे कार्या बुद्धिर्मनीषिभिः ।
तेषां सिध्यन्ति सुधियामिहामुत्र च सिद्धयः ॥ ५९

लावकश्च वराहश्च महिषी कुञ्जरस्तथा ।
अनुमन्ता च कर्ता च षडेते स्वर्गगामिनः ।
इति गाथा च युष्माभिः श्रुतपूर्वा द्विजोत्तमाः ॥ ६०

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे तटाकनिर्माणमाहात्म्य-
कथनं नाम चतुश्चत्वारिंशोऽध्यायः

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

### पान्थसंरक्षणफलकथनम्

सूतः—

पान्थसंरक्षणं वक्ष्ये सर्वधर्मोत्तमोत्तमम् ।
यस्य श्रवणमात्रेण सर्वयज्ञफलं लभेत् ॥ १

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
प्रदर्शयद्भ्यां प्रख्यातान् पुण्यलोकान् पृथक् पृथक् ॥
कथितं विष्णुदूताभ्यां द्विजाय शिवशर्मणे ॥ २

विष्णुदूतौ—

पान्थसंरक्षणात्पूर्वं दिक्पतित्वमवाप्तवान् ।
निर्ऋतिस्तत्कथां पुण्यां शिवशर्मन् शृणुष्व मे ॥ ३

मध्येविन्ध्याटवि पुरा पक्कणस्थजनाग्रणीः ।
पल्लीपतिरभूदुग्रः पिङ्गलाक्ष इति श्रुतः ॥ ४

निर्विन्ध्यायास्तटे शूरः क्रूरकर्मपराङ्मुखः ।
घातयेद्दूरसंस्थोऽपि ये पान्थपरिपन्थिनः ॥ ५

व्याघ्रादिदुष्टसत्त्वांश्च स हिनस्ति प्रयत्नतः ।
श्रमातुरेभ्यः पान्थेभ्यः स विश्रामं प्रयच्छति ॥ ६

आ विन्ध्याटवि मे नाम ग्राह्यं दुष्टभयावहम् ।
नित्यं कार्पटिकान् सर्वान् स पुत्रेण प्रपश्यति ॥ ७

तेऽपि च प्रतितीर्थं हि तमाशीर्वादयन्ति वै ।
इति तिष्ठति पिङ्गाक्षे साटवी नगरायिता ॥ ८

अध्वनीनोऽध्वगान् कोऽपि न रुणद्धि ससाध्वसम् ।
कदाचित्तत्पितृव्येण समीपग्रामवासिना ॥ ९

श्रुतः कार्पटिकानां हि सार्थः सार्थो महाध्वगः ।
लुब्धकस्तद्धने लुब्धः क्षुद्रः स निधनोद्यतः ॥ १०

स रुरोध तमध्वानमग्रे गत्वा निगूढवत् ।
तदायुष्यस्य शेषेण पिङ्गाक्षो मृगयां गतः ॥ ११

तस्मिन्नरण्ये तं मार्गं निकषाप्युषितो निशि ।
परप्राणद्रुहां पुंसां न सिध्येयुर्मनोरथाः ॥ १२

विश्वं कुशलि तेनैव विश्वेशपरिरक्षितम् ।
न चिन्तयेदनिष्टानि तस्माद्गृष्टिः कदाचन ॥ १३

विधिदृष्टं यतो भावि कल्मषं भावि केवलम् ।
तस्मादात्मसुखप्रेप्सुरिष्टानिष्टं न चिन्तयेत् ॥ १४

चिन्तयेच्चेत्सदा चिन्त्यो मोक्षोपायो न चेतरः ।
व्युष्टायां चापि यामिन्यामभूत्कोलाहलो महान् ॥ १५

घातयध्वं पातयध्वं नग्नयध्वं द्रुतं भटाः ।
न मारयध्वं त्रायध्वं भटाः कार्पटिका वयम् ॥ १६

अनायासं लुण्ठयध्वं नयध्वं च यदस्ति नः ।
वयं पान्था अनाथाश्च विश्वनाथपरायणाः ॥ १७

अनाथास्तेन दूरं नो नाथस्तत्पथिकाः परे ।
वयं पिङ्गाक्षविश्वासादस्मिन् मार्गेऽकुतोभयाः ॥ १८

यातायातं सदा कुर्मः स च दूरं गतो वनात् ।
इति श्रुत्वा च पिङ्गाक्षो भटकार्पटिकेरितम् ॥ १९

दूरं मा भैष्ट मा भैष्ट ते ब्रुवन्ति समागताः ।
कोऽयं कोऽयं दुराचारः पिङ्गाक्षे मयि जीवति ॥ २०

लुलुण्ठयिषवः पान्थान् प्राणलिङ्गसमान् मम ।
इति तद्वाक्यमाकर्ण्य ताराक्षस्तत्पितृव्यकः ॥ २१

धनलोभेन पिङ्गाक्षे पापं पापो ह्यचिन्तयत् ।
कुलधर्मं व्यपास्यैष वर्तते कुलपांसनः ॥ २२

चिरं चिन्तितमद्यामुं घातयिष्याम्यसंशयम् ।
विचार्येति स दुष्टात्मा भृत्यानाज्ञापयत् क्रुधा ॥ २३

आदात्रेनं घातयन्तु ततः कार्पटिकानिमान् ।
ततो युद्धं दुराचारास्तेनैकेन च तेऽखिलाः ॥ २४

यथाकथञ्चित्ताननयत्स[दनयत्तान् ]स्वसंत्रसथान्तिकम् ।
दधत् त्रेधानुकरणं चिन्तासंहननं शरैः ॥ २५

असूदयिष्याम्येनां[ष्यमेनां]स्तदभविष्यन् यदीश्वराः ।
अभिलक्ष्यन्निति प्राणानत्याक्षीत्स परार्थतः ॥ २६

तेऽपि कार्पटिकाः प्राप्तास्तत्फलं गतसाध्वसाः ।
या गतिस्त्वन्तकाले स्याद्गतिस्तदनुरूपतः ॥ २७

दिगीशत्व[1]मतः प्राप्तो नैर्ऋत्यां नैर्ऋतेश्वरः ।
इत्थमस्य स्वरूपं तदावाभ्यां समुदीरितम् ॥ २८

सूतः—

तस्मात्कुर्याद्विशेषेण पान्थसंरक्षणं द्विजाः ।
तेनैव ध्वस्तसंक्लेशः सद्यः सर्वाधिको भवेत् ॥ २९

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे पान्थसंरक्षणफलकथनं
नाम पञ्चचत्वारिंशोऽध्यायः

इति श्रीसायणाचार्यविरचिते पुरुषार्थसुधानिधौ
धर्मस्कन्धः समाप्त

1. क. त्वमनु

# ॥ अथ अर्थस्कन्धः ॥

## ॥ प्रथमोऽध्यायः ॥

### राजधर्मकथनम्

श्रीसूतः—

एवमुक्तो मया विप्रा धर्मस्कन्धो महत्तरः ।
अर्थस्कन्धमथो वक्ष्ये पुरुषार्थसुधानिधौ ॥ १

अर्थे [1]प्रोक्ता राजधर्माः सप्तव्यसननिन्दनम् ।
[2]सत्सहायश्च सन्मित्रं दुष्टभृत्यविनिन्दनम् ॥ २

विश्वास[3]घातके निन्दा निज[4]भक्तेष्ववञ्चनम् ।
अकालकृतकार्यस्य हानि[5]र्भीतस्य रक्षणम् ॥ ३

ऋणसम्बन्धकथनं परोपकरणक्रमः ।
[6]कूटसाक्ष्यं चानुचितपदप्रार्थनदूषणम् ॥ ४

स्वाश्रयस्यापरित्यागः कृतघ्नस्य च दूषणम् ।
आशानिन्दाप्रकथनमसमीक्षितकारिता ॥ ५

तत्रादौ संप्रवक्ष्यामि राजधर्मं द्विजोत्तमाः ।
इममेव पुराप्राक्षीन्मनुर्मत्स्याकृतिं हरिम् ॥ ६

मनुः —

सोमसूर्य[7]प्रसूतानां धर्मचारित्रमुत्तमम् ।
क्षत्रियाणां समासेन ब्रूहि चक्रगदाधर ॥ ७

---

1. क. ख. प्रोक्तो राजधर्मः-
2. अ. सत्सभावर्णनं चैव दुस्सभाया विनिन्दनम्
3. कं. ख. पालके
4. क. ख. भक्तेषु बञ्चनम्
5. क. ख. भूतस्य
6. अ. कूटसाक्ष्यप्रयोगश्च प्रार्थनादोषभाषणम्
7. ख. प्रजातानां

मत्स्यः—

ऐलेक्ष्वाकु [1]हि वंशस्य प्रकृतिं परिचक्षते ।
ऐलवंश्याश्च ये भूपास्तथैवैक्ष्वाकवो नृपाः ॥ ८

तानि चैकशतं विद्धि कुलानि पृथिवीभृताम् ।
राजेन्द्र [2]द्विविधा योनी राज्ञां तत्र निबोध मे ॥ ९

तत्कुलीनश्च शूरश्च यश्च सेनां प्रकर्षति ।
[3]क्षत्त्रियो हि स्वधर्मेण श्रियं प्राप्नोति भूयसीम् ॥ १०

दण्डनीत्या यदा राजा [4]सम्यक्कात्स्न्र्येन [5]वर्तते ।
तदा कृतयुगं नाम [6]कालः श्रेष्ठः प्रजायते ॥ ११

कालो वा कारणं [7]राज्ञां राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ १२

राजा चरति चेद्धर्मं देवतायै प्रकल्पयेत् [ति] ।
स चेदधर्मं चरति नरकायैव [8]गच्छति ॥ १३

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ १४

[9]रञ्जनात्खलु राजत्वं प्रजानां पालनादपि ।
नृपाणां [10]परमो धर्मः प्रजानामेव [11]पालनम् ॥ १५

अभिषेकार्द्रशिरसा राज्ञा राजीवलोचन ।
[12]प्रजानां रक्षणं कार्यं तत्र राज्यं प्रतिष्ठितम् ॥ १६

राज्ञा सन्मन्त्रिणः कार्याः पृथिवीपालनेप्सुना ।
[13]षाड्गुण्यविधितत्त्वज्ञा देशकालविशारदाः ॥ १७

---

1. क. ख. तु
2. क. ख. त्रिविधो
3. क. ख. क्षत्रियोऽपि
4. क. ख. स्यात्
5. क. ख. प्रवर्तते
6. क. ख. काले शेषः प्रजापतेः
7. क. ख. राज्ञो
8. क. ख. केवलम्
9. क. ख. रक्षणात्
10. क. ख. प्रथमो
11. क. ख. रक्षणम्
12. क. ख. सहायवरणं
13. अ. सद्गुणा

अर्थशास्त्रेषु निपुणा धर्म[1]शास्त्रप्रवर्तकाः ।
समाः शत्रौ च मित्रे च धीराः सर्वजनप्रियाः ॥ १८

कुलीनाः सत्यनिरताः स्वामिभक्ता दृढव्रताः ।
राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्त्रियोऽथ वा ॥ १९

कुलीनः शीलसम्पन्नो धनुर्वेदविशारदः ।
[2]गजशिक्षाश्वशिक्षासु कुशलः श्लक्ष्णभाषितः ॥ २०

कृतज्ञः [3]कर्मशूरश्च तथा क्लेशसहो वशी ।
व्यूहतत्त्वविधानज्ञः फल्गुसारविशेषवित् ॥ २१

प्रतिहारी तथा [4]कार्यः प्रियवादी न चोद्धतः ।
चित्तग्राही तु सर्वेषां प्रांशुर्दक्षः स्वरूपवान् ॥ २२

यथोक्तवादी दूतः स्याद्देशभाषाविशारदः ।
शक्तः क्लेशसहो वाग्मी दूतो ग्राह्यो महीपतेः ॥ २३

राज्ञा तु रक्षिणः कार्या[5]स्सदा क्लेशसहा हिताः ।
प्रांशवो नियताः शूरा दृढभक्ता निराकुलाः ॥ २४

ताम्बूलधारी भवति दृढभक्तिश्च पार्थिवे ।
[6]अनाकार्योऽनृशंसश्च नारी वाप्यथ तद्गुणा ॥ २५

सन्धिविग्रह[7]कौ कार्यौ राज्ञा नयविशा[8]रदौ ।
[9]षाड्गुण्यविधितत्त्वज्ञो देशभाषाविशारदः ॥ २६

कृताकृतज्ञो भृत्यानां राज्ञः स्याद्देशरक्षिता ।
खड्गधारी भवेद्राज्ञः शूरः क्लेशसहस्तथा ॥ २७

सुरूपस्तरुणः प्रांशुर्दृढभक्तिः कुलोचितः ।
कोशधारी भवेद्राज्ञः सर्वक्लेशसहः क्षमः ॥ २८

---

1. क. ख. शास्त्रावलोकिनः
2. क. ख. हस्ति-
3. क. ख. कर्मणा शूरः
4. क. ख. ग्राह्यः
5. अ. स्सह्याः
6. अ. अनाहार्यो विनीतश्च
7. क. ख. कः कार्यो
8. क. ख. रदः
9. अ. पुस्तके इदमर्धं, 27, 28, श्लोकौ 29 श्लोकपूर्वार्धं च न दृश्यन्ते

शूरश्च बलयुक्तश्च गजाश्वरथकोविदः ।
ग्राह्यो महीभुजा सूतो हयायुर्वेदतत्त्ववित् ॥ २९

शूरश्च कृतविद्यश्च [1]हयचित्तविशेषवित् ।
राज्ञा सभासदः कार्या द्विजमुख्या विशेषतः ॥ ३०

लेखकः स्यान्महीभर्तुर्बालो बुद्धिमतां वरः ।
सर्वदेशाक्षराभिज्ञः शास्त्र[2]विद्धर्मतत्परः ॥ ३१

धर्माधिकारिणः कार्या जनाह्लादनतत्पराः ।
पुरुषान्तरतत्त्वज्ञाः प्रांशवश्च न लोलुपाः ॥ ३२

धनाध्यक्षो भवेद्राज्ञामप्रमत्तो विचक्षणः ।
लोहशस्त्राजिनादीनां रत्नादीनां विशेषवित् ॥ ३३

राज्ञा वैद्यः सदा कार्यो धर्मात्मा च कुलोद्भवः ।
परम्परागतश्चापि दक्षश्चाष्टाङ्गनिर्णये ॥ ३४

राज्ञा कार्यो गजाध्यक्षः सर्वक्लेशसहः [3]सदा ।
हस्तिशिक्षाविधानज्ञो गजजातिविशेषवित् ॥ ३५

[4]एतैर्गुणैस्तथा युक्तो गजयोधी विशेषतः ।
अश्वाध्यक्षो भवेद्राज्ञामश्वशिक्षापरायणः ॥ ३६

हयशिक्षाविधानज्ञस्तच्चिकित्सा[5]विधायकः ।
दुर्गाध्यक्षः स्मृतो राज्ञामुद्युक्तः सर्वकर्मसु ॥ ३७

अनाहार्यश्च शूरश्च तथा प्राज्ञः कुलोद्भवः ।
स्थपतिर्भूभुजा कार्यो लघुहस्तो जित[6]श्रमः ॥ ३८

दूरदर्शी विदूरस्थो योऽसौ वास्तुविधानवित् ।
शस्त्राचार्यः [7]प्रतिग्राह्यो राज्ञा शस्त्रे विचक्षणः ॥ ३९

---

1. क. ख. भूमिभाग
2. क. ख. बद्धार्थवित्तदा
3. क. ख. तथा
4. क. ख. एतैरेव गुणैर्युक्तो
5. क. ख. विशेषावत्
6. क. ख. क्लमः
7. क. ख. परिग्राह्यो राज्ञा चास्त्र-

यन्त्रमुक्ते पाणि[1]मुक्ते अमुक्ते मुक्तधारिते ।
राज्ञा[2]मन्तःपुराध्यक्षो विनीतश्च भवेत्तथा ॥ ४०

पञ्चाशाब्दाधिकः षण्डो नरो वा सप्ततेः परः ।
कर्माण्यपरिमेयानि राज्ञां सन्ति महामते ॥ ४१

उत्तमाधममध्यानि तेषु युक्तान्नियोजयेत् ।
नियोगं पौरुषं भक्तिं [3]श्रुतं शौर्यं [4]कुलञ्च यत् ॥ ४२

ज्ञात्वा वृत्तिर्विधातव्या पुरुषाणां महीक्षिता ।
बहुभिर्मन्त्रयेत्कार्यं राजा मन्त्रं पृथक् पृथक् ॥ ४३

मन्त्रिणामपि नो कुर्यान्मन्त्री मन्त्रप्रकाशनम् ।
[5]निश्चयश्च सदा मन्त्रे [6]कार्य एकेन सूरिणा ॥ ४४

एकस्यैव महीभर्तु[7]र्नैव कार्यस्य निश्चयः ।
ब्राह्मणान् पर्युपासीत कुर्या[8]न्नित्यं सुनिश्चितः ॥ ४५

तेभ्यः शिक्षेत विनयं विनीतात्मा हि नित्यशः ।
बहवोऽविनयाद्भ्रष्टा राजानः सपरिच्छदाः ॥ ४६

बलस्थाश्चैव [9]राज्यानि विनयात्प्रतिपेदिरे ।
[10]त्रैविद्येभ्यस्त्रयीविद्यां दण्डनीतिश्च शाश्वतीम् ॥ ४७

आन्वीक्षिकीञ्चात्मविद्यां [11]वार्तारम्भञ्च लोकतः ।
इन्द्रियाणां जये [12]प्राज्ञः समातिष्ठेद्दिवानिशम् ॥ ४८

जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ।
यजेत राजा क्रतुभिर्बहुभिश्चोक्तदक्षिणैः ॥ ४९

---

1. ख. -तलैरमुक्ते मुक्त-
2. क. ख. मुक्तः पुरा
3. क. ख. शान्तिं
4. क. ख. कृतं च
5. क. ख. निश्चयस्य
6. क. ख. कार्यमेकेन
7. क. ख. र्नेष्टः कार्ये विनिश्चयः
8. क. ख. न्नीत्या
9. क. ख. विनयात्सङ्गतिं प्रति-
10. ख. त्रिविधेभ्य-
11. क. ख. वार्तारम्भांश्च
12. क. ख. योगं

धर्मार्थञ्चैव विप्रेभ्यो [1]दद्याद्भूयो धनान्यपि ।
सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेत् [2]करम् ॥ ५०

स चोत्तमैर्गुणै[3]रेभिर्हर्षिताः पालयेत्प्रजाः ।
सङ्ग्रामेष्वनिवर्तित्वं प्रजानां परिपालनम् ॥ ५१

शुश्रूषा ब्राह्मणानाञ्च राज्ञां [4]निश्रेयसं परम् ।
कृपणानाथ[5]दीनानां विधवानाञ्च योषिताम् ॥ ५२

योगक्षेमं च वृत्तिं च तथैव परि[6]कल्पयेत् ।
वर्णाश्रमव्यवस्थानं यथाकार्यं विशेषतः ॥ ५३

तापसे सर्वकार्याणि राज्यमात्मानमेव च ।
निवेदयेत्प्रयत्नेन [7] दैववच्चैनमर्चयेत् ॥ ५४

नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ।
गूहेत् कूर्मवदङ्गानि रक्षेद्विवरमात्मनः ॥ ५५

न विश्वसेदविश्वस्तं विश्वस्तं नातिविश्वसेत् ।
[8]विश्वस्ताद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ५६

बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥ ५७

दृढप्रहारी च भवेत्तथा सूकरवन्नृपः ।
चित्राकारश्च शिखिवद्दृढभक्तस्तथा श्ववत् ॥ ५८

भवेच्च मधुरालापी तथा कोकिलवन्नृपः ।
काकशङ्की भवेन्नित्यमज्ञातवसतिं वसेत् ॥ ५९

न विद्वज्जनसम्बाधं न चाज्ञातं जलाशयम् ।
नापरीक्षितपूर्वं तु पुरुषैराप्तकारिभिः ॥ ६०

---

1. क. ख. दद्याद्भोगान्
2. क. ख. बलिम्
3. क. ख. राजा
4. क. ख. निश्रेयसां पदम्
5. अ. वृन्दानां
6. अ. पालयेत्
7. क. ख. देववच्चिरमर्चयेत
8. अ. पुस्तके इदमर्धं 57, 58, 59, तमश्लोकाश्च नोपलभ्यन्ते

नारोहेत् कुञ्जरं यानं न पत्तिं तुरगं तथा ।
नाविज्ञातां स्त्रियं गच्छेन्नैव वास्तुद्वये वसेत् ॥ ६१

परराजगृहात्प्राप्तं जनं सङ्ग्रहकाम्यया ।
दुष्टं वाप्यथवादुष्टमाश्रयीत प्रयत्नतः ॥ ६२

दुष्टं विज्ञाय विश्वासं न कुर्यात्तत्र भूपतिः ।
[1]क्रमाद्भृत्यार्जनं राजा सदा कुर्यान्नृपोत्तमः ॥ ६३

कुभृत्यानां च चारित्रं चारैर्विज्ञाय सर्वदा ।
गुणिनां पूजनं कुर्यान्निर्गुणानाञ्च शासनम् ॥ ६४

स्वके देशे परे देशे ज्ञानशीलान् विचक्षणान् ।
अनाहार्यान् क्लेशसहान् नियुञ्जीत सदा चरान् ॥ ६५

[2]परस्याविदितान् सौम्यान् तथा ज्ञातान् परस्परम् ।
नानालिङ्गधराकारान् [3]राजा शूरान्नियोजयेत् ॥ ६६

नैकस्य राजा श्रद्दध्याच्चारस्यापि च भाषितम् ।
चाराणामपि यत्नेन राज्ञा कार्यं परीक्षणम् ॥ ६७

सर्वं [4]राज्ञां चरायत्तं तेषु यत्नः सदा भवेत् ।
जनानुरञ्जनं लोके [5]क्रमात्कार्यं महीभुजा ॥ ६८

विरागजननं सर्वं [6]वर्जनीयं प्रयत्नतः ।
आक्षिप्य वचनं राज्ञो न वक्तव्यं तथा वचः ॥ ६९

अनुकूलं प्रियं तस्य वक्तव्यं जनसंसदि ।
रहोगतस्य वक्तव्यमप्रियं [7]तद्धितं भवेत् ॥ ७०

परार्थमपि वक्तव्यं स्वच्छचेतसि पार्थिवे ।
स्वार्थं सुहृद्भिर्वक्तव्यं न स्वयं तु कथञ्चन ॥ ७१

---

1. ख. कामात्प्रत्यार्जनं कुर्यात्
2. क. ख. जनस्यावि-
3. क. ख. नानाशूरा-
4. क. ख. राज्यं
5. क. ख. कर्म कार्यं
6. अ. न तथा स्यात्
7. क. ख. यद्धितं

न च हार्यं धनं किञ्चिन्नियुक्तेन च कर्मसु ।
नेपेक्षणीयं नश्यच्च [1]तदा राज्ञां प्रियो भवेत् ॥ ७२

अन्तःपुरधनाध्यक्षैर्वैरिदूतैः पराकृतैः ।
संसर्गं न व्रजेत्प्राज्ञो विना पार्थिवशासनम् ॥ ७३

निस्नेहतां [2]चापमानं तत्प्रयुक्तं तु गोपयेत् ।
यच्च गुह्यं भवेद्राज्ञो न तल्लोके प्रकाशयेत् ॥ ७४

आज्ञाप्यमाने चान्यस्मिन् समुत्थाय त्वरान्वितः ।
अहं किं करवाणीति वाच्यो राजा विजानता ॥ ७५

स्वातन्त्र्ये क्रियमाणे तु लाघवन्तु [3]व्रजेद्ध्रुवम् ।
राज्ञां प्रियाणि वाच्यानि न [4]चात्यर्थं पुनः पुनः ॥ ७६

न [5]हास्यशीलश्च भवेन्न चापि भ्रुकुटीमुखः ।
नातिवक्ता न चावक्ता न च मात्सरिकस्तथा ॥ ७७

आत्मसम्भावितश्चैव न भवेत्तु कथञ्चन ।
दुष्कृतानि [6]नरेन्द्रस्य न च सङ्कीर्तयेत् क्वचित् ॥ ७८

[7]वस्त्रं धनमलङ्कारं राज्ञा दत्तं तु धारयेत् ।
औदार्येण न तद्देयमन्यस्मै भूतिमिच्छता ॥ ७९

नानिर्दिष्टे तथा द्वारे प्रविशेत्तु कदाचन ।
न च पश्येत राजानमयोग्यावसरेषु च ॥ ८०

राज्ञश्च दक्षिणे पार्श्वे वामे चोपविशेत्सदा ।
पुरस्ताच्च तथा पश्चादासनं च विगर्हितम् ॥ ८१

शाठ्यं लौल्यञ्च पैशुन्यं नास्तिक्यं क्षुद्रता तथा ।
[8]चापलञ्च परित्याज्यं नित्यं राजानुवर्तिना ॥ ८२

---

1. क. ख. तथा
2. क. ख. चावमानं
3. क. ख. प्रयोजयेत्
4. क. ख. चान्यार्थं
5. क. ख. जाड्य-
6. क. ख. नरेन्द्राणां
7. क. ख. वस्त्रमन्न-
8. क. ख. चापल्यं च

त्यजेद्विरक्तं नृपतिं संरक्तं च समाश्रयेत् ।
एते गुणा विरक्तस्य यैर्ज्ञेयस्तद्विधो नृपः ॥ ८३

[1]वाक्यं समं न वदति वृत्तिच्छेदं करोति च ।
आराधनासु सर्वासु सुप्तवच्च विचेष्टते ॥ ८४

कथासु दोषान् क्षिपति वाक्यभङ्गं करोति च ।
लक्ष्यते विमुखश्चैव गुणसङ्कीर्तने कृते ॥ ८५

दृष्टिं क्षिपति चान्यत्र क्रियमाणे तु कर्मणि ।
विरक्तलक्षणं ह्येतच्छृणु रक्तस्य लक्षणम् ॥ ८६

दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चादरात् ।
कुशलादिपरिप्रश्ने सम्प्रयच्छति चासनम् ॥ ८७

[2]विविक्तदर्शनं चास्य रहस्ये न च शङ्कयते ।
जायते हृष्टवदनः श्रुत्वा तस्य तु सङ्कथाम् ॥ ८८

[3]अप्रियाणि तु वाक्यानि तदुक्तान्यभिनन्दति ।
उपायनं च गृह्णाति स्तोकमप्यादरात्तथा ॥ ८९

[4]कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा ।
इति रक्तस्य चिह्नानि तस्य सेवा फलप्रदा ॥ ९०

आपत्सु न त्यजेत्पूर्वं विरक्तमपि सेवितम् ।
एवं सेवाविशेषज्ञैः सेवकैः परिवारितः ॥ ९१

राजा सहाय[5]सम्पन्नः प्रभूतयवसेन्धनम् ।
रम्यमानतसामन्तं [6]मध्येदेशं समाश्रयेत् ॥ ९२

वैश्यशूद्रजनप्रायमनाहार्यं तथा परैः ।
अदेवमातृकं रम्यमनुरक्तजनान्वितम् ॥ ९३

---

1. अ. पुस्तके इदमर्धं नास्ति
2. अ. पुस्तके अयं श्लोको नास्ति
3. अ. पुस्तके इदमर्धं नास्ति
4. इदमर्धं क. ख. पुस्तकयोर्नास्ति
5. क. ख. सम्पन्नं
6. क. ख. मध्यदेशं

[1]चोरैरपीडितश्चापि बहुपुष्पफलं तथा ।
अगम्यं परचक्रेण [2]तत्पातसहमापदि ॥ ९४

सरीसृपविहीनं च व्यालतस्करवर्जितम् ।
एवंविधं यथा[3]साम्यं राजा विषय[4]मावसेत् ॥ ९५

तत्र दुर्गं नृपः कुर्यात् षण्णामेक[5]तमं बुधः ।
[6]वनदुर्गं महीदुर्गं नरदुर्गं तथैव च ॥ ९६

[7]वार्क्षं च जलदुर्गं च गिरिदुर्गं [8]च भूपतेः ।
सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते ॥ ९७

दुर्गञ्च परिखोपेतं [9]द्वाराट्टालकसंयुतम् ।
शतघ्नीयन्त्रमुख्यैश्च [10]सर्वदिक्षु समाहितम् ॥ ९८

[11]दृढार्गलकवाटञ्च तत्र स्यात्सुमनोहरम् ।
सपताकध्वजारूढं येन राजा विशेत्पुरम् ॥ ९९

[12]चतस्रश्च तथा तत्र कार्याश्च पुरवीथयः ।
आयतं चतुरश्रञ्च [13]दीर्घं वा कारयेत्पुरम् ॥ १००

दुर्गद्वाराणि गुप्तानि कार्याण्यपि च भूभृता ।
[14]सहस्रश्चात्र सर्वेषामायुधानां [15]प्रशस्यते ॥ १०१

औषधानाञ्च धान्यानां [16]रथानामपि वाससाम् ।
[17]यवसेन्धनशाखानां मरिचानां च सर्वशः ॥ १०२

---

1. क. ख. करै-
2. क. ख. तापदं स महापदि
3. क. ख. लाभं
4. ख. माविशेत्
5. क. ख. क्रमं
6. क. ख. धन-
7. क. ख. वार्षं
8. क. ख. महीपतेः
9. अ. वराट्फलकसंयुतम्
10. क. ख. सर्वे दीर्घं समावृतम्
11. क. ख. सगोपुर-
12. अ. चतस्रश्च पुरस्तत्र कार्याश्च पुरसम्भयः
13. क. ख. वृत्तं
14. क. ख. संग्रहश्चात्र
15. क. ख. च शस्यते
16. क. ख. साराणामपि
17. इदमर्धं अ. पुस्तके नास्ति

अजाविमहिषाणाञ्च गवां कुर्याच्च सङ्ग्रहम् ।
राजपुत्रस्य रक्षा च कर्तव्या च महीभुजा ॥ १०३

धर्मकामार्थसूत्राणि सर्वशास्त्राणि शिक्षयेत् ।
अविनीतकुमारं हि कुलमाशु विशीर्यते ॥ १०४

[1]अथ कार्येषु सर्वेषु विनीतं वा नियोजयेत् ।
प्रागात्ममन्त्रिणश्चैव ततो भृत्या महीभुजा ॥ १०५

ज्ञेयाश्चानन्तरं पौरा विरुध्येत ततोऽरिभिः ।
शत्रवस्त्रिविधा ज्ञेयास्तुल्यप्राकृतकृत्रिमाः ॥ १०६

गुरवस्ते यथापूर्वं तेषु यत्नः सदा भवेत् ।
स्वाम्यमात्यौ जनपदं बलं दुर्गं तथैव च ॥ १०७

कोशं मित्रञ्च धर्मज्ञाः सप्ताङ्गं राज्यमुच्यते ।
सप्ताङ्गस्य च राज्यस्य मूलं स्वामी प्रकीर्तितः ॥ १०८

तन्मूलत्वात्तथाङ्गानां स तु रक्ष्यः प्रयत्नतः ।
[2]स्वाङ्गरक्षा च कर्तव्या तथा तेन प्रयत्नतः ॥ १०९

अङ्गेषु यः पार्थिवस्य द्रोहमारभतेऽल्पधीः ।
[3]वधस्तस्य तु कर्तव्यः शीघ्रमेव महीभुजा ॥ ११०

राज्ञा न [4]मृदुना भाव्यं न भाव्यं [5]दारुणात्मना ।
काले [6]मृदुर्भवेद्राजा भवेत् काले च दारुणः ॥ १११

भृत्यैः सह महीपालः परिहासं [7]विवर्जयेत् ।
स्मितपूर्वाभिभाषी [8]स्यात्सर्वस्यैव महीपतिः ॥ ११२

---

1. क. ख. अधिकारेषु
2. क. ख. पुस्तकयोरिदमर्धं नास्ति
3. क. ख. वधोऽस्य नावमन्तव्यः शीघ्र-
4. क. ख. मृत्युना
5. क. ख. दारुणन तु
6. क. ख. मृत्यु-
7. क. ख. विसर्जयेत्
8. क. ख. च सर्व-

[1]वध्ये कर्मणि राजा तु मृदुत्वं न समाचरेत् ।
अदीर्घसूत्रश्च भवेत्सर्वकर्मसु पार्थिवः ॥ ११३

रागे दर्पेऽवमाने च द्रोहे पापे च कर्मणि ।
अप्रिये चैव कर्तव्ये [2]दीर्घसूत्रकरो भवेत् ॥ ११४

राज्ञा संवृतमन्त्रेण सदा भाव्यं नृपोत्तम ।
तस्यासंवृतमन्त्रस्य ज्ञेयाः सर्वापदो ध्रुवम् ॥ ११५

मन्त्रभेदेन बहवो [3]विनष्टाः पृथिवीभृतः ।
आकारैरिङ्गितै[4]र्भावैश्चेष्टया भाषितेन च ॥ ११६

नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ।
दुह्याद्धिरण्यं धान्यञ्च मही राज्ञा सुरक्षिता ॥ ११७

नित्यं स्वेभ्यः परेभ्यश्च यथा माता यथा पिता ।
सर्वकर्मेदमायत्तं विधाने दैवमानुषे ॥ ११८

तयोर्दैवं विचिन्त्यं हि विद्यते पौरुषे क्रिया ।
स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम् ॥ ११९

तस्मात्पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः ।
प्रतिकूलं तथा दैवं पौरुषेण विहन्यते ॥ १२०

दैवमेवं न जानन्ति नराः पौरुषवर्जिताः ।
पौरुषं दैवसम्पत्त्या काले भवति पार्थिव ॥ १२१

दैवं पुरुषकारश्च कालश्च मनुजोत्तमः ।
त्रयमेतन्मनुष्यस्य [5]वर्धितं स्यात्फलावहम् ॥ १२२

नालसाः [6]प्राप्नुयुः सत्त्वं सर्वदैवपरायणाः ।
तस्मात्सर्वप्रयत्नेन पौरुषे यत्नमाचरेत् ॥ १२३

---

1. क. ख. वध्येष्वपि महीपालः भ्रुकुटीं न समाचरेत्
2. क. ख. दीर्घसूत्रः प्रशस्यते
3. क. ख. ऽनिष्ठाः प्रादुर्भवन्ति च
4. क. ख. गत्या चेष्टया
5. क. ख. पण्डितस्य फला-
6. क. ख. प्राप्नुवन्त्यर्थान्न च दैव-

[1]सामभेदौ तथा दानं दण्डश्च मनुजोत्तम ।
उपेक्षा च तथा माया [2]बलश्च शृणु पार्थिव ॥ १२४

प्रयोगाः कथिताः सप्त तन्मे निगदतः शृणु ।
द्विविधं कथितं साम तथ्यं चातथ्यमेव च ॥ १२५

तत्राप्यतथ्यं साधूनामुपक्रोशाय जायते ।
[3]कुलीना ऋजवो दान्ता धर्मनित्या जितेन्द्रियाः ॥ १२६

सामसाध्या नरास्तथ्यं साम तेषु च योजयेत् ।
तथ्यं च साम कर्तव्यं कुलशीलादिवर्णनम् ॥ १२७

[4]तथा तदुपकाराणां कृतानां चैव वर्णनम् ।
अनयैव तथा युक्त्या कृतज्ञाख्यापनं सुखम् ॥ १२८

एवं साम्नैव कर्तव्या वशगा धर्मतत्परैः ।
परस्परं तु ये दुष्टाः क्रुद्धा भीतावमानिताः ॥ १२९

तेषां भेदं प्रयुञ्जीत भेदसाध्या हि ते मताः ।
आत्मीयान् दर्शयेदेषां परस्मै दर्शयेद्भयम् ॥ १३०

एवं हि [5]भेदयन् भिन्नान् यथावद्वशमानयेत् ।
भेदमेव प्रशंसन्ति तस्मान्नयविशारदाः ॥ १३१

[6]आत्मना न तथा कार्यो भेदः परमुखेन हि ।
ज्ञातीनां भेदनं कार्यं परेषां [7]हि जिगीषुणा ॥ १३२

रक्ष्यश्चैव प्रयत्नेन ज्ञातिभेदस्तथात्मनः ।
सर्वेषामप्युपायानां [8]दानमेव हि संमतम् ॥ १३३

प्रियो हि दानवाँल्लोके सर्वस्यैवोपजायते ।
[9]दानवानेव शक्नोति सङ्गतान् भेदितुं परान् ॥ १३४

---

1. क. ख. साम भेदस्तथा
2. क. ख. इन्द्रजालं च
3. क. ख. महाकुलीना ऋजवो
4. अ. पुस्तके इदमर्धं न दृश्यते
5. क. ख. भेदयोर्भि-
6. क. ख. स्वमुखे नाशयेद्भेदं
7. क. ख. वि-
8. क. ख. दानं श्रेष्ठतमं मतम्
9. क. ख. दानवांश्चैव शक्नोति सहितान् भेदितुं बलात्

[1]यद्यप्य[लु]लब्धाः पुरुषा गम्भीराः सागरोपमाः ।
न गृह्णन्ति [2]तथाप्येते जायन्ते पक्षपातिनः ॥ १३५

न शक्या ये वशीकर्तुमुपायत्रितयेन हि ।
[3]ज्ञातीनां भेदनं कार्यं साम्ना दानेन वा पुनः ॥ १३६

दण्डेन तान् वशीकुर्याद्दण्डो हि वशकृत्तमः ।
स्वदेशे परदेशे च धर्मशास्त्रविशारदान् ॥ १३७

विचार्य प्रणयेद्दण्डं सर्वं दण्डे प्रतिष्ठितम् ।
आश्रमी यदि वा वर्णी पूज्यो [4]वाथ गुरुर्महान् ॥ १३८

नादण्ड्यो नाम राज्ञस्तु यस्स्वधर्मेण तिष्ठति ।
अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ॥ १३९

इह राज्यात्परिभ्रष्टो नरकं प्रतिपद्यते ।
तस्माद्राज्ञा विनीतेन धर्मशास्त्रानुसारतः ॥ १४०

दण्डप्रणयनं कार्यं लोकानुग्रहकाम्यया ।
वर्णधर्माः प्रमोदन्ते तस्य राष्ट्रे यथाश्रमाः ॥ १४१

[5]एवं राज्ञः परं कार्यं [6]तथैतद्वृत्तिकारणम् ।
पालनेनैव भूतानां कृतकृत्यो महीपतिः ॥ १४२

सम्यक् पालयिता [7]भागान् धर्मस्याप्नोति [8]पुष्कलान् ।
उत्पथग्राहिणो मूढान् स्वधर्माच्च परिच्युतान् ॥ १४३

यः करोति निजे [9]कृत्ये तथैतद्वृत्तिकारणम् ।
यः क्षत्रियः स्वधर्मेण पृथिवीमनुशास्ति वै ॥ १४४

स लोके लभते वीर्यं यशः प्राप्नोति [10]सम्पदम् ।
प्रजास्तमसि मज्जेरन् न कृषिर्न वणिक्पथः ॥ १४५

---

1. अ. यद्यलब्धाश्च
2. अ. तऽप्येते
3. क. ख. पुस्तकयोरिदमर्धं नालोक्यते
4. क. ख मान्यो
5. क. ख. एतद्राज्ञः परं कृत्य
6. अ. तथैवात्रृत्तिकारणम्.
7. क ख. भाग
8. क. ख. पुष्कलम्
9. क. ख. धर्मे स राजा स्वर्गमृच्छति
10. क. ख. सद्गतिम्

मज्जेद्धर्मस्त्रयी न स्याद्यदि राजा न पालयेत् ।
वधबन्धपरिक्लेशो [1]नित्यं धर्मवतां भवेत् ॥ १४६

ममत्वं च न विन्देयुर्यदि राजा न पालयेत् ।
न यज्ञाः संप्रवर्तन्ते विधिवत्प्राप्तदक्षिणाः ॥ १४७

यदि राजा स्वधर्मेण न कुर्याद्भूमिपालनम् ।
नित्यं महीपतीनां तु राज्यं पालयतां [2]ध्रुवम् ॥ १४८

आराध्यो भगवान् विष्णुर्महेशो [3]वा विशेषतः ।
आराध्य जगतां नाथं सर्वपापहरं शिवम् ॥ १४९

विमुक्ताः सर्वपापेभ्यो यास्यन्ति शिवमन्दिरम् ।
धर्मपुत्रो वहन् भक्तिमचलां च जनार्दने ॥ १५०

सशरीरो गतः स्वर्गं सर्वैरपि सुपूजितः ।
सगरः कार्तवीर्यश्च तथा राजा भगीरथः ॥ १५१

अन्येऽपि पार्थिवाः पूज्याः शिवं प्राप्ताः परं पदम् ।
सर्वपूजाफलं विद्धि प्रजानां पालनं नृप । १५२

तस्मात्सर्वप्रयत्नेन प्रजानां पालको भव ।

सूतः—

तच्छ्रुत्वा [4]च मनुर्जज्ञे राजधर्मपरायणः ॥ १५३

अन्येऽपि राजधर्मस्थाः परां सिद्धिं प्रपेदिरे ।
तस्माद्राजा धर्मपरो देवताभक्तिसंयुतः ॥ १५४

पालयेत्सर्वभूतानि व्यसनैश्च विवर्जितः ।
[5]लोकसङ्ग्रहणार्थाय कृतकृत्यः सुखी भवेत् ॥ १५५

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे राजधर्मकथनं
नाम प्रथमोऽध्यायः

---

1. क. ख. नित्यमर्थवतां
2. क. ख. मतः
3. क. ख. ऽपि
4. क. ख. तु
5. इदमर्धं क. ख. पुस्तकयोर्न दृश्यते

## ॥ द्वितीयोऽध्यायः ॥

### स्त्रीव्यसननिन्दा

सूतः—

स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यञ्च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ १

व्यसनान्येवमेतानि राज्ञामत्यन्तसेवया ।
बलान्मनांस्याहरन्ति कुर्वन्ति च महापदम् ॥ २

तेषामाद्यं कष्टतरं [1]सर्वदा स्त्रीनिषेवणम् ।
तत्संसक्ता महात्मानो विनष्टा बहवोऽभवन् ॥ ३

चलस्वभावा दुस्सेव्या [2]दुर्ग्राह्यहृदयाः स्त्रियः ।
नित्यं मायोपजीविन्यस्ताभिः को वा न वञ्चितः ॥ ४

नासां कश्चिदगम्योऽस्ति नासां [3]वचसि संस्थितिः ।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥ ५

असत्याः सर्वलोकेऽस्मिन् सततं निकृतिप्रियाः ।
मेघान्तराग्निपातालविषसर्पाग्निसन्निभाः ॥ ६

स्त्रियो माया[4]सहस्राणि जनयन्ति कुचेतनाः ।
जितेन्द्रियं जितक्रोधं सर्वज्ञमपि ताः स्त्रियः ॥ ७

[5]चालयन्ति च मायाभिस्ताभिः को वा न वञ्चितः ।
अत्रानुरूपं शृण्वन्तु स्त्रीणां माया[6]विजृम्भितम् ॥ ८

इतिहासमिमं पुण्यं धन्यं श्रोत्रसुखावहम् ।
बाणासुरपुरे रम्ये पूर्वं शोणितसाह्वये ॥ ९

---

1. क. ख. व्यसनं चातिभीषणम्
2. क. ख. दुर्ग्राह्या भावतः
3. क. ख. वयसि
4. क. ख. सहस्रं च
5. क. ख. वञ्चयन्ति
6. क. विजृम्भणम्

नदीतीरे हरः क्रीडां चक्रे देवासुरैः सह ।
जेपुः प्रणेमुरूचुश्च तुष्टुवुर्मुनय[1]स्ततः ॥ १०

नेमु[2]र्जगुश्च जगृहुर्वरां[3]स्तुष्यद्वृषध्वजात् ।
ननृतुर्जहसुश्चापि गन्धर्वाप्सरसस्तदा ॥ ११

[4]ववल्गुः प्रमथाः सर्वे ऋषयो जहृषुस्तथा ।
आययुस्तीर्थसङ्घाश्च ददृशुः शाङ्करीं रतिम् ॥ १२

तस्मिंस्तुष्टे प्रजाः सर्वाः परमां निर्वृतिं ययुः ।
चस्खलुर्मुनयः सर्वे स्त्रीणां दृष्ट्वा विचेष्टितम् ॥ १३

पुपुषुश्चापि ऋतवः [5]स्वं स्वं भावं तु तत्र च ।
चुक्रुशुर्भृङ्ग[6]सङ्घाश्च शाखिनां मधुलंपटाः ॥ १४

ततः क्रीडाविहारे तु मत्तो बालेन्दुशेखरः ।
अनिर्जितोऽपि कामेन हृष्टः प्रोवाच नन्दिनम् ॥ १५

ईश्वरः—

[7]हे नन्दिकेश श्रृङ्गारयुक्तां गौरीमिहानय ।
स तथेति प्रतिज्ञाय शनैर्गत्वा तु पार्वतीम् ॥ १६

उवाच देवि देवस्त्वां द्रष्टुमिच्छति शोभने ।
देवी [8]तद्वचनाद्द्रष्टुं [9]चलिताभूत्पिनाकिनम् ॥ १७

अप्सरोभिस्तदा शीघ्रमन्योन्यमभिमन्त्रितम् ।
अयं पिनाकी कामार्तः [10]पार्वतीगमनोत्सुकः ॥ १८

या नारी गिरिजारूपा संक्रीडयति शङ्करम् ।
सर्वासां दिव्यनारीणां सा राज्ञी भवति क्षणात् ॥ १९

---

1. क. ख. श्च तम्
2. क. ख. ररोमुश्च
3. क. ख. स्तुष्टाद्वृष-
4. अ. ववृचुः
5. क. ख. स्वीयं
6. क. ख. सञ्जाताः
7. क. ख. भो
8. क. ख. तद्वचसा
9. क. ख. त्वरिता
10. क. ख. पार्वत्या दर्शनो-

का मोहयति कामारिं का वशीकुरुते हरम् ।
विना दाक्षायणीं देवीमित्यन्योन्यं स्त्रियोऽवदन् ॥ २०

ततः कुम्भाण्डदुहिता चित्रलेखा वचोऽब्रवीत् ।
अद्यैव गौर्या रूपेण शङ्करं मोहयाम्यहम् ॥ २१

आकृतिं नन्दिनः शीघ्रं काचित् कर्तुं क्षमा यदि ।
देव्याः सखीनाञ्च तथा सुखसाध्यं करिष्यथ ॥ २२

सूतः—

दधार नन्दिनो रूपं तत्क्षणा[1] देव चोर्वशी ।
कालीरूपं घृताची च विश्वाची चाण्डिकं वपुः ॥ २३

सावित्र्या अपि गायत्र्या रूपं प्रम्लोचिमेनके ।
[2]जयारूपं मनोहारि जगृहे पुञ्जिकस्थला ॥ २४

वैनायकं महद्रूपमकरोच्च कृतस्थला ।
दधुराकृतिमन्याश्च मातॄणामप्सरोगणाः ॥ २५

चित्रलेखा स्त्रियो दृष्ट्वा वैष्णव्या मायया युता ।
चकार रूपं पार्वत्या दिव्यमत्यद्भुतं शुभम् ॥ २६

फुल्लरक्ताब्जसङ्काशचरणं ललिताकृति ।
क्रमोपचितसौभाग्यपादाङ्गुलिविराजितम् ॥ २७

सुवर्णकदलीकाण्डसमानोरु[3]विभूषितम् ।
वर्तुलोन्नतसम्पूर्णदिव्यस्फिक्परिशोभितम् ॥ २८

[4]आवर्तसदृशाकारनतनाभिविराजितम् ।
किञ्चित्कुंचितसुस्निग्धनीलरोमावलीयुतम् ॥ २९

अनर्घ्यरत्नखचितमेखलादाममण्डितम् ।
नानावर्णमहावस्त्ररम्यचण्डातकायुतम् ॥ ३०

वज्रषट्पदवेदीनां हृतक्षामत्वमध्यकम् ।
हेमाब्जरागसङ्काशपूर्णत्रिवलिसंयुतम् ॥ ३१

---

1. क. ख. न्माययोर्वशी
2. क. ख. यज्ञारूपं
3. क. ख. विराजितम्
4. इतश्चत्वारः श्लोकाः (२९, ३०, ३१, ३२) क. ख. पुस्तकयोर्नोपलभ्यन्ते

उत्तुङ्गवर्तुलस्निग्धसंहतस्तनमण्डलम् ।
शरच्चन्द्रसमाकारमुक्तादामविभूषितम् ॥ ३२

अतिलावण्यशोभाढ्यपूर्णस्कन्धोपशोभितम् ।
क्रमोपचितसुश्लक्ष्णदिव्यदोर्दण्डमण्डितम् ॥ ३३

स्रग्दामदर्पणोपेतसुशोभितकराम्बुजम् ।
[1]सुपुष्पार्चितचन्द्राभसुरम्यनखचन्द्रिकम् ॥ ३४

प्रदक्षिणावर्तमुखकम्बुग्रीवोपशोभितम् ।
नानाविधमहारत्नग्रैवेयक[2]समावृतम् ॥ ३५

विद्रुमाङ्कुरसङ्काशमृदुसूक्ष्माधराञ्चितम् ।
बालेन्दुरेखा[3]सम्भूतरम्यदन्तावलीयुतम् ॥ ३६

रक्ताब्जकर्णिका[4]कारह्रस्वजिह्वोपशोभितम् ।
अत्यन्तशुद्धहेमाभसु[5]स्पर्शघ्राणमण्डितम् ॥ ३७

चन्द्रमण्डलसङ्काशस्फुरत्पाण्डुकपोलकम् ।
पूर्णाविकारहेमाभरमणीयमहाहनु ॥ ३८

निम्नस्निग्धोन्नता[6]भोगविकारोज्झितकर्णिकम् ।
हेममुक्तामहा[7]दिव्यरत्नसंयुतकुण्डलम् ॥ ३९

श्वेतासितमनायुक्त[प्रक्त]लोचनत्रयमण्डितम् ।
सद्राजावर्तलेखाभभ्रूलतालङ्कृताननम् ॥ ४०

ललाटनयनाम्भोज[8]सविलासविलोकितम् ।
[9]चलत्कुञ्चितसुस्निग्धसूक्ष्मकृष्णालकावलि ॥ ४१

[10]धम्मिल्लप्रान्तसंलग्नसुवर्णमणि[11]विद्रुमम् ।
कुङ्कुमादिमहागन्धतिलकेन विभूषितम् ॥ ४२

---

1. क. ख. पुष्पापचित
2. क. ख. विराजितम्
3. क. ख. सङ्घात-
4. क. ख. -रम्भ-
5. क. ख. स्पष्ट
6. क. ख. भाग
7. क. ख. रत्नादिव्य-
8. क. ख. विलासमवलोकितम्
9. क. ख. चञ्चलाकुञ्चित-
10. क. ख. अलका
11. क. ख. कुण्डलम्

नानारत्नसुवर्णाढ्यललाटरुच्याजिदाननम् ।
कोकिलाञ्जनपुञ्जाभ[1]नीलवेणीसुशोभितम् ॥ ४३

पञ्चवर्णमहापुष्पस्तबकच्छन्नवेणि[2]वत् ।
दिव्य[3]मालाम्बरधरं [4]दिव्याकल्पविभूषितम् ॥ ४४

एवं कृत्वा वपुर्दिव्यं तत्क्षणादप्सरोगणः ।
नन्दी यावत्तु नायातो गौरीमानयितुं गतः ॥ ४५

तावत्तद्द्विवरं प्राप्य देवस्य पुरतोऽभवत् ।
नन्दिरूपधरा देवमूर्वशी प्राह [5]गर्विता ॥ ४६

इयं गौरी च सम्प्राप्ता मातरश्च गणास्तत्र ।
एवमुक्तस्तया रुद्रस्त्यक्त्वा [6]धैर्यं तु हर्षितः ॥ ४७

पुरस्तान्निर्ययौ [7]व्याजाद्देवः सप्तपदान्तिकम् ।
देवा ब्रह्मादयश्चापि दैत्यदानवराक्षसाः ॥ ४८

ऋषयो मुनयः सिद्धाः पार्वत्या अग्रतो ययुः ।
अथ पाणौ गृहीत्वा तां रुद्रः शय्यामथारुहत् ॥ ४९

चक्रे नाना[8]विधाः क्रीडास्तया सार्धं पिनाक[9]भृत् ।
रुद्रं गायन्ति नृत्यन्ति सर्वाः कपटमातरः ॥ ५०

मुखनालसहस्राणि कुर्वन्त्यन्याः सहस्रशः ।
अथ किं बहुनोक्तेन छिद्रं तासां न चाभवत् ॥ ५१

न [10]तेन ज्ञायते किञ्चित् स्त्रीणां व्याजविजृम्भितम् ।
एतस्मिन्नन्तरे गौरी गणैः परिवृता शनैः ॥ ५२

कैलासा[11]न्मातृभिः सार्धमाजगाम महाद्भुता ।
भृङ्गिनन्दिमहाकालडिण्डिलम्बोदरादिभिः ॥ ५३

---

1. क. दीर्घवेणी
2. क. ख. कम्
3. क. ख. माल्या
4. क. ख. दिव्यगन्ध-
5. ख. क. हर्षिता
6. अ, शय्यां
7. क. ख. देव्याः शनैस्सप्तपदानि तु
8. क. ख. विधां क्रीडां
9. क. ख. धृत्
10. क. ख. केन
11. क. ख, न्मन्त्रिभि-

स्तूयमाना[1]धिगगनं संप्राप्ता भर्तुरन्तिकम् ।
तस्मिंस्तु चकिताः सर्वे किमेतदिति चिन्तया ॥ ५४

किमियं पार्वती देवी किमियं सा शुभानना ।
[2]नानयोर्दृश्यते भेदः स्त्रीभावे नन्दिनोरपि ॥ ५५

न मातॄणां गणानां वा न भेदो दृश्यते क्वचित् ।
ततो हरस्य पार्श्वस्थां गौरीं ज्ञात्वा महाद्भुताम् ॥ ५६

क्रीडितं दिव्यनारीणां [3]प्रहसन् गणपस्तथा ।
[4]ताश्चैवाप्सरसः सर्वाश्चित्रलेखामुखास्तथा ॥ ५७

तां दृष्ट्वा चकिताः सर्वाश्चक्रुः किलकिलारवम् ।
तच्छ्रुत्वा तच्च संवीक्ष्य स्त्रीणां कर्मानुभूय च ॥ ५८

प्रहर्षमतुलं लेभे ततो बालेन्दुशेखरः ।
ततो रतान्ते स्वं रूपं चित्रलेखा चकार ह ॥ ५९

ऊर्वश्याद्याश्चाप्सरसो जगृहुः स्वां समाकृतिम् ।
ततः सद्भावगौरी तु पतिना सह सङ्गता ॥ ६०

अत्यद्भुतां ततः क्रीडां चक्रे दिव्यनदीतटे ।
ततो रतान्ते भगवान् रुद्रश्चादर्शनं ययौ ॥ ६१

सदारः सगणश्चापि सहितो देवदानवैः ।

सूतः—

एवं स्त्रीणां मायया तु महादेवोऽपि वञ्चितः ॥ ६२

स्त्रीणां माया तु महती तां जेतुं कः क्षमो भवेत् ।
अतः स्त्रीव्यसनं कष्टं तदासक्तो [5]विनश्यति ॥ ६३

त्रैलोक्याधिपतिः शक्रस्त्वहल्याकाममोहितः ।
संप्राप्तः सुमहद्दुःखं पूर्वं गौतमशापतः ॥ ६४

---

1. क. ख. -थ गगनात्
2. क. ख. नैतयो-
3. क. ख. प्राह यद्
4. क. ख. पुस्तकयोरिदमर्धं नास्ति
5. क. ख. ऽपि

अग्निश्च ब्राह्मणो भूत्वा पुरीं माहिष्मतीं गतः ।
[1]नीलस्य राज्ञः कन्यां च दृष्ट्वा कामातुरोऽभवत् ॥ ६५

ज्ञात्वा नीलेन बद्धोऽसौ राज्ञा च भृतकः कृतः ।
ओषधीनामधिपतिश्चन्द्रः स्त्रीव्यसनाकुलः ॥ ६६

तारां बृहस्पतेर्भार्यामनुभूयाभवत् क्षयी ।
अगस्त्योऽपि महातेजाः कल्पान्तदहनोपमः ॥ ६७

लोपामुद्राविधेयस्तु नित्यं [2]भृत्यकवत् कृतः ।
वैनतेयोऽपि भगवान् सुरूपां चरुहासिनीम् ॥ ६८

वैश्वानरसुतां प्राप्तुमियेष स्मरपीडितः ।
विज्ञातस्तु तया सद्यो दग्धपक्षो बभूव ह ॥ ६९

सूर्यवंश[3]समुद्भूतो राजा दशरथो बली ।
मानुषेण शरीरेण स्वर्गमायाति याति च ॥ ७०

षष्टिवर्षसहस्राणि कृत्वा राज्यमकण्टकम् ।
कैकेय्या वशगो भूत्वा प्राणान् राज्यं सुतं जहौ ॥ ७१

एवमन्येऽपि बहवो नष्टाः स्त्रीव्यसनात्पुरा ।
तस्मादात्म[4]हितं प्रेप्सुः पुमान् स्त्रीव्यसनं त्यजेत् ॥
तज्जयेनैव सकलं त्रैलोक्यं निर्जितं भवेत् ॥ ७२

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे स्त्रीव्यसननिन्दा नाम द्वितीयोऽध्यायः

---

1. इदमर्धं अ. पुस्तके नास्ति
2. क. ख. भृतकवत्
3. क. ख. समुत्पन्नो
4. क. ख. सुखं

## ॥ तृतीयोऽध्यायः ॥

### अक्षव्यसननिन्दा

सूतः—

अक्षेषु नैव [1]रज्येत महानपि कदाचन ।
[2]अस्मिन् सक्तो यदि भवेन्न सौख्यफलभाग्भवेत् ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
कैलासशिखरे रम्ये महार्हे रत्नमण्डपे ॥ २

आस्थानपीठ[3]मध्यास्त देव्या सह महेश्व[4]रः ।
ब्रह्मविष्णुमुखा देवा वीरभद्रमुखा गणाः ॥ ३

उपासाञ्चक्रिरे देवं प्रमथेन्द्रास्तथा परे ।
अत्रान्तरे समागच्छदुपवीणयितुं शिवम् ॥ ४

हिरण्यगर्भसम्भूतो महतीवादको मुनिः ।
प्रणम्य देवं देवीञ्च प्रमथैरभिनन्दितः ॥ ५

जगतः पितरौ [5]सद्यः प्रीणयामास गीतिभिः ।
तुष्टे शिवे शिवायां च परार्ध्यानन्दसम्पदा ॥ ६

ब्रह्मादिषु च तुष्टेषु स मुनिः कलहप्रियः ।
चिन्तयामास मनसा सर्वत्राभंगुरोद्यमः ॥ ७

[6]मयैवोत्पादितः प्रीत्यै कलहो मम सर्वदा ।
सहस्रशः प्रयुक्तोऽयं शक्रादिषु सुपर्वसु ॥ ८

अद्य प्रयोक्तुमिच्छामि शिवयोरात्मसौख्यदम् ।
इति सञ्चिन्त्य शनकैः स्मितं कृत्वा स्फुरन्मनाः ॥ ९

---

1. क. ख. सज्येत
2. क. ख. यदि सक्तो भवेदेष न
3. क. ख. मध्यस्थं
4. क. ख. -रम्
5. क. ख. सम्यक्
6. इतः आरभ्य आ अध्यायसमाप्ति अ. पुस्तके नोपलभ्यते

पुनः प्रणम्य पितरौ बद्धाञ्जलिरभाषत ।

नारदः—

अन्तः सौख्यविधायिन्यः सन्ति विद्याः सहस्रशः ॥ १०

द्यूतविद्यां विना नान्यद्दम्पत्योर्हि विनोदनम् ।
अयं द्यूतविनोदो हि वीक्षितो बहुशो मया ॥ ११

चतुराननभारत्योः पौलोमीपुरुहूतयोः ।
अन्येषु च दिगीशेषु ख्यातेषु दनुजेष्वपि ॥ १२

स्वस्वकान्तासमेतेषु प्रयुक्तं फलदं त्विदम् ।
प्रौढया च महालक्ष्म्या जगद्रञ्जनदक्षया ॥ १३

सार्धं विष्णोश्च तादृक्षमक्षक्रीडनमैक्षिषि ।
सर्वज्ञेन समं देवि देवेन यदि शक्नुयात् ॥ १४

दृष्ट्वैनत्परमां प्रीतिमवाप्स्यामीति मे मतिः ।
इत्याकर्ण्य मुनेर्वाक्यं स्मयमानमुखाम्बुजः ॥ १५

देवः परमधर्मज्ञो देवीमुखमवैक्षत ।
दक्षोऽस्म्यक्षविनोदेऽहं न पणे विभवोऽस्ति मे ॥ १६

देवी विभविनी नास्यां विद्यायां बहुदर्शिनी ।
एवं वादिनि देवेशे क्रुद्धा मुनिगिरा सती ॥ १७

देवोक्तिं मुनिवाक्याग्नेः सन्धुक्षणममन्यत ।
उवाच च मुनेर्वाक्यं कोपात्प्रस्फुरिताधरा ॥ १८

विभवो न ममास्तीति प्रौढं वदसि धूर्जटे ।
अस्ति चन्द्रकला सेयममृतस्यन्दशालिनी ॥ १९

नास्ति किं हास्तिनं चर्म सन्ध्याताण्डवमण्डनम् ।
न विद्यते किमाकल्पः कल्पब्रह्मकपालिका ॥ २०

रङ्गत्तुङ्गतरङ्गा किं न गङ्गा मौलिसङ्गिनी ।
श्रीकण्ठ तव सम्पत्तिर्न किं श्रीफलमालिका ॥ २१

अनर्घफणमाणिक्याः फणिनः किं न सन्ति ते ।
शार्दूलचर्मखण्डस्ते सुलभो हे पिनाकधृक् ॥ २२

विभो जागर्ति गात्रेषु विभूतिः स्वयमेव हि ।
रजताद्रिर्द्वितीयोऽयं राजते तत्र शाङ्करम् [ः] ॥ २३

अयं विभवराशिस्ते तमिमं च पणीकुरु ।
पणीकरोम्यहं श्लाघ्यं हाराद्यात्मविभूषणम् ॥ २४

इत्युक्त्वाथ पणीकृत्य सर्वं तत्सर्वमङ्गला ।
प्रावर्तयद्दृढोत्साहा देवेन सह देवनम् ॥ २५

देवो निर्जित्य गिरिजां तद्भूषादिकमाददे ।
ततः क्रुद्धा महेशानी साक्षीकृत्य महामुनिम् ॥ २६

पुनर्देवितुमारेभे विजितश्च शिवस्तया ।
सर्वं जहार गिरिजा शम्भोश्चन्द्रकलादिकम् ॥ २७

अथ प्रौढास्मि किं द्यूते न वेत्स्याचष्ट नारदम् ।
कृत्वा विभवजातं स्वं पार्वत्यायत्तमीश्वरः ॥ २८

किरातवेषो गहनं नारदानुगतो ययौ ।
तद्विनोदकृतेनापि द्यूतेन परमेश्वरः ॥ २९

दशामवाप कैरातीं पामरैरभिनन्दिताम् ।

सूतः—

ततस्तु मतिमान् क्वापि न द्यूतव्यसनी भवेत् ॥ ३०

अनेन सद्भिर्निन्द्येन पुण्यश्लोको नलः पुरा ।
राज्याद्भ्रष्टः [1]श्रिया हीनः कुत्सितं रूपमाप्तवान् ॥ ३१

अनेन व्यसनेनैव धर्मराजः प्रतापवान् ।
सेहे सभायां पाञ्चाल्या भ्रातृयुक्तः पराभवम् ॥ ३२

---

1. क. स्त्रियो

द्यूते पराजयक्रोधाद्बलं कृष्णोऽपि चाग्रजम् ।
जघान मल्लकेनैव स्यालं रुक्मिणमुन्मदः ॥ ३३

सूतः—

तस्मात्केनापि कामेन श्रेयोऽर्थी भुवि मानवः ।
न द्यूतं कीर्तयेन्नापि द्यूतगोष्ठीं विलोकयेत् ॥ ३४

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे अक्षव्यसननिन्दा
नाम तृतीयोऽध्यायः

## ॥ [1]चतुर्थोऽध्यायः ॥

### मृगयाव्यसननिन्दा

सूतः—

मृगयाव्यसनं वक्ष्ये राज्ञामापत्प्रदायकम् ।
तेन नष्टाश्च बहवो राजानः पृथिवीतले ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
इममर्थं पुराप्राक्षीच्छौनकं तं भगीरथः ॥ २

मृगयानिन्दनं सोऽपि तस्मै प्रोवाच सन्मतिः ।

शौनकः—

मरुदश्व इति ख्यातो राजासीद्दण्डकाह्वये ॥ ३

नगरे च सुगुल्माढ्ये नानोद्यानोपशोभिते ।
धर्मशीलेति नाम्नास्य प्रिया धर्मपरायणा ॥ ४

पुण्यकीर्तिरमात्योऽभून्नृपतेस्तस्य भूसुराः ।
सम्पन्नोऽपि गुणै राजा मृगयाव्यसनं गतः ॥ ५

मृगयाव्यसनासक्तं तं दृष्ट्वा भूपतिं प्रिया ।
अबोधयन्मन्त्रयुक्ता नानाधर्मनिदर्शनैः ॥ ६

न युक्तं धर्मयुक्तस्य वृथा प्राणिविहिंसनम् ।
अच्छन्नोपगतैः शैले सरिद्विपिनकुक्षिषु ॥ ७

वधबन्धपरिक्लेशा भवन्त्याटविकादिभिः ।
स्वसैन्यैश्च [2]स्वकुल्यैश्च परै[3]श्चान्यैश्च मारणम् ॥ ८

इत्यादि पृथिवीन्द्राणां मृगयाव्यसनं स्थिरम् ।
मृगयाव्यसनं राज्ञः आमोदन्ते हि शत्रवः ॥ ९

---

1. अस्मिन्नध्याये आदिमसप्तश्लोकाः अ. पुस्तके न दृश्यन्ते
2. क. ख. स्वकुल्यैश्च
3. क. ख. श्छन्नै-

तदसह्यतरं दुःखं मन्येऽहं मरणादपि ।
मृगतृष्णेव मृगया मृगानिव नराधिपान् ॥ १०

[1]निहन्ति पातयत्याराच्छत्रश्रेष्ठेव नराधिप ।
धर्मद्रुममहामूलं खन्यते किमिति त्वया ॥ ११

आत्मनः प्रियकामेन प्राणिनो हन्ति मानवः ।
यदि हन्याद्दुराचारः स याति नरकं ध्रुवम् ॥ १२

बुद्धिहीनो दुराचारो यो हन्त्यविधिना पशून् ।
स एव निन्दायुक्तश्च पच्यते नरके चिरम् ॥ १३

निवर्तस्व महाघोरान्मृगयाव्यसनान्नृप ।
न श्रेयसे भवेदादौ तथैवान्ते परंतप ॥ १४

नानाभूतानि विपिने मृगरूपेण भूपते ।
विचरन्ति यथाकामं तेषां हिंसा न युज्यते ॥ १५

इत्यादिवचनै राजा प्रियया वारितोऽपि सन् ।
राजा पुनश्चाकथयत् कान्तायै मृगयागुणान् ॥ १६

[2]प्रिये त्वं न विजानासि भूपानां मृगयारसान् ।
यदि घातयते राजा दुष्टसत्त्वं प्रजाहितम् ॥ १७

[3]सर्वसत्त्वहितार्थाय तेनासौ विहिनस्ति हि ।
द्वीपिनं शरभं सिंहं व्याघ्रमुग्रं च कुञ्जरम् ॥ १८

महिषं [4]च वराहं च [5]श्वापदांश्च मृगानपि ।
गोब्राह्मणहितार्थाय बालस्त्रीरक्षणाय च ॥ १९

वृद्धातुराणां रक्षार्थं यो हिनस्ति स धर्म[6]कृत् ।
निर्मानुषीमिमां सर्वे मृगा हीच्छन्ति मेदिनीम् ॥ २०

---

1. क. ख. पुस्तकयोः अयं श्लोकः अनन्तरार्धं च नास्ति
2. अ. प्रिये हन्मि न च व्याघ्रं न मृगं नापि कुञ्जरम्
3. अ. पुस्तके अयं श्लोको नास्ति
4. क. ख. सूकरं चैव
5. क. ख. श्वापदान्गवयानपि
6. क. ख. वित्.

भक्षयन्ति हि सस्यानि [1]शातितव्या नृपेण ते ।
या वै शत्रुवधे वृत्तिः सा मृगाणां वधे स्थिता ॥ २१

स्वर्गं मृगाश्च गच्छन्ति स्वयं नृपतिना हताः ।
मेदश्छेदस्तु कायस्य भवत्युत्थानयोग्यता ॥ २२

सत्त्वानां वैकृतं [2]नित्यं लक्ष्यते भयकोपयोः ।
चले लक्ष्ये च सिध्यन्ति धन्विनामिषवः प्रिये ॥ २३

ईदृग्विनोदः [3]कुत्रास्ते तन्निन्दन्ति वृथा जनाः ।
एवं वदंन् सत्ययुक्तः प्रियां जनहिते रतः ॥ २४

महीपो मृगसङ्कीर्णं दण्डकारण्यमाविशत् ।
जघान [4]स मृगान्नैकान् मृगयाव्यसनी नृपः ॥ २५

एवं विहरमाणः [5]सन् राजा विपिनमध्यतः ।
समागतं सन्ददर्श [6]मृगेषु सुगतं मृगम् ॥ २६

[7]अनन्यालोकनं मृग्या रिरंसुं कमनीयया ।
दृष्ट्वा प्रहर्तुमुद्युक्तो वारितो दिव्यया गिरा ॥ २७

[8]भगीरथः—

कोऽयं मृगवरो ब्रह्मन् किंप्रभावः कुतो गतः ।
यतस्तं हन्तुमुद्युक्तं दैवी वाक् प्रत्यषेधयत् ॥ २८

शौनकः—

ऋषिरुग्रतपा नाम दण्डकेषु कृताश्रमः ।
सर्वेन्द्रिययमी राजन् स तेपे परमं तपः ॥ २९

एकदा [9]स गतोऽरण्यं प्रातरेव कुशादिकम् ।
आहर्तुं ददृशे तावन्मृगीं दीर्घविलोचनाम् ॥ ३०

---

1. क. ख. शासितव्या नृपैस्तु
2. क. ख. चित्तं
3. क. ख. कुत्रास्ति
4. क. ख. च मृगानेको
5. क. ख. स्व राजा
6. क. ख. मृगीमनुगतं
7. इदमर्धं अ. पुस्तके नास्ति
8. क. ख. भीमरथ्यः
9. अ. सङ्गतो राजन्

कुक्षौ मुक्ताफलच्छायां पृष्ठे मरकतप्रभाम् ।
[1]जानौ सुविद्रुमाभाश्च नेत्रयोर्नीलसन्निभाम् ॥ ३१

पुष्यरागनिभास्यां च गले गोमेददीधितिम् ।
प्रतिलोम [2]सुवर्णाभायुक्तां स्वर्णमयीमिव ॥ ३२

एवंरूपां मृगीं [3]बालां प्रसूतां तां ततो मुनिः ।
दृष्ट्वा मनुष्याकारश्च प्राद्रवद्वायुरंहसा ॥ ३३

मृग्यः प्रलोभयन्त्येनं पर्यधावन्मृगीं मुनिः ।
इति प्राप्तुमशक्तोऽसौ श्रान्तः सस्मार चेतसि ॥ ३४

चतुष्पदा कुरङ्गीयं द्विपदो मानुषोऽस्म्यहम् ।
महीतलेऽन्यजातीनां रतं क्वापि न विद्यते ॥ ३५

तस्मादहं मृगाकारो भूत्वा रंस्ये मृगीमिति ।
[4]इति सञ्चिन्त्य स मुनिर्मृगो भूत्वान्वगान्मृगीम् ॥ ३६

एवं मुनिं समायान्तं [5]महीपो दिव्यया गिरा ।
प्रतिषिद्धो व्याजघान शरेण नतपर्वणा ॥ ३७

ज्ञानवानपि राजेन्द्रो मृगयाव्यसनातुरः ।
अत्यन्तव्यसनासक्तिः कस्य वा श्रेयसे भवेत् ॥ ३८

ततो बाणेन [6]निर्भिन्नं यावत्पश्येन्मृगं नृपः ।
तावत्स ददृशे विप्रं विचेष्टं तं महीतले ॥ ३९

[7]तरुवल्काम्बरधरं ब्रह्मसूत्रोपशोभितम् ।
[8]बाणव्याघातनिर्याणाद्रक्तधारापरिप्लुतम् ॥ ४०

स मुनिस्तं नृपं दृष्ट्वा शरासन[9]समायतम् ।
कोपाविष्टमनास्तीक्ष्णमवोचद्वचनं तदा ॥ ४१

---

1. क. ख. जान्वोस्सविद्रुमनिभां
2. क. ख. सुवर्णाभां सर्वरत्न-
3. क. ख. बालामप्र-
4. इदमर्धं क. ख. पुस्तकयोर्नास्ति
5. अ. अवोचद्दिव्य-
6. क. ख. निर्विद्धं
7. क. ख. तत्र
8. क. ख. बाणस्य घातान्नि-
9. क. ख. शरान्वितम्

रे रे राजन् दुराचार प्रतिषिद्धोऽपि दिव्यया ।
गिरा किमर्थं बाणैकलक्ष्यं मां कृतवानसि ॥ ४२

[1]अपराधः कृतः किं ते मृगैरपि वने स्थितैः ।
मुग्धैर्विरचिताहारैर्वन्यैरेव यवाङ्कुरैः ॥ ४३

यो हन्ति प्राणिनो [2]मूढान् दुःखितान् पूर्वकर्मभिः ।
[3]स मृतो नरकं याति यावदाभूतसंप्लवम् ॥ ४४

[4]तस्मान्महापराधस्त्वं पापं शापादवाप्नुहि ।
[5]भक्त्या युतस्यैवमुक्त्वा दिव्यदेहो ययौ दिवम् ॥ ४५

राजापि तेन शापेन क्रान्तो भार्यामवोचत ।
मित्राणां हितवाक्यानि न मन्यन्ते मदोद्धताः ॥ ४६

ततस्तेनैव तप्यन्ते स्वदोषात्प्राप्य [6]चापदम् ।
तस्त्वयोक्तं वचः पूर्वं मया यन्न कृतं प्रिये ॥ ४७

लोकद्वयाहितं प्राप्तं भुज्यते कर्मणः फलम् ।
एवं दुःखान्वितं प्राह राजपत्नी यशस्विनी ॥ ४८

मा कृथा नृपते शोकं वृथैवेन्द्रियशोषणम् ।
यतोऽत्र बलवद्दैवं सुखदुःखफलावहम् ॥ ४९

तदद्य धैर्यमालम्ब्य कुरु यत्नं चिकित्सिते ।

शौनकः—

ततः स मन्त्रिभिः सार्धं भार्यया धर्मशीलया ॥ ५०

आश्रमं सत्यतपसः संप्राप्य भयपीडितः ।
न्यवेदयत्स्ववृत्तान्तं सर्वं तस्य महामुनेः ॥ ५१

श्रुत्वा सत्यतपास्तस्य वृत्तान्तं कृपयान्वितः ।
दण्डकारण्यमध्यस्थं विरजं तीर्थमुत्तमम् ॥ ५२

---

1. क. ख. अपकारः
2. क. ख. मौढ्यात्
3. -इदमर्धं अ. पुस्तके नास्ति
4. अ. तस्मान्महापराधारे त्वं पाप्मा....वाप्नुहि
5. क. ख. अत्याहितस्यैव-
6. क. ख. चापदः

तस्य पापापनोदार्थं सद्य एवोपदिष्टवान् ।
तच्छ्रुत्वा मरुदश्वोऽपि प्राप्य तत्तीर्थमुत्तमम् ॥ ५३

स्नात्वा तत्रैव विप्रेभ्यो धनानि विविधानि च ।
दत्त्वा विरजमाहात्म्याद्विरजोऽभून्महीपतिः ॥ ५४

सूतः—

इत्येवं शौनकस्योक्त्या स च राजा भगीरथः ।
सर्वकर्मसु विद्विष्टं मृगयाव्यसनं जहौ ॥ ५५

तस्मान्महीपतिः कष्टं मृगयाव्यसनं त्यजेत् ।
[1]मृगयाव्यसनेनैव विनष्टा बहवो नृपाः ॥ ५६

पाण्डुर्जित्वा बहून् देशान् युधाविक्रमणेन च ।
मृगयाव्यसनेनैवं कृच्छ्रं प्राप स आपदम् ॥ ५७

मृगयाव्यसनेनैव समाकृष्टो विमोहितः ।
मुनेः समीपतः शापं महान् पङ्क्तिरथो नृपः ॥ ५८

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे मृगयाव्यसननिन्दा नाम चतुर्थोऽध्यायः

1. क. ख. पुस्तकयोः इदमर्धं अनन्तरश्लोकश्च न दृश्यते

## ॥ पञ्चमोऽध्यायः ॥

### पानदोषनिरूपणम्

सूतः—

चतुर्थं दूषणं वक्ष्ये पानाख्यं लोकनिन्दितम् ।
पानेन बहवो नष्टा मदान्धा दुष्टबुद्धयः ॥ १

ये वै पिबन्ति मदिरां कष्टां पाप[1]युता नराः ।
कलिं ते कुर्वतेऽभीक्ष्णं प्रहरन्ति परस्परम् ॥ २

गुरूनति[2]वदेन्मत्तः परदारान् प्रधर्षयेत् ।
संविदं कुरुते [3]शौण्डैर्न श‍ृणोति हितं वचः ॥ ३

पुण्यापुण्यं न [4]जानाति कार्याकार्यं कदाचन ।
मत्तः पापं न कुर्यात्को[5] मत्तो [6]हन्याद्गुरूनपि ॥ ४

मत्तः परुषया वाचा नरः साधू[7]नधिक्षिपेत् ।
पुरः स्थितं न जानाति मातरं पितरं तथा ॥ ५

गुरुं विप्रं विशेषज्ञं मत्तो हन्याद्विशेषतः ।
कुलशीलगुणोपेतं सर्वज्ञं वापि पण्डितम् ॥ ६

मदिरा मोहयत्येव निरन्तरनिषेविता ।
अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ॥ ७

बलभद्र इति ख्यातः पुरा कृष्णसहोदरः ।
कृष्णं धन[8]ञ्जयस्निग्धं ज्ञात्वा तु बलवान् बली ॥ ८

चिन्तयामास किं तेन सुकृतं वै कृतं त्विति ।
कृष्णेन हि विना नाहं यामि दुर्योधनान्तिकम् ॥ ९

---

1. क. ख. युतां
2. अ. मदोन्मत्तः
3. अ. शान्तैर्न
4. क. ख. जानन्ति
5. क. ख. न्नो
6. अ. मान्या दुरासदि
7. क. ख. नपि
8. क. ख. -ञ्जये

न कृष्णो विजया[1]धारः कौरवाय प्रकुप्यति ।
पाण्डवान् वा समाश्रित्य युध्ये किञ्च कुरूनपि ॥ १०

तथा बन्धुवधे दोषः सुमहानिह जायते ।
अतो युद्धं परित्यज्य याम्यहं द्वारकां पुरीम् ॥ ११

इति निश्चित्य मनसा पार्थदुर्योधनावपि ।
आमन्त्र्य च जगामाथ द्वारकां सैन्यसंयुतः ॥ १२

गत्वा द्वारवतीं रामो हृष्टपुष्टजनावृताम् ।
[2]पपौ स मदिरां रामो रेवत्या सह कान्तया ॥ १३

पीत्वा मधु जगामाथ रैवतोद्यानमृद्धिमत् ।
हस्ते गृहीत्वा समदो रेवतीमप्सरोपमाम् ॥ १४

[3]स ददर्श वनं वीरो रमणीयमनुत्तमम् ।
[4]पुण्यं पद्मासनोपेतं सर्वर्तुकुसुमोज्ज्वलम् ॥ १५

[5]शृण्वंस्तु प्रीतिजननं रुतं [6]भृङ्गमुखोद्गतम् ।
जगामानुगतः स्त्रीभिर्लतागृहमनुत्तमम् ॥ १६

स ददर्श द्विजांस्तत्र वेदवेदाङ्गपारगान् ।
[7]कौरवान् भार्गवांश्चैव भारद्वाजान् सगौतमान् ॥ १७

विविधेषु च वंशेषु सम्भूतान् भूसुरानपि ।
कथाश्रवण[8]संयुक्तचित्तवृत्तीन् महत्सु च ॥ १८

कृष्णाजिनोत्तरीयेषु सूपविष्टान् बृसीषु च ।
सूतं च तेषां मध्यस्थं कथयन्तं कथाः शुभाः ॥ १९

पौराणिकाः सुरर्षीणामाद्यानां चरितैः शुभाः ।
[9]ततः सर्वेऽपि मुनयस्तं दृष्ट्वा रेवतीपतिम् ॥ २०

---

1. क. ख. यत्तः
2. क. ख. बलभद्रोऽथ विप्रेन्द्राः रेवत्या कान्तया सह
3. क. ख. ददर्श च
4. क. ख. नानावृक्षवनोपेतं
5. क. ख. स शृण्वन्
6. क. ख. खग-
7. क. ख. कौशिकान्
8. क. ख. संसक्त
9. क. ख. ततश्च मुनयस्सर्वे तं

मत्तचित्तं मद्यैः पानात्समुत्तस्थुस्त्वरान्विताः ।
पूजयन्तो हलधरं मुक्त्वा तं सूतवंशजम् ॥ २१

ततो हली समालोक्य सूतमासनसंस्थितम् ।
निजघान पदा मत्तो मधुपानस्य सम्भ्रमात् ॥ २२

[1]पादाभिघातात्सूतोऽपि त्यक्त्वासुरपतद्भुवि ।
ततः सर्वे मुनिगणास्त्यक्त्वाश्रमपदं क्षणात् ॥ २३

निष्क्रान्ता वेपमानाङ्गा [2]युक्तकृष्णाजिनाम्ब[3]राः ।
ततो हलभृदात्मानमवगम्य शनैः शनैः ॥ २४

पापं सञ्चिन्तयामास पूर्वं मदवशात् कृतम् ।
ब्रह्मासनगतोऽप्येष [4]सत्सूतोऽपि निपातितः ॥ २५

तस्माद्धि सर्वे मुनयो मामुपेक्ष्य विनिर्गताः ।
शरीरस्य च मे गन्धो लोहितस्यैव वैकृतः ॥ २६

आत्मानं चैव जानामि ब्रह्मघ्नश्चैव कुत्सितम् ।
इति सञ्चिन्त्य मतिमान् निनिन्द मधुमत्तताम् ॥ २७

मया चास्यातिपानेन महत्पापमिदं कृतम् ।
अतः शीघ्रं चरिष्यामि व्रतं द्वादशवार्षिकम् ॥ २८

स्वकर्मख्यापनं कुर्वन् प्रायश्चित्तमनुत्तमम् ।
इति निश्चित्य मनसा तत्पापशमनाय च ॥ २९

नदीं सरस्वतीं प्राप्तो बलभद्रः प्रतापवान् ।

सूतः—

तस्मात्पानं न कुर्वीत महापातकदोषजम् ॥ ३०

शुक्रोऽपि मदिरामत्तो विद्यां विस्मृत्य मूढधीः ।
महतीमापदं [5]प्राप्तस्तपोभ्रष्टो बभूव ह ॥ ३१

---

1. क. ख. पदा-
2. क. ख. युक्ताः
3. क. ख. रै;
4. क. ख. यत्सूतो विनि-
5. क. प्राप्य तपो-

एवमन्येऽपि बहवो हता मधुहृताशयाः ।
वृषली च सुरा चैव नैव सेव्या द्विजातिभिः ॥ ३२

वृषली च कुलं हन्यान्निरन्तरनिषेवया ।
[1]सुरापानञ्च सर्वेषां पातकं कुरुते महत् ॥
अत एवात्महननं न कुर्यात्पानमात्मवित् ॥ ३३

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे पानदोषनिरूपणं
नाम पञ्चमोऽध्यायः

1. क. ख. सुरा च पानात्

## ॥ षष्ठोऽध्यायः ॥

### वाग्दूषणदोषकथनम्

सूतः—

व्यसनानाञ्च सप्तानां वाक्पारुष्यं महत् स्मृतम् ।
तदेतत्कथयिष्यामि शृणुध्वं मुनिसत्तमाः ॥ १

[1]तीव्राण्युद्वेगकारीणि विसृष्टान्यवशात्मकैः ।
कृन्तन्ति देहिनां मर्म [2]शस्त्राणीव वचांसि च ॥ २

शपता यत्कृतं पुण्यं शप्यमानं नियच्छति ।
[3]शप्यमानस्य यत्पापं शपमानं नियच्छति ॥ ३

संरोहति [4]शरैः सद्यो वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ४

कर्णिनालीकनाराचा [5]निष्पतन्ति शरीरतः ।
वाक्शल्यं तु न [6]निर्हर्तुं शक्यं हृदिशयं हि तत् ॥ ५

क्रूरक्रकचसङ्काशवाक्पारुष्य[7]शरैर्नृपे ।
राज्योद्यानलतालक्ष्मीः पोषणां कथमर्हति ॥ ६

अत्यन्तबलयुक्तोऽपि कुलरूपयुतोऽपि वा ।
वाक्पारुष्यपरीतात्मा क्षिप्रमेव विनश्यति ॥ ७

अस्मिन्नर्थे पुरावृत्त[8]माख्यानं कथयामि वः ।
[9]धर्मपुत्रो महाबाहुर्यज्ञं कर्तुमनास्ततः ॥ ८

---

1. क. ख. तीव्राद्रु-
2. क. ख. शस्त्राणि च
3. इदमर्धं क. ख. पुस्तकयोर्नास्ति
4. क. ख. शरैर्विद्धं
5. क. निपतन्ति ख. निर्हरन्ति
6. अ. निर्हन्तुं
7. क. ख. क्रेर नृपे
8. क. ख. मितिहासं वदामि वः
9. क. ख. पुस्तकयोरिदमर्धमनन्तरार्धं च न दृश्यते

महीपानानयामास सोऽयजद्दक्षिणावता ।
पूर्वं निर्जित्य पृथिवीं धर्मपुत्रो युधिष्ठिरः । ९

चतुर्भिर्भ्रातृभिः सार्धं शशास महतीं महीम् ।
अविरोधेन सर्वेषां हितं वै कुर्वतस्तदा ॥ १०

अजातशत्रुता [1]चैव तस्य नित्या जगत्त्रये ।
[2]धर्म्यैरर्थागमैस्तस्य ववृधे निचयो महान् ॥ ११

कर्तुं यस्य न शक्येत क्षयो वर्षशतैरपि ।
सगोष्ठस्य परीणाहं कोशस्य च महीपतिः ॥ १२

विज्ञाय कर्तु कौन्तेयो राजसूये मनो दधे ।
संभृत्य यज्ञसम्भारं धर्मोक्तं स महीपतिः ॥ १३

शिष्टैरानाययामास कृष्णं वृष्णिकुलोद्वहम् ।
भूतभव्यभवन्नाथः केशवोऽपि [3]महामतिः ॥ १४

बलाधिकारे निक्षिप्य संमान्यानकदुन्दुभिम् ।
युधिष्ठिरस्य सहसा प्रविवेश पुरोत्तमम् ॥ १५

असूर्यमिव सूर्येण निवातमिव वायुना ।
कृष्णेन समुपेतेन जहृषे भारतं [4]कुलम् ॥ १६

भ्रातृभिः सहितो राजा कृष्णं प्रत्युद्ययौ नृपः ।
सत्कृत्य च यथान्याय[5]मेवमाह युधिष्ठिरः ॥ १७

युधिष्ठिरः—

त्वत्कृते पृथिवी सर्वा मद्वशे कृष्ण वर्तते ।
धनञ्च बहु वार्ष्णेय त्वत्प्रसादादुपार्जितम् ॥ १८

अनुज्ञातस्त्वया कृष्ण प्राप्नुयां [6]क्रतुमुत्तमम् ।
त्वमेव राजशार्दूल [7]सम्राट्त्वार्हो महाक्रतुम् ॥ १९

---

1. क. ख. चापि
2. क. ख. धर्म्यैर्धनाग-
3. क. ख. महीपतिम्
4. अ. पुरम्
5. क. ख. मिदमाह
6. क. ख. गतिमुत्तमाम्
7. क. ख. साम्राज्यार्हो

संप्राप्नुहि त्वया प्राप्ते कृतकृत्यास्ततो वयम् ।
अनुज्ञातस्तु कृष्णेन पाण्डवो भ्रातृभिः सह ॥ २०

ईहितुं राजसूयाय प्रयतोऽभूद्यथाविधि ।
इन्द्रसेनो विशोकश्च रुक्मश्चार्जुनसारथिः ॥ २१

शमीको ध्वजसेकश्च पञ्चसारथिपुङ्गवाः ।
भक्ष्यभोज्ये तथा पेयचोष्ये गन्धरसान्विते ॥ २२

सर्वं सम्पादयामासुः सहदेवस्य शासनात् ।
ततो द्वैपायनस्तूर्णमृत्विजः समुपानयत् ॥ २३

स्वयं ब्रह्मत्वमकरोत् सुषामः सामगोऽभवत् ।
अध्वर्युर्याज्ञवल्क्योऽभूत् ते सर्वे वेदपारगाः ॥ २४

ज्येष्ठामूले त्वमावास्यां दीक्षयांचक्रिरे नृपम् ।
नकुलेन समाहूता भीष्माद्याः कौरवा अपि ॥ २५

आगताः सर्वभूपालाः शिशुपालोऽपि चागतः ।
षडाग्निनाथ यज्ञेन सोऽयजद्दक्षिणावता ॥ २६

इडाज्यसोमाहुतिभिर्मन्त्रशिक्षासमन्वितैः ।
अत्यन्तं ततृपुर्देवास्तत्र यज्ञे महर्षिभिः ॥ २७

देवा यथा तथा विप्रास्ततृपुर्बहुभिर्धनैः ।
ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह ॥ २८

अन्तर्वेदीं प्रविविशुः कृष्ण[1]यापि युधिष्ठिरः ।
ददावासनमत्युच्चं तस्मिन्नुपविवेश [2]ह ॥ २९

ततो भीष्मोऽब्रवीत्तत्र धर्मपुत्रं युधिष्ठिरम् ।
आचार्यमृत्विजं चापि संयुक्तं च महीपतिम् ॥ ३०

[3]स्नातकं च प्रियं चाहुः षडर्घार्हान् युधिष्ठिर ।
एषामेकैकशो ब्रह्मन्नर्घ्यमानीयतामिति ॥
अथ वैषां वरिष्ठो यस्तस्यार्घ्यं पूर्वमाहर ॥ ३१

---

1. क. ख. याथ
2. क. ख. सः
3. अ. पुस्तके 31, श्लोको नास्ति

युधिष्ठिरः—

कस्मै भवान्मन्यतेऽर्घ्यं एकस्मै कुरुनन्दन ।
आनीयमाने युक्तञ्च तन्मे ब्रूहि पितामह ॥ ३२

सूतः—

ततो भीष्मः शान्तनवो बुद्धया निश्चित्य बुद्धिमान् ।
[1]हरिमेवात्र सर्वेभ्यः पूजनीयममन्यत ॥ ३३

ततो भीष्माज्ञया शौरेः सहदेवोऽ[2]र्घ्यमाहरत् ।
दृष्ट्वा तु क्षत्रियाः सर्वे पूजां कृष्णस्य भूयसीम् ॥ ३४

[3]सम्प्रेक्ष्यान्योन्यमाश्लिष्य [4]हृदयैस्तमधारयन् ।
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥ ३५

उपालभ्य स भीष्मञ्च धर्मराजञ्च संसदि ।
[5]अपाक्षिपद्वासुदेवं चेदिराजो महामतिः ॥ ३६

उवाच धर्मराजञ्च रोषावेशवशीकृतः ।
कृष्णो नार्हति धर्मज्ञ [6]तिष्ठत्स्वपि महात्मसु ॥ ३७

महीपेषु महाराज अराजा पार्थिवार्हणाम् ।
बाला यूयं न जानीध्वं धर्मसूक्ष्मं हि [7]पाण्डवाः ॥ ३८

भीष्मोऽप्यसौ मूढ[8]बुद्धिर्वृथा वृद्धोऽति[9]वादकृत् ।
किमित्यराज्ञि देवक्याः पुत्रे पूजामकारयत् ॥ ३९

कृपे भीष्मे कलिङ्गे च द्रुपदे च सुयोधने ।
कोसलेन्द्रे विराटे च [10]सहकर्णेऽत्र तिष्ठति ॥ ४०

कथं ह्यराजा दाशार्हः प्रष्टुमर्हो महार्हणाम् ।
आचार्यस्त्वे पूजितः किं कृष्णो व्यासे स्थितेऽप्यसौ ॥ ४१

---

1. अ. वार्ष्णेयं कृष्णमादातुं
2. अ. ऽप्युपाहरत्
3. क. ख. संप्रीत्या
4. क. ख. ननन्दुः सर्वपार्थिवाः
5. क. ख. अपाक्षिपत्त्वा
6. क. ख. तिष्ठत्स्विह महत्सु च
7. क. ख. पार्थिवाः
8. क. ख. मति-
9. क. ख. -पाप
10. क. ख. कर्णे चात्रैव

अथ वार्चयितव्यश्चेद्युष्माभिर्देवकीसुतः ।
किं राजभिरिहानीतैरव[1]ज्ञानाय भारत ॥ ४२

अथ वा कृपणैरेतामुपानीतां जनार्दन ।
पूजामनर्ह[2]स्त्वं कस्मादभ्यनुज्ञातवानसि ॥ ४३

अयुक्तामात्मनः पूजां त्वं पुनर्बहु मन्यसे ।
हविषः प्राप्य निष्यन्दं [3]प्राशितः श्वेव निर्जने ॥ ४४

न त्वया पार्थिवेन्द्राणामवमानः प्रयुज्यते ।
त्वामेव कुरवो व्यक्तं प्रहसन्ति जनार्दन ॥ ४५

क्लीबे दारक्रिया यादृगन्धे वा स्वर्णदर्शनम् ।
अराज्ञो [4]राजपूजा तु तथा ते मधुसूदन ॥ ४६

एवं परुषया वाचा विनिन्दन् वृष्णिपुङ्गवम् ।
भीष्मं निर्भर्त्सयामास कृष्णस्तुतिपरायणम् ॥ ४७

[5]अपवृद्धस्य मूर्खस्य केशवं स्तोतुमिच्छतः ।
[6]किन्नु भीष्म न ते जिह्वा शतधा विप्रकीर्यते ॥ ४८

युक्तमेतत्तृतीयायां प्रकृतौ तिष्ठतस्तव ।
न ह्यपत्रपसे कस्माद्[7]वृद्धस्त्वं कुलपांसन ॥ ४९

यद्यनेन हतो बाल्ये [8]शकुनिश्चित्रमत्र किम् ।
शकटं चेतनाहीनं भग्नं तत्र किमद्भुतम् ॥ ५०

नागश्च [9]मर्दितोऽनेन तत्र किं [10]दुष्करं कृतम् ।
वल्मीकमात्रः सप्ताहं धृतो गोवर्धनो गिरिः ॥ ५१

अनेन भुक्तं बह्वन्नमिति [11]मे नैव विस्मयः ।
अनेन कंसो [12]निहतः किं पापमधिकं ततः ॥ ५२

---

1. क. ख. मानाय
2. क. ख. स्तं कस्माद्यदनु
3. अ. प्राशितुं चैव
4. क. ख. राजवत्पूजा
5. क. ख. अति
6. क. ख. कथं
7. क. ख. वृद्ध त्वं
8. ख. पूतना चित्र
9. क. ख. भञ्जितो
10. क. ख. विस्मयं गतः
11. क. ख. तत्रैव
12. क. ख. ऽपि हतः

गोघ्नः स्त्रीघ्नश्च ते भीष्म कथं संस्तवमर्हति ।
केशवेन कृतं यत्तज्जरासन्धवधे तथा ॥ ५३

भीमसेनार्जुनाभ्याञ्च कस्तु साध्विति पश्यति ।
इत्युक्त्वा राजशार्दूलः शार्दूल इव [1]नादयन् ॥ ५४

क्षोभयामास कृष्णस्य चित्तं स परुषोक्तिभिः ।
क्रुद्धो युद्धाय सन्नद्धः परुषोक्तिपरायणः ॥ ५५

कृष्णोऽपि सज्जमारुह्य रथं युद्धाङ्गणं गतः ।
ततः समभवद्युद्धमुभयो[2]र्युद्धवीरयोः ॥ ५६

चेदिराजमहामेघः शरधाराम्बुमांस्तदा ।
अभ्यवर्षद्धृषीकेशं पयोद इव पर्वतम् ॥ ५७

[3]ततो बाणैस्तु भगवान् न्यकृन्तत शरान् बहून् ।
चेदिराट् क्रोधताम्राक्षः प्रोवाच परुषं वचः ॥ ५८

त्वां हत्वाससुतामात्यान् पाण्डवान् भीष्ममेव च ।
आनृण्यमद्य यास्यामि जरासन्धस्य धीमतः ॥ ५९

कंसस्य केशिनश्चैव [4]नरकस्य तथैव च ।
एवमुक्त्वा स तं कृष्णं त्रिभिर्विव्याध सायकैः ॥ ६०

कृष्णोऽपि बाणैर्विव्याध सुनीथं[सात्त्वतं]पञ्चभिर्युधि ।
एवं युद्धमतिक्रुद्धौ सहसा चक्रतुः [5]शितैः ॥ ६१

तौ नखैरिव शार्दूलौ दन्तैरिव [6]मतङ्गजौ ।
दंष्ट्राभिरिव पञ्चास्यौ शरैर्युद्धं वितेनतुः ॥ ६२

ततः कृष्णस्तु चैद्येन [7]बाणमाग्नेयमाहितम् ।
वारुणेनैव कौबेरं कौबेरेण महामतिः ॥ ६३

---

1. क. ख. नर्दयत्
2. क. ख. र्वैद्धवैरयोः
3. क. ख. तदास्त्रेणैव
4. क. ख. नागस्य च
5. क. ख. शरैः
6. क. ख. गजोत्तमौ
7. क. ख. चास्त्र-

याम्यं याम्येन वायव्यं वायव्येनाथ मानवम् ।
मानवेनाथ गान्धर्वं गान्धर्वेणैव वैष्णवम् ॥ ६४

वैष्णवे[1]नैव रौद्रेण रौद्रं तेन न्यवारयत् ।
ततः कृष्णो महाबाहुश्चक्रे दारुकवाक्यतः ॥ ६५

मायाविनस्तस्य शिरश्चक्रेणैव न्यकृन्तत ।
ततश्चेदिपतेर्देहादुत्थितस्तेजसां चयः ॥ ६६

कृष्णं प्रदक्षिणीकृत्य प्रविवेश तमव्ययम् ।
तदद्भुत[2]ममन्यन्त दृष्ट्वा सर्वे महीक्षितः ॥ ६७

देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात ह ।
देवगन्धर्व[3]मुख्याश्च प्रणेमुर्गरुडध्वजम् ॥ ६८

ततस्तु धर्मपुत्रोऽपि केशवानुज्ञया सुतम् ।
शिशुपालस्य चेदीनामाधिपत्येऽभिषिक्तवान् ।
चकार पाण्डुपुत्रोऽपि यज्ञं निर्विघ्नसत्क्रियः ॥ ६९

सूतः—

एवं वाग्दूषणादेव शिशुपालः क्षयं गतः ।
तस्माद्वाग्दूषणं मर्त्यः सर्वदा परिवर्जयेत् ॥ ७०

वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य वा मर्मसु ते पतन्ति
तान् पण्डितो नावसृजेत् परेषु ॥ ७१

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे वाग्दूषणदोषकथनं
नाम षष्ठोऽध्यायः

---

1. क. ख. नैन्द्रमैन्द्रेण 2. अ. तमं चक्रुर्दृष्ट्वा 3. क. ख. यक्षाश्च

## ॥ सप्तमोऽध्यायः ॥

### दण्डपारुष्यदूषणकथनम्

सूतः—

[1]सर्वधा दण्डपारुष्यं न कुर्यात्पृथिवीपतिः ।
कृते तस्मिन् क्षयं यान्ति प्राणाः सम्पत् प्रजा अपि ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
सुनीथा नाम या कन्या मृत्योः प्रथमजाभवत् ॥ २

[2]अरिन्दमस्य भार्या सा तस्यां पुत्रो ह्यजायत ।
स मातामहदोषेण युतो मृत्युसुतात्मजः ॥ ३

निसर्गादेव विप्रेन्द्रा दुष्ट एव व्यजायत ।
अभिषिक्तो यदा राज्ये स वेनः पृथिवीपतिः ॥ ४

अकरोद्दण्डपारुष्यं तदाप्रभृति निष्ठुरम् ।
राज्ञा दयार्द्रचित्तेन निजधर्मानुवर्तिना ॥ ५

दण्ड्ये विराचितो दण्डो धर्मायैव प्रजायते ।
अदण्ड्यदण्डो भूपालः साक्षाद्धर्म[3]भयङ्करः ॥ ६

इत्युक्तो गुरुभिर्वेनस्तद्वाक्यं नान्वमन्यत ।
असौ वेनमहीपालो मात्सर्यपरुषीकृतः ॥ ७

अकरोद्दण्डपारुष्यमत्यन्तं [4]कर्शिताः प्रजाः ।
दण्डो दण्ड्ये [5]हि पतितो हन्ति धर्मस्य विप्लवम् ॥ ८

वेनेन रचितोऽदण्ड्ये दण्डो धर्मक्षयं व्यधात् ।
एवमत्यन्तदुष्टात्मा वेनो विप्लवकारकः ॥ ९

---

1. क. ख. सर्वथा
2. क. ख. अङ्गस्य दत्ता भार्या सा तस्मात्
3. क. ख. क्षयङ्करः
4. क. ख. कृशयन्
5. क. ख. विरचितो

लोभात्क्रोधाच्च मात्सर्यावेशाच्च कलुषीकृतः ।
अत्यन्तं घोषयामास पृथिव्यां पृथिवीपतिः ॥ १०

न यष्टव्यं न दातव्यं न [1]होतव्यं कदाचन ।
[2]अर्थैरेतैर्यज्ञमिष्ट्वा किमर्थं हि तदर्हणा ॥ ११

दीयते मां विनान्यस्मै तत् प्राप्तुं कः परः क्षमः ।
अहं यज्ञपतिः पूर्वं सम्पूज्यः पृथिवीपतिः ॥ १२

ब्रह्मा जनार्दनः शम्भुरिन्द्रो [3]वायुर्यमो रविः ।
हुतभुग्वरुणो धाता पूषा भूमिर्निशाकरः ॥ १३

एते चान्ये च ये देवाः शापानुग्रहकारिणः ।
नृपस्यैते शरीरस्थाः सर्वदेवमयो नृपः ॥ १४

[4]एतज्ज्ञात्वा यथाज्ञा मे तत्कुरुध्वं यथा तथा ।
इत्युक्त्वा निष्ठुरं वेनो देवानां योग्यमर्हणम् ॥ १५

आक्रष्टुकामो दण्डेन यज्ञदानान्यवारयत् ।
ऋषयस्तं ततो गत्वा चेदं वचनमब्रुवन् ॥ १६

ऋषयः—

भो भो राजन् शृणुष्व त्वं [5]यद्वदामस्तवाद्य वै ।
राजन् [6]देशोपकाराय प्रजानाञ्च हिताय च ॥ १७

परं विष्णुं पूजयामस्तत्रांशस्ते भविष्यति ।

सूतः—

वेनस्तद्वचनं श्रुत्वा मुनीनामति[7]कोपनः ॥ १८

मत्तः कोऽन्योऽधिकोऽस्तीति भर्त्सयामास वाक्यतः ।
[8]एवं निवारयित्वासौ यज्ञानात्मार्हणेच्छया ॥ १९

---

1. क. ख. भोक्तव्यं
2. क. ख. अर्थैर्नैकैस्सुरानिष्ट्वा
3. क. ख. वैश्रवणो
4. इदमर्धं अ. पुस्तके नास्ति
5. क. ख. याचयाम तवाद्य
6. क. ख. देवो-
7. क. ख. कोपितः
8. क. ख. पुस्तकयोरिदमर्धं नास्ति

[1]दण्डपारुष्ययुक्तश्च कर्शयामास च प्रजाः ।
ततः सर्वाः प्रजाः क्रुद्धाः क्रोधावेशवशीकृताः ॥ २०

राज्ञि दुष्टे तथा पृथ्व्यामोषध्योऽन्तर्हितास्तदा ।
ततस्तं मुनयः सर्वे सम्भूय सहसा [2]रुषा ॥ २१

कुशैर्जघ्नुर्मन्त्रपूतैर्दण्डपारुष्यदूषितम् ।
ततस्त्वराजके राष्ट्रे दुष्टैरत्यन्तपीडिताः ॥ २२

ममन्थुरनपत्यस्य तस्योरुं मुनय[3]स्तदा ।
मथ्यमानस्य तस्योरोरुत्तस्थौ पुरुषः किल ॥ २३

दग्धस्थाणुप्रतीकाशः खर्वाटो ह्रस्वबाहुकः ।
किं करोमीति तानाह विप्रान् सर्वान् स चातुरः ॥ २४

निषीदेति तमूचुस्ते निषादस्तेन सोऽभवत् ।
ततोऽसभाजयंस्तं तु निषादा विन्ध्यवासिनः ॥ २५

ततोऽस्य दक्षिणं हस्तं ममन्थुस्ते महर्षयः ।
मथ्यमाने च तत्राभूत् पृथुर्वैन्यः प्रतापवान् ॥ २६

तेनैव भूमिर्गोरूपा सर्वौषधिदुघा कृता ।
प्रजाश्च राजधर्मेण पालयामास भूपतिः ॥ २७

तस्मिञ्शासति धर्मेण प्रजा वैन्ये महात्मनि ।
वेनस्य दण्ड[4]पारुष्यं व्यस्मार्षीदखिलं जगत् ॥ २८

वैन्येन लब्धवान् वेनः पुत्री भूत्वा सतां गतिम् ।

सूतः—

तस्मान्न कुर्याद्भूपालो दण्डपारुष्य[5]मुत्कटम् ॥ २९

यदि कुर्यात्प्रमादेन क्षिप्रमेव विनश्यति ।
न कुर्याद्दण्डपारुष्यमत एव महीपतिः ॥ ३०

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे दण्डपारुष्यदूषणं
नाम सप्तमोऽध्यायः

---

1. अयं श्लोकः क. ख. पुस्तकयोर्न दृश्यते
2. क. ख. क्रुधा
3. क. ख. स्तथा
4. अ. पारुष्यव्यसनं तत्यजुः प्रजाः
5. क. ख. मुद्भटः

## ॥ अष्टमोऽध्यायः ॥

### अर्थदूषणकथनम्

सूतः—

अर्थान् धर्माविरोधेन प्राज्यधीरार्जयेदिमान् ।
दानभोगोचितान् कुर्यादन्यथा [1]ह्यर्थदूषणम् ॥ १

अर्थानामननुष्ठाता कामचारी विकत्थनः ।
अपि [2]सर्वां महीं लब्ध्वा क्षिप्रमेव विनश्यति ॥ २

अनर्थे चैव निरतमर्थे चैव पराङ्मुखम् ।
न तं भर्तारमिच्छन्ति षण्डं पतिमिव स्त्रियः ॥ ३

[3]योऽर्थकामस्तु वचनं प्रतिकूलं न मृष्यते ।
शृणोति प्रतिकूलानि द्विषतां वशमेति सः (?) ॥ ४

सुहृदामर्थकामनां यो न तिष्ठति शासने ।
प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ॥ ५

अर्थस्य दूषणार्थं हि धनत्यागो [4]महीयसः ।
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते ॥ ६

अन्यायेनार्जितं द्रव्यमर्थदूषणमुच्यते ।
अपात्रदानं पात्रार्थहरणं तस्य लक्षणम् ॥ ७

तदकस्मात्समाविष्टं [5]कोपेनातिबलीयसा ।
नित्यमात्महिताकाङ्क्षी न कुर्यादर्थदूषणम् ॥ ८

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
मनोर्वंशे [6]समुद्भूतः खनिनेत्र इति श्रुतः ॥ ९

---

1. अ. प्यर्थ-
2. क. ख. सर्व-
3. क. ख. योऽर्थकामस्य
4. क. ख. महीयसा
5. क. ख. भूपेना-
6. क. ख. समुत्पन्नः खनी-

राजा दुर्जनसंसर्गात् पूर्ववासनया युतः ।
प्रजाः सम्पीड्य बहुशो नीतिमुल्लङ्घ्य शाश्वतीम् ॥ १०

अधर्ममार्गनिरतो धनं बहु समार्जयत् ।
[1]धनं च तन्न देवेभ्यो न द्विजेभ्यो न चात्मने ॥ ११

न गुरुभ्यो न बन्धुभ्यो नार्थिभ्यो न मखाय च ।
उपयुक्तं तु कृतवान् व्यसनेषु कृताशयः ॥ १२

नटनर्तकदूतेभ्यो विटेभ्यः स्त्रीजनाय च ।
पाषण्डेभ्यो[2]ऽथ गायद्भ्यो मातङ्गेभ्यः सहस्रशः ॥ १३

धनं बहु विकीर्यैव चकार [3]स्वार्थवञ्चनम् ।
सन्मा[4]र्गलङ्घनादस्मिँल्लोके सद्भिर्विगर्हितः ॥ १४

इष्टापूर्तादिराहित्याद्देवताभिश्च निन्दितः ।
लोकद्वयपरिभ्रष्टस्त्वर्थदूषणकारणात् ॥ १५

पूर्वपुण्यविपाकेन लेभे पुत्रं गुणा[5]धिकम् ।
कृतोपनीतस्तेनासौ [6]विनीतः समजायत ॥ १६

[7]पुत्रो नानागुणैर्युक्तः स तु नाम्ना सुवर्चसः ।
जग्राह विद्याः सकला वसिष्ठात्तपसां निधेः ॥ १७

तस्मिन् काले प्रजाः सर्वाः खनिनेत्रेण कर्शिताः ।
न शर्म लेभिरे किञ्चिद्दिवारात्रं [8]विशेषतः ॥ १८

[9]ततः सम्भूय निश्चित्य खनिनेत्रविवासनम् ।
बालं सुवर्चसं श्लाघ्यमभिषेक्तुञ्च तत्पदे ॥ १९

---

1. अ. पुस्तके इदमर्धमनन्तर-श्लोकस्तनन्तरार्धं च न दृश्यते
2. क. ख. गायकेभ्यो
3. क. ख. स्वात्म
4. क. ख. गोंल्लङ्घ-
5. क. ख. न्वितम्
6. अयं पादः क. ख. पुस्तकयोर्नास्ति
7. अयं पादः क. ख. पुस्तकयोर्नास्ति
8. क. ख. विवादतः
9. क. ख. तास्तु सम्भूय

उद्योगं परमं चक्रु[1]र्मनोर्वंशविवृद्धये ।
ततो राष्ट्राद्विनिष्कास्य लोकत्रयविगर्हितम् ॥ २०

ततो वसिष्ठस्य मतादभ्यषिञ्चन् सुवर्चसम् ।
सुवर्चसस्तु [2]मृदुभिः करैराह्लादयन् प्रजाः ॥ २१

[3]पौरेभ्यः प्रददौ सर्वं [4]स्वधनं पूर्वसञ्चितम् ।
अकरो[5]द्विधिवत् ख्यातानध्वरान् बहुदक्षिणान् ॥ २२

चकाराभयदानेन शरणागतरक्षणम् ।
जग्राह स्वगुरोः पादौ प्रजाः सम्यगपालयत् ॥ २३

अपूजयन्महाभागः शिवं [6]पापनिवारणम् ।
एवं दिने दिने तस्य राज्ञो बहुधनव्ययात् ॥ २४

अनागमाद्धनस्यापि क्षीणः कोशो बभूव [7]हि ।
परिक्षीणे हि कोशे तं तत्याज सकलं बलम् ॥ २५

ततः क्षीणबलं ज्ञात्वा शत्रवो रन्ध्रदर्शिनः ।
उद्योगवन्तस्तद् राष्ट्रमाक्रमन्त समन्ततः ॥ २६

निरुद्धः शत्रुभिर्दृप्तैरबलो बलिभिस्तदा ।
वसिष्ठं स्वगुरुं स्मृत्वा धर्मञ्च स्वार्जितं पुरा ॥ २७

[8]प्रदध्मौ स्वकरं धीमान् चतुरङ्गबलं महत् ।
[9]अथ वाजिसमाकीर्णं द्विपयोधसमावृतम् ॥ २८

[10]निर्गतं तु बलं धीमान् निष्प्रत्यूहविजृम्भणम् ।
अजैषीच्छात्रवीं सेनामह्नायैव तदद्भुतम् ॥ २९

जित्वा शत्रुबलं सर्वं धर्मेणैव बलीयसा ।
प्रत्यपद्यत राज्यं [11]स्वं प्रजाभिरभिनन्दितः ॥ ३०

---

1. क. ख. मनुवंश
2. क. ख. मुनिभिः
3. क. ख. पात्रेभ्यः
4. क. ख. स्वं धनं
5. क. ख. द्विविधान् ख्यातान् स मखान्
6. क. ख. परमकारणम्
7. क. ख. ह
8. अ. प्रदध्यौ स्वगुरुं
9. क. ख. रथवाजिगणा-
10. क. ख. निर्गत्य तद्बलं
11. क. ख. स

तं करंधममाचख्युः करस्य[धमनात्]मथनात्प्रजाः ।
स नित्यं धर्म[1]पूतात्मा नीतिधर्मविशारदः ॥
निधिः कलानां सर्वासां प्रावर्धत दिने दिने ॥ ३१

सूतः—

तस्मात्सर्व[2]प्रयत्नेन न कुर्या[3]द्धनदूषणम् ।
अदूषितार्थः सर्वत्र नृपतिः प्राप्नुयाच्छ्रियम् ॥ ३२

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे अर्थदूषणकथनं
नामाष्टमोऽध्यायः

---

1. अ. भूतात्मा
2. क. ख. प्रकारेण
3. क. ख. दर्थ-

## ॥ नवमोऽध्यायः ॥

### सत्सहायफलकथनम्

सूतः—

सत्सहायात्परं नास्ति [1]श्रेयस्करमनुत्तमम् ।
सत्सहायवतां पुंसां लभ्यते महतां पदम् ॥ १

जनः सज्जनसंसर्गाद्याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥ २

[2]प्रसिद्धिहेतो[तु]र्भूतानामग्रे श्रेष्ठपरिग्रहः ।
सहस्रं जलधौ शङ्खाः पाञ्चजन्यो हि विश्रुतः ॥ ३

महानुभाव[3]संसर्गात्पात्रतां यात्यसन्नपि ।
[4]इन्दुः शिवशिरस्सङ्गात् कलयापि हि नम्यते ॥ ४

संसर्गेण सतां [5]लोके पूज्यतां यात्यसन्नपि ।
रथ्यातोयमपि प्राप्य गङ्गां याति पवित्रताम् ॥ ५

सतां पदं प्रापयन्ति सन्तः संसर्गिणं नरम् ।
अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ॥ ६

त्रिशङ्कुः प्रार्थयामास वसिष्ठमृषिसत्तमम् ।
सशरीरः स्वर्गमाप्तुमुपायं भूसुरो[6]त्तमम् ॥ ७

वसिष्ठस्तद्वचः श्रुत्वा त्रिशङ्कुं प्राह धर्मवित् ।
प्राप्तुं स्वर्गं शरीरेण सहोपायं न वेद्म्यहम् ॥ ८

---

1. क. ख. श्रेयःफल-
2. क. ख. प्रसङ्गादपि भूतानां प्रायः
3. क. ख. संसर्गः कस्य नोन्नतिकारणम
4. अ. कार्श्यः
5. क. ख. प्रायः पात्रतां
6. क. ख. -त्तमाः

सशरीरेण न [1]प्राप्यः स्वर्गो यज्ञशतैरपि ।
त्रिशङ्कुरपि तच्छ्रुत्वा वचनं प्राह [2]कोपतः ॥ ९

स्वर्गप्रदेन यागेन न त्वं याजयितुं क्षमः ।
यदि यज्ञेन यक्ष्येऽहं सत्कृत्यान्यं द्विजं गुरुम् ॥ १०

प्राप्स्येऽहं तेन [3]यागेन सशरीरस्त्रिविष्टपम् ।
इत्युक्त्वा शतसङ्ख्यातांस्तस्य पुत्रानवाप सः ॥ ११

प्राप्तश्च कथयामास वृत्तान्तं सर्वमादितः ।
ते श्रुत्वा तं महीपालमिदमूचुः क्रुधान्विताः ॥ १२

भव त्वं गुरुसंत्यागाच्चण्डालः सर्वनिन्दितः ।
अथ तेषा[4]ञ्च वचनात् त्रिशङ्कुः पृथिवीपतिः ॥ १३

बभूवान्त्यजरूपाढ्यः कृष्णाङ्गः पिङ्गलेक्षणः ।
त्रिशङ्कुः स्वं वपुर्दृष्ट्वा चण्डालत्वप्रकाशनम् ॥ १४

किं करोमि क्व गच्छामि किं वह्निं प्रविशाम्यहम् ।
किं वा विषं भक्षयामि किमित्यालोकयाम्यहम् ॥ १५

अनेन वपुषा दारान् पुत्रान् पौत्रांश्च बान्धवान् ।
एवं विलप्य चाहूय मन्त्रिणः शोककारणम् ॥ १६

उक्त्वा शोकाकुलानां तु हरिश्चन्द्राभिषेचनम् ।
आज्ञाप्य प्रययौ धीमान् विश्वामित्राश्रमं प्रति ॥ १७

तत्रत्यास्तं समालोक्य चण्डालसमविग्रहम् ।
कस्त्वमाश्रम[5]मासोऽसि वेदध्वनिविमिश्रितम् ॥ १८

पाप चण्डालरूप त्वं गच्छ गच्छेति चाब्रुवन् ।
स विश्वामित्रमानम्य सर्वं वृत्तं न्यवेदयत् ॥ १९

---

1. क. ख. प्राप्तं
2. अ. कोपितः
3. क. ख. यज्ञेन
4. क. ख. न्तु
5. क. ख. माप्नोषि

विश्वामित्रोऽपि तच्छ्रुत्वा तस्य [1]तत्पापशान्तये ।
सेवां सकलतीर्थानां सहसा चोपदिष्टवान् ॥ २०

स स्नातः सर्वतीर्थेषु कमलालयमध्यगे ।
देवतीर्थे प्रतीच्यां तु वल्मीकेशस्य विश्रुते ॥ २१

स्नात्वा शिवं [2]स्मरन् पापान्मुक्तो मुनिमवाप सः ।
ततस्तं स मुनिः प्राह शृण्वताञ्च [3]महात्मनाम् ॥ २२

राजन् दिष्ट्या मुक्तपापस्त्वदभीप्सितसिद्धये ।
यज्ञद्रव्याण्याहराद्य [4]त्वदर्थं साधयाम्यहम् ॥ २३

इत्युक्त्वा प्राप्य धातारं सर्वं वृत्तं न्यवेदयत् ।
तस्यानुज्ञां नैव ददौ तस्मिन् कर्माणि पद्मभूः ॥ २४

[5]सुसङ्क्रुद्धस्तु स मुनिः पश्य मे तपसो बलम् ।
त्रिशङ्कुं प्रापयाम्यद्य सशरीरं तु ते पदम् ॥ २५

इत्युक्त्वा भूतलं प्राप्य कारयामास वै क्रतुम् ।
बभूव स स्वयं धीमानध्वर्युर्यज्ञकर्मणि ॥ २६

होता बभूव शाण्डिल्यो ब्रह्मा गौतम एव च ।
आग्नीध्रश्च्यवनोऽप्यासीन्मैत्रावरुणिरूर्मिलः ॥ २७

उद्गाता याज्ञवल्क्य[6]श्च प्रतिहर्ता [7]च जैमिनिः ।
प्रस्तोता शङ्कुकर्णश्च तथोन्नेता च गालवः ॥ २८

पुलस्त्यो ब्राह्मणाच्छंसी पोता [8]गार्ग्यो मुनीश्वरः ।
नेष्टा चैव तथात्रिस्तु ह्यच्छावाको भृगुः स्वयम् ॥ २९

एवमेतैः सम्प्रवृत्ते यज्ञे श्रद्धासमन्विते ।
सुवर्णस्य च रूप्यस्य रत्नानाञ्च विशेषतः ॥ ३०

---

1. अ. तत्त्वोपशा·
2. क. ख. पूज्य
3. क. ख. महौजसाम्
4. क. ख. तदर्थं
5. क. ख. ततः क्रुद्ध-
6. क. ख. स्तु
7. क. ख. तु
8. क. ख. गर्गो

अन्नानाञ्च तथा शैला दृश्यन्ते [1]परिकल्पिताः ।
दीयतां दीयतामन्नं भुज्यतां भुज्यतामिति ॥ ३१

[2]निनादः श्रूयते तस्मिन् यज्ञे सर्वक्रियान्विते ।
वर्तमाने महायज्ञे तस्मिन्नेवं सविस्तरे ॥ ३२

आहूता यज्ञभागाय नाभिगच्छन्ति देवताः ।
केवलं वह्निवक्त्रेण तस्य गृह्णन्ति तद्धविः ॥ ३३

ततश्चावभृथान्ते तु स मुनिः क्रोधदूषितः ।
प्रत्यक्षा नाभवन् देवाः किमित्यामन्त्रिता अपि ॥ ३४

तथापि साधयाम्येव सजंस्तत्र मनीषितम् ।
इत्युक्त्वा तोषयामास तपसा चन्द्रशेखरम् ॥ ३५

[3]तुष्टाद्भवाद्वरं वव्रे भुवनानि चतुर्दश ।
स्रष्टुं यथा समर्थोऽहं तथा शक्तिर्विधीयताम् ॥ ३६

देवोऽपि तद्वरं दत्वा तत्रैवान्तरधीयत ।
ततः सोऽपि [4]जगत्सृष्टिं चकारावितथं मुनिः ॥ ३७

एतस्मिन्नन्तरे शक्रः सह सर्वैः सुरैरपि ।
गत्वा ब्रह्मालयं तस्य सर्ववृत्तं न्यवेदयत् ॥ ३८

तस्य तद्वचनं श्रुत्वा तेनैव सहितो विधिः ।
गत्वोवाच जगन्मित्रं विश्वामित्रं मुनीश्वरम् ॥ ३९

निवृत्तिं कुरु विप्रर्षे जगत्सृष्टेस्तु साम्प्रतम् ।
सृष्टे यावन्न नश्यन्ति सर्वे देवाः सवासवाः ॥ ४०

**विश्वामित्रः—**

अनेनैव शरीरेण त्रिशङ्कुर्नृपसत्तमः ।
यदि गच्छति ते [5]लोकं त्वत्सृष्टिं न करोम्यहम् ॥ ४१

---

1. क. ख. पर्वतोपमाः
2. क. ख. निनदः
3. क. ख. तुष्टाच्छिवा-
4. क. ख. सृजन् दृष्टिं
5. क. ख. योगं तत्सृष्टिं

ब्रह्मा—

एष गच्छतु भूपालो मयैवाद्य त्रिविष्टपम् ।
अनेनैव शरीरेण त्वत्प्रभावान्मुनीश्वर ॥ ४२

विरामं कुरु सृष्टेस्त्वं नैतदन्यः करिष्यति ।
न कृतं केनचिल्लोके यत्कर्म भवता कृतम् ॥ ४३

विश्वामित्रः—

यन्मया कोपयुक्तेन कृतेयं सृष्टिरब्जज ।
तत् क्षन्तव्यं सुरश्रेष्ठ स्वं लोकं व्रज साम्प्रतम् ॥ ४४

अनेन भूभुजा सार्धं धार्मिकेण त्रिशङ्कुना ।
एवमुक्तस्तु भगवान् ब्रह्मा मुनिवरेण सः ॥ ४५

संस्नाप्य देव[1]तीर्थे तु त्रिशङ्कुं भूभुजं द्विजाः ।
[2]ब्रह्मलोकं समादिश्य तेनैव सहितो ययौ ॥ ४६

तस्मादेव हि संसर्गः सतां [3]सम्पत्प्रदायकः ।
येन सिध्यति सर्वेषामभिलाषफलोदयः ॥

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे सत्सहायफलकथनं
नाम नवमोऽध्यायः

1. क. ख. तीर्थेन
2. अ. ब्रह्मा लोकं समुद्दिश्य
3. क. ख. सत्पददा-

## ॥ दशमोऽध्यायः ॥

### सन्मित्रकथनम्

ऋषयः—

मित्रेण लभ्यते सर्वमैहिकामुष्मिकञ्च यत् ।
भवतीति त्वया प्रोक्तं कथमेतद्वद प्रभो ॥ १

सूतः—

ज्ञानविज्ञानसत्त्वाढ्यं महा[1]पक्षं प्रियंवदम् ।
आयतिक्षममद्वैतं मित्रं कुर्वीत बुद्धिमान् ॥ २

ददाति प्रतिगृह्णाति [2]गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं मित्रलक्षणम् ॥ ३

[3]नैव तत् कुरुते भ्राता न पितान्योऽपि वै जनः ।
पुंसामापत्प्रतीकारे सन्मित्रेण कृतं तु यत् ॥ ४

अत्रा[4]पि कथ्यते सद्भिरितिहासः पुरातनः ।
प्राग्बभूव महा[5]वीरः शत्रुजिन्नाम भूपतिः ॥ ५

[6]तुतोष यस्य यज्ञेषु सोमप्राप्त्या पुरन्दरः ।
[7]ऋतध्वजस्तस्य पुत्रो बभूवारिविदारणः ॥ ६

[8]बुद्धिविक्रमलावण्यैर्गुरुशक्राश्विनां समः ।
[9]स समानवयोबुद्धिसत्त्वविक्रमचेष्टितैः ॥ ७

नृपपुत्रो नृपसुतैर्नित्यमास्ते समावृतः ।
कदाचित्काव्यसंलापैः कदाचिच्छास्त्र[10]सङ्क्रमैः ॥ ८

---

1. क. ख. पथ्यं
2. क. ख. कार्य-
3. इदमर्धं अ. पुस्तके नास्ति
4. क. ख. -र्थे
5. क. ख. वीर्यः
6. क. ख. यस्तोषयति यज्ञेषु सोमप्राप्त्या पुरन्दरम्
7. क. ख. ऋतु-
8. क. ख. रूपवानमलो वीर्ये गुरुशुक्रा-
9. ख. सममान-
10. क. ख. सक्रियैः

कदाचिन्नाट्य[1]सङ्गीतैर्वीणानादैश्च सम्भृतैः ।
एवं विहरमाणस्य समीपं यान्त्यनेकशः ॥ ९

समानवयसः [2]प्रीत्या द्विजभूपविशां सुताः ।
कस्यचित्त्वथ कालस्य नागलोकान्महीतलम् ॥ १०

प्राप्तौ नागकुमारौ तु पुत्रावश्वतरस्य च ।
ब्रह्म[3]रूपौ प्रीतिमन्तौ तरुणौ प्रियदर्शनौ ॥ ११

तेन राजकुमारेण द्विजभूपविशां सुतैः ।
सस्नानवस्त्राकल्पादि चक्रतुर्भोजनक्रियाम् ॥ १२

एवं प्रतिदिनं तौ तु पातालादेत्य भूभुजः ।
पुत्रेण परमां प्रीतिमतुलां समवापतुः ॥ १३

स तौ मुक्त्वा न भुङ्क्ते च न भूषयति भूषणम् ।
रात्रिन्दिवं तौ पाताले भूतले चापि निन्यतुः ॥ १४

कदाचिन्नागराजोऽपि पुत्रौ पप्रच्छ सादरम् ।
मर्त्यलोके परा प्रीतिः सह केनेति विस्मितः ॥ १५

इति पित्रा स्वयं पृष्टौ प्रणिपत्य कृताञ्जली ।
[4]प्रत्यूचतुर्महाभागमुरगाधिपतेः सुतौ ॥ १६

नागकुमारौ—

तात पुत्रः शत्रुजिद्धि ऋतध्वज इति श्रुतः ।
रूपवा[5]न् सज्जनोपेतः शूरो मानी प्रियंवदः ॥ १७

अनावृत्त[6]कथो वाग्मी विद्वान् मैत्रीगुणान्वितः ।
तस्योपचारसम्प्रीति[7]भोगेनापहृतं मनः ॥ १८

---

1. क. ख. -वादित्रगीतनाटक-सम्भ्रमैः ।
2. क. ख. प्रीताः
3. क. ख. रूपप्रतिच्छन्नौ
4. इदमर्धं अ. पुस्तके नास्ति ।
5. क. ख. नार्जवोपेतः
6. क. ख. कथा
7. क. ख. संभोगापहृतं

नागलोकेऽन्यलोके वा न रतिर्विद्यते पितः ।

अश्वतरः—

पुत्रः पुत्रवतो धन्यः स [1]यस्यैव भवद्विधैः ॥ १९

[2]परोक्षेणापि गुणिभिः क्रियते गुणकीर्तनम् ।
सन्ति शास्त्रविदो[3]ऽशीलाः सन्ति मूढाः सुशीलिनः ॥ २०

शास्त्रशीलयुतं मन्ये पुत्रौ धन्यतरं तु तम् ।
यस्य मित्रगुणान्मित्राण्यमित्राणि पराक्रमम् ॥ २१

कथयन्ति सदा लोके पुत्रवांस्तेन वै पिता ।
[4]शोकारातिपरित्राणं प्रीतिविस्रम्भ[5]भाजनम् ॥ २२

केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ।
[6]तस्योपकारिणः किं तु भवद्भ्यां प्रतिसत्कृतम् ॥ २३

[7]मद्गृहेऽस्ति सुवर्णादिरत्नभूषणमासनम् ।
तस्य प्रत्युपकारार्थं तद्देयमविशंकया ॥ २४

धिक् तस्य जीवितं पुंसो मित्राणामुपकारिणाम् ।
[8]प्रतिरूपमकुर्वन् यो जीवामीत्यवगच्छति ॥ २५

उपकारं सुहृद्वर्गेष्वपकारञ्च शत्रुषु ।
[9]नृमेघो वर्षति प्राज्ञास्तस्येच्छन्ति सदोन्नतिम् ॥ २६

पुत्रौ—

किं तस्य कृतकृत्यस्य कर्तुं शक्येत केनचित् ।
यस्य सर्वेऽर्थिनो गेहे सर्वकामैः समर्चिताः ॥ २७

यानि रत्नानि तद्गेहे पाताले तानि नः कुतः ।
वाहनासनयानानि भूषणान्यम्बराणि च ॥ २८

---

1. क. ख. यस्यैवं
2. क. ख. परोक्षव्यापि-
3. क. ख. ऽशूराः सन्ति शूरास्सु
4. क. ख. यः करोति परित्राणं
5. क. ख. भाषितम्
6. अ. अन्योप
7. क. ख. मणिहेमसुव-
8. क. ख. प्रतिप्रिय-
9. अ. न मेघो

विज्ञातं तत्र यन्नास्ति तदन्यत्र न विद्यते ।
एवं तस्यास्ति कर्तव्यमसाध्यं तच्च नो मतम् ॥ २९

हिरण्यगर्भगोविन्दशर्वादीनीश्वरानृते ।

अश्वतरः—

तथापि श्रोतुमिच्छामि तस्य तत्कार्यमुत्तमम् ॥ ३०

असाध्यमथ वा साध्यं किं वासाध्यं विपश्चिताम् ।
देवत्वममरेशत्वं तत्पूज्यत्वं च मानवाः ॥ ३१

प्रयान्ति [1]वाञ्छितञ्चान्ये ये दृढव्यवसायिनः ।
[2]नाविज्ञातं न चागम्यं न प्राप्यं दिवि चेह वा ॥ ३२

उद्युक्तानां मनुष्याणां यतचित्तेन्द्रियात्मनाम् ।
योजनानां सहस्राणि याता यान्ति पिपीलिकाः ॥ ३३

अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ।
[3]तत्कथ्यतां महाभागः कार्यवान् कस्य पुत्रकौ ॥ ३४

स भूपालसुतः सम्यग्येनानृण्यं भवेच्च वाम् ।

पुत्रौ—

तथा चेत्कथयावस्ते वृत्तं सद्वृत्तशालिनः ॥ ३५

तस्य प्रवृत्तं कौमारे तेनैव कथितं पुरा ।
पूर्वं शत्रुजितः पार्श्वमुपगम्य द्विजोत्तमः ॥ ३६

अवदद्गालवो धीमान् गृहीत्वा तुरगोत्तमम् ।
राजन् दैत्याधमः कोऽपि सिंहः सन्मृगरूप[4]भाक् ॥ ३७

समाधिध्यानयुक्तस्य मौनव्रतरतस्य च ।
तथा करोति विघ्नौघं यथा चलति मे मनः ॥ ३८

दग्धुं कोपाग्निना [5]सम्यक् समर्थास्तु वयं [6]नु तत् ।
दुःखार्जितस्य तपसो व्ययादेव महीपते ॥ ३९

1. क. ख. वाञ्छितान्यन्ये
2. अ. पुस्तके इदमर्धं नास्ति
3. इदमर्धं अ. पुस्तके नास्ति
4. क. ख. धृत्
5. क. ख. सद्यः
6. क. ख. तु

एकदा तु महा[1]राज ह्यतिनिर्विण्णचेतसा ।
[2]तत्क्लेशितेन निश्वासो निरीक्ष्याम्बरमुत्थितः ॥ ४०

ततोऽम्बरतलात्सद्यः पतितोऽयं तुरङ्गमः ।
[3]वाक् चाशरीरिणी प्राह नरनाथ शृणुष्व ताम् ॥ ४१

अश्रान्तः सकलं भूमेर्वलयं तुरगोत्तमः ।
समर्थः क्रान्तुमर्केण तवायं प्रतिपादितः ॥ ४२

[4]पातालमर्त्यनाकेषु नास्य प्रतिहता गतिः ।
समस्तदिक्षु व्रजतो नासक्तिः पर्वतेषु[5] च ॥ ४३

यतो भूवलयं सर्वमश्रान्तोऽयं चरिष्यति ।
अतः कुवलयो नाम्ना ख्यातिं लोके गमिष्यति ॥ ४४

एवंविधं समारुह्य तुरगं स ऋतुध्वजः ।
पुत्रः शत्रुजितः शत्रुं तपसस्ते हनिष्यति ॥ ४५

[6]अनेन तुरगेणैव सोऽपि ख्यातिं गमिष्यति ।
इत्युक्तमशरीरिण्या वचः श्रुत्वा महीपतिः ॥ ४६

त्वदन्तिकमनुप्राप्तस्तपसो विघ्नकारिणम् ।
तं निवारय भूपाल तपसो भागभाग्यतः ॥ ४७

तदेतदश्वरत्नञ्च मया तेऽद्य निवेदितम् ।
पुत्रमाज्ञापय क्षिप्रं यथा धर्मो न लुप्यते ॥ ४८

स भूपस्तद्वचः श्रुत्वा तं वै पुत्रमृतध्वजम् ।
तदश्वरत्नमारोप्य कृतकौतुकमङ्गलम् ॥ ४९

प्रस्थापयामास नृपो गालवेन महात्मना ।
गालवोऽपि समादाय कुमारं स्वाश्रमं ययौ ॥ ५०

---

1. क. ख. -राजन्नति
2. क. ख. तत्कर्शितेन
3. क. ख. वाग्वाश-
4. क. ख. पातालाम्बरतोयेषु
5. क. ख. ष्वपि
6. इदमर्धं अ. पुस्तके नास्ति

[1]ऋतध्वजस्तस्य चक्रे मुनिरक्षामतं तदा ।
तस्मिन् काले दानवोऽपि मुनिं ध्यानपरायणम् ॥ ५१

सौकरं रूपमास्थाय प्रधर्षयितुमागतः ।
तं दानवं समालोक्य घोरं सूकररूपिणम् ॥ ५२

[2]मुनिपुत्रैर्यदोद्घुष्टं राजपुत्रेति वै भिया ।
तदा [3]ऋतध्वजस्सोऽपि समारुह्य तुरङ्गमम् ॥ ५३

[4]अभ्यधावद्वराहं तं घोररूपं शरासनी ।
आजघान च बाणेन चन्द्रार्का[5]ङ्गारवर्चसा ॥ ५४

[6]नाराचाभिहतस्तूर्णमात्मत्राणपरः किटिः ।
गिरिं पादपसंबाधं सोऽपाक्रामन्महाटवीम् ॥ ५५

तमन्वधावद्वेगेन तुरगोऽसौ महाजवः ।
चोदितो राजपुत्रेण पितुरादेश[7]वर्तिना ॥ ५६

सोऽतिक्रम्य महावेगाद्योजनानां सहस्रकम् ।
धरण्यां विवृते [8]गर्ते निपपात लघुक्रमः ॥ ५७

तस्यानन्तरमेवाशु सोऽप्यश्वो नृपतेः सुतः ।
ततो नादृश्यत मृगो गर्ते तिमिरसङ्कुले ॥ ५८

[9]अथादृश्यत सौवर्णं प्रासादशतशोभितम् ।
पुरन्दरपुरप्रख्यं पुरं [10]प्राकारसंवृतम् ॥ ५९

[11]ऋतध्वजोऽपि नापश्यत्तत्र कञ्चिन्नरं पुरे ।
भ्रमता च ततो दृष्टा काचित्कमललोचना ॥ ६०

सा तेन पृष्टा तन्वङ्गी का त्वमित्येव सादरम् ।
अनालपन्ती प्रासादमारुरोह सुमध्यमा ॥ ६१

---

1. क. ख. ऋतु-
2. क. ख. गुरु-
3. क. ख. ऋतु-
4. क. ख. अन्वधा-
5. क. ख. कार-
6. अयं श्लोकः अ. पुस्तके न दृश्यते
7. क. ख. कारिणा
8. क. ख. सर्गे पपात लघुविक्रमः
9. क. ख. अदृश्यत च
10. क. ख. प्रासाद-
11. क. ख. ऋतु-

सोऽप्यश्वमेकतो बद्ध्वा तामेवानुससार ह ।
विस्मयोत्फुल्लनयनो [1]निःशङ्को नृपतेः सुतः ॥ ६२

ततोऽपश्यच्च विस्तीर्णे पर्यङ्के सर्वकाञ्चने ।
[2]विषण्णां कन्यकामेकां पीनश्रोणिपयोधराम् ॥ ६३

तां दृष्ट्वा चारुसर्वाङ्गीमनङ्गा[3]ङ्गलतामिव ।
शृङ्गारदेवतां मेने साक्षादिव शरीरिणीम् ॥ ६४

सापि दृष्ट्वैव तं [4]बालं नीलकुञ्चितकुन्तला ।
उत्तस्थौ स्वर्णपर्यङ्काच्चित्तक्षोभमवाप च ॥ ६५

लज्जाविस्मयदैन्यानां सद्यस्तन्वी वशं गता ।
कोऽयं [5]देवो मुनिः को वा गन्धर्वो वा महीपतिः ॥ ६६

एवं विचिन्त्य बहुधा निश्वस्य च महीतले ।
उपविश्य ततो भेजे मूर्छां सा मदिरेक्षणा ॥ ६७

सोऽपि कामशराघात[6]मवाप नृपतेः सुतः ।
तां समाश्वासयामास न भेतव्यमिति ब्रुवन् ॥ ६८

समाश्वस्ता तथा पृष्टा तेन सा मोहकारणम् ।
किञ्चिल्लज्जान्विता बाला तत्तु सख्यै न्यवेदयत् ॥ ६९

सा सखी चाब्रवद्राज्ञे तस्या मोहस्य कारणम् ।
राजंस्त्वद्दर्शनादेव बाला मोहं समागता ॥ ७०

[7]निमग्नेवेन्द्रियैः सार्धमनुरागपयोनिधौ ।
एषा विश्वावसोः पुत्री गन्धर्वाणा[8]मधीशितुः ॥ ७१

नाम्ना मदालसा सर्वलक्षणैरुपशोभिता ।
क्रीडन्तीं पुष्पितोद्याने बालामेनामुपाहरत् ॥ ७२

---

1. क. ख. विशङ्को
2. क. ख. निषण्णां
3. क. -गलता-
4. क. ख. बाला
5. क. ख. पुमान्
6. क. ख. मवाप्य
7. अ. पुस्तके इदमर्धं नास्ति
8. क. ख. मपीशि-

वज्रकेतोः सुतः पातालकेतुः स्वीयमायया ।
बाला संस्थापितात्रैव समानीय दुरात्मना ॥ ७३

आगामिन्यां त्रयोदश्यामेनां स परिणेष्यति ।
स तु नार्हति चार्वङ्गीं शूद्रो वेदश्रुतिं यथा ॥ ७४

अतीते च दिने बालामात्मव्यापादनोद्यताम् ।
सुरभिः प्राह नायं त्वां प्राप्स्यते दानवाधमः ॥ ७५

मर्त्यलोकमनुप्राप्तं य एनं भेत्स्यते शरैः ।
स ते भर्ता महाभागे ह्यचिरेण भविष्यति ॥ ७६

तच्छ्रुत्वा सुरभेर्वाक्यमेषा प्राणानधारयत् ।
सोऽपि पातालकेतुर्हि वाराहं [1]त्वपुरास्थितः ॥ ७७

केनापि भिन्नो बाणेन [2]पातालं तरसाविशत् ।
एषा त्वयि प्रीतिमती सम्यगारभ्य दर्शनात् ॥ ७८

अहमस्याः सखी नाम्ना कुण्डलेति मनस्विनी ।
तद्दुःखदुःखिताभे[3]दागता ह्यनया सह ॥ ७९

[4]भवान् किमर्थं सम्प्राप्तः को वा वद महामते ।
[5]ऋतध्वजोऽपि तच्छ्रुत्वा स्ववृत्तान्त[6]मथावदत् ॥ ८०

कुण्डला ज्ञातवृत्तान्ता राजानमिदमब्रवीत् ।
वीर सत्यमसन्दिग्धं भवताभिहितं वचः ॥ ८१

त्वयैव विद्धो बाणेन [7]स पापो दानवाधमः ।
तद्धन्येयं सुचार्वङ्गी त्वदङ्गासङ्गगौरवात् ॥ ८२

---

1. क. ख. रूपमा-
2. क. ख. पातालान्तरमा-
3. क. ख. त्सखीदेहात्मदेहयोः
4. 80, 81, 82, 83, श्लोकाः ख. पुस्तके न सन्ति
5. क. ऋतु-
6. क. मचीकथत्
7. क. -पातालं

तस्मात्कुरुष्व वीर त्वमेनां [1]प्राप्तमनोरथाम् ।
इत्युक्त्वा चिन्तयामास तुम्बुरुं तत्कुले गुरुम् ॥ ८३

स चापि [2]तत्क्षणं प्राप्तः सङ्गृहीतसमित्कुशः ।
मदालसायाः संप्रीत्या कुण्डलागौरवेण च ॥ ८४

चकार चानयोर्मन्त्रं [3]युक्तां वैवाहिकीं क्रियाम् ।
प्रज्वाल्य पावकं युक्त्या [4]मन्त्रवत् कृतमङ्गलम् ॥ ८५

पश्चात्ताभ्यामनुज्ञातस्तुम्बुरुः स्वाश्रमं ययौ ।
तस्मिन् क्षणे महीभर्त्रे कुण्डला [5]सा व्यजिज्ञपत् ॥ ८६

भर्तव्या रक्षितव्या च जाया पत्या [6]सहैव हि ।
धर्मार्थकामसंसिद्धौ भार्या [7]भर्तृसहायिनी ॥ ८७

यदा भार्या च भर्ता च परस्परवशानुगौ ।
तदा धर्मार्थकामानां त्रयाणा[8]मेव सङ्गतम् ॥ ८८

देवतापितृभृत्यानामतिथीनां च पूजनम् ।
न पुंभिः शक्यते कर्तुमृते भार्यां नृपात्मज ॥ ८९

प्राप्तोऽप्यर्थो मनुष्येण आनीतोऽपि निजं गृहम् ।
[9]क्षीयते हि विना भार्यां कुभार्यासंश्रयेण वा ॥ ९०

एतन्मयोक्तं युवयोर्गमिष्यामि [10]नृपात्मज ।
इत्युक्त्वा सम्परिष्वज्य स्वसखीं तां प्रणम्य च ॥ ९१

जगाम दिव्यया गत्या [11]यथाभिमतमात्मनः ।
सोऽपि शत्रुजितः पुत्रः [12]तामारोप्य तुरङ्गमम् ॥ ९२

---

1. क. पूर्ण-
2. क. तत्क्षणात्प्राप्तः प्रगृहीत-
3. क. ख. युक्त्या
4. ख. मन्त्रवित्कृत
5. क. ख. च
6. क. ख. सदैव
7. क. ख. भर्तुः
8. क. ख. मपि
9. क. ख. क्षयमेति
10. क. ख. यथेप्सितम्
11. क. ख. यद्देशं हितमात्मनः
12. अ, समारोप्य

निर्गन्तुकामः पातालाद्विज्ञातो दनुसम्भवैः ।
वदद्भिस्तिष्ठ तिष्ठेति निरुद्धश्चोद्यतायुधैः ॥ ९३

ततः प्रववृते युद्धं तस्य तैर्दानवैः सह ।
निशितायुध[1]विक्षेपं स्मरणादेव भीतिदम् ॥ ९४

ततः स राजा निर्धूय शात्रवानायुधोत्करान् ।
अस्त्रं त्वाष्ट्रं समादाय चिक्षेप प्रतिभानवान् ॥ ९५

तेन ते दानवाः सर्वे सह पातालकेतुना ।
निर्दग्धाः कापिलं तेजः प्राप्येव सगरात्मजाः ॥ ९६

[2]ऋतध्वजः स एवं हि [3]तान्निहत्यासुराधमान् ।
स्त्रीरत्नेन समं तेन समागच्छत्पितुः पुरम् ॥ ९७

प्रणिपत्य च तत्सर्वं वृत्तं [4]तस्मै न्यवेदयत् ।
शत्रुजिच्चरितं तस्य श्रुत्वा प्रीत्याब्रवद्वचः ॥ ९८

[5][मत्पूर्वैः] ख्यातिमापन्नं मया विस्तारितं यशः ।
पराक्रमवता वीर त्वया [6]तत्सुबलीकृतम् ॥ ९९

यदुपात्तं यशः पित्रा धनं वीर्यमथापि वा ।
तन्न [7]लोपयते यस्तु स नरो मध्यमः स्मृतः ॥ १००

तस्मादभ्यधिकं यस्तु पुन[8]रन्यत् स्वशक्तिभिः ।
निष्पादयति तं प्राज्ञा वदन्ति पुरुषोत्तमम् ॥ १०१

[9]यत् पित्रा समुपात्तानि धनवीर्ययशांसि [10]च ।
न्यूनतां नयति प्राज्ञास्तमाहुः पुरुषाधमम् ॥ १०२

---

1. क. ख. निक्षेपं
2. क. ख. ऋतु
3. क. ख. निहत्यासुरसत्तमान्
4. क. ख. पित्रे
5. क. ख. मत्पूर्वै ख्यातिमात्मीयं मया विस्मारितं यशः
6. क. ख. तद्बहुली-
7. क. ख. हापयते
8. क. अ. रन्यः स्वशक्तितः
9. क. पित्रा तु
10. क. ख. वै

तद्धन्योऽस्म्यधुना पुत्र त्वया पुत्रीकृतो यतः ।
त्वं च पुत्र कृतार्थोऽसि युक्तः पुण्यवतां गुणैः ॥ १०३

यः पित्रा ख्याति[1]मभ्येति सुजन्मनि नरः स्मृतः ।
यश्चात्मना ख्यातिमेति स पुमानुत्तमोत्तमः ॥ १०४

यः ख्यातो मातृपक्षेण स नरः पुरुषाधमः ।
[2]एवं पित्रा बहुविधं प्रियमुक्त्वा पुनः पुनः ॥ १०५

संमानितः प्रियायुक्तः कुमारो भवनं ययौ ।
प्रातः प्रातः प्रणम्यैव पित्रोः पादौ मुदान्वितः ॥ १०६

स तया भार्यया सार्धं चिरं रेमे पितुः पुरे ।
श्वश्रूश्वशुरयोः पादौ प्रणिपत्य च सा शुभा ॥ १०७

दिने दिने तेन सार्धं सुखान्यनुबभूव ह ।
ततः काले बहुतिथे गते राजावदत्सुतम् ॥ १०८

अश्वमेनं समारुह्य प्रातः प्रातर्दिने दिने ।
अबाधाद्द्विजमुख्यानामन्वेष्टव्या सदैव हि ॥ १०९

स [3]तेनोक्तस्तथा पित्रा [4]यदा चक्रे नृपात्मजः ।
एकदा तु चरन्तं तं ददर्श यमुनातटे ॥ ११०

पातालकेतोरनुजस्तालकेतुर्नृपात्मजम् ।
पूर्ववैरं स्मरन् मायी मुनिरूपोऽभ्यभाषत ॥ १११

यज्ञे यज्ञे च धर्मात्मन् नास्ति मे दक्षिणा यतः ।
अतः प्रयच्छ मे वीर हिरण्यार्थे स्वभूषणम् ॥ ११२

यदेतत्कण्ठलग्नं तु रक्ष [5]चैतं ममाश्रमम् ।
यावदन्तर्जले देवं वरुणं यादसां पतिम् ॥ ११३

---

1. क. ख. मभ्येत्य स जन्मी स नरः
2. क. ख. इति
3. क. ख. स तथोक्तस्तदा
4. क. ख. तथा
5. क. ख. चेमं

आमन्त्र्य च त्वरायुक्तः समागच्छामि पार्थिव ।
तच्छ्रुत्वा राजपुत्रश्च तं प्रणम्य पुनः पुनः ॥ ११४

उन्मुच्य च क्षणात्प्रादात् स्वकीयं कण्ठभूषणम् ।
प्राह [1]चैनं भवान् यातु निर्विकल्पेन चेतसा ॥ ११५

स्थास्यामि तावदत्रैव तवाश्रमसमीपतः ।
एवमुक्तस्ततस्तेन स ममज्ज नदीजले ॥ ११६

ररक्ष सोऽपि [2]तत्रैव मायाविहितमाश्रमम् ।
तालकेतुर्जलात्तस्माद्गत्वा शत्रुजितः पुरम् ॥ ११७

मदालसायाः प्रत्यक्षमन्येषाञ्चैतदुक्तवान् ।
वीरः कुवलयाश्वो वै ममाश्रमसमीपतः ॥ ११८

केनापि दुष्टदैत्येन भिन्नः शूलेन वक्षसि ।
म्रियमाणेन तेनेदं दत्तं मे कण्ठभूषणम् ॥ ११९

प्रापितश्चाग्निसंस्कारं [3]ततस्तैः शूद्रतापसैः ।
मनसः प्रत्ययार्थं तु गृह्यतां कण्ठभूषणम् ॥ १२०

[4]नास्माकं तु सुवर्णेन कृत्यमस्ति तपस्विनाम् ।
इत्युक्त्वोत्सृज्य तद्भूमौ स जगाम यथागतम् ॥ १२१

तच्छ्रुत्वा [5]ह्रद्भयाविष्टः शोकार्तः सकलो जनः ।
राजपत्न्यश्च राजा च विलेपुरतिदुःखिताः ॥ १२२

मदालसा च तच्छ्रुत्वा दृष्ट्वा तत्कण्ठभूषणम् ।
तत्याज सा प्रियान् प्राणान् प्रियानुसरणोद्यता ॥ १२३

अवलोक्य च तां सर्वे [6]भृशदुःखाकुलाभवन् ।
राजा च तां मृतां दृष्ट्वा प्रत्युवाच जनं तदा ॥ १२४

---

1. क. ख. चैवं
2. क. ख. तस्यैव
3. क. ख. तत्रस्थैः
4. अयं श्लोकः अ. पुस्तके न दृश्यते
5. क. हृष्टया ख. हृच्छया-
6. क. ख. भृशं

मन्नन्दनो मद्वचनाद् द्विजरक्षापरायणः ।
[1]हतो वीररणे चैव नैनं शोचितुमर्हसि ॥ १२५

एषा मदालसा पत्युर्मरणश्रवणेन हि ।
प्राणान् जहौ नैव शोच्या पतिः स्त्रीणां हि दैवतम् ॥ १२६

ततः कुवलयाश्वस्य माता [2]वाचमुवाच ह ।
राजन् मुनिपरित्राणाद्धतं श्रुत्वा सुतं मम ॥ १२७

गर्भक्लेशस्य [3]साफल्यमद्य शोकेन किं फलम् ।
इत्युक्त्वा शोकसन्दोहं निर्हृत्य निजतेजसा ॥ १२८

विशोकानकरोत्सद्यः [4]शोकिनः सकलान् जनान् ।
राजा [5]तु तां च संस्कृत्य ददौ ताभ्यां तिलोदकम् ॥ १२९

तालकेतुश्च निर्गत्य जलमध्याद्दतध्वजम् ।
उवाच गच्छ राजेन्द्र कृतार्थोऽहं कृतस्त्वया ॥ १३०

सोऽपि तं प्रणि[6]पत्यैनं पितुः प्रायात्पुरं प्रति ।
समारुह्य तमेवाश्वं सुपर्णानिल[7]विक्रमम् ॥ १३१

तमागतं परिष्वज्य पिता माता च बान्धवाः ।
तत्क्षणे संभृताः सर्वे सर्वं वृत्तं न्यवेदयन् ॥ १३२

स स्वभार्यां मृतां श्रुत्वा कमनीयां मदालसाम् ।
पितरौ च पुरो दृष्ट्वा लज्जाशोकातुरोऽभवत् ॥ १३३

अस्मिन् जन्मनि नान्या मे [8]भवित्री सहधर्मिणी ।
तामृते मृगशावाक्षीं न भोक्ष्ये कामिनीं पराम् ॥ १३४

---

1. ख. प्राप्तुं मृत्युं क्षणेनैव
2. क. ख. पतिमुवाच
3. क. ख. साफल्यं मन्ये
4. क. ख. शोकार्तान् सकलान्
5. क. ख. ततस्तां
6. क. ख. पत्यैव
7. क. ख. रंहसम्
8. क. ख. भवत्या

[1]मद्वधश्रवणादेव त्यक्तप्राणां प्रियामनु ।
[2]हा प्रियेति वदन् प्राणान् शोकात्त्यक्ष्यामि वेगतः ॥ १३५

विपक्षस्य भविष्यामि तदा परिभवास्पदम् ।
न त्यक्ष्यामि यदि प्राणान् कमनीयां प्रियां प्रति ॥ १३६

तदा नृशंस एवाहमिति चिन्ताकुलान्वितः ।
[3]कुमारो भवनं गत्वा प्रतिज्ञां कृतवानिति ॥ १३७

त्यक्त्वा मदालसां नान्यां भोक्ष्येऽहमिति निश्चयात् ।
अतस्तदा प्रभृत्येव कान्ताजनपराङ्मुखः ॥ १३८

क्रीडन्नास्ते समैरेव वयस्यैः शीलसम्पदा ।
एतत्तस्य परं कार्यं तत् कर्तुं केन शक्यते ॥ १३९

हिरण्यगर्भगोविन्दशर्वादीनीश्वरानृते ।

सूतः—

इत्युक्त्वा पितरं पुत्रौ तूष्णीमेव व्यवस्थितौ ॥ १४०

तच्छ्रुत्वा नागराजोऽपि पुत्रौ [4]प्राह हसन्निव ।
यद्यशक्यमिति ज्ञात्वा न करिष्यन्ति [5]कर्म चेत् ॥ १४१

[6]तेषां तत्र समुद्योगहानिः कार्यं न सिध्यति ।
आरभेत नरः कर्म स्वपौरुष[7]मवाप्य यत् ॥ १४२

निष्पत्तिः कर्मणो दैवे पौरुषे च व्यवस्थिता ।
तस्मादहं तस्य कार्यसिद्ध्यै यत्नं करोमि च ॥ १४३

इत्युक्त्वा तु स नागेन्द्रः प्लक्षावतरणं गिरेः ।
तीर्थं हिमवतो गत्वा तपस्तेपे [8]सुदुश्चरम् ॥ १४४

---

1. ख. यद्वचः
2. अ. पुस्तके इदमर्धमनन्तरः श्लोकश्च न दृश्यते
3. क. ख. कुमरभवनं
4. क. ख, प्रत्याहसन्निव
5. क. ख. मानवाः
6. क. ख. कर्मण्युद्योगमुद्योगो हन्यात्
7. क. ख. -मपालयन्
8. क. ख. सुदुस्तरम्

तुष्टाव [1]गीतिभिश्चापि तदा देवीं सरस्वतीम् ।
ततः स्तुता तदा देवी [2]विजहास सरस्वती ॥ १४५

[3]प्रसन्ना वचनं प्राह नागमश्वतरं तथा ।
वरं ते कम्बलस्यापि प्रयच्छाम्युरगाधिप ॥ १४६

तदुच्यतां महाभाग यत्ते मनसि वर्तते ।

अश्वतरः—

[4]सप्तस्वरा ग्रामरागास्ते सर्वे स्वरसंयुताः ॥ १४७

गीतकानि च सप्तैव तावत्यश्चैव [5]मूर्छिताः ।
[6]तानाश्चैकोनपञ्चाश[7]त्तथा ग्रामत्रयञ्च यत् ॥ १४८

एतत्सर्वं भवत्येव देवि त्वत्कृपया मम ।

देवी—

त्वया यत्प्रार्थितं सर्वं [8]विद्याजातं सलक्षणम् ॥ १४९

चतुर्विधं तथा तालं त्रिप्रकारं [9]तलत्रयम् ।
[10]वादित्रं च तथातोद्यं तथा दत्तं चतुर्विधम् ॥ १५०

एतत्सर्वं मया दत्तं देहि त्वं कम्बलस्य च ।
प्रणेतारौ [11]च विद्यानां युवामासां जगत्त्रये ॥ १५१

इत्युक्त्वा सा तदा देवी जगामादर्शनं [12]तदा ।
ततः प्रादान्नागराजस्तत्सर्वं कम्बलाय हि ॥ १५२

[13]कम्बलाश्वतरौ पश्चात् सम्यक् कैलासपर्वते ।
[14]स्वरकैः सप्तभिस्तालैस्तन्त्रीलयसमन्वितैः ॥ १५३

---

1. अ. गिरिभि-
2. क. विष्णोर्जुह्वा- ख. विष्णोजिह्वा
3. क. ख. प्रत्यक्षा
4. क. ख. समस्वरग्रामरागा-स्समस्त-
5. क. ख. -मूर्च्छनाः
6. क. माना-
7. क. ख. त्स्वरग्रामं
8. क. ख. प्रतिभातु तव क्षणात्
9. क. ख. यतित्रयम्
10. क. ख. यतित्रयमथातोद्यं
11. क. ख. भवन्तौ च सर्वस्यास्य
12. क. ख. ततः
13. क. ख. परं कम्ब्रलाश्वतरौ
14. क. ख. गीतकैस्सप्तभिस्सौम्यै

तोषयामासतुर्देवं सन्ध्ययोरुभयोः शिवम् ।
ततः कालेन महता तुष्टोऽसौ वृषभध्वजः ॥ १५४

[1]सङ्गृह्यतां वरोऽभीष्ट इति प्राह स शङ्करः ।
[2]कम्बलाश्वतरौ—
यदि नौ भगवंस्तुष्टो वर[3]मेतत्प्रयच्छ मे ॥ १५५

मृतां कुवलयाश्वस्य पत्नीं सौम्यां मदालसाम् ।
तेनैव वयसा सद्यो दुहितृ[4]त्वे प्रयच्छ मे ॥ १५६

जातिस्मरा यथापूर्वं तद्वत्कान्तिसमन्विता ।
योगिनी योगमाता च मद्गृहे जायतां भव ॥ १५७

ईश्वरः—
यथोक्तं पन्नगश्रेष्ठ [5]तथा तव भविष्यति ।
श्राद्धे तु समनुप्राप्ते मध्यमं पिण्डमादरात् ॥ १५८

भक्षयेथाः फणिश्रेष्ठ भवतो मध्यमात्फणात् ।
यथारूपगुणोपेता [6]समुत्पत्स्यति तत्क्षणात् ॥ १५९

एवमुक्त्वा शिव[7]स्तस्य तत्रैवान्तरधीयत ।
तथैव कृतवान् श्राद्धं स नागः कम्बलानुजः ॥ १६०

पिण्डं [8]स मध्यमं प्रीतो यथावदुपभुक्तवान् ।
तत्क्षणान्निर्ययौ बाला तद्रूपा मध्यमात् फणात् ॥ १६१

सूतः—
न कस्यचिदपि प्राह वराल्लब्धां मदालसाम् ।
अन्तर्गृहे तां सुदतीं स्त्रीभिर्गुप्तामधारयत् ॥ १६२

एकदा तु सुतौ प्राह कस्मान्नानीयते सुतौ ।
युवयोरुपकारी स राजपुत्रो ममान्तिकम् ॥ १६३

---

1. क. ख. क. ख. संगृह्यतां वरो मत्त इति प्रोवाच
2. क. ख. अश्वतरः
3. क. ख. -मेनं प्रयच्छ
4. क. ख. त्वं प्रयातु मे
5. क. ख. भवतां तद्
6. अ. समुत्सृजति
7. क. ख. स्तौ तु
8. क. ख. च

एवमुक्तौ तु तौ गत्वा राजपुत्रस्य चान्तिकम् ।
प्रार्थयामासतुः प्रीत्या स्वगेहागमनं प्रति ॥ १६४

द्रष्टुं कुवलयाश्व त्वां वाञ्छत्यत्र पिता[1]वयोः ।
ततः कुवलयाश्वोऽपि समुत्थाय वरासनात् ॥ १६५

धन्योऽहं कृतकृत्योऽहं [2]नान्योऽस्ति सदृशो मया ।
यत्ततो माममी[मयं]द्रष्टुं करोति प्रवणं मनः ॥ १६६

इत्युक्त्वा [3]स ययौ ताभ्यां सह पातालगह्वरम् ।
ऊचतुर्वि[4]स्मयाविष्टौ पितरं पन्नगेश्वरम् ॥ १६७

स्फुरत्फणामणियुतौ व्यक्तस्वस्तिक[5]लाञ्छितौ ।
स तु ताभ्यां प्रविश्यान्तः पातालं नगरोत्तमम् ॥ १६८

[6]ददर्श पन्नगाधीशं रत्नसिंहासने स्थितम् ।
ननाम भक्त्या नागेन्द्रं पदपङ्केरुह[7]द्वये ॥ १६९

तमुत्थाप्य बलात्सोऽपि नागेन्द्रः परिषस्वजे ।
मूर्ध्नि स्नेहादुपाघ्राय चिरं जीवेत्युवाच ह ॥ १७०

निहतामित्रवर्गः सन् पित्रोः शुश्रूषणान्वितः ।
सतां प्रियकरः शत्रोः विधेहि हृदयज्वरम् ॥ १७१

इत्युक्त्वा कारयामास स्नानभोजनसत्क्रियाम् ।
स कृत्वाभ्यवहारादीन् तैः सार्धं न्यवसत्सुधीः ॥ १७२

कृताहारं सुखासीनं नागन्द्रः प्रत्युवाच तम् ।
हिरण्यं वा सुवर्णं वा वस्त्रं वाहनमासनम् ॥ १७३

---

1. ख. तयोः
2. क. ख. कोऽन्यो
3. क. ख. सह ताभ्यां स ययौ
4. क. ख. स्मितस्यास्य
5. क. ख. लाञ्छनौ
6. क. ख. तादृशं
7. ख. द्वयम्

[1]तवाभिमतमत्यर्थं दुर्लभं तद्वृणीष्व माम् ।

कुवलयाश्वः—

तातो वर्षसहस्रायुः शासतीमां वसुन्धराम् ॥ १७४

तथैव त्वयि पाताल न मे [2]वाञ्छामुखं मनः ।
[3]असत्यर्थे नृणां याच्ञाप्रवणं जायते मनः ॥ १७५

[4]सत्यर्थे सकले याच्ञां कथं जिह्वा करिष्यति ।
[5]ये वै चिन्तां न कुर्वन्ति नास्तीत्यस्तीति वा धने ॥ १७६

पितृबाहुतरुच्छायामाश्रिताः सुखिनो [6]हि ते ।
[7]यस्त्वहं त्वत्प्रसादेन धनरत्नादिसञ्चयम् ॥ १७७

पितृमत्त्वा[8]त्प्रयच्छामि कामतो नित्यमर्थिनाम् ।
इति सप्रश्रयं वाक्यमुक्तः पन्नगसत्तमः ॥ १७८

[9]पुनस्तमाह नृपतिं पुत्रयोरुपकारिणम् ।
तथाप्यवश्यं मद्गेहमागतेन त्वयाधुना ॥ १७९

ग्राह्यं यन्मानुषे लोके दुष्प्रापं भवतो मतम् ।
तस्य तद्वचनं श्रुत्वा स तदा नृपसत्तमः ॥ १८०

दृशावलोकनं चक्रे पन्नगेश्वरपुत्रयोः ।
ततस्तौ पन्नगसुतौ प्रोचतुस्तत्समीहितम् ॥ १८१

असौ मदालसां द्रष्टु[10]मत्यर्थमभिकाङ्क्षति ।
तदेव कार्यमेतस्य तत्कृते सत्कृतो ह्यसौ ॥ १८२

तच्छ्रुत्वा नागराजोऽपि राजपुत्राय तत्क्षणात् ।
दर्शयामास च गृहादानीयासौ मदालसाम् ॥ १८३

---

1. क. ख. यद्वाभि-
2. अ. याच्ञा-
3. इदमर्धं अ. पुस्तके नास्ति
4. क. ख. सत्पथे
5. क. ख. ते
6. क. ख. नराः
7. क. ख. तद्वयं
8. क. ख. -त्प्रयच्छामः
9. क. ख. प्राह राजसुतं प्रीत्या
10. क. ख. -मत्यन्तमभिवाञ्छति

[1]ऋतध्वजोऽपि तां दृष्ट्वा प्रीतिमानभवत् क्षणात् ।
ततः कुवलयाश्वाय तां दत्त्वा स भुजङ्गमः ॥ १८४

कथयामास तत्सर्वं मृतसञ्जीवनादिकम् ।
तच्छ्रुत्वा प्रीतिमान् सोऽपि सम्प्रा[2]प्यैवं मदालसाम् ॥ १८५

प्रणम्य नागराजं तं [3]जगाम स्वपुरं नृपः ।
ततो महोत्सवो जज्ञे पौराणां तत्र वै पुरे ॥ १८६

मदालसा श्वशुरयोः पादपद्मे प्रणम्य च ।
[4]भर्तुः शुश्रूषणं चक्रे साध्वीनां च धुरि स्थिता ॥ १८७

ततः कालेन महता शत्रुजित्स नराधिपः ।
सम्यक् [5]प्रसाध्य वसुधां कालधर्ममुपेयिवान् ॥ १८८

ततः पौरा महात्मानं तस्य पुत्रमृतध्वजम् ।
अभ्यषिञ्चन् स्वराजानमुदाराचारचेष्टितम् ॥ १८९

सम्यक् पालयतस्तस्य प्रजाः पुत्रानिवौरसान् ।
मदालसायामुत्पन्नः पुत्रो विक्रान्तनामकः ॥ १९०

सा वै मदालसा तत्र पुत्रस्योल्लालनच्छलात् ।
गीतैरेवात्मसम्बद्धैर्ब्रह्मरूप[6]मुपादिशत् ॥ १९१

[7]द्वितीयोऽस्याः सुतो जज्ञे सुबाहुरिति विश्रुतः ।
तस्यापि बोधयामास ब्रह्मविद्यां मदालसा ॥ १९२

[8]तृतीये तनये जाते नाम्ना वै कलमर्दने ।
तस्यापि बोधयामास ब्रह्मविद्यां मदालसा ॥ १९३

[9]चतुर्थे तनये जाते राज्ञि नाम चिकीर्षति ।
अलर्क इति [10]तन्नाम चक्रे चैव मदालसा ॥ १९४

---

1. क. ख. ऋतु-
2. क. ख. -प्यैव
3. क. ख. अगमत्स्वपुरीं
4. क. ख. भर्तृशु-
5. क. ख. प्रसादवसुधां
6. क. ख. मुपादिशम्
7. क. ख. द्वितीयश्च सुतो
8. क. ख. पुस्तकयोरयं श्लोको नास्ति
9. ख. ख. चतुर्थस्य च पुत्रस्य
10. क. ख. नामास्य चक्रे वै सा

तस्यापि कर्तुमिच्छन्तीमात्मरूपं नृपोऽवदत् ।
यदि ते मत्प्रियं कार्यं यदि ग्राह्यं वचो मम ॥ १९५

तदेनं तनयं कर्ममार्गे योक्तुं त्वमर्हसि ।
तेनैवमुक्ता सा तं तु कर्ममार्ग[1]धरं व्यधात् ॥ १९६

पुत्रं तया बोधितं तु पिता राज्येऽभिषिक्तवान् ।
संप्राप्तसर्वराज्यः स प्रजापालनतत्परः ॥ १९७

इष्ट्वा यज्ञान् बहुविधान् पुत्रानुत्पाद्य वै बहून् ।
स्वपितुः सर्व[2]लोके च चक्रे राज्यानुपालनम् ॥ १९८

ततः कालेन महता सम्प्राप्य चरमं वयः ।
ऋतध्वजः स्त्रिया सार्धं जगाम तपसे वनम् ॥ १९९

अलर्कोऽपि यथान्यायं पुत्रवन्मुदिताः प्रजाः ।
धर्मतः पालयामास स्वे स्वे कर्मण्यवस्थिताः ॥ २००

सूतः—

इत्युक्तमिह मित्राणामुपाख्यानमनुत्तमम् ।
य एतच्छृणुयान्मर्त्यः स सुखी वर्धते परम् ।
तस्माद्विन्देत सन्मित्रमैहिकामुष्मिकाप्तये ॥ २०१

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे सन्मित्रकथनं
नाम दशमोऽध्यायः

---

1. अ. परं    2. क. ख. कालेषु चकाराज्ञा-

## ॥ एकादशोऽध्यायः ॥

### दुष्टभृत्यविनिन्दनम्

सूतः—

ततः परं प्रवक्ष्यामि दुष्टभृत्यविनिन्दनम् ।
दुष्टभृत्यवतां पुंसां [1]कार्यं किञ्चिन्न सिध्यति ॥ १

महान्तं योजयेत्प्राज्ञो महीयस्येव कर्मणि ।
न योजयेत्तथाप्राज्ञं यदि श्रेयोऽभिकाङ्क्षति ॥ २

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
निवेदितं वराहेण [2]मह्यै पूर्वं महात्मना ॥ ३

वराहः—

पूर्वं [3]विद्युदविद्युच्च महाबलपराक्रमौ ।
[4]निर्जित्य बहुशो देवान् समरेण सुदुर्जयौ ॥ ४

लोकपालव्रतं चक्रु[5]स्तत्तद्योगसमाहितौ ।
तौ दुर्जयं मृतं श्रुत्वा समुद्रान्तःस्थितं [6]बलम् ॥ ५

आनीय चतुरङ्गं हि हिमवन्तं समाश्रितौ ।
विजेतुं सकलान् देवान् शतक्रतुपुरोगमान् ॥ ६

उद्योगं परमं तत्र चक्रतुस्तौ वसुन्धरे ।
देवा अपि [7]महत्सैन्यं सन्नद्धं वीक्ष्य विस्मिताः ॥ ७

मन्त्रयाञ्चक्रुरव्यग्राः पुरन्दरपुरोगमाः ।
तत्राब्रवीत्सुराचार्यः सेन्द्रान् देवान् जयार्थिनः ॥ ८

---

1. क. अ. कार्यमाशु न
2. क. ख. पूर्वं मह्यै महीयसा
3. क. ख. विधित्सुविद्यश्च
4. ख. निहत्य भूमिजान् देवान् समेर रणदुर्जयौ
5. क. ख. व्यक्तं योगं समाश्रितौ
6. अ. जलम्
7. ख. महासैन्यं

गोमेधेन यजध्वं वै प्रथमं तदनन्तरम् ।
यष्टव्यं क्रतुभिः सर्वै[1]र्गोसवस्त्विष्टदोऽमराः ॥ ९

उपदेशो महान् दत्तः क्रियतां शीघ्रमेव हि ।
एवमुक्तास्तदा देवा गाः पशून् परिकल्प्य वै ॥ १०

उन्मुच्य चारणार्थाय रक्षार्थं सरमां ददुः ।
ताश्च गावो देवशुन्या रक्ष्यमाणा धराधरे ॥ ११

दृष्ट्वा दैत्यास्तु वृत्तान्तं तच्छुक्राय न्यवेदयन् ।
[2]एतच्छ्रुत्वावदच्छुक्रो दानवान् बलगर्वितान् ॥ १२

गावो ह्रियन्तां ताः शीघ्रमसुरा मा [3]विकम्पत ।
एवमुक्तास्तदा दैत्या जह्रुस्ता गा यदृच्छया ॥ १३

तासां हृतानां सरमा मार्गस्यान्वेषणे रता ।
अपश्यच्च दितेः पुत्रैर्नीता गावो धराधरे ॥ १४

दैत्यैश्च सरमा दृष्टा गोमार्गान्वेषणे रता ।
दृष्ट्वा तां ते दानवास्तु सान्त्वयित्वा तु वाक्यतः ॥ १५

तासां गवां तु तद् दुग्धं क्षीरं च समरे शुभे ।
पिबस्वेदमिति प्रोच्य तस्यै तद्ददुरञ्जसा ॥ १६

दत्त्वा तत्क्षीरपानं तु तस्यै ते दैत्यनायकाः ।
मा भद्रे देवराजाय गोस्थानं [4]त्वं समीरय ॥ १७

इत्युक्त्वा दानवा धीरास्तस्मात्तां निरकासयन् ।
सा मन्दमन्दं निष्क्रम्य जगाम त्रिदशान्तिकम् ॥ १८

नमश्चक्रे च देवेन्द्रं देवसङ्घनिषेवितम् ।
तस्मिन्नवसरे देवैर्नियुक्ता मरुतापि च ॥ १९

सरमायाः परीक्षार्थं पशूनां रक्षणाय च ।
सूक्ष्मेण वपुषागम्य नमश्चक्रुः [5]पुरन्दरम् ॥ २०

---

1. क. ख. रेष वस्वष्टमो
2. क. ख. तच्छ्रुत्वा सोऽवद-
3. क. ख. विलम्बत
4. क. ख. विनिवेदय
5. क. ख. परं पदम्

तान् देवराजः पप्रच्छ कृतागाः सरमेति च ।
[1]अथैवमुक्ता सरमा न जानामीति चाब्रवीत् ॥ २१

ततः शक्रो रुषा युक्तो यज्ञार्थमुपकल्पिताः ।
गावः कुत्रेति मरुतः प्रोवाच मरुतां पतिः ॥ २२

सरमायाश्च वृत्तान्तं कथमित्यवदच्च तान् ।
एवमुक्तास्तु मरुतो देवेन्द्राय यथातथम् ॥ २३

कथयामासुरव्यग्राः कर्म तत्सरमाकृतम् ।
तत इन्द्रः समुत्थाय पदा चाताडयच्छुनीम् ॥ २४

क्षीरपानमथो नो चेत् कथयिष्यति कोपतः ।
एवमुक्ता तदा तेन ताडिता सरमा धरे ॥ २५

स्वकीयाद्वदनात्पूर्वं [2]पीतं क्षीरं मुमोच हि ।
स्रवता तेन पयसा सरमा [3]यत्र ताः स्थिताः ॥ २६

गावो जगाम तत्रैव सह देवैः पुरन्दरः ।
[4]तामन्वगच्छचापश्यद्गावो दैत्यैरपाहृताः ॥ २७

ततस्ते मरुतः सद्यस्तान्निर्धूय च दानवान् ।
यज्ञार्थं कल्पिता गावो ददुरिन्द्राय ते पुनः ॥ २८

ताश्च लब्ध्वा महेन्द्रस्तु मुदा परमया युतः ।
यज्ञांश्चकार [5]विधिवत् त्रिदशैः सकलैः सह ॥ २९

[6]क्रियमाणे ततो यज्ञे ववृधे तस्य वै बलम् ।
[7]वर्धितेन बलेनेन्द्रो देवसैन्यमुवाच ह ॥ ३०

सन्नह्यतां सुराः सर्वे दैत्यानां वधकर्मणि ।
एवमुक्तास्तदा देवाः सन्नद्धास्तत्क्षणेऽभवन् ॥ ३१

---

1. क. ख. एवमुक्ताथ
2. क. ख. सा गोक्षीरं
3. क. ख. यन्त्रिता स्थिता
4. अ. पुस्तके इदमर्धं नास्ति
5. क. ख. विविधान् त्रिदशैर्विमलैः
6. क. ख. क्रियमाणैस्तदा यज्ञैः
7. अ. पुस्तके इदमर्धमनन्तरश्च श्लोको नोपलभ्यते

असुराणामभावाय जग्मुर्देवाः सवासवाः ।
गत्वा युयुधिरे तूर्णं विजिग्युश्चासुरीं चमूम् ॥ ३२

[1]हताश्च देवैरसुरा हतशेषा धराधरे ।
ममज्जुः सागरजले भयत्रस्ता [2]विचेतसः ॥ ३३

[3]एवं क्षयं गते दैत्यसङ्घे देवः शतक्रतुः ।
पूर्ववत्पालयामास स्वर्गराज्यं सुरैः सह ॥ ३४

सूतः—

एतद्वृत्तान्तमाकर्ण्य प्रीतिमाप वसुन्धरा ।
तस्मादेवाधमे न्यस्तं कार्यं नाशमुपैष्यति ॥ ३५

पुनर्बलवता तच्च स्वकार्ये विनियुज्यते ।
भ्रष्टराज्यस्तु यो राजा श्रृणोतीदं समाहितः ॥
स देवेन्द्र इव स्वर्गं राज्यं स्वं लभते द्विजाः ॥ ३६

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे दुष्टभृत्यविनिन्दनं
नाम एकादशोऽध्यायः

1. क. ख. जिताश्च
2. क. ख, विचेतनाः
3. इदमर्धं अ. पुस्तके नास्ति

## ॥ द्वादशोऽध्यायः ॥

### विश्वासघातकनिन्दा

सूतः—

द्रोहिणा[1]मपि सर्वेषां द्रोही विश्वासघातकः ।
[2]तस्मान्न विश्वसेदेनमधमं पापिनामपि ॥ १

अरिश्च मित्रं भवति मित्रञ्चापि प्रदुष्यति ।
अनित्यचित्तः पुरुषस्तस्मिन् को नाम विश्वसेत् ॥ २

[3]वाचा धर्मं वदन् पापं कुरुते कर्मणा सदा ।
नरानत्यन्तविश्वस्तान् हन्ति धर्मसुदुष्टधीः ॥ ३

रूपेण च विशिष्टेन वाचा धमार्थयुक्तया ।
निपातयन्ति विश्वस्तान्नरा विश्वासघातिनः ॥ ४

समाहितश्चरेन्नित्यं कृतार्थश्च न विश्वसेत् ।
अकालमृत्युर्विश्वासो दुष्टे प्रच्छन्नविग्रहे ॥ ५

[4]तस्मात्सर्वप्रयत्नेन त्यजेदेनं सुबुद्धिमान् ।
एतदेवावबोद्धव्यं धर्माधर्मविशेषतः ॥ ६

यो धर्मवादी सततं विश्वस्तेषु विमूढधीः ।
विश्वासघातं कुरुते स तु तैरेव हन्यते ॥ ७

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
वृद्धः किल समुद्रान्ते कश्चिद्धंसाधमोऽभवत् ॥ ८

धर्मवागन्यथा[5]वृत्तपक्षिणस्त्वनुशास्ति च ।
धर्मं चरत माधर्ममिति तस्य वचः किल ॥ ९

---

1. क. ख. मिह
2. इदमर्धं अ. पुस्तके नास्ति
3. अ. पुस्तके 3, 4, 5, श्लोकाः न सन्ति
4. क. ख. पुस्तकयोरयं श्लोको नास्ति ।
5. क. ख, वृत्तान्

पक्षिणः शुश्रुवुर्विप्राः सततं [1]धर्मवादिनः ।
हंसस्य तद्वचः श्रुत्वा मुदिताः सर्वपक्षिणः ॥ १०

हंसाः [2]समन्ततः प्रोचुः परिवार्यैव [3]सर्वतः ।
कथयस्व भवं धर्मं पक्षिणां तु समासतः ॥
त्वं हि नाम द्विजश्रेष्ठ ब्रूहि नो धर्ममुत्तमम् ॥ ११

वृद्धहंसः—

[4]हंसाः प्रजास्वधर्मोऽयमहिंसाधर्म उच्यते ।
एतदेवावबोद्धव्यं धर्माधर्मविशेषतः ॥ १२

[5]हंसधर्मवचः श्रुत्वा पक्षिणस्ते सुसं[6]वृताः ।
ऊचुश्च धर्मलुब्धाश्च स्मयमाना इवाण्डजाः ॥ १३

धर्मं यः कुरुते नित्यं [7]बुद्धिपूर्वमिहाण्डज ।
स यत्र गच्छेद्धर्मात्मा [8]तन्नो ब्रूहीति तत्त्वतः ॥ १४

हंसः—

धर्मं यः कुरुते नित्यं लोके [9]सद्वृत्तिमागतः ।
स गच्छेत्सर्वलोकांश्च [10]तदैव नियतं खगाः ॥ १५

पक्षिणः—

[11]श्रुत्वा हि धर्माधर्मौ त्वं [12]धर्मी लोके द्विजोत्तम ।
दुर्लभं स्वर्गलोकं तु [13]कस्मात्त्वं नाधिगच्छसि ॥ १६

वृद्धहंसः—

बाला यूयं न जानीध्वं धर्मसूक्ष्मं विहङ्गमाः ।
धर्मं यः कुरुते लोके सततं [14]बुद्धिपूर्वकम् ॥ १७

---

1. क. ब्रह्म-
2. क. ख. समं तदा
3. क. ख. सर्वशः
4. क. ख. हंसः प्रजास्वधर्मोऽयं हिंसाधर्मः खगप्रजाः.
5. क. ख. हंसा
6. क. ख. -हिताः
7. क. ख. लोके धीरतमोऽण्डजः
8. अ. तन्मे
9. क. ख. सद्वृत्त-
10. क. ख. तथैव
11. क. ख. ज्ञात्वा
12. क. ख. नित्यं
13. क. ख. कस्मात्तं त्वं न गच्छसि
14. क. ख. शुभबुद्धिमान्

स चायुषोऽन्ते स्वं देहं त्यक्त्वा स्वर्गञ्च गच्छति ।
तथाहमपि च त्यक्त्वा काले देहं ममाण्डजाः ॥ १८

स्वर्गलोकं गमिष्यामि हीयं धर्मस्य वै गतिः ।
एवं धर्मकथां चक्रे स हंसः पक्षिणां भृशम् ॥ १९

[1]पक्षिणः शुश्रुवुर्विप्राः सततं धर्ममेव ते ।
आजह्रुस्तस्य [2]भक्ष्यं वै समुद्रजलवासिनः ॥ २०

[3]उटजात्स्वात्मजातानि धर्मिष्ठोऽयमिति [4]द्विजाः ।
तस्य चैव समभ्याशे निक्षिप्याण्डानि सर्वशः ॥ २१

[5]समुद्रमम्भसां पारं कदाचित्पक्षिणो ययुः ।
तेषामण्डानि सर्वेषां भक्षयामास पापकृत् ॥ २२

हंसो धर्मप्रवृत्तानामप्रमत्तः स्वकर्मणि ।
[6]ततश्च क्षीयमाणेषु तेष्वण्डेष्वण्डजोऽपरः ॥ २३

आशशङ्के महाप्राज्ञ[7]स्तं कदाचिद्ददर्श ह ।
ततः स कथयामास हंसेभ्यो हंसकिल्बिषम् ॥ २४

ततः प्रत्यक्षतो दृष्ट्वा पक्षिणस्ते समागताः ।
निजघ्नु[8]स्ते तदा हंसं मिथ्या धर्मबलोद्धतम् ।
[9]हिंस्रधर्मो हतस्तेभ्यो नरकं गतवान् क्षणात् ॥ २५

सूतः—

तस्मान्न कुर्यादात्मज्ञः पुमान् विश्वासघातनम् ।
प्रमादाद्यदि वा कुर्यात्स याति च महापदम् ॥ २६

इति श्रीपुरुषार्थसुधानिधौ अर्थकन्धे विश्वासघातकानिन्दा नाम द्वादशोऽध्यायः

---

1. क. ख. पक्षिणोऽपि ततश्चक्रुस्सततं
2. क. ख. ते भक्ष्यं
3. क. ख. अण्डजाः
4. क. ख. स्थिताः
5. समुद्राम्भसि मोदन्ते व्यचरन पक्षिणस्तदा
6. क. ख. ततः प्र-
7. क. ख. स्स
8. क. ख. श्च
9. क. ख. हंसाधमो

## ॥ त्रयोदशोऽध्यायः ॥

### निजभक्तवञ्चनानिन्दनम्

सूतः—

महानपि न कुर्याद्वै निजभक्तेषु वञ्चनाम् ।
यदि कुर्यात्प्रमादेन [1]ते तं मुञ्चन्त्यसंशयः ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
इक्ष्वाकुकुलसम्भूतस्त्वम्बरीषो महामतिः ॥ २

पालयामास पृथिवीं विष्णोराज्ञापुरस्सरम् ।
तस्य विष्णोः प्रसादेन लब्धचक्रस्य भूसुराः ॥ ३

कन्यका श्रीमती नाम विवाहसमयं गता ।
एतस्मिन्नेव काले तु मुनी पर्वतनारदौ ॥ ४

अम्बरीषगृहं गत्वा दृष्ट्वा तामपि कन्यकाम् ।
तेन सम्पूजितौ केयं कन्येत्यूचतुरेव तम् ॥ ५

स राजा तौ मुनी प्राह कन्येयं मामिकेति च ।
इति तस्य वचः श्रुत्वा मुनी पर्वतनारदौ ॥ ६

[2]मिथ एव महीपालं प्रार्थयामासतुस्तदा ।
इयं मम ममेयं ते दुहितेति प्रियान्वितौ ॥ ७

तयोस्तद्वचनं श्रुत्वा तौ प्राह नृपतिस्तदा ।
इयं कन्या तु युवयोरेकं चेद्वरयिष्यति ॥ ८

तस्मै कन्यां प्रयच्छामि नन्यथा शक्तिरस्ति मे ।
इति तस्य वचः श्रुत्वा मुनी पर्वतनारदौ ॥ ९

श्रीमतीसक्तहृदयौ यथारुचि गतौ क्षणात् ।
तस्मिन्नेव क्षणे विष्णुमुपसृत्य च नारदः ॥ १०

---

1. क. ख. ते न     2. अ. पुस्तके 7, 8, 9 श्लोकाः न दृश्यन्ते

उवाच भक्तिसहितः प्रणिपातपुरस्सरम् ।
भगवन्नम्बरीषस्य तव भक्तस्य सन्निधिम् ॥ ११

गतोऽहं पर्वतश्चापि तदन्तिकमुपा[1]गतः ।
दृष्ट्वाम्बरीषस्य पुरः कन्यकां यौवने स्थिताम् ॥ १२

ममापि पर्वतस्यापि चित्तमासीत् स्मराकुलम् ।
ततः प्रार्थितवन्तौ च तां कन्यां भूपनन्दिनीम् ॥ १३

आवयोरम्बरीषोऽपि वचः श्रुत्वातिविस्मितः ।
इयं कन्या तु युवयोरेकं चेद्वरयिष्यति ॥ १४

तस्यैनां तु ददामीति प्रोवाच प्रीतिपूर्वकम् ।
तच्छ्रुत्वा वचनं तस्य वञ्चयित्वा तु पर्वतम् ॥ १५

मद्वाञ्छितं प्रार्थयितुमागतोऽहं त्वदन्तिकम् ।
भक्तस्य वाञ्छितं कर्तुं त्वामृते कः क्षमो भुवि ॥ १६

वानराननता तस्य पर्वतस्य यथा भवेत् ।
तथा विधीयतां देव भक्तस्य त्वं यदि प्रियः ॥ १७

तच्छ्रुत्वा वचनं तस्य प्रहस्य मधुसूदनः ।
त्वदुक्तं तत्करिष्यामीत्युवाचाद्भुतवैभवः ॥ १८

[2]इत्युक्तः प्रीतिमांश्चासावयोध्यां पुनराययौ ।
गते तस्मिन् मुनिवरे पर्वतोऽपि महा[3]मुनिः ॥ १९

प्रणिपत्य हृषीकेशमुपह्वत्य यथाविधि ।
निवेद्य चात्मवृत्तान्तं वरं वव्रे जनार्दनम् ॥ २०

गोलाङ्गूल[4]मुखो यद्वद्भवेद्वै नारदो मुनिः ।
तथा विधीयतां देव यदि त्वं मत्प्रियङ्करः ॥ २१

---

1. क. ख. गतौ
2. क. ख. इत्युक्त्वा
3. क. ख. मतिः
4. क. ख. मुखोऽयं च भवेद्वै

तच्छ्रुत्वा भगवान् विष्णुः पर्वतेनेरितं वचः ।
त्वदुक्तं तत् करिष्यामि तथैव मुनिसत्तम ॥ २२

मा वादीर्नारदस्यैतदावयोः संविदं [1]मिथः ।
गच्छ शीघ्रमयोध्यां त्वमित्युवाच जगत्पतिः ॥ २३

तच्छ्रुत्वा तं नमस्कृत्यायोध्यां प्रति जगाम सः ।
ततो राजा च विज्ञाय प्राप्तौ मुनिवरौ तदा ॥ २४

मङ्गलैर्विविधैः[2] सर्वामयोध्यां ध्वजमालिनीम् ।
मण्डयामास पुष्पैश्च सभां [3]स्वीयामभूषयत् ॥ २५

दिव्यगन्धैस्तथा धूपैर्नानामाल्यैरलङ्कृताम् ।
भद्रासनान्वितां नानाद्विजभूपैरलङ्कृताम् ॥ २६

[4]सभां विवेश नृपतिस्तां समादाय नन्दिनीम् ।
तौ मुनी भूपनिर्दिष्टमासनं [5]सुखमास्थितौ ॥ २७

ततो हिरण्मयीं मालामादाय पितुराज्ञया ।
कन्यकालोकयाञ्चक्रे तौ तु [6]नारदपर्वतौ ॥ २८

[7]गोलाङ्गूलमुखौ भीता किञ्चिद्धाससमन्विता ।
संभ्रान्तमानसा तत्र प्रवाते कदली यथा ॥ २९

ततस्तामाह राजासौ वत्से किं त्वं करिष्यसि ।
अनयोरेकमुद्दिश्य धेहि मालामिमां शुभे ॥ ३०

[8]ततः सा प्राह पितरं नेमौ नारदपर्वतौ ।
पश्यामि तात किमिदं कावेतौ वानराननौ ॥ ३१

अनयोर्मध्यतस्त्वेक[9]मूनषोडशवार्षिकम् ।
सर्वाभरणसंयुक्तमतसीकुसुम[10]प्रभम् ॥ ३२

---

1. क. ख. मुने
2. क. ख. -रेवायोध्यां-
3. क. ख. सूर्या
4. क. ख. तदा
5. क. ख. शुभ-
6. क. ख. पर्वतनारदौ
7. अ. पुस्तके 29, 30 श्लोकौ न दृश्येते
8. अ. पुस्तके इदमर्धं नास्ति
9. क. ख. -मेनं
10. क. ख. द्युतिम्

दीर्घबाहुं विशालाक्षं तुङ्गोरःस्थल[1]मुन्नसम् ।
पश्यामि पुण्डरीकाक्षं तुलसीदामभूषितम् ॥ ३३

एवमुक्ते मुनिः प्राह नारदः संशयं गतः ।
कियन्तो बाहवस्तस्य [2]त्वं नो ब्रूहि यथातथम् ॥ ३४

बाहुद्वय[3]ञ्च पश्यामीत्याह कन्या शुचिस्मिता ।
आह तां पर्वतस्तत्र तस्य वक्षःस्थले शुभे ॥ ३५

किं पश्यसि च मे ब्रूहि [4]कन्ये किं धारयत्यसौ ।
कन्या तमाह मालां वै पञ्चवर्णामनुत्तमाम् ॥ ३६

वक्षःस्थलेऽस्य पश्यामि करे कार्मुकसायकौ ।
एवमुक्ते मुनिश्रेष्ठौ तदा पर्वतनारदौ ॥ ३७

मायावी कोऽयमित्युक्त्वा विस्मयाकुलमानसौ ।
गोलाङ्गूलमुखत्वं मे कथमित्येव नारदः ॥ ३८

तथा हि पर्वतश्चापि चिन्ताव्याकुलितोऽभवत् ।
तदा राजा प्रणम्योभौ पर्वतं नारदं तथा ॥ ३९

उवाच च भवद्भ्यां किं कृतं बुद्धिविमोहनम् ।
स्वस्थौ भवन्तौ मा मोहैर्यदि कन्यार्थमागतौ ॥ ४०

एवमुक्तौ मुनिश्रेष्ठौ नृपमूचतुरुल्बणौ ।
त्वमेव कुरुषे मोहं [5]नावामेवं कथञ्चन ॥ ४१

आवयोरेकमेषा ते वरयत्वेव कन्यका ।
इत्युक्ते कन्यका भूयः प्रणिपत्य च देव[6]ताम् ॥ ४२

[7]मालामादाय तिष्ठन्ती तयोर्मध्ये समाहिता ।
पूर्ववत्पुरुषं दृष्ट्वा तस्मै मालां ददौ शुभाम् ॥ ४३

---

1. क. ख. -मुत्तमम्
2. क. ख. तन्नो
3. क. ख. न्तु
4. अ. कन्यकां
5. क. ख. नावामिह
6. क. ख. ताः
7. क. ख. पुस्तकयोः अयं श्लोको नास्ति

[1]तस्मिन्नेव क्षणे कन्या न दृष्टा मनुजैस्ततः ।
ततो नादः समभवत् किमेतदिति विस्मयात् ॥ ४४

तामादाय गतो विष्णुः स्वस्थानं तत्क्षणाद् द्विजाः ।
पुरा तदर्थमनिशं तपस्तप्त्वा वराङ्गना ॥ ४५

श्रीमती तं समासाद्य सम्प्राप्ता तपसः फलम् ।
तावुभौ [2]नरशार्दूलं धिक् त्वामित्येव दुःखितौ ॥ ४६

वासुदेवं प्रति तदा जग्मतुस्त्वरयान्वितौ ।
तावागतौ मुनी दृष्ट्वा श्रीमतीमाह केशवः ॥ ४७

आत्मानं गूहयेत्यन्तः सापि बाला तथाकरोत् ।
ततो विष्णुं नमस्कृत्य नारदः प्राह विस्मितः ॥ ४८

[3]प्रियं हि कृतवानद्य मम त्वं पर्वतस्य च ।
त्वमेव नूनं गोविन्द कन्यकां हृतवानसि ॥ ४९

तच्छ्रुत्वा वचनं विष्णुः पिधाय श्रोत्रमच्युतः ।
कामवादनभावोऽयं भवद्भ्यां किमुदीरितम् ॥ ५०

[4]असत्यकथनेनैव मुनिवृत्तं महीतले ।
एवमुक्तो मुनिः प्राह वासुदेवं स नारदः ॥ ५१

कर्णमूले मम कथं गोलाङ्गूलमुखं त्विति ।
प्रार्थितं पर्वतस्यैव गोलाङ्गूलत्वमानने ॥ ५२

इत्येवं नारदेनोक्ते पर्वतोऽपि तथावदत् ।
शृण्वतोरुभयोस्तत्र प्राह दामोदरो वचः ॥ ५३

प्रियं भवद्भ्यां कृतवान् सत्येनायुधमालभे ।
ततः स नारदः प्राह चावयोर्मध्यतः स्थितः ॥ ५४

धनुष्मान् पुरुषः कोऽत्र तां हृत्वा गतवान् किल ।
तच्छ्रुत्वा वासुदेवोऽसौ प्राह पर्वतनारदौ ॥ ५५

---

1. क. ख. इदमर्धं नास्ति
2. क. ख. मुनिशार्दूलौ
3. क. ख. अप्रियं
4. अनित्यकथनं स्मैव

मायाविनो महात्मानो बहवः सन्ति भूतले ।
अत्र सा श्रीमती दृष्टा न भवद्भ्यां मुनीश्वरौ ॥ ५६

चक्रपाणिरहं नित्यं धनुष्पाणिः स्थितः स तु ।
तस्मान्नाहमिति प्रोक्ते विष्णुना मुनिसमौ ॥ ५७

नमस्कृत्य जगन्नाथं राजानं प्रति जग्मतुः ।
नत्वाम्बरीषं शापेन युक्तं तत्र वितेनतुः ॥ ५८

आवामाहूय चान्यस्मै कन्यकां दत्तवान् यतः ।
मायायोगेन तस्मात्त्वां तमो ह्यभिभविष्यति ॥ ५९

एवं शापे प्रदत्ते तु तमोराशिस्समुत्थितः ।
[1]नृपतेश्च पुरश्चक्रं विष्णोः प्रादुरभूत् क्षणात् ॥ ६०

अम्बरीषस्य रक्षार्थं तद्दत्तं विष्णुना पुरा ।
चक्रवित्रासितौ घोरं तावुभौ तत्तमोऽभ्यगात् ॥ ६१

[2]ततः संत्रस्तसर्वाङ्गौ धावमानौ महामुनी ।
पृष्ठतश्चक्रमालोक्य तमोराशिं दुरासदम् ॥ ६२

कन्यासिद्धिरहो प्राप्ता वावयोरिति वादिनौ ।
लोकालोकान्तमनिशं धावमानौ भयाकुलौ ॥ ६३

त्राहि त्राहीति गोविन्दं शरण्यं शरणं गतौ ।
ततः स भगवान् विष्णुर्लोकानुग्रहकाम्यया ॥ ६४

तयोश्शापसमुद्भूतं तामिस्रमिदमब्रवीत् ।
अम्बरीषश्च मे भक्तस्तथेमौ मुनिसत्तमौ ॥ ६५

तस्माद्रक्षार्थमेतेषां शृणु तामिस्र मे वचः ।
अम्बरीषस्य पौत्रस्य नप्तुः पुत्रो महायशाः ॥ ६६

श्रीमान् दशरथो नाम राजा भवति धार्मिकः ।
तस्याहमग्रजः पुत्रो रामो नाम भवामि च ॥ ६७

---

1. क. ख. नृपं प्रति ततश्चक्रं 2. क. ख. ततस्तौ

[1]तस्य मे दक्षिणो बाहुर्भरतो नाम वै भवेत् ।
शत्रुघ्नो वामबाहुश्च शेषोऽसौ लक्ष्मणः स्वयम् ॥ ६८

तत्र मां समुपागच्छ गच्छेदानीं [2]नृपं विना ।
मुनिश्रेष्ठौ च मुक्त्वा त्वमिति [3]संप्राह माधवः ॥ ६९

एवमुक्ते तमो नाशं तत्क्षणाच्च जगाम वै ।
निवारितं हरेश्चक्रं यथापूर्वमधिष्ठितम् ॥ ७०

तौ मुनी च [4]भिया मुक्तौ निर्गत्यैवं परस्परम् ।
अद्य प्रभृति देहान्तमावां कन्यापरिग्रहम् ॥ ७१

न करिष्याव इत्युक्त्वा प्रतिज्ञां चक्रतुर्भृशम् ।
विज्ञाय विष्णुमायाञ्च मुनी पर्वतनारदौ ॥ ७२

योगध्यानपरौ भूत्वा शिवभक्तौ बभूवतुः ।
अम्बरीषोऽपि महतीं पालयित्वा महीं चिरम् ॥ ७३

[5]समित्रज्ञातिसम्बन्धी विष्णुलोकमवाप्तवान् ।
रामो दाशरथिर्भूत्वा विष्णुश्चापि जगन्मयः ।
अङ्गीकृत्य तमोभावं पुनः [6]स्थानमवाप्तवान् ॥ ७४

सूतः—

तस्मान्न कुर्यादात्मज्ञो निजभक्तेषु वञ्चनाम् ।
यदि कुर्यात्प्रमादेन महदापदमाप्नुयात् ॥ ७५

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे निजभक्तवञ्चनानिन्दनं नाम त्रयोदशोऽध्यायः

---

1. क. ख. तत्र
2. क. ख. नृशंसिनी
3. क. ख. सप्रति
4. क. ख. भयान्मुक्तौ
5. क. ख. सभृत्य-
6. क. ख. स्वस्थानमाप्तवान्

## ॥ चतुर्दशोऽध्यायः ॥

### अकालकृतकार्यनिन्दा

सूतः—

[1]येनैव पुरुषः स्त्री वा कार्येण फलमिच्छति ।
न च कुर्यादकालेन त्वरयान्यगिरा[2]पि वा ॥ १

तथा चेन्न च तत्कार्यं पूर्तिं याति तथात्म[3]ना ।
दुर्दशा स्यात्तदर्थेऽस्मिन्नितिहासः पुरातनः ॥ २

श्रूयते विनता नाम कश्यपस्य परिग्रहः ।
साध्वी श्लाघ्यगुणोपेता पातिव्रत्य[4]गुणे स्थिता ॥ ३

तस्याः सपत्नी स्वगुणैः काश्यपस्यातिवल्लभा ।
कद्रूरजनयत् पुत्रान् शतं काश्यपतः पुरा ॥ ४

विनतापि ततस्तैस्तैर्गुणैः पुत्रार्थिनी स्वयम् ।
पतिमाराधयामास काश्यपोऽपि प्रसन्नधीः ॥ ५

सन्तु तेऽपि त्रयः पुत्रा इत्युक्त्वा तपसे ययौ ।
अचिरेणैव कालेन सापि भर्तुरनुग्रहात् ॥ ६

उलूकमरुणं तार्क्ष्यमसूत विनता सुतान् ।
उलूको ज्येष्ठभावेन राजाभूत् पक्षिणां तदा ॥ ७

निर्गुणत्वा[5]च्च तैः सर्वैः [6]स राज्यादवरोपितः ।
क्रूराक्षोऽयं [7]दिनान्धोऽयं सदाचारेण वर्जितः ॥ ८

सदैवोद्वेगजननः सर्वेषामेव भाषितैः ।
प्रियवादी समस्तस्य भूतस्यापि हिते रतः ॥ ९

---

1. क. ख. यो नैव
2. अ. विना
3. क. ख. -नः
4. क. ख. -धुरि
5. क. ख. त्त
6. क. ख. स्वराज्या-
7. क. ख. दिवान्धो

रक्षिता स्वजनस्यापि राजा भवितुमर्हति ।
अल्पप्रसादस्तीक्ष्णेन कोपेनैव दुरासदः ॥ १०

[1][आशामात्रकरो] नैव राजा भवितुमर्हति ।
इत्थं तस्य गुणग्रामान् विकथ्य बहुशः खगाः ॥ ११

नाद्यापि वृणते राज्ये कमपि स्वैरचारि[2]णः ।
उद्धकेऽपि तथा वृत्ते पुत्रवीक्षणलालसा ॥ १२

अनवेक्ष्योचितं [3]कार्यमविचार्यैव तत्त्वतः ।
अनापृच्छ्य तथा बन्धूनज्ञात्वा भवितव्यताम् ॥ १३

अण्डं प्रस्फोटयामास मध्यमं त्वरयान्विता ।
तस्मादनूरुररुणः समुत्पन्नो महा[4]मतिः ॥ १४

स [5]जगाद विषादार्तो मातरं पितरं तदा ।
अण्डेऽप्यपक्वे त्वरया यतस्तत्स्फोटितं त्वया ॥ १५

अतो मे विकलाङ्गत्वमीदृशं समुपस्थितम् ।
येनैव विकलाङ्गत्वं प्रापितोऽहं त्वयाधुना ॥ १६

[6]सपत्न्या एव दासीत्वं भविता तेन कर्मणा ।
इति तस्य वचः श्रुत्वा कुपितस्यात्मजन्मनः ॥ १७

विषण्णहृदया भूत्वा विनता प्रत्युवाच तम् ।

विनता—

कर्मेदं कृतवत्यस्मि पुत्रदर्शनलालसा ॥ १८

नान्यथा हि तथाप्येवं शप्तवानसि मामिह ।
पुत्र त्वयि मया स्नेहात् कर्मेदं त्वरया कृतम् ॥ १९

न्यूनाङ्गत्वं ततस्तेऽभूत् तेन मे शाप ईदृशः ।
अस्त्वेवं किं करोम्यद्य नियतिर्न हि लङ्घ्यते ॥ २०

---

1. क. ख. आशामान्तकरो
   अ. आशामात्रेणाकरोद्वै
2. क. ख. -णम्
3. क. ख. काल-
4. ख. द्युतिः
5. क. ख. जगाम
6. अ. सपत्न्यास्त्वं तु दासित्वं

तत्त्वया कथ्यतां वत्स यथा दास्यं व्यपोहति ।

अरुणः—

तृतीयमण्डं रक्ष त्वं यावत्समयमेकधीः ॥ २१

पुत्रस्तस्मात्समुत्पन्नः स [1]ते दास्यं व्यपोहति ।
इत्युक्त्वा मातरं नत्वा तयाशीर्भिर्विवर्धितः ॥
अभ्यर्थितोऽह्नां पतिना ततोऽभूत्तस्य सारथिः ॥ २२

सूतः—

तस्मादसमये कार्यं न कुर्या[2]न्नीतिमान् जनः ।
समये हि कृतं कार्यं महते श्रेयसे भवेत् ॥ २३

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे अकालकृतकार्यनिन्दा
नाम चतुर्दशोऽध्यायः

---

1. क. ख. त्वद्दास्यं 2. क. ख.न्मतिमान्

## ॥ पञ्चदशोऽध्यायः ॥

### अभयप्रदानप्रशंसा

सूतः—

पुंसा [1]दयार्द्रचित्तेन निजधर्मानुवर्तिना ।
अपि स्वदेहमुत्सृज्य त्रातव्यः शरणागतः ॥ १

हेमधेनुधरादीनां दातारः सुलभा भुवि ।
दुर्लभः पुरुषो लोके सर्वजीवदयापरः ॥ २

[2]अग्नीषोमादियज्ञानां [3]काले तु क्षीयते फलम् ।
भीताभयप्रदानस्य क्षयं एव न विद्यते ॥ ३

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
रघुराक्षससंवादं सर्वपापप्रणाशनम् ॥ ४

रघुं तपसि तिष्ठन्तं द्विजः कश्चिद्भयातुरः ।
[4]रक्षश्शरणमन्विच्छन् जगाम रघु[5]भूपतिम् ॥ ५

तं दृष्ट्वा भयसंत्रस्तं ब्राह्मणं स महीपतिः ।
मा भैषीस्त्वमिति प्राह केनापि न भयं त्विति ॥ ६

अथापश्यत्तमायान्तं राक्षसं घोररूपिणम् ।
मुञ्च मुञ्चेति धावन्तं रघुर्धर्मभृतां वरः ॥ ७

राक्षसः—

मुञ्च राजन् ममाहारं विधात्रा विहितं तु मे ।
आहारं मम दीनस्य किमर्थं त्रायते भवान् ॥ ८

---

1. क. ख. यदार्द्र-
2. क. ख. अग्निष्टोमादि-
3. क. ख. कालेन्
4. क. ख. रक्षा-
5. क. ख. नन्दनम्

रघुः—

नाहं राक्षस मुञ्चामि ब्राह्मणं शरणागतम् ।
[1]यतो मां रक्ष रक्षेति मत्पार्श्वं समुपागतः ॥ ९

[2]मुक्त्वैवमेनं संत्रस्तं त्वत्तो राक्षसपुङ्गव ।
अन्यत्सत्त्वं तवाभीष्टं प्रददाम्यतिदुर्लभम् ॥ १०

प्राणार्थिनमिमं भीतं यो द्विजं शरणागतम् ।
सन्त्यजेत्पुरुषो लोके ब्रह्महत्यां स विन्दति ॥ ११

दुःखं यथात्मनो नेष्टं परेषामपि तत्तथा ।
तत्कथं भयसंत्रस्तं त्यजेयं रजनीचर ॥ १२

प्राणै[3]रपि तु मां रक्षत्वयमित्याशयान्मम ।
समीपमागतस्तस्य कथं त्यागं करोम्यहम् ॥ १३

प्रायश्चित्तेन शुध्यन्ति महापातकिनोऽपि च ।
शरणागतहन्तॄणां शुद्धिः कापि न विद्यते ॥ १४

पूयन्ते हयमेधेन महापातकिनो[4]ऽचिरात् ।
शरणागतहन्तारो न क्वचिद्गतिमाप्नुयुः ॥ १५

मा भैषीः पालयामीति पश्चाद्यः [5]पुरुषस्त्यजेत् ।
स तिष्ठन्नरके घोरे यावदाभूतसंप्लवम् ॥ १६

किं स जीवति पापात्मा केवलं [6]पापपूरुषः ।
[7]अर्थिनो भयभीतस्य यो दद्यादभयं न च ॥ १७

यः करोति महाबुद्धिः शरणागतरक्षणम् ।
यः करोति [8]क्रतून् सर्वांस्तयोरभयदोऽधिकः ॥ १८

अभयं सर्व[9]लोकानां यो ददाति महामतिः ।
तस्यापि सर्वलोकेषु भयं नास्ति कुतश्चन ॥ १९

---

1. क. ख. यो मां रक्षस्व रक्षति
2. क. ख. मुक्त्वैकमेवं
3. क. ख. रतितरां
4. क. ख. -नो नृपाः
5. क. ख. ख. पुरुषं त्यजेत्
6. क. ख. स्वात्मपोषकः
7. क. ख. प्राणिनो
8. क. ख. क्रमात्
9. क. ख. भूतानां

अकीर्तिरिह लोके मे परलोके महद्भयम् ।
यद्येनं तव मोक्ष्यामि रक्षोभीतमिमं द्विजम् ॥ २०

निन्दितः सर्वलोकेषु प्रतिष्ठां न लभे क्वचित् ।
जन्तोः प्राणपरिप्रेप्सोस्त्यागोऽयं शरणार्थिनः ॥ २१

मादृशैरिह धर्मज्ञैर्नोपेक्ष्योऽभयदक्षिणैः ।
अत एव तदन्यत्ते यदिष्टं तत्करोम्यहम् ॥ २२

जीवहिंसाविरहितं भवतः क्षुन्निवारणम् ।

राक्षसः—

[1]भक्ष्योऽसौ नृप विप्रो मे विधात्रा विहितो ध्रुवम् ॥ २३

अमुक्त्वैनं तु विप्रेन्द्रं प्रज्ञावानिव भाषसे ।
अन्यसं[2]रक्षणाद्धर्मास्त्वयोक्ता [3]बहुधा किल ॥ २४

क्षुधया परिसन्तप्तं मां न पश्यसि केवलम् ।
[4]त्यागेऽपि तस्य राजेन्द्र दोषं पश्यसि केवलम् ॥ २५

अलब्ध्वैनं मयि मृते किं दोषोऽत्र न विद्यते ।
प्राणिनामुपरोधेन यो धर्मं कुरुते नरः ॥ २६

न तस्य श्रेयसे नित्यं स धर्मोऽत्रापि जायते ।

रघुः—

यदि मांसेषु ते प्रीतिर्जायते रजनीचर ॥ २७

तत्तेऽन्यमांसमादाय प्रदास्याम्यभिवाञ्छितम् ।
मांसं माहिषमैणेयं गव्यमाजाविकं तथा ॥ २८

दास्याम्येवमिमं विप्रं विहायान्यदभीप्सितम् ।
ब्राह्मणं वध्यमानं तु यः शक्तः समुपेक्षते ॥ २९

---

1. क. ख. भक्ष्यं मे नृप विप्रोऽसौ
2. क. ख. रक्षणे धर्मा
3. क. ख. बहुशः
4. क. अ. प्रागेतस्यापि

कर्तुस्तस्य च तत्पापं तुल्यमाहुर्मनीषिणः ।
सर्वदेवमयो विप्र [1]इतीयं वैदिकी श्रुतिः ॥ ३०

द्विजोत्तमे हते देवा हताः स्युर्नात्र संशयः ।
दर्शनादेव विप्रस्य सर्वपापक्षयो भवेत् ॥ ३१

एवंविधमहं विप्रं कथं मुञ्चामि राक्षस ।

राक्षसः—

[2]अन्यावयवमांसेन न तृप्तिर्जायते मम ॥ ३२

मुक्त्वैतन्मांसमत्राद्य तृप्तिं यास्याम्यहं कथम् ।
किमत्र भवतश्चिन्ता दोषादोषपरीक्षणे ॥ ३३

ममैव दोषो यद्यस्ति तस्माद्विप्रमिमं त्यज ।
राजंस्तव दया नास्ति दयासारा हि साधवः ॥ ३४

दया हि तपसो मूलमदया पापकारणम् ।
तस्मात् क्षुधाग्निना तप्तं दयया रक्ष मां नृप ॥ ३५

अन्यथाहं मरिष्यामि निराहारतया नृप ।
तवैव [3]दोषोऽतितरां मृते च मयि जायते ॥ ३६

यथा मृगवधे दोषो नास्ति ते श्राद्धकर्मणि ।
तथा ममास्य भक्ष्यत्वाद्धिंसया [4]नास्ति पातकम् ॥ ३७

एवमुक्तस्ततस्तेन रक्षसा रघुसत्तमः ।
चिन्तयामास किं [5]मेऽद्य कर्तव्यमिति वै द्विजाः ॥ ३८

यदि मुञ्चाम्यहं विप्रं राक्षसेन मृतिर्ध्रुवा ।
ब्राह्मणं चेन्न मुञ्चामि रक्षसो मरणं ध्रुवम् ॥ ३९

उभयत्रापि दोषो मे भविता नात्र संशयः ।
ततो नात्रोभयं कार्यं महत् कष्टमुपस्थितम् ॥ ४०

---

1. क. ख. इतीत्थं
2. क. ख. अनेनैव हि मांसेन तृप्तिस्संजायते मम
3. क. ख. दोषातिशयो
4. क. नैव
5. क. ख. तेऽद्य

उपदिष्टं ननु पुरा वसिष्ठेन महात्मना ।
[1][महत्यामापदि सता] स्मर्तव्यो भगवान् [2]हरिः ॥ ४१

इत्युदीर्य महीपालः शङ्खचक्रगदाधरम् ।
सस्मार पुण्डरीकाक्षमाधारं जगतामपि ॥ ४२

पातु मां भगवान् विष्णुरिति तन्नामपूर्वकम् ।
इत्युदीरितमाकर्ण्य रघुणा [3]राक्षसेश्वरः ॥ ४३

प्रहृष्टः प्रत्युवाचेदं वचनं वदतां वरः ।
अहं राजा शतद्युम्नः सम्प्राप्तो राक्षसाकृतिम् ॥ ४४

वसिष्ठशापाद्राजेन्द्र तेनैवोक्तमिदं मम ।
यदा हि रघुणा क्वापि संवादो भविता तव ॥ ४५

तदा प्रकृतिमापन्नो भविष्यसि परंतप ।
विष्णोर्नाम च तेनोक्तं श्रृणुया रघुणा यदा ॥ ४६

पापदेहमिमं राजन् परित्यक्ष्यसि वै ततः ।
इत्युक्तं यद्वसिष्ठेन तत्सर्वमभवन्मम ॥ ४७

इत्युदीर्य शतद्युम्नः तनुं [4]संत्यज्य राक्षसीम् ।
आत्मनो वपुरास्थाय जगाम स्वपुरं ततः ॥ ४८

ब्राह्मणोऽपि भयात्यक्तः समाश्रित्य रघुं द्विजाः ।
संहृष्टः प्रययौ विद्वान् विस्मयोत्फुल्ललोचनः ॥ ४९

रघुस्तं मोक्षयित्वा तु ब्राह्मणं हृष्टमानसः ।
तपस्यभिरतो भूत्वा तत्रैव स्थितवान् द्विजाः ॥ ५०

तस्मिन्नेव क्षणे ब्रह्मा स्वयमागत्य तं रघुम् ।
उवाच नृप तुष्टोऽहं तव धर्मप्रभावतः ॥ ५१

पशवोऽपि हि जीवन्ति केवलात्मोदरम्भराः ।
स [5]पुनर्जीवति श्लाघ्यो यः परार्थं हि जीवति ॥ ५२

---

1. अ. महत्यापदि संप्राप्ते
   क. ख. महत्यामापदि सति
2. क. ख. निति
3. क. ख. राक्षसो द्विजाः
4. क. संत्यगात् ख. संत्यजत्
5. क. ख. पुमान् जीवति

प्रीतोऽस्मि तव भूपाल शरणागत[1]रक्षया ।
विमानमागतं दिव्यं तव [2]दैवतपूजितम् ॥ ५३

एतद्विमानमारुह्य मम लोकं समाश्रय ।
तद्वचो ब्रह्मणः श्रुत्वा रघुर्धर्मभृतां वरः ॥ ५४

जगाम ब्रह्मणा सार्धं सत्यलोकं महामतिः ।
तस्मादभयदानं हि [3]सर्वदानेषु चोत्तमम् ॥ ५५

यो [4]ददात्यभयं लोके भूतानां दुःखजीविनाम् ।
स तु वै राजते लोके ब्रह्मणो नात्र संशयः ॥ ५६

भृगुणा शौनकायोक्तमिदमाख्यानमुत्तमम् ।
यः पठेच्छृणुयाद्वापि स नरः सुखमेधते ॥ ५७

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे अभयप्रदानप्रशंसा
नाम पञ्चदशोऽध्यायः

---

1. ख. -रक्षणात्
2. अ. दैत्येन
3. क. ख. सर्वलोकेषु
4. क. ख. दद्यादभयं

## ॥ षोडशोऽध्यायः ॥

### ऋणसम्बन्धकथनम्

ऋषयः—

धनपुत्रादिसम्पन्नाः केचित्तिष्ठन्ति मानवाः ।
तैर्विना निवसन्त्यन्ये दुःखशोकाभिपीडिताः ॥ १

सुकर्मणा केन विभो जायन्ते च सुपुत्रकाः ।
केन वा कर्मणा पापाः सम्भवन्ति कुलाधमाः ॥ २

केन कर्मविपाकेन पुत्रहीना भवन्ति च ।
एतस्य कारणं ब्रूहि रोमहर्षण सूत नः ॥ ३

सूतः—

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
पूर्वकल्पे महाप्राज्ञः सुक्षेत्रे पापनाशने ॥ ४

रेवातीरेऽत्यन्तपुण्ये तीर्थे चामरकण्टके ।
कौशिकस्य कुले जातः सोमशर्मा द्विजोत्तमः ॥ ५

धनपुत्रविहीनस्तु बहुदुःखसमन्वितः ।
धनपुत्रप्राप्त्युपायं नित्य[1]मात्मनि चिन्तयन् ॥ ६

एकदा तु प्रिया तस्य सुमना नाम सुव्रता ।
भर्तारं चिन्तयोपेतं समालोक्याब्रवीदिदम् ॥ ७

सुमनाः—

व्यामोहेन प्रमूढोऽसि त्यज चिन्तां महामते ।
मम दुःखं समाचक्ष्व स्वस्थो भव सुखं व्रज ॥ ८

नास्ति चिन्तासमं दुःखं कायशोषणमेव हि ।
प्रियावाक्यं ततः श्रुत्वा सोमशर्माब्रवीद्वचः ॥ ९

---

1. क. ख. मास्तेऽथ

सोमशर्मा—

न जाने केन पापेन धनहीनोऽस्मि सुव्रते ।
तथा पुत्रविहीनोऽस्मीत्येतद्दुःखस्य कारणम् ॥ १०

सुमनाः—

श्रूयतामभिधास्यामि सर्वसन्देहनाशनम् ।
स्वरूपमुपदेशस्य सर्वविज्ञान[1]दर्शनम् ॥ ११

लोभः पापस्य बीजं हि मोहो मूलं तु तस्य हि ।
तस्यासत्यमपि स्कन्धो मायाशाखाः सुविस्तराः ॥ १२

कौटिल्यदम्भाः पत्राणि [2]कुबुद्ध्यादिः प्रसूनकम् ।
अनृतं तस्य सौगन्ध्यमज्ञानं फलमस्य हि ॥ १३

ब्रह्मन् पाषण्डचोराश्च [3]पिशुनाश्चैव पापिनः ।
पक्षिणो मोहवृक्षस्य मायाशाखां समाश्रिताः ॥ १४

अभाववारिणा वृद्धिस्तस्या[4]श्रद्धात्मनः प्रिया ।
तस्य च्छायां समाश्रित्य यो नरः परिवर्तते ॥ १५

फलानि तस्य सोऽश्नाति सुपक्वानि दिने दिने ।
फलानां तु रसेनापि ह्यधर्मेणापि दूषितः ॥ १६

सुसन्तुष्टो भवेन्मर्त्यः पतनं स हि गच्छति ।
तस्माच्चिन्तां परित्यज्य पुमान् लोभं न कारयेत् ॥ १७

मूर्खश्चिन्तयते नित्यं कथमर्थो भवेदिति ।
कथं [5]नु भार्यां विन्देय प्राप्नुयां तनयानपि ॥ १८

चिन्तामोहौ परित्यज्य सुखमेव समाश्रय ।
मित्राणि बान्धवाः पुत्राः पिता माता सुहृत्तथा ॥
[6]स्वयं बन्धा भवन्त्येव कलत्राणि तथैव च ॥ १९

---

1. क. ख. दर्शितम्
2. क. ख. कुबुद्ध्या पुष्पितास्तथा
3. क. ख. क्रीडाः क्रूराश्च
4. क. ख. -श्रद्धा ऋतुः प्रियाः
5. क. सुभार्यो ख. सभार्यो
6. क. ख. स्वसम्बन्धा भजन्त्येते

सोमशर्मा—

सम्बन्धः कीदृशो भद्रे तन्मे विस्तरतो वद ।
जायन्ते येन ते सर्वे धनपुत्रसुहृत्स्त्रियः ॥ २०

सुमनाः—

केचिन्न्या[1]सविहर्तारः ऋणसम्बन्धिनः परे ।
केचिद्वैरानु[2]बन्धाश्च केचित्पूर्वसमाश्रयाः ॥ २१

[3]एवं भवन्ति[भुवने]धनसम्बन्धिनः परे ।
दिवासि नात्पथा केचिल्लोकानां पुत्रमित्राणि स्त्रियः ॥ (?) २२

[4]भेदैश्चतुर्भिर्जायन्ते पुत्रमित्राणि च स्त्रियः ।
पिता माता तथा भ्राता भृत्याः स्वजनबान्धवाः ॥ २३

स्वेन स्वेन हि जायन्ते सम्बन्धेन महीतले ।
न्यासापहारो भवने यस्य येन कृतो भुवि ॥ २४

न्यासापहारकस्यैव न्यासस्वामी भवेत्सुतः ।
गुणवान् रूपसम्पन्नः सर्वलक्षणलक्षितः ॥ २५

भक्तिं च दर्शयंस्तस्य पुत्रो भूत्वा दिने दिने ।
प्रियकृन्मधुरो वाग्मी स्नेहं संदर्शयन् बहु ॥ २६

[5]स्वीयं द्रव्यं समुद्गृह्य प्रीतिमुत्पाद्य चातुलाम् ।
प्रयाति स्वेन मार्गेण दुःखं कृत्वा सुदारुणम् ॥ २७

एवं न्यासस्य [6]सम्बन्धात् पुत्राः [7]शान्ता भवन्ति हि ।
ऋणसम्बन्धिनं पुत्रं प्रवक्ष्यामि तवाग्रतः ॥ २८

ऋणं यस्य गृहीत्वा यः प्रयाति मरणं किल ।
अर्थदातुः सुतो भूत्वा भ्राता वाथ प्रियान्वितः ॥ २९

पुत्ररूपेणातिदुष्टो वर्तते शिष्टगर्हितः ।
जल्पते परुषं वाक्यं सर्वदा स्वजनेषु च ॥ ३०

---

1. क. ख. -सापह-
2. क. ख, -बद्धाश्च केचिदर्थ- प्रदायकाः
3. अयं श्लोकः क. ख. पुस्कयोर्नास्ति
4. अ. पुस्तके अर्धमिदं न दृश्यते
5. अ. स्वयं द्रव्यं समुद्ग्राह्य
6. क. ख. सम्बन्धाः
7. क. ख. कान्ता

भोगान् भुनक्ति [1]भोज्यांश्च समश्नाति यथेप्सितम् ।
द्यूतकर्मरतो नित्यं चोरकर्मणि सस्पृहः ॥ ३१

पितरं मातरञ्चैव कुत्सते च दिने दिने ।
जातकर्मादिभिर्बाल्ये द्रव्यं [2]हरति दारुणः ॥ ३२

पुनर्विवाहसंयोगान्नानाभेदैरनेकशः ।
एवं क्षपयते द्रव्यं दुष्टैरन्यैश्च चेष्टितैः ॥ ३३

गृहक्षेत्रादिकं सर्वं ममैवेति वदन्नपि ।
[3]पितरं मातरं चैव निहन्ति च दिने दिने ॥ ३४

मृते च तस्मिन् पितरि तथा मातरि निष्ठुरः ।
श्राद्धकार्याणि सर्वाणि न करोति कदाचन ॥ ३५

एवं यथा स्मृताः पुत्रा ऋणसम्बन्धिनो भुवि ।
रिपुपुत्रं प्रवक्ष्यामि तवाग्रे द्विजसत्तम ॥ ३६

बाल्ये वयसि संप्राप्य रिपुत्वे वर्तते सदा ।
पितरं मातरञ्चैव ताडयत्येव लीलया ॥ ३७

ताडयित्वा प्रहस्यैव ताडयित्वा पुनः पुनः ।
सक्रोधं वर्तते नित्यं पूर्ववैरानुभावतः ॥ ३८

म्रियमाणः स्वयं पित्रोः प्राणान् हरति दुःखतः ।
अथातः संप्रवक्ष्यामि यस्माल्लभ्यं धनं प्रिय ॥ ३९

विना दानेन संप्रीत्या विधेर्विस्मरणादपि ।
यस्य लब्धं धनं येन तस्य पुत्रः स जायते ॥ ४०

जातमात्रः प्रियं कुर्याद्बाल्ये क्रीडनलालनैः ।
वयः प्राप्य प्रियं कुर्यान्मातापित्रोर्निरन्तरम् ॥ ४१

---

1. क. ख. भोग्यांश्च
2. क. ख. गृह्णाति
3. इदमर्धं 35. 36 श्लोकौ, 37 श्लोकपूर्वार्धं च अ. पुस्तके न दृश्यन्ते

भक्त्या संप्रीणयन्नित्यं तावुभौ पोषयत्यपि ।
मृतौ चेत्पितरौ स्नेहात् तयोरत्यन्तदुःखितः ॥ ४२

रुदित्वा श्राद्धकर्माणि करोत्येव यथाविधि ।
निवर्तयति शास्त्रोक्त्या पित्रोर्दानादिकाः क्रियाः ॥ ४३

पुत्रेण पित्रोः कर्तव्यं यत्तत्सर्वं करोति च ।
उदासीनं प्रवक्ष्यामि भवतः सन्निधौ प्रिय ॥ ४४

न ददाति न गृह्णाति न च तुष्यति कुप्यति ।
उदासीनेन भावेन सर्वदा परिवर्तते ॥ ४५

पित्रोः समीपं सन्त्यज्य न प्रयाति कदाचन ।
तवाग्रे कथितं सर्वं पुत्राणां गतिरीदृशी ॥ ४६

यथा पुत्रास्तथा भार्याः पिता माता च बान्धवाः ।
अपि भृत्यास्तथा ज्ञेयाः [1]पशवश्च तथा गजाः ॥ ४७

[2]अजा महिष्यो दास्यश्च ऋणसम्बन्धिनस्त्वमी ।
[3]गृहीतमावयोरेकेनावाभ्यां तु न कस्यचित् ॥ ४८

द्रव्यं न्यासं न कस्यापि हृतं वै पूर्वजन्मनि ।
न धारयसि कस्यापि ऋणं किञ्चिच्च मा शुचः ॥ ४९

न वैरमस्ति केनापि कृतं नाथ त्वया पुरा ।
एवं ज्ञात्वा शमं गच्छ त्यज [4]चिन्तामनर्थिकाम् ॥ ५०

कथं धनं प्राप्नुवन्ति तत्ते वक्ष्यामि मत्प्रिय ।
प्राप्तव्यं येन यद्द्रव्यं [5]तदक्लेशेन सिध्यति ॥ ५१

यत्नेन रक्षितं चापि गन्तव्यं तन्न तिष्ठति ।
[6]एवमुक्तं मया नाथ त्यज चिन्तां महामते ॥ ५२

---

1. क. ख. पशवस्तुरगास्तथा
2. क. ख. गजा
3. क. अ. गृहीतमावयोः केन नावाभ्यां ...
4. क. ख. चिन्तां मनः किल
5. क. ख. तदक्लेशाच्च
6. इतः अर्धत्रितयं क. ख. पुस्तकयोर्नास्ति

मायामोहेन संमूढा मानवाः कथयन्त्यमी ।
इदं गृहमयं पुत्र इयं भार्या ममैव हि ॥
एवं सम्बोधितो विप्रः पुनः प्रोवाच तां प्रति ॥ ५३

सोमशर्मा—

सत्यमुक्तं त्वया भद्रे सर्वसन्देहनाशनम् ।
तथापि वंशमिच्छन्ति साधवः सत्यपण्डिताः ॥ ५४

यथा पुत्रस्य मे चिन्ता न धनस्य तथा प्रिये ।
येन केनाप्युपायेन पुत्रमुत्पादयाम्यहम् ॥ ५५

सुमनाः—

पुत्रेण लोकान् जयति पुत्रस्तारयते कुलम् ।
सत्पुत्रेण महाभाग पिता माता च जीवतः ॥ ५६

एकः पुत्रो वरः कान्त बहुभिर्निर्गुणैस्तु किम् ।
एकस्तारयते वंशमन्ये सन्तापकारकाः ॥ ५७

पुण्येन प्राप्यते पुत्रः पुण्येन प्राप्यते कुलम् ।
सुगर्भः प्राप्यते पुण्यै[1]स्तत्प्राप्त्यर्थं तपश्चरेत् ॥ ५८

आत्मा वै पुत्रनामेति श्रुतिराह सनातनी ।
पुंनाम्नो नरकात् त्राता पुत्र इत्यभिधीयते ॥ ५९

पुत्रस्य लक्षणं पुण्यं तवाग्रे कथयाम्यहम् ।
पुण्ये प्रसक्तो यस्यात्मा [2]धर्मे सत्ये रतः सदा ॥ ६०

[3]विष्णुध्यानरतो नित्यं शान्तो दान्तः शुचिस्सदा ।
मातापित्रोर्भक्तियुक्तः सर्वस्वजनवत्सलः ॥ ६१

बुद्धिमान् ज्ञानसम्पन्नस्तपस्वी वाग्विदां वरः ।
सर्वशास्त्रप्रवक्ता च वेदाध्ययनतत्परः ॥ ६२

---

1. क. ख. स्तस्मात्पुण्यं समाचरेत्
2. क. ख. स तु धर्मरतस्सदा
3. अयं श्लोकः अ. पुस्तके नास्ति

सर्ववेदान्तवेत्ता च देवब्राह्मणपूजकः ।
याजकः सर्वभूतानां दाता त्यागी प्रियंवदः ॥ ६३

कुलस्य तारको नित्यं [1]पितॄणां परिपोषकः ।
एवंगुणैः सुसंयुक्तः सुपुत्रः सुखदायकः ॥ ६४

अन्ये सम्बन्ध[2]युक्ताश्च शोकसन्तापदायकाः ।
आयान्ति यान्ति ते सर्वे तापं कृत्वा सुदारुणम् ॥ ६५

इत्युक्तः स तया विप्रः सोमशर्मा [3]महामतिः ।
कपिलासङ्गमे पुण्ये रेवातीरे सुपुण्यदे ॥ ६६

स्नात्वा तत्र स मेधावी तर्पयित्वा सुरान् पितॄन् ।
तपस्तेपे [4]सुशान्तात्मा ध्यायन्नारायणं [5]शिवम् ॥ ६७

द्वादशाक्षरमन्त्रेण तोषयामास तं विभुम् ।
सा च साध्वी महाभागा पातिव्रत्यपरायणा ॥ ६८

तयोश्च तपसा तुष्टः प्रसन्नः प्राह [6]तौ विभुः ।

विष्णुः—

वरं ददे महाभाग यत्ते मनसि वर्तते ॥ ६९

सोमशर्मा—

[7]जन्मजन्मान्तरे विष्णो त्वयि भक्तिर्भवत्विह ।
दर्शय त्वं परं [8]स्थानं मम मोक्षप्रदायकम् ॥ ७०

कुलसन्तारकं पुत्रं दिव्य[9]भूषणसंयुतम् ।
विष्णुभक्ति[10]युतं नित्यं मम वंशविवर्धकम् ॥ ७१

सर्वज्ञं सर्वगं शान्तं तपस्विजनसंमतम् ।
देवब्राह्मण[11]बन्धूनां पूजकं पालकं सदा ॥ ७२

---

1. क. ख. स्ववंशारि-
2. क. ख. संयुक्ताः
3. क. ख. महाद्युतिः
4. क. ख. सुदान्तात्मा जपन्ना-
5. क. ख. परम्
6. क. ख. तं
7. क. ख. मम
8. क. ख. ज्ञानममलं मोक्षदायकम्
9. क. ख. लक्षण-
10. क. ख. -परं
11. क. ख. लोकानां

ईदृशं देहि मे पुत्रं दारिद्र्यं हर केशव ।

विष्णुः—

एवमस्तु द्विजश्रेष्ठ भविष्यति न संशयः ॥ ७३

मत्प्रसादात्सुपुत्रस्तु तव वंश[1]विवर्धनः ।
[2]लभसे त्वं वरान् दिव्यान् भोगान् वै मानुषानपि ॥ ७४

सुतीर्थे मरणं विप्र यास्यसि त्वं परां गतिम् ।
एवं वरं हरिर्दत्वा सभार्याय द्विजाय सः ॥ ७५

अन्तर्धानं गतो देवो दिव्यमूर्तिधरः स्वयम् ।
स भूयो भार्यया युक्तः सोमशर्मा द्विजोत्तमः ॥ ७६

सपुत्रो महदैश्वर्यं प्राप्य गार्हस्थ्यमाश्रितः ।
सुतीर्थे न्यवसद्धीमान् धर्म[3]पुत्रपरायणः ॥ ७७

सूतः—

सर्वेषामेव जायन्ते ऋणसम्बन्धिनो द्विजाः ।
पुत्रभार्याधनादीनि निश्चितं त्विदमेव हि ॥ ७८

तस्माद्धि ऋणसम्बन्धाज्जायन्ते हि सुतादयः ।
य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः ।
स याति वैष्णवं स्थानं यावदाभूतसंप्लवम् ॥ ७९

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे ऋणसम्बन्धकथनं नाम षोडशोऽध्यायः

---

1. क. ख. प्र-    भागान् दिव्यान् वै मानुषानपि ।
2. क. ख. भोक्ष्यसि त्वं वरान्    3. क. ख. मत-

## ॥ सप्तदशोऽध्यायः ॥

### परोपकारकथनम्

सूतः—

परोपकरणं येषां जागर्ति हृदये सदा ।
नश्यन्ति विपदस्तेषां सम्पदः स्युः पदे पदे ॥ १

तीर्थस्नानैर्न[1]सा शुद्धिर्बहुदानैर्न तत्फलम् ।
तपोभिरुग्रैस्तन्नाप्यमुपकृत्य यदाप्यते ॥ २

परोप[2]कृत्या यो धर्मस्तथा दानादिसम्भवः ।
एकत्र तुलितो धात्रा तत्र पूर्वो [3]भवेद्गुरुः ॥ ३

अस्मिन्नर्थे पुरावृत्तमितिहासं [4]वदामि वः ।
पुरा त्वष्टा द्विज[5]श्रेष्ठा हिरण्यकशिपोः सुता ॥ ४

विवाहिता परा नाम श्रेष्ठा रूपगुणान्विता ।
अथ तस्या ययौ कालः [6]सुप्रभूतः सुतं विना ॥ ५

ततो वैराग्यमापन्ना सुतार्थे तपसि स्थिता ।
ध्यायन्ती सा [7]सुरेशानं देवदेवं महेश्वरम् ॥ ६

[8]गते वर्षसहस्रान्ते [9]ततस्तुष्टो महेश्वरः ।
उवाच वरदोऽस्मीति वृणीष्व [10]यदभीप्सितम् ॥ ७

सा वव्रे मम पुत्रोऽस्तु भगवंस्त्वत्प्रसादतः ।
शूरः शस्त्रैरवध्यश्च विप्रदानवरूपधृत् ॥ ८

---

1. क. ख. वा
2. कं. ख. कृत्यां
3. क. ख. -ऽभवद्
4. ख. पुरातनम्
5. क. ख. श्रेष्ठ
6. क. ख. सुप्रसूतसुतं
7. क. ख. सुराधीशं
8. क. ख. ततो
9. क. ख. तस्यास्तु-
10. क. ख. ख. वरमी-

श्रीभगवान्—

भविष्यति न सन्देहः पुत्रस्ते बलवान् सुधीः ।
अवध्यः सर्वशस्त्राणामित्युक्त्वादर्शनं गतः ॥ ९

ततः सा सुषुवे पुत्रं द्वादशादित्यसंनिभम् ।
प्रसिद्धं वृत्र इत्येव सर्वतेजोबलान्वितम् ॥ १०

तस्य विप्रव्रतं चक्रे स्वय[1]मभ्येत्य भार्गवः ।
स तु शुक्रप्रसादेन तत्तत्संस्कारसंयुतः ॥ ११

पुपोष यशसा सार्धं तेजसा च [2]महाद्युतिः ।
बलाद्गत्वा सहस्राक्षं युद्धार्थं समुपस्थितः ॥ १२

ततोऽभूत्तुमुलं युद्धं सुमहद्रोमहर्षणम् ।
वृत्रस्य दानवेन्द्रस्य शक्रस्य च परस्परम् ॥ १३

पञ्चवर्षसहस्राणि देवदानव[3]नाशनम् ।
गजघोषसमुद्घुष्टे [4]रथचीत्कारफूत्कृते ॥ १४

[5]वाजिहेषितसंरावे वज्रघोषसमाकुले ।
विद्युदुद्दीपिते रम्ये खड्गनिर्ह्रादह्रादिते ॥ १५

त्रैलोक्ये कम्पिते तेन वृत्रेणेन्द्रः पराजितः ।
ब्रह्मलोकं समुद्दिश्य ततः संप्रस्थितो हरिः ॥ १६

वृत्रोऽपि शुक्रमानम्य वचनञ्चेदमब्रवीत् ।
ब्रह्मलोकं गतः शक्रो भयाद्युद्धे पराजितः ॥ १७

कथं गतिर्भवेद्ब्रूहि मम तत्र यथातथम् ।

शुक्रः—

न गतिर्विद्यते तत्र [6]तव दानवसत्तम ॥ १८

---

1. क. ख. -मागत्य
2. क. ख. महावपुः
3. क. ख. शासनम्
4. अ. कथञ्चिन्मारपूत्कृति
5. क. ख. वाजिकूकर-
6. क. तव दानेन सत्तम ख. वदता तेन सत्तम

[1]तस्मात् त्रैलोक्यराज्येन सन्तोषं कर्तुमर्हसि ।

वृत्रः—

यावत्तिष्ठति सुत्रामा तावन्नास्ति सुखं मम ॥ १९

तस्मा[2]न्निकृन्तनार्थाय यतिष्येऽहं द्विजोत्तम ।
कथं शक्रस्य सञ्जाता गतिस्तत्र भृगूद्वह ॥ २०

न भविष्यति मे ब्रूहि कथं साध्यं महामते ।

शुक्रः—

तेन पूर्वं तपस्तप्तं नैमिशे दानवोत्तम ॥ २१

यावद्वर्षसहस्रान्ते ध्यायतानेन शङ्करम् ।
तत्प्रभावाद्गतिस्तस्य तत्र जाता सदैव हि ॥ २२

योऽन्योऽपि नैमिशारण्ये तद्वच्च कुरुते तपः ।
ब्रह्मलोकगतिस्तस्य जायते नात्र संशयः ॥ २३

सूतः—

तच्छ्रुत्वा सत्वरं गत्वा नैमिशं तीर्थमुत्तमम् ।
[3]ततश्चक्रे तपस्तीव्रं ध्यायन्नेत्र महेश्वरम् ॥ २४

ततश्च मन्त्रयामासुस्तद्वधार्थं हि देवताः ।
अथाब्रवीत् सुरान् विष्णुः स्वयं निश्चित्य चेतसा ॥ २५

वधोपायं समालोच्य वृत्रस्यैव मुदान्वितः ।

विष्णुः—

तस्य शक्र वधोपायं श्रुत्वा तदधुना कुरु ॥ २६

अवध्यः सर्वशस्त्राणां स कृतः शूलपाणिना ।
तस्मादस्थिमयं वज्रं तद्वधार्थं निरूपय ॥ २७

इन्द्रः—

अस्थिभिः कस्य जीवस्य वज्रं देव भविष्यति ।
न तादृग्दृश्यते जन्तुस्त्रैलोक्ये वा सुरेश्वर ॥ २८

---

1. क. ख. तस्मादत्रैव
2. क. ख. -न्निष्कन्दना-
3. क. ख. तत्र चक्रे

विष्णुः—

दधीचिर्नाम विप्रर्षिस्तपः परममास्थितः ।
शतहस्तप्रमाणं तदस्थि स्याद्वै षडश्रि[1]भिः ॥ २९

पक्षे क्षामञ्च पार्श्वाभ्यां स्थूलरौद्रतमाकृति ।
वज्रात्तु द्विगुणं सोऽपि सरस्वत्यां कृताश्रमः ॥ ३०

तं गत्वा प्रार्थयाशु त्वं ततस्तत् प्राप्स्यसि ध्रुवम् ।

सूतः—

तस्य तद्वचनं श्रुत्वा विष्णोरमिततेजसः ॥ ३१

ततो गोत्रभिदुत्थाय प्रस्थितो यत्र[2] संस्थितः ।
ब्राह्मणं रूपमास्थाय कुरुक्षेत्रं प्रति द्विजाः ॥ ३२

तं दृष्ट्वा मुनिशार्दूलं सुखासीनं नदी[3]तले ।
स्वस्तीत्युक्त्वा मुनिश्रेष्ठं सन्निविष्टो धरातले ॥ ३३

स तु दृष्ट्वा सहस्राक्षं ब्रह्मरूपधरं हरिम् ।
कुतस्त्वमिह सम्प्राप्तश्छन्नरूपेण [4]वासव ॥ ३४

किं भयं [5]ते समुत्पन्नं कच्चित्क्षेमं दिवौकसाम् ।
यस्मात्त्वं छन्नरूपोऽसि तत्कार्यं वद वासव ॥ ३५

इन्द्रः—

[6]हराल्लब्धवरो दुष्टो वृत्रो दानवसत्तमः ।
तेनाहं निर्जितः स्वर्गात् परिभ्रष्टोऽस्मि साम्प्रतम् ॥ ३६

सह देवैर्मुनिश्रेष्ठ ब्रह्मलोके भयार्दितः ।
निवसामि विनाशाय तस्य दैत्यस्य तत्र हि ॥ ३७

कृतं मन्त्रं सहास्माभिर्ब्रह्मणा हरिणापि च ।
सोऽस्थिसम्भववज्रस्य वध्य इत्यब्रवीद्धरिः ॥ ३८

---

1. क. ख. च
2. क. ख. तत्र सः
3. क. ख. -तटे
4. अ. दानव
5. क. ख. तु
6. क. ख. हरलब्ध-

शतहस्तप्रमाणस्य वज्रस्य सदृशं क्वचित् ।
न दृश्यतेऽस्थि जीवस्य त्वां विना तच्च सोऽब्रवत् ॥ ३९

मुने वज्रसमानानि तस्मादस्थीनि यच्छ नः ।
स्वकीयानि भवेद्येन वज्रं तस्य विनाशनम् ॥ ४०

एतत्कार्यं कुरु श्रेष्ठ देवानामार्तिनाशनम् ।
अन्यथा विबुधाः सर्वे नाशं यास्यन्ति कृत्स्नशः ॥ ४१

सूतः—

तच्छ्रुत्वा स प्रहृष्टात्मा दधीचिर्भगवान् मुनिः ।
अत्यजज्जीवितं तेषां हितार्थाय दिवौकसाम् ॥ ४२

देवास्तस्या[2]स्थितश्चक्रुर्वज्रं पर्वतसन्निभम् ।
अथ शक्रस्तदादाय नैमिशारण्यमभ्यगात् ॥ ४३

भयेन महता युक्तो वेपमानो निशागमे ।
तं ध्यानसंस्थितं वृत्रं [3]दूराद्धि त्रिदशाधिपः ॥ ४४

वज्रेण ताडयामास दधीच्यस्थिकृतेन [4]हि ।
सोऽपि वज्रप्र[5]हारेण भस्मसात्समपद्यत ॥ ४५

वृत्रो दानवशार्दूलो वह्निं प्राप्य पतङ्गवत् ।
एतस्मिन्नन्तरे देवाः संप्रहृष्टतनूरुहाः ॥ ४६

वृत्रं विनिहतं दृष्ट्वा तुष्टुवुस्त्रिदशाधिपम् ।
इन्द्रोऽपि वृत्रस्य वधात्संप्राप्तो ब्रह्म[6]हन्तृताम् ॥ ४७

स तीर्थदेवयात्राभिर्भस्मसादकरोत्ततः ।

सूतः—

एवं दधीचिर्देवानामुपकाराय भूसुराः ॥ ४८

सर्वैरपि सदा रक्ष्यमत्यजच्च कलेवरम् ।
अतः परोपकारे तु निरताः पुण्यचेतसः ॥ ४९

---

1. क. ख. कम्
2. क. ख. -स्थिना चक्रु-
3. क. ख. दूरस्थः
4. क. ख. च
5. क. ख. भावेण
6. अ. हत्यताम्

प्राणानपि त्यजन्त्येव नापकारं [1]कथञ्चन ।
[2]यशश्शरीरे बद्धाशाः स्वशरीरे तु निःस्पृहाः ॥ ५०

तस्मात्परोपकारो हि करणीयः प्रयत्नतः ।
पुरुषैरुत्तमगुणैः प्राणैरपि धनैरपि ॥ ५१

परिनिर्मथ्य वाग्जालमिति निर्णीतमेत्र [3]हि ।
नोपकारात्परो धर्मो नापकारादघं परम् ॥ ५२

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे परोपकारकथनं
नाम सप्तदशोऽध्यायः

1. क. ख. कदाचन
2. अ, यश्शरीरे
3. क. ख. ह

## ॥ अष्टादशोऽध्यायः ॥

### कूटसाक्ष्यदोषकथनम्

सूतः—

पातकानां तु[1] सर्वेषां कूटसाक्ष्यं महत्तरम् ।
पातकं प्राहुराचार्याः शृणुध्वमृषिसत्तमाः ॥ १

यः कूटसाक्ष्यं वदति स तु सर्वाधमो मतः ।
तं दृष्ट्वा क्रूरकर्माणं पश्येद्भास्करमण्डलम् ॥ २

पदा स्पृशन्तं भुजगः पञ्चास्यः संमुखागतम् ।
हन्त्यसौ कूटसाक्षी तु साधून्निरपराधिनः ॥ ३

अङ्कुशेन वशं याति मदधारायुतो गजः ।
कूटसाक्षी न केनापि वशं याति दुराशयः ॥ ४

दुःखं यत्पीडितस्यापि यत्पापं पीडकस्य च ।
सम्भूय [2]पातकं हन्ति तत्सर्वं कूटसाक्षिणम् ॥ ५

यः पक्षपाताद्वदति कूटसाक्ष्यं पुरः सताम् ।
संयुक्तोऽपि गुणैः श्लाघ्यैः संप्राप्नोति महापदम् ॥ ६

अस्मिन्नर्थे पुरावृत्तमितिहासं [3]वदामि वः ।
उक्तं सनत्कुमारेण व्यासायामिततेजसे ॥ ७

सनत्कुमारः—

गिरिराजमथाभ्येत्य मेरुं सर्वसुरालयम् ।
अपश्यद्वासवः स्कन्दं [4]सम्भूतमिव तेजसाम् ॥ ८

ततः शरवणं दृष्ट्वा कुमारममलप्रभम् ।
सुरराज्यमदाविष्टः शक्रः प्रोवाच षण्मुखम् ॥ ९

---

1. क. ख. नां हि
2. क. ख. पातयत्येवं
3. ख. पुरातनम्
4. क. ख. सङ्घात-

कस्त्वं दिव्यवपुर्बालो मेरुं पर्वतमाश्रितः ।
न मां पूजयसे दृष्ट्वा देवराजमिहागतम् ॥ १०

तमेवंवादिनं शक्रं प्राह शूलधरात्मजः ।

कुमारः—

ब्राह्मणा मां विजानन्ति सिद्धा वेदविदश्च ये ॥ ११

तपसा लब्धराज्येन न चिरा[1]दन्तमेष्यता ।
किं त्वयाजानता शक्र किं कार्यं पूजितेन [2]हि ॥ १२

शक्रः—

मत्तः परतरं नास्ति मुक्त्वा शर्वपितामहौ ।
कथमेवमहो वक्ता विबुधाधिपमागतम् ॥ १३

यदि मत्तस्त्वमात्मानं महान्तं मन्यसेऽनघ ।
मैनाकतनयो ह्येष क्रौञ्चः सिद्धनिषेवितः ॥ १४

सुविस्तीर्णो महाशैलोऽनेकनिर्झरनिस्रवः ।
एह्येहि त्वं मया सार्धं कुरु शीघ्रं प्रदक्षिणम् ॥ १५

यो वेगेनैव संयुक्तः क्रौञ्चस्यास्य प्रदक्षिणम् ।
क्षणेन कुरुते लोके स एवाधिकतां व्रजेत् ॥ १६

तच्छ्रुत्वा षण्मुखः शीघ्रं कृत्वा क्रौञ्चं प्रदक्षिणम् ।
प्रोवाच तं तदा दृष्ट्वा जेताहमिति सद्वचः ॥ १७

अहमेव हि जेतेति शक्रस्तमब्रवद्गुहम् ।
एवं तु ब्रुवतोरेव तयोः शक्रकुमारयोः ॥ १८

क्रौञ्चोऽभ्येत्य वचः प्राह किमेतदिति भूधरः ।
ततः शक्र उवाचेदं कुमारं वचनं तदा ॥ १९

एष एवावयोः क्रौञ्चो [3]जयसाक्षी महाबलः ।
नानृतं वक्ष्यति ह्येष पौत्रो [4]हिमवतो वचः ॥ २०

---

1. क. ख. -दस्त-
2. क. ख. वा
3. क. ख. जये
4. क. ख. हिमगिरेर्वचः

पृच्छ शक्र हि को दोष इत्याह ज्वलनात्मजः ।
तं शक्रः सादरं प्राह कुतर्कमचलाग्रतः ॥ २१

ततः क्रौञ्चो विमूढात्मा सञ्चिन्त्य सुचिरं ततः ।
अयं शचीशः कृतवान् मामेवाग्रे प्रदक्षिणम् ॥ २२

[1]मा वोऽस्तु संशयो देवा इत्युवाच नगाधिपः ।
तथैवं ब्रुवतस्तस्य सत्यहीनं तथा गिरेः ॥ २३

पपात शिखरं तूर्णं कुलिशेन हतं यथा ।
[2]तत्र यानि हि भूतानि सिंहाद्यानि [3]महागिरौ ॥ २४

तानि सन्त्यज्य शीघ्रं तं प्रययुः सर्वतोदिशम् ।
जहास वासवश्चा[4]मुं मनसा पूजयन् गिरिम् ॥ २५

ततश्चुक्रोध रुद्रात्मा गिरेः क्रौञ्चस्य षण्मुखः ।
न शशाक गुहं द्रष्टुं तं [5]रुष्टं वासवस्तदा ॥ २६

[6]एकस्थे तेजसीत्याशु शशिभास्करयोरिव ।
अथ शक्तिं समुत्क्षिप्य [7]कालानलसमप्रभाम् ॥ २७

चिक्षेप भगवान् स्कन्दः क्रुद्धः क्रौञ्चं जघान ह ।
ततः पपात सा शक्तिः [8]क्रौञ्चस्य शिखरे क्षणात् ॥ २८

क्षीणायुषो यथा पुंसो मृत्युः प्राणजिहीर्षया ।
स तया भिन्नमर्मा तु शक्त्या क्रौञ्चो [9]नगोत्तमः ॥ २९

सर्वतश्छिन्नसर्वाङ्गः स्रवद्रुधिरनिर्झरः ।
मूर्तिमानपतद्भूमौ संज्ञाप्राण[10]विवर्जितः ॥ ३०

---

1. क. ख. मा वास्तां
2. क. ख. तत्रासन् यानि
3. क. ख. गिरीश्वरम्
4. क. ख. -पि
5. क. ख. क्रुद्धं
6. क. ख. एकस्थ तेजसी पूर्णे
7. क. ख. यमानल-
8. क. ख. क्रौञ्चजिघांसया
9. क. ख. नगाधिपः
10. क. ख. जिगीषया

पतिं विनिहतं दृष्ट्वा पत्न्यस्तस्य [1]तु दुःखिताः ।
विलपन्त्यस्तदा [2]दीनाः पेतुः क्रौञ्चाचलोपरि ॥ ३१

मेरुर्हिमालयो विन्ध्यः कैलासो गन्धमादनः ।
पारियात्रश्च सह्यश्च निषधोदयवामनाः ॥ ३२

क्रौञ्चस्य जनकश्चापि मैनाकः पर्वतोत्तमः ।
सर्वे पर्वतराजेन्द्रा आजग्मुः शोकपीडिताः ॥ ३३

परिवार्य गिरिं क्रौञ्चं रुरुदुर्भृशदुःखिताः ।
भ्रातृपुत्रं हतं श्रुत्वा [3]तदा दे ी गिरीन्द्रजा ॥ ३४

शर्वेण सहिता क्रौञ्चं आगता त्वरयान्विता ।
अथ प्रणम्य देवेशं हिमवानचलोत्तमः ॥ ३५

[4]विज्ञापयति दीनात्मा दुःखशोकपरिप्लुतः ।
शक्रेणानेन भगवानात्मानं बहुमन्यत ॥ ३६

निधनं प्रापितः पौत्रो ममायं क्रौञ्चपर्वतः ।
अहं शोकेन सन्तप्तो यास्ये [5]क्रौञ्चगतिं चरन् ॥ ३७

सनत्कुमारः—

पितरं दुःखितं दृष्ट्वा [6]भ्रातरं बान्धवानपि ।
अभवच्छोकसन्तप्ता [7]गिरिराजसुता भृशम् ॥ ३८

अथैनां दुःखितां दृष्ट्वा शर्वः प्राह षडाननम् ।
महान्तस्त्वद्विधाः पुत्र सापराधेऽपि बान्धवे ॥ ३९

नाशुभं कुर्वते कस्मान्मातृभ्रातृसुतो हतः ।

स्कन्दः—

[8]शक्रस्यापनयादेव क्रौञ्च एष हतो मया ॥ ४०

---

1. क. ख. सुदुः-
2. क. ख. दीनं
3. क. ख. देवदेवी
4. क. ख. विज्ञापयत
5. क. ख. पौत्रगतिं त्वरन्
6. क. ख. तथान्यान्
7. क. ख. गिरिजा च जगद्धिता
8. क. ख. शक्रस्यापनवादेन !

त्वत्प्रसादादहं क्रौञ्चं जीवयामि नगोत्तमम् ।
दुष्करं न हि मे किञ्चित् तव देव सुतस्य हि ॥ ४१

इत्युक्त्वोत्तिष्ठ तिष्ठेति क्रौञ्चं प्राह षडाननः ।
उत्तस्थौ नीरुजः क्रौञ्चस्तदाश्चर्यमभूत्तदा ॥ ४२

भगवानपि सन्तुष्टः पार्वत्या सह शङ्करः ।
हिमवत्प्रमुखाः सर्वे गिरयश्च मुदं ययुः ॥ ४३

इन्द्रः प्रसादयामास नत्वा स्तुत्वा च षण्मुखम् ।
सर्वे देवाश्च गिरयः स्वानि धामानि भेजिरे ॥ ४४

दृश्यतेऽद्यापि तत्क्रौञ्चे कृतं शक्त्याचलोत्तमे ।
तस्मादात्महितप्रेप्सुर्न कुर्यात्कूटसाक्षिताम् ॥ ४५

यदि कुर्यात्प्रमादेन स याति नरकान् क्रमात् ।
नग्नो मुण्डी कपाली च भिक्षार्थी क्षुत्पिपासितः ॥
अन्धः शत्रुगृहं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥ ४६

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे कूटसाक्ष्यदोषकथनं
नाम अष्टादशोऽध्यायः

## ॥ एकोनविंशोऽध्यायः ॥

### अनुचितपदप्रार्थनदोषकथनम्

सूतः—

यः प्रकृत्याधमः क्रूरो महतां काङ्क्षते यदि ।
पदं तदपि संप्राप्तः क्षिप्रमेव विनश्यति ॥ १

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
आसीद्दैत्यपतिः कश्चित् सुगदो नाम दानवः ॥ २

हिरण्यकशिपोः पुत्रो देवदानवदुर्जयः ।
कैलासभवने रम्ये तपसोग्रेण शङ्करम् ॥ ३

भक्त्या सन्तोषयामास सोऽपि तस्मै वरं ददौ ।
सुरसिद्धमुनिभ्यश्च [1]दानवेभ्यश्च मानवात् ॥ ४

विष्णोश्च ब्रह्मणो रुद्रादवध्यत्वमवाप्तवान् ।
कदाचित्सोऽपि दैत्येन्द्रस्तपः कर्तुं महामतिः ॥ ५

सुराधिपत्यमाकाङ्क्षन् दण्डकारण्यमभ्यगात् ।
स ततापं तपस्तीव्रं वायुभक्षो जितेन्द्रियः ॥ ६

प्रार्थयन् सुरराज्यं तद[2]सुरो दण्डके भयात् ।
मलोपचितसर्वाङ्गश्चीरवासा जटाधरः ॥ ७

छित्त्वा छित्त्वा निजं देहमग्नौ जुह्वन् दिवानिशम् ।
चुक्रुशुः सिद्धगन्धर्वाः सुराश्च परमर्षयः ॥ ८

तीव्रं तस्य तपो दृष्ट्वा दानवस्य भयातुराः ।
विघ्नान् वितेनिरे सर्वे [3]तपसः सुरपुङ्गवाः ॥ ९

---

1. क. ख. मानवेभ्यश्च दानवः
2. क. ख. दतुले दण्डके हरात्
3. क. ख. तपसः पुत्र-

रत्नैः स्त्रीभिर्वरैश्चापि लोभयामासुरादरात् ।
वरैश्च विविधाकारैर्न क्षोभमगमत्स तु ॥ १०

नाकरोद्व्रतभङ्गञ्च पादाङ्गुष्ठेन संस्थितः ।
भगिन्यो मातरः पत्न्यो मायावेषधराः स्त्रियः ॥ ११

मायावेषधरा दैत्या हन्यमाना विचुक्रुशुः ।
अभ्यधावन्त एवाशु त्राहि त्राहीति वै भिया ॥ १२

नाकरोद्व्रतभङ्गञ्च विघ्नैरुद्वेजितोऽपि सः ।
ततः पितामहः प्राह प्रत्यक्षो दानवं वचः ॥ १३

दैत्येन्द्र किं प्रार्थयसे वरमत्यन्तदुर्लभम् ।
तपसा तव तुष्टोऽहं प्रयच्छामि वदाशु तत् ॥ १४

दैत्यः—

वरं ददासि चेन्मह्यं यदि तुष्टोऽसि पद्मज ।
प्रार्थयेऽहं सुरेशत्वं त्वत्तो नान्यद्वृणे ह्यहम् ॥ १५

सूतः—

तेनेदं प्रार्थितो ब्रह्मा तथेत्युक्त्वा जगाम ह ।
एवं लब्धवरो भूत्वा ब्रह्मणः स महासुरः ॥ १६

महता दैत्यसैन्येन संयुक्तः स्वर्गमागमत् ।
ते तस्यागमनं दृष्ट्वा वरदानोद्धतस्य च ॥ १७

हित्वा त्रिविष्टपं जग्मुर्यत्र ब्रह्मा ततः सुराः ।
यज्ञैर्यजन्ति ये केचित् पूजयन्ति च ये पितॄन् ॥ १८

सर्वानृषींश्च देवांश्च [1]दानवो वशमानयत् ।
ध्वंसितान्यग्निहोत्राणि ऋत्विजश्चावमानिताः ॥ १९

देवेन्द्रप्रमुखा देवाः समरे निर्जितास्तदा ।
देवैश्च मुनिभिः सार्धं क्रुद्धैरपि तपस्विभिः ॥ २०

---

1. ख. दानवान्वशमानयत् क. दानवा वशमानयन्

तमवध्यं [1]हि विज्ञाय शरण्यं शार्ङ्गिणं [2]ययुः ।
समेत्य ते शरण्यं तं तुष्टुवुः शार्ङ्गधारिणम् ॥ २१

ततः संस्तूयमानस्य शार्ङ्गपाणेः सुरर्षिभिः ।
दिव्यगात्रात्समुदिता सुन्दरा नाम कन्यका ॥ २२

सर्वलक्षणसम्पन्ना सर्वाभरणभूषिता ।
शार्ङ्गपाणेः [3]कलां दिव्यां ददृशुस्ते महर्षयः ॥ २३

सा तानुवाच वचनं सकलान् सकलेश्वरी ।
प्रहस्य सुन्दरा नारी देवानां सन्निधौ तदा ॥ २४

[4]अद्य तं दानवं दुष्टं घातयिष्यामि वेगतः ।
इत्युक्त्वा सुगतं योद्धुमाह्वयामास वै क्षणात् ॥ २५

आहूतो विष्णुकलया सुगदः क्रोधमूर्छितः ।
स्वर्गाद्युद्धा[5]वभीतश्च दण्डकारण्यमागमत् ॥ २६

तं दृष्ट्वाचलसङ्काशं कृतान्तमिव दुर्जयम् ।
मोहयामास रूपेण दानवं सा हरेः कला ॥ २७

तां दृष्ट्वा तु कलां विष्णो[6]रुन्मत्त इव संस्थितः ।
त्यक्त्वा प्रहरणं घोरं चकमे चारुहासिनीम् ॥ २८

दैत्यः—

निर्जिताः समरे देवाः सिद्धाश्च परमर्षयः ।
मया सत्त्वान्महाभागे न हनिष्ये प्रियां शुभाम् ॥ २९

सुन्दरा—

[7]सुरसिद्धमुनीनाञ्च [8]त्वया यद्याहृताः स्त्रियः ।
लीलया दर्शयिष्यामि तस्येदं कर्मणः फलम् ॥ ३०

---

1. क. ख. विधिर्ज्ञात्वा
2. क. ख. ययौ
3. क. कला दिव्या
4. अ. अत्यन्तं
5. क. य हृतया
6. क. ख. रुन्मत्तवयसि स्थितः
7. अय श्लोकः ख. पुस्तके नास्ति
8. क. ख. त्वरयाद्या-

सूतः—

इत्युक्त्वा दानवं घोरं खड्गेनाभिजघान तम् ।
सुन्दरां सोऽपि गदया जघानोरसि [1]तां तदा ॥ ३१

[2]तयोर्महदभूद्युद्धं सुरासुरभयङ्करम् ।
[3]पश्यतां सर्वदेवानां ततः शस्त्रास्त्रसङ्कुलम् ॥ ३२

गदां छित्त्वास्य दैत्यस्य खड्गाग्रेणैव लीलया ।
पश्यतां सर्वदेवानां सुन्दरा सा जहास तम् ॥ ३३

तत् कर्म विफलं दृष्ट्वा शब्दं कृत्वा [4]महाबलः ।
[5]खमुत्पपात वेगेन शूलमुद्यम्य भीषणम् ॥ ३४

ततस्तेनैव तां देवीमाजघानासुरो बली ।
तं शूलमासुरं [6]दृष्ट्वा खड्गेनाहत्य सुन्दरा ॥ ३५

खड्गेन [7]दानवेन्द्रस्य शिरश्छित्त्वा न्यपातयत् ।
निहता दानवास्तस्य तेऽपि शस्त्रास्त्रवृष्टिभिः ॥ ३६

तं दृष्ट्वा निहतं देवाः पुष्पवृष्टिं वितेनिरे ।
तां पूजयित्वा [8]सहसा स्वस्थानं प्रतिपेदिरे ॥ ३७

सूतः—

तस्मान्न प्रार्थयेन्नीच उत्तमानां पदं महत् ।
यदि प्राप्नोति तत् स्थानं क्षिप्रमेव विनश्यति ॥ ३८

देवाल्लब्धवरो वापि तपस्तप्त्वा महत्तरम् ।
आत्मयोग्यं पदं काङ्क्षेन्न काङ्क्षेन्महतां पदम् ॥ ३९

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे अनुचितपदप्रार्थनादोषकथनं नाम एकोनविंशोऽध्यायः

---

1. क. ख. वै
2. क. ख. द्वयो-
3. ख. पुस्तके इदमर्धमनन्तर-श्लोके पूर्वार्धे च नास्ति
4. क. ख. महासुरः
5. क. ख. खड्गमुत्पत्य
6. क. ख. छित्वा
7. क. ख. दानवं वेगात्
8. क. ख. देवाः स्वं स्वं स्थानं

## ॥ विंशोऽध्यायः ॥

### स्वाश्रयापरित्यागकथनम्

सूतः—

श्रुतिस्मृतिपुराणेषु सेतिहासेषु च श्रुतम् ।
निजाश्रयापरित्यागमाहात्म्यं कथयामि वः ॥ १

तस्य धर्मो महानास्ते तपस्तस्मिन् प्रतिष्ठितम् ।
सर्वात्मनापि यो धीरो न जहाति निजाश्रयम् ॥ २

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
पूर्वं बलिं [1]ह्यर्थयित्वा वामनस्तु महामतिः ॥ ३

लक्ष्मीमाप्तुम[2]शक्तोऽभूदासुरश्रीपरिग्रहात् ।
विचार्य पद्मभूर्देवानिन्द्रादीनित्युवाच ह ॥ ४

यूयं गच्छत तीर्थानि वामनेन महात्मना ।
येन तस्य भवेच्छक्तिर्लक्ष्मीमाप्तुं हरेः पुनः ॥ ५

इत्युक्ता ब्रह्मणा देवाः पुरस्कृत्य तु वामनम् ।
तीर्थयात्रां प्रकुर्वाणाः प्राप्ताः पुष्करिणीं शुभाम् ॥ ६

उत्फुल्लपङ्कजवनीफुल्लकैरवशोभिताम् ।
भ्रमरोन्मत्तगीताढ्यां [3]हंससारसराविणीम् ॥ ७

[4]यस्यां स्नात्वा नराः सर्वे स्वशरीरेण संयुताः ।
विमाने[5]नार्कवर्णेन गच्छन्ति त्रिदशालयम् ॥ ८

तामासाद्य तदा देवाः सर्वे ते ऋषिभिः सह ।
पद्मानि जगृहुश्चैव मृणालानि बिसानि च ॥ ९

---

1. क. ख. दर्शयित्वा
2. क. ख. शक्तः स्वामासु-
3. क. ख. हंसारावविराविणीम्
4. क. ख. तस्यां
5. क. ख. -नाभिवर्णेन

अथ तत्र बृहत्पद्मं विकचं सुमनोहरम् ।
सहस्रपत्रसंछन्नं प्राप्यागस्त्यः प्रहृष्टवान् ॥ १०

तस्या[1]न्तिकेऽपि तत् क्षिप्य तत्र स्नात्वा यथासुखम् ।
जग्राह तच्च देवेन्द्रो [2]ह्यदृष्टः केनचित्प्रभुः ॥ ११

[3]अथागस्त्यः समुत्तीर्य स्वपद्मं नैव दृष्टवान् ।
सर्वांश्च तानुपामन्त्र्य प्राहेदं स महातपाः ॥ १२

अगस्त्यः—

मम पद्ममहो देवाः [4]केनात्तं सुमनोहरम् ।
[5]ततस्ते ऋषयः सर्वे देवताश्च तदा समे ॥ १३

प्रत्ययान् विविधांश्चक्रुरेकैकं स्वेन [6]संयुताः ।

इन्द्रः—

स यज्ञैर्यजतामिष्टैर्बहुभिश्चाप्तदक्षिणैः ॥ १४

वसेत्स्वर्गे स नियतं यो वै हरति पङ्कजम् । ?

सूतः—

ततस्ते मेनिरे सर्वे देवेन्द्रेण महात्मना ॥ १५

गृहीतं पङ्कजं विप्रा इन्द्रश्चेदमुवाच च ।
ऋषीणां धर्मतत्त्वानि ज्ञातुमेतन्मया हृतम् ॥ १६

अपापोऽयं कृतस्तस्माद् गृहाणेदं जलोद्भवम् ।
इत्युक्त्वा पङ्कजं प्रादादगस्त्याय शचीपतिः ॥ १७

ततस्ते तत्र सन्तुष्टा जग्मुस्तीर्थान्यनेकशः ।
[7]तथापश्यंस्ततो वृक्षमेकं शुष्कतरं द्विजाः ॥ १८

कोटरेऽथ शुकं तस्य [8]भ्राम्यन्तं व्याकुलेन्द्रियम् ।
ते दृष्ट्वा तमपृच्छन् हि महेन्द्रेण दिवौकसः ॥ १९

---

1. क. ख. -स्तीरे विनिक्षिप्य ततस्तस्थौ
2. क. ख. अदृष्टं
3. क. ख. अथागस्त्योऽब्रवीद्देवान्कमलं
4. क. ख. केन चात्तं मनोहरम्
5. क. ख. संप्राप्ता
6. क. ख. सुव्रताः
7. क. ख. अथ पश्यन्ति ते
8. क. ख. भ्राम्यन्तं

खगेश्वर नगे त्वस्मिन् कस्मात्तिष्ठसि नीरसे ।
अपुष्पफलपत्रेऽतिशुष्के निरुपजीवने ॥ २०

शुकः—

एष वृक्षः पुरा ह्यासीत् सुमहान् कल्पवृक्षकः ।
फलैरमृतकल्पैश्च [1]चिरश्चाप्युपजीवितम् ॥ २१

दशामिमां पुनः प्राप्य कालेनैव विनश्यति ।
जह्यादेनं कथं [2]प्राप्तं कृच्छ्रं वै मादृशः पुनः ॥ २२

कृतघ्नः स्यामहं देवा [3]वृक्षमेनं परित्यजन् ।
[4]ये लोका ह्यन्यवृक्षस्य ते मे सन्तु शचीपते ॥ २३

इन्द्रः—

[5]ज्ञानवानसि मेधावी तस्मादेतद्ब्रवीमि ते ।
कथं मूढमिवात्मानं करोषि खगपार्थिव ॥ २४

वनस्पतिरथासारो धर्मं न स्वं [6]परित्यज ।
अबुद्धिरेव पक्षीन्द्र स्वभावमनुवर्तसे ॥ २५

वसन्तु [7]चैव खादन्तु फलानि च यथासुखम् ।

शुकः—

सचेतनो यथाग्निर्वै वायुरापश्च नित्यशः ॥ २६

[8]न तथा सुरशार्दूल वृक्षगुल्मलतादयः ।
विहितो ह्येष संसारः सर्वेषामेव कर्मिणाम् ॥ २७

तस्मादचेतनत्वं हि वृक्षेष्वेव सुरेश्वर ।
तथा च बुद्धिं वृक्षाणां कथं कुर्याम सर्वशः ॥ २८

उपकारांस्तु भूतानामिति मे त्वं निशामय ।
स्वयम्भु[9]रेतानवदद्वृक्षान् सृष्ट्वा महायशाः ॥ २९

---

1. क. ख. चिरं प्राप्योप-
2. क. ख. प्राप्तः
3. क. मृतमेनं
4. क. ख. एकाप्यस्पष्टभावस्य
5. क. ख. प्रज्ञावा-
6. क. ख. परित्यजेत्
7. क. ख. समखादन्तु?
8. अ. पुस्तके 27, 28 तमौ श्लोकौ न स्तः
9. क. अ. रादाववदत्

प्रजानामुपकाराय [1]वर्तध्वमिति सर्व[2]तः ।
ततस्ते फल[3]मूलैश्च प्रवालादिभिरङ्किताः ॥ ३०

उपकाराय वर्तन्ते सर्वभूतेषु लोकप ।
वायुरग्निस्तथापश्च किं [4]तवाविदितं प्रभो ॥ ३१

बुद्धिपूर्वं प्रवर्तन्ते महाबुद्धियुता[5]स्तथा ।

इन्द्रः—

[6]कुतस्तवैवं विज्ञानं [7]को धर्मः कश्च वै श्रमः ॥ ३२

एतद्वेदितुमिच्छामि कथयस्व खगोत्तम ।

शुकः—

जन्मप्रभृति देवेश मित्रद्रोहाय वै न मे ॥ ३३

बुद्धिः समभवन्नित्यं मृत्यावपि समागते ।
मातापितृरतश्चाहं स्वदारनिरत[8]स्सदा ॥ ३४

ऋतु[9]कालं न त्यजामि न भूतेष्ववमानिता ।
न [10]क्षेपयामि धान्यानि परेषां देवताधिप ॥ ३५

तेन मे [11]ज्ञानममलं प्रवृत्तं सुरसत्तम ।

इन्द्रः—

[12]तुष्टोऽस्मि तव सद्बुद्धया त्वनया [13]हि खगोत्तम ॥ ३६

वरं वृणीष्व दास्यामि यद्भवान् मन्यते शुभम् ।

शुकः—

लोकान्न [14]चाहं गच्छामि विमानं न च मे सुखम् ॥ ३७

---

1. क. ख. वर्धध्व-
2. क. ख. शः
3. क. ख. पुष्पैश्च
4. क. ख. तथा-
5. क. ख. यथा
6. क. ख. कृत-
7. क. ख. केन धर्मस्य वै
8. क. ख. स्तथा
9. क. ख. काले
10. क. ख. क्षेपयन्ति?
11. क. ज्ञानमखिलं ख. ज्ञातमखिलं
12. क. ख. प्रीतोऽस्मि
13. क. ख. विहगो-
14. क. ख. चाहमिच्छामि

प्रयाचितं प्रयच्छ त्वं जीवतादेष वै [1]द्रुमः ।
सद्भावं तस्य तज्ज्ञात्वा सत्वश्च सुरसत्तमः ॥ ३८

चकार च यथापूर्वं वृक्षं सर्वगुणान्वितम् ।
शुकश्च कर्मणा तेन दृढभक्तिरभूत्पुनः ॥ ३९

स्वाश्रयस्यापरित्यागाद्ब्रह्मलोकं जगाम ह ।
शक्रोऽप्येवं वरं दत्त्वा वामनेन महात्मना ॥ ४०

तीर्थयात्राप्रसङ्गेन विचचार वसुन्धराम् ।
वामनोऽपि महाभागः सार्धं देवैस्सवासवैः ॥
तीर्थयात्रां विधाया[2]शु लक्ष्मीं पुनरवाप्तवान् ॥ ४१

सूतः—

तस्मात्सर्वप्रयत्नेन स्वाश्रयं न परित्यजेत् ।
[3]श्रीभूकामो महाभागा इह लोके परत्र च ॥ ४२

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे स्वाश्रयापरित्यागकथनं नाम विंशोऽध्यायः

1. अ. नगः
2. क. ख. थ
3. क. ख. श्रेयस्कामो महाभाग

## ॥ एकविंशोऽध्यायः ॥

### कृतघ्ननिन्दा

सूतः—

कृतज्ञेन सदा भाव्यं पुरुषेण विजानता ।
पापिष्ठानां[1]तु सर्वेषां कृतघ्नस्तु विशिष्यते ॥ १

सर्वेषामपि पापानां निष्कृतिः कथिता बुधैः ।
सर्वेष्वपि च शास्त्रेषु कृतघ्ने नास्ति निष्कृतिः ॥ २

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
ब्राह्मणो मध्यदेशीयः कृष्णाङ्गो ब्रह्मवर्जितः ॥ ३

हिंसापरो घृणाहीनः सदा प्राणिवधे रतः ।
कुटुम्बार्थेन[2] दस्यूनां सहवासमरोचयत् ॥ ४

गौतमः सन्निकृष्टेन दस्युना स समोऽभवत् ।
[3]अत्रैव वसतस्तस्य तस्मिन् ग्रामे सुखं तदा ॥ ५

अगच्छन् बहवो मासा निघ्नतः प्राणिनो बहून् ।
कदाचिद्गौतमोऽगच्छद्धनार्थी दस्युतां गतः ॥ ६

[4]समुद्रगान् स वणिजस्ततोऽपश्यत् स्थितान् पथि ।
तेन [5]सार्थेन महता स ययौ सागरं प्रति ॥ ७

स तु सार्थो दैवयोगात् कस्मिंश्चिद्गिरिगह्वरे ।
मत्तेन द्विरदेनाथ निहतः प्रायशोऽभवत् ॥ ८

ततः स च परिभ्रष्टः [6]सार्थोद्देशात्तदात्मनः ।
कान्दिशीको जीवितार्थी प्रदुद्रावोत्तरां दिशम् ॥ ९

---

1. क. ख. च
2. क. ख. स द-
3. क. ख. तत्रैव
4. क. ख. सामुद्र-
5. अ. सार्धं स
6. क. ख. सार्थो देशान्तरर्थित

आससाद वनं दिव्यं महत्पुष्पितपादपम् ।
ततोऽपश्यत्सुरम्यं तु न्यग्रोधञ्च फलान्वितम् ॥ १०

शाखाभिरनुरूपाभिः शोभितं चित्रसन्निभम् ।
तमासाद्य मुदा युक्तस्तस्याधः समुपाविशत् ॥ ११

स तु विप्रः परिश्रान्तः स्पृष्टः पुण्येन वायुना ।
सुखमासाद्य सुष्वाप भास्करश्चास्तमभ्यगात् ॥ १२

ततोऽस्तं भास्करे प्राप्ते सन्ध्याकाल उपस्थिते ।
आजगाम स्वभवनं ब्रह्मलोकात्खगोत्तमः ॥ १३

नालीजङ्घ इति ख्यातो दयितो ब्रह्मणः सखा ।
बकराजो महाप्राज्ञः काश्यपस्यात्मसम्भवः ॥ १४

[1]राजधर्म इति ख्यातः सत्यसन्ध इति प्रियः ।
तमागतं स्वभवनं दृष्ट्वा प्राह मुदान्वितः ॥ १५

बकराजः—

स्वागतं [2]भवते विप्र दिष्टया प्राप्तोऽसि मे [3]गृहान् ।
अस्तं च सविता [4]याति सन्ध्येयं समुपस्थिता ॥ १६

मम त्वं निलयं प्राप्तः प्रियातिथिररिन्दम ।
पूजितो यास्यसि सुखं विधिदृष्टेन कर्मणा ॥ १७

एवमुक्त्वा स तु बको बृसीं च समकल्पयत् ।
वह्निञ्च सुतरां दीप्तं पक्वशाकफलादिकम् ॥ १८

स गौतमायातिथये [5]तथा चान्नमकल्पयत् ।
ततस्तृप्तञ्च तं विप्रं प्रीतात्मानं महामनाः ॥ १९

श्रमापनय[6]नार्थं च पक्षमभ्यामभ्यवीजयत् ।
ततो विश्रान्तमासीनं गोत्रप्रश्नमपृच्छत ॥ २०

---

1. अ. राजा धर्म
2. क. ख. भवतो
3. क. ख. गृहम्
4. क. ख. यातः
5. क. ख. तदान्नमुप-
6. क. ख. -नार्थाय पक्षाभ्यामभ्य-

[1]सोऽब्रवीद्गौतमोऽस्मीति ब्राह्मणोऽस्मीत्युदाहरत् ।
तस्मै पर्णमयीं शय्यां दत्त्वा वाक्यमथाब्रवीत् ॥ २१

पप्रच्छ काश्यपो वाग्मी तस्यागमनकारणम् ।
ततोऽब्रवीद्गौतमस्तु दरिद्रोऽहं महामते ॥ २२

समुद्रगमनाकाङ्क्षी द्रव्यार्थमिह चागतः ।
[2]ततस्तं काश्यपः प्रीत्या नोत्कण्ठां कर्तुमर्हसि ॥ २३

चतुर्विधा ह्यर्थगतिर्बृहस्पतिमते यथा ।
मित्रं रूप्यं हिरण्यञ्च [3]कृषिश्चेति चतुर्विधा ॥ २४

प्रादुर्भूतोऽस्मि ते मित्रं सुहृत्त्वञ्च महत्तरम् ।
सोऽहं तथा यतिष्ये त्वं भविष्यसि यथार्थवान् ॥ २५

ततः प्रभातसमये सुखं पृष्ट्वाब्रवीदिदम् ।
गच्छ सौम्य पथानेन कृतकृत्यो भविष्यसि ॥ २६

इतस्त्रियोजने विप्र राक्षसाधिपतिर्महान् ।
विरूपाक्ष इति ख्यातः सखा मम महाबलः ॥ २७

तं गच्छ द्विजमुख्य त्वं मम वाक्यप्रचोदितः ।
स कामानखिलांस्तुभ्यं दाता नास्त्यत्र संशयः ॥ २८

इत्युक्तः प्रययौ विप्रो गौतमो विगतक्लमः ।
ततो [4]मेरुव्रजं नाम नगरं शैलतोरणम् ॥ २९

प्रहितः सुहृदा राजन् प्रविश्य गृहमुत्तमम् ।
राक्षसेन्द्रेण पृष्टः [5]स वेदशास्त्रकुलानि च ॥ ३०

पृष्टो [[6]वेदान्] स नाज्ञासीद्गोत्रमात्रमथाब्रवीत् ।
ततः स्वाध्यायहीनस्य ह्याचाररहितस्य च ॥ ३१

---

1. अयं श्लोकः अ. पुस्तके नास्ति
2. क. ख. तं काश्यपोऽब्रवीत्
3. क. ख. बुद्धिश्चेति
4. क. ख. मेरौ व्रजं-
5. क. ख. -सन्वे-
6. अ. क. ख. राजन्

गोत्रमात्रविदो [1]राजा निवासं समपृच्छत ।
क्व ते निवासः कल्याणी किङ्गोत्रा ब्राह्मणी च ते ॥ ३२

गौतमः—

मध्यदेशे प्रसूतोऽहं वासो मे शबरा[2]लयः ।
मम शूद्रा पुनर्भार्या सत्यमेतद्ब्रवीमि ते ॥ ३३

ततो राजा विममृशे कथं कार्यमिदं भवेत् ।
कथं वा सुकृतं स्यान्म इति बुद्ध्या [3]ऽभ्यचिन्तयत् ॥ ३४

अयं वै जन्मना विप्रः सुहृत्तस्य महात्मनः ।
[4]संप्रेषितश्च तेनायं काश्यपेन महात्मना ॥ ३५

तस्य प्रियं करिष्यामि स हि मामाश्रितस्तथा ।
कार्तिक्यामथ भोक्तारः सहस्रं मे द्विजोत्तमाः ॥ ३६

तत्रायमपि भोक्तास्तु देयमस्मै च मे धनम् ।
ततः सहस्रं विप्राणां विदुषां समलङ्कृतम् ॥ ३७

स्नातानामनुलिप्तानां [5]महाडम्बरवाससाम् ।
आगतानां द्विजानाञ्च विरूपाक्षो महामतिः ॥ ३८

यथार्हं प्रतिजग्राह विधिदृष्टेन कर्मणा ।
ततो महार्हैस्तै रत्नैरर्चितास्ते [6]यथार्हणम् ॥ ३९

ब्राह्मणा हृष्टवदनाः सुप्रीतास्तु तदाभवन् ।
तत्र [7]भुक्त्वा गौतमोऽपि द्रव्यमादाय [8]सत्वरम् ॥ ४०

कृच्छ्राच्च तद्वहन् [9]धीरो न्यग्रोधं समुपागमत् ।
ततस्तमभ्यगाद्विद्वान् राजधर्मा खगोत्तमः ॥ ४१

---

1. क. ख. राजन्
2. क. ख. -लये
3. क. ख. ह्य-
4. अर्धमिदं अ. पुस्तके नास्ति
5. क. ख. महतां वरवाससाम्
6. क. ख. -यथार्हतः
7. क. ख. भक्तया
8. क. ख. सत्वरः
9. क. ख. वीरो

तस्य पक्षाग्रविक्षेपैः श्रमं व्यपनयत्तदा ।
पूजां चैवाकरोद्धीमान् भोजनञ्च यथाविधि ॥ ४२

ततस्तौ संविदं कृत्वा खगेन्द्रद्विजसत्तमौ ।
गौतमश्चिन्तयामास रात्रौ तस्य समीपतः ॥ ४३

हाटकस्य च रत्नस्य भारोऽयं सुमहान् मया ।
गृहीतो लोभमोहाद्यैर्दूरं च गमनं मम ॥ ४४

न चास्ति पथि भोक्तव्यं प्राणसंधारणं क्वचित् ।
किं कृत्वा [1]सुहृदं हन्यामिति चिन्तापरोऽभवत् ॥ ४५

कृतघ्नो गौत[2]मश्चापि मनस्येवमचिन्तयत् ।
अयं खगपतिः पार्श्वे मांसराशि[3]युतो महान् ॥ ४६

इमं हत्वा गृहीत्वा च [4]भोक्ष्येऽहं मांसमादरात् ।
स चापि पार्श्वे सुष्वाप विश्वस्तो बकराट् [5]तदा ॥ ४७

हत्वा तं [6]पक्षमरोमाणि [7]हृत्वाग्नावपचत्तदा ।
तं गृहीत्वा सुवर्णञ्च ययौ दूरतरं द्विजः ॥ ४८

ततो दाक्षायणसुतं नागतं द्विजसत्तमम् ।
द्विरात्रमुभयोः सन्ध्योर्नाभ्यगच्छन्ममालयम् ॥ ४९

स्वाध्यायेन वियुक्तोऽपि ब्रह्मवर्चसि[वर्चोवि]वर्जितः ।
स गतस्तत्र मे शङ्का हन्यात्तं स द्विजाधमः ॥ ५०

दुराचारः स दुर्बुद्धिः कृष्टो दस्युरिवापरः ।
पुत्र शीघ्रमितो गत्वा राजधर्मनिवेशनम् ॥ ५१

ज्ञायतां स विशुद्धात्मा यदि जीवति मा चिरम् ।
स एवमुक्तस्त्वरितो रक्षोभिस्त्वरितो ययौ ॥ ५२

---

1. क. ख. सुकृतं हि स्यादिति
2. क. ख. मो विप्रो
3. क. ख. चितो
4. क. ख. तुष्येऽहं
5. क. ख. सदा
6. क. ख. पक्ष-
7. ख. कृत्वा

न्यग्रोधे राजधर्माणमपश्यन्निहतं द्विजम् ।
रुदित्वा बहु तत्रैव विलप्य च स राक्षसः ॥ ५३

ततो रोषसमाविष्टो गौतमग्रहणाय वै ।
[1]राक्षसान् प्रेषयामास विरूपाक्षसुतः प्रभुः ॥ ५४

गृहीतो गौतमः पापो रक्षोभिः क्रोधमूर्छितैः ।
राजधर्मशरीरस्य कङ्कालं चाप्ययोमयम् ॥ ५५

पार्थिव[2]स्य गृहे न्यस्तः कङ्कालो राजधर्मणः ।
तं दृष्ट्वा विमना राजा सामात्यः सगणोऽभवत् ॥ ५६

राजा चैवाब्रवीत्पुत्रं पापोऽयं वध्यतामिति ।
दासेभ्यो दीयतामेष मित्रद्रुक् पुरुषाधमः ॥ ५७

सूतः—

दासाः सर्वे [3]तथाभूता यातुधानास्तथापरे ।
नेच्छन्ति स्म कृतघ्नं तं खादितुं पुरुषाधमम् ॥ ५८

ततस्ते कुपिता दासाः शूलपट्टसपाणयः ।
खण्डशो विकृतं [4][कृत्वा] क्रव्यादेभ्यो ददुस्तदा ॥ ५९

क्रव्यादाश्चापि विप्रेन्द्रा नेच्छन्ति स्म द्विजाधमम् ।
मृतानपि हि क्रव्यादाः कृतघ्नान्नोपभुञ्जते । ६०

ब्रह्मस्वहरणे [5]घोरे ब्रह्मघ्ने गुरुतल्पगे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ६१

मित्रद्रुहं कृतघ्नञ्च नृशंसं च नराधमम् ।
क्रव्यादाः क्रिमयश्चैव [6]भुञ्जते नैव वै [7]तथा ॥ ६२

पापयुक्तस्य [8]चास्माभिरयुक्तं मांसभक्षणम् ।
ततस्तु ब्रह्मवचनादिन्द्रस्य बकराडिह ॥ ६३

---

1. अर्धमिदं अ पुस्तके नास्ति
2. क. ख. स्याग्रतो न्यस्तं कंकालं
3. क. ख. तथाहूताः
4. क. हृताः ख. हार्ताः अ. वातं
5. क. ख. चोरे
6. क. ख. नोपभुंजन्ति
7. क. तदा
8. क. ख. चात्मापि न

तेनाप्यमृतसिक्तश्च पुनः सञ्जीवितो बकः ।
राजधर्मा[1]पि तं प्राह सहस्राक्षमरिन्दमम् ॥ ६४

गौतमो ब्राह्मणश्चासौ मुच्यतां मे प्रियः सखा ।
[2]तस्य वाक्यं समाज्ञाय कौशिकः सुरसत्तमः ॥ ६५

सञ्जीवयामास तदा कृतघ्नञ्च तदाज्ञया ।
गौतमश्चाप्यनुज्ञाय प्रीतोऽथ गमनोत्सुकः ॥ ६६

[3]प्रतीतः संगतः सौम्यो राजधर्मा स्वमालयम् ।
गत्वा मित्रं विरूपाक्षं दृष्ट्वा प्रीतमनाभवत् ॥ ६७

विरूपाक्षोऽपि सन्मित्रं पुनः प्राणेन सङ्गतम् ।
दृष्ट्वा विस्मयमापन्नः प्रीतिमानभवत्पुनः ॥ ६८

नृशंसो गौतमो मुक्तो मित्रद्रुक् पुरुषाधमः ।
आदायोपस्करं यातः स तत्र शबरालयम् ॥ ६९

सूतः—

तस्मात्कृतघ्नो लोकेऽस्मिन् गर्हितः सर्वकर्मसु ।
ब्रह्मघ्ने च सुरापे च तथा सत्यव्रतेऽपि च ॥ ७०

निष्कृति[4]र्विद्यते राजन् कृतघ्ने नास्ति निष्कृतिः ।
कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् ॥ ७१

अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ।
सेतुं दृष्ट्वा समुद्रस्य भ्रूणहापि प्रमुच्यते ॥ ७२

ब्रह्महापि सुरापी च कृतघ्नो नैव मुच्यते ।
तस्मात् कृतघ्नता विप्रा न कार्या [5]सर्वदा बुधैः ॥ ७३

कृतज्ञेन सदा भाव्यं धर्ममोक्षार्थसिद्धये ।
कृतज्ञः सर्वलोकेषु पूज्यो भवति सर्वदा ॥ ७४

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे कृतघ्ननिन्दा नाम
एकविंशोऽध्यायः

---

1. क. -पि संप्राह ख. हि संप्राह
2. क. सत्य-
3. क. ख. प्रीतितः
4. क. ख. विहिता
5. क. ख. सर्वथा

## ॥ द्वाविंशोऽध्यायः ॥

### आशानिन्दा

ऋषयः—

कथमाशा [1]समुद्भूता का च सा परिकीर्तिता ।
[2]संशयो नो महानेष समुत्पन्नो महामते ॥ १

सूतः—

आशा सुमहती नित्या प्राणिनामुपजायते ।
पुत्रमित्रकलत्रार्थं राज्यार्थञ्च विशेषतः ॥ २

तस्यां वितन्यमानायां दुःखमेव न संशयः ।
अस्मिन्नर्थे पुरावृत्तमितिहासं [3]वदामि वः ॥ ३

सुमित्रो नाम राजर्षिर्हैहयो मृगयां गतः ।
निजघान मृगान् सर्वान् बाणे[4]न नतपर्वणा ॥ ४

एको मृगो बाणविद्धो ययावति[5]पराक्रमः ।
स च राजा बली तूर्णं [6]ससार च मृगानुगः ॥ ५

ततो [7]नदान्नदीश्चैव पर्वतांश्च वनानि च ।
अतिक्रम्याभ्यतिक्रम्य ससारैवं वनेचरः ॥ ६

[8]सर्तुकामो मृगो राजन्नासाद्यासाद्य पार्थिवम् ।
पुनरभ्येति जवनो बाणैर्विद्धो वनेचरः ॥ ७

प्रक्रीडन्निव विप्रेन्द्राः पुनरभ्येति चान्तिकम् ।
पुनर्जवं समास्थाय ससार मृगयूथपः ॥ ८

---

1. क. ख. समुत्पन्ना
2. क. ख. संशयस्तु
3. क. ख. निबोधत
4. ख. नानत अ. न तव वर्मणा
5. क. ख. पराक्रमम्
6. क. ख. स ससार
7. क. ख. नदनदी
8. क. ख. स तु कामो मृगो राज-

तस्य मर्मच्छिदं घोरं सुमित्रोऽमित्रकर्शनः ।
समादाय शरश्रेष्ठं कार्मुकाद्विससर्ज [1]ह ॥ ९

ततो गव्यूतिमात्रेण स्थित्वा स मृगयूथपः ।
तस्य बाणपथं त्यक्त्वा गतवान् प्रहसन्निव ॥ १०

तस्मिन्निपतिते बाणे भूमौ प्रज्वलिते तदा ।
[2]प्रविवेश तदारण्यं मृगो राजाप्यभिद्रवन् ॥ ११

प्रविश्य तु महारण्यं तापसानामथा[3]श्रमम् ।
आससाद ततो राजा [4]श्रान्ताश्वः श्रान्तसारथिः ॥ १२

तं [5]कार्मुकधरं दृष्ट्वा श्रमार्तं क्षुधितं तदा ।
समेत्य ऋषयस्तस्मै चक्रुः पूजां यथाविधि ॥ १३

ऋषयो राजशार्दूलमपृच्छंस्तत्प्रयोजनम् ।
पदातिर्बद्धनिस्त्रिंशस्तपोवनमुपागतः ॥ १४

विज्ञातुमेतदिच्छामः कुतः प्राप्तोऽसि मानद ।

राजा—

हेहयानां कुले जातः सुमित्रोऽमित्रकर्शनः ॥ १५

चरामि मृगयूथानि बाणैर्निघ्नन् सहस्रशः ।
जवेन महता युक्तः सामात्यः सावरोधकः ॥ १६

मृगश्च विद्धो बाणेन [6]भयाच्चरति शल्यवान् ।
तं द्रवन्तमनुप्राप्तो वनमेव यदृच्छया ॥ १७

भवतामाश्रमं प्राप्तो [7]हताशो भ्रष्ट[8]लक्षणम् ।
दुःखं करोति मे तीव्रं [9]हताशा महती तथा ॥ १८

---

1. क. ख. सः
2. इदमर्धं अ पुस्तके नास्ति
3. क. ख. -श्रयम्
4. क. ख. श्रान्तस्संश्रान्त-
5. अ. कार्मकं रथं
6. क. भयादटति
7. क. ख. हताश्वो
8. क. ख. लक्षणः
9. क. ख. मृगाशा

आशायास्तपसा श्रेष्ठास्तथा नान्तमहं गतः ।
भवतां विदितं सर्वं सर्वज्ञा हि तपोधनाः ॥ १९

भवन्तः सुमहाभागा[1]स्तस्मात्पृच्छामि संशयम् ।
आशावान् पुरुषो यायादन्तरिक्षमथापि वा ॥ २०

किन्नु ज्यायस्तमं लोके श्रोतुमिच्छामि तत्त्वतः ।
ततस्तेषां समेतानामृषीणामृषिसत्तमः ॥ २१

ऋषभो नाम देवर्षिः स्मयन्निदमथाब्रवीत् ।
पुराहं[2] राजशार्दूल तीर्थान्यनुचरन् प्रभो ॥ २२

समासादितवान् दिव्यं नरनारायणा[3]श्रमम् ।
यत्र सा बदरी रम्या सरो वैहायसं तथा ॥ २३

तस्मिन् सरसि कृत्वाहं विधिवत्तर्पणं पुरा ।
पितॄणां देवतानाञ्च [4]तदाश्रममयां तदा ॥ २४

अदूरादाश्रमं किञ्चिद्वासार्थमगमं ततः ।
यत्र चीराजिनधरं कृशं धमनिसंततम् ॥ २५

अद्राक्षमृषि[5]मायान्तं वपुषाप्रतिमं तदा ।
शरीरमपि राजेन्द्र तनु कानिष्ठिकासमम् ॥ २६

शिरः [6]कायानुरूपञ्च कर्णौ नेत्रे तथैव च ।
तस्य वाक् चैव चेष्टा च सामान्ये राजसत्तम ॥ २७

दृष्ट्वाहं तं कृशं विप्रं भीतः परम[7]दुर्मतिः ।
पादौ तस्याभिवाद्याथ स्थितः प्राञ्जलिरग्रतः ॥ २८

निवेद्य नामगोत्रे चाप्यासने समुपाविशम् ।
ततः स कथयामास कथा धर्मार्थसंहिताः ॥ २९

---

1. क. ख. स्तस्मिन्
2. क. ख. हि
3. क. ख. -श्रयम्
4. क. ख. ततः श्रमामियां
5. क. मायंतं ख. मातङ्गं
6. अ. काशा-
7. क. ख. दुर्मनाः

तस्मिंश्च कथयत्येव राजा राजीवलोचनः ।
उपायाज्जवनैरश्वैः सबलः सावरोधकः ॥ ३०

स्मरन् पुत्रमरण्ये तु नष्टं परमदुर्मनाः ।
इह द्रक्ष्यामि तं पुत्रं द्रक्ष्यामीति हि वा पुनः ॥ ३१

एवमाशावृतो राजन्नृषिं ब्रह्मविदं पुरा ।
एकः पुत्रो [1]ममारण्ये नष्ट इत्यसकृद्ब्रुवन् ॥ ३२

न स शक्यो मया द्रष्टुमाशा च महती मम ।
तथा परीतगात्रोऽहं [2]मुमूर्षुर्नात्र संशयः ॥ ३३

श्रान्तो न्यषीदद्धर्मात्मा ऋषिं तमभिवाद्य च ।
ततो मुनिः स राज्ञी च पाद्यमर्घ्यं महायशाः ॥ ३४

आरण्यं भोज्यजातञ्च तस्मै सर्वं न्यवेदयत् ।
अपृच्छच्चैव तं तत्र राजानमपराजितम् ॥ ३५

प्रयोजनमिदं सर्वमाश्रमस्य प्रवेशने ।

राजा—

वीर्यद्युम्न इति ख्यातो राजाहं दिक्षु विश्रुतः ॥ ३६

[3]हरिद्युम्नं सुतं नष्टमन्वेष्टुं वनमागतः ।
न दृश्यते वनेऽप्यस्मिंस्तमन्वेष्टुं चराम्यहम् ॥ ३७

सूतः—

इत्युक्ते तेन वचने राज्ञा मुनिरधोमुखः ।
आशाकृतश्च[कृष्टं च]राजेन्द्र राजानमिदमब्रवीत् ॥ ३८

मुनिः—

आशा हि पुरुषं बालमालापयति तस्थुषी ।
आशा नाम मनुष्यणां काचिदाश्चर्यशृङ्खला ॥ ३९

यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति [4]कुत्रचित् ।

राजा—

त्वत्तः कृशतरं किन्नु ब्रवीतु भगवानिदम् ॥ ४०

1. क. ख. महा-
2. क. ख. मुमूर्षुः स्यां न संशयः
3. क. ख. भूरि-
4. क. ख. चानघ

यदि [1]श्राव्यं न ते विप्र लोके किञ्चेह दुर्लभम् ।

मुनिः—

[2]आशां त्यक्त्वा वसेद्यस्तु पुरुषः स तु दुर्लभः ॥ ४१

[3]सुदुर्लभतरस्तात योऽर्थिनं नावमन्यते ।
कृतघ्नेषु च यासक्ता वृषलेषु लघुष्वपि ॥ ४२

अपकारिषु या सक्ता साशा कृशतरी मता ।
एकपुत्रपिता पुत्रे नष्टे वा प्रोषितेऽपि वा ॥ ४३

प्रवृत्तिं यो न जानाति साशा कृशतरी मता ।
प्रदानाकाङ्क्षिणीनाञ्च कन्यानां वयसि स्थिते ॥ ४४

श्रुता कथा तथा युक्ता साशा कृशतरी मता ।
प्रसवे चैव नारीणां वृद्धानां पुत्रकारिता ॥ ४५

धनाशा पुण्यहीनानां साशा कृशतरी मता ।
एतच्छ्रुत्वा वचो राजा त्यक्ताशो निःस्पृहो नृप ॥ ४६

विपाप्मा विगतक्रोधश्चचार वनमन्तिकात् ।
एतद्दृष्टुं मया राजन् स्वस्त्यस्तु [4]वचनं श्रुतम् ॥ ४७

आशां धारयतः स्वाशु ततः कृशतरीमिमाम् ।
स तथोक्त[5]स्ततो राजा ऋषभेण महात्मना ॥ ४८

सुमित्रोऽप्यनयत् क्षिप्रमाशां चैव महत्तराम् ।

सूतः—

तस्माद्बृहत्तरामाशां [6]यस्तरेत् स सुखं व्रजेत् ॥ ४९

या दुस्त्यजा दुर्मतिभिर्नापि जीर्यति जीर्यतः ।
दरिद्रोऽर्थयते ह्यर्थमर्थवान् राज्यमिच्छति ॥ ५०

राज्यवान् पृथिवीशत्वं पृथ्वीशश्चक्रवर्तिताम् ।
इन्द्रत्वं चक्रवर्ती तु ततः स्याद्ब्रह्मणः पदम् ॥ ५१

---

1. क. ख. ग्राह्यं
2. अर्धमिदं अ पुस्ते नास्ति
3. क. ख. स-
4. क. अ. परमं
5. क. ख. स्तदा
6. क. ख. यस्त्यजेत्

तस्मादपि पुनस्तस्मात्तस्मादपि पुनः पुनः ।
एवमाशाया हि नान्तं गतपूर्वोऽस्ति कश्चन ॥ ५२

माहात्म्यमृषयः श्रुत्वा त्वाशायाश्च महत्तरम् ।
विस्मिताश्च विमुक्ताशाः सुखिनश्च तथाभवन् ॥ ५३

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे आशानिन्दा
नाम द्वाविंशोऽध्यायः

## ॥ त्रयोविंशोऽध्यायः ॥

### असमीक्ष्यकारितानिन्दा

सूतः—

असमीक्ष्य न कर्तव्यं कार्यं कर्म [1]विजानता ।
असमीक्ष्य कृतं कर्म न सिध्यति कदाचन ॥ १

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
[2]पुरिकाख्ये पुरे विप्राः पौरवो[पौरिको]नृपसत्तमः ॥ २

परहिंसारतः क्रूरो बभूव पुरुषाधमः ।
स त्वायुषि परिक्षीणे दूषितः पूर्वकर्मणा ॥ ३

गोमायुत्वञ्च सम्प्राप्तो ज्ञानवानार्यसंमतः ।
संस्मरन् पूर्वजातिं स निर्वेदं परमं गतः ॥ ४

न भक्षयति मांसानि परैरुपहृतानि [3]तु ।
अहिंस्रः सर्वभूतेषु सत्य[4]वाक् सुदृढव्रतः ॥ ५

चकार च यथाकालमाहारं पतितैः फलैः ।
[5]पर्णाहारः कदाचित् स उदकेनाप्यवर्तयत् ॥ ६

श्मशाने तस्य चावासः सङ्गो गोमायुभिर्भवेत् ।
जन्मभूम्यनुरोधाच्च नान्यं वासमरोचयत् ॥ ७

तस्य शुद्धिममृष्यन्तः सर्वे ते च सजातयः ।
[6]चालयन्ति स्म तां बुद्धिं वचोभिः प्रश्रयोत्तरैः ॥ ८

[7]वासः पितृवने रौद्रे [8]कुलं गोमायुतां गतम् ।
इयं विप्रतिपत्तिस्ते सूचिता च निरर्थिका ॥ ९

---

1. क. ख. नजानता
2. ख. पुरु-
3. क. ख. च
4. अ. -वान् स
5. क. ख. पूर्णा-
6. क. ख. चारयन्ति
7. क. ख. मृगाः
8. अ. शूलं

[1]मत्स्वभावो भव स्वामिन् शीलं संत्यज पांसुलम् ।
इति तेषां वचः श्रुत्वा प्रत्युवाच समाहितः ॥ १०

मधुरैः प्रश्रितैर्वाक्यैर्हेतुमद्भि[2]रनिष्ठुरैः ।
अप्रमाणं प्रसूतिर्मे [3]शीलतः क्रियते कुलम् ॥ ११

श्मशाने यदि वासो मे समाधिर्मे निशाम्यताम् ।
आत्मा फलति कर्माणि नाश्रमो धर्मलक्षणम् ॥ १२

चित्तशुद्धया विमुच्यन्ते [4]नाश्रमाज्ज्ञातु ते नराः ।
भवन्तस्स्वार्थलोभेन केवलं भक्षणे रताः ॥ १३

तस्मादप्रयतात् क्रुद्धो [5]मृत्युं चैव निरोधये ।
एवं ब्रुवन् शुचिर्दान्तः फलमूलाशने रतः ॥ १४

ज्ञानवान् विनयोपेतः स [6]चचार वनेचरः ।
ततः कदाचिच्छार्दूलः श्रीमान् विश्रुतविक्रमः ॥ १५

शुचिं तं पण्डितं मत्वा गोमायुमवदत्स्वयम् ।

व्याघ्रः—

सौम्य [7]विज्ञातभूतस्त्वममात्यो भव मेऽनघ ॥ १६

[8][व्रियन्ता]मीप्सिता भोगा राज्यञ्च परिपालय ।

सूतः—

अथ सम्पूज्य तद्वाक्यं मृगेन्द्रस्य महात्मनः ॥ १७

गोमायुः प्रश्रितं वाक्यं बभाषे किञ्चिदानतः ।
सदृशं मृगराजैतत्तव वाक्यं महत्तरम् ॥ १८

यत्सहाया[9]न्मृगयसे धर्मार्थकुशलान् शुचीन् ।
न शक्यं ह्यनमात्येन महत्त्वमनुशासितुम् । १९

---

1. इदमर्धं अ पुस्तके नास्ति
2. क. ख. रनुष्ठितैः
3. अं. शीलितं
4. अ. नाश्रमा ज्ञातितो
5. क. ख. वृत्तिं चैव न रोचये
6. क. ख. चकार
7. क. ख. विज्ञान-
8. अ. क. ख. प्रीयन्तां
9. अ. न्निगमने

दुष्टामात्येन [1]वा वीर शरीरपरिपन्थिना ।
अमात्याननुरक्तांश्च विजिगीषूनलोलुपान् ॥ २०

परस्परमसंसृष्टान् हितयुक्तान् मनस्विनः ।
[2]पूजयेथा महाभागान् यथाचार्यान् यथा पितॄन् ॥ २१

[3]न कांक्षते सुखं भोगान्न चैश्वर्यं त्वदाश्रयम् ।
न च योक्ष्यति मे शीलं तव भृत्यैः पुरातनैः ॥ २२

ते त्वां विभेदयिष्यन्ति दुःखशीला मदन्तरे ।
भेदेन चित्तं भिद्येत पण्डितानामपि प्रभो ॥ २३

एवमस्त्विति तेनासौ मृगेन्द्रः प्रीतिसंयुतः ।
सचिवं कारयामास सत्कारेणाभिपूज्य च ॥ २४

तं तथा सत्कृतं दृष्ट्वा पूज्यमानं स्वकर्मसु ।
[4]प्राद्विषन् कृतसङ्घाताः पूर्वभृत्या मुहुर्मुहुः ॥ २५

मित्रबुद्ध्या तु गोमायुं सान्त्वयित्वा प्रवेश्य च ।
दोषैश्च समतां नेतुमैच्छंस्तेऽशुभबुद्धयः ॥ २६

अथास्य समयं कृत्वा विनाशाय स्थिताः परे ।
ईप्सितञ्च मृगेन्द्रस्य त्वामिषं तत्र [5]संस्थितम् ॥ २७

महानसादुपाहृत्य तैर्न्यस्तं तस्य वेश्मनि ।
राज्ञो भोजनवेलायां तन्मांसं न स्म दृश्यते ॥ २८

मृगराजेन चाज्ञप्तं मृग्यतां चोर इत्यतः ।
छिद्रञ्च तस्य तद् दृष्ट्वा प्रोचुस्ते सर्वमन्त्रिणः ॥ २९

सचिवेनापनीतं ते विदुषा प्राज्ञमानिना ।
सरोषस्त्वथ शार्दूलः श्रुत्वा गोमायुचापलम् ॥ ३०

---

1. क. ख. ते
2. क. ख. पूजयामि
3. अ. न कामुकान् भो त्यजन्ति तेषु भूपेषु तदाश्रयम्
4. क. ख. प्राविशन्
5. क. ख. सत्कृतम्

बभूवामर्षितो राजा वधं चास्य व्यरोचयत् ।
आज्ञापयामास ततो गोमायुर्वध्यतामिति ॥ ३१

शार्दूलवचनं श्रुत्वा शार्दूलजननी ततः ।
[1]मृगराजं हितैर्वाक्यैस्संबोधयितुमागता ॥ ३२

पुत्र नैतत् त्वया कार्यं कपटारंभमाश्रितम् ।
समीक्ष्य कार्यं कर्तव्यं दूष्यतेऽशुचिभिः शुचिः ॥ ३३

[2]पापिनां शुचयो द्वेष्याः कातराणां तरस्विनः ।
[3]मूर्खाणां पण्डिता द्वेष्या दरिद्राणां महाधनाः ॥ ३४

अधार्मिकाणां धर्मिष्ठा विरूपाणां सुरूपिणः ।
बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः ॥ ३५

कुर्युर्दोषमदोषं वा बृहस्पतिसमा अपि ।
तवेदं दृश्यते [4]व्योम्नि खद्योतो हव्यवाडिव ॥ ३६

[5]अतलं दृश्यते व्योम न खद्योतो हुताशनः ।
तस्मात्प्रत्यक्षदृष्टेऽपि युक्तमर्थं परीक्षितुम् ॥ ३७

[6]असमीक्षणकारी तु पश्चात्स परितप्यते ।
समीक्ष्यकारिणं दान्तं संपदः संश्रयन्ति च ॥ ३८

स्थापितो यस्त्वया पुत्र सामन्तेष्वपि विश्रुतः ।
शुचिः शूरश्च [7]दान्तश्च गोमायुर्वार्यतां वधे ॥ ३९

दूषितः परदोषैर्हि शुचिः स्वयममर्षितः ।
राजा तु दूषितामात्यः क्षिप्रमेव विनश्यति ॥ ४०

प्रथमं यः समाख्यातः शीलवानिति संसदि ।
समर्थ इति सङ्गृह्य स्थापयित्वा परीक्ष्य च ॥ ४१

---

1. इदमर्धं अनन्तरश्च श्लोकः अ. पुस्तके नास्ति
2. अयं पादः अ. पुस्तके त्रुटितः
3. अर्धमिदं क. ख. पुस्तकयोर्नास्ति
4. क. ख. व्योम
5. क. ख. न तलं
6. क. ख. असमीक्षित
7. ख. शान्तश्च

न वाच्यं तस्य वैगुण्यं [1]प्रतिज्ञां परिरक्षता ।

सूतः—

जनन्यास्तद्वचः श्रुत्वा शार्दूलोऽपि विमृश्य च ॥ ४२

[2]जननीवाक्यदाक्षिण्यात् तद्वधं नाकरोत्तदा ।
[3]नासौ समीक्ष्यकारीति गोमायुस्तं विमृश्य च ॥ ४३

अर्धमात्रापदेनैव निर्ययौ तदनुज्ञया ।
तस्मिन् गते च शार्दूलो दुर्मन्त्रिवचने स्थितः ॥
राज्याद्भ्रष्टो दशां हीनां ययौ.........? ॥ ४४

सूतः—

तस्मात्कार्यमकर्तव्यमसमीक्ष्य विशारदैः ।
असमीक्ष्य तु कारी तु नरः श्रेयो न विन्दति ॥ ४५

इति श्रीपुरुषार्थसुधानिधौ अर्थस्कन्धे असमीक्ष्यकारितानिन्दा नाम त्रयोविंशोऽध्यायः

इति श्रीसायणाचार्यविरचिते पुरुषार्थसुधानिधौ अर्थस्कन्धः समाप्तः

---

1. क. ख. प्रतिज्ञा परिरक्षिता
2. इदमर्धं अ. पुस्तके नास्ति
3. इदमर्धं अनन्तरौ द्वौ श्लोकौ च, क. ख. पुस्तकयोर्न सन्ति

## ॥ अथ कामस्कन्धः ॥

### ॥ प्रथमोऽध्यायः ॥

### सुलक्षणस्त्रीपरिग्रहकथनम्

श्रीसूतः—

[1]एवमुक्तो मया विप्रा अर्थस्कन्धो महत्तरः ।
कामस्कन्धं प्रवक्ष्यामि श्रोतव्यं भूसुरोत्तमाः ॥ १

अर्थस्कन्धः समाख्यातः कामस्कन्धस्तु वक्ष्यते ।
कामस्कन्धे तु संप्रोक्तो लक्षणस्त्रीपरिग्रहः ॥ २

[2]सत्सोदर्यप्रशंसोक्तिररिषड्वर्गदूषणम् ।
अन्यासक्ताङ्गनासङ्गदूषणं कन्यकातपः ॥ ३

कन्यकादूषणे दोषो ब्रह्महत्याविनिन्दनम् ।
अहङ्कारातिरस्कारः पुष्पापचयनिन्दनम् ॥ ४

सदा गृही सुखं भुङ्क्ते स्त्री लक्षणवती यदि ।
[3]ततः सुखसमृद्ध्यर्थमीक्षेतादौ च लक्षणम् ॥ ५

[4]वपुरावर्तनं गन्धश्छाया सत्त्वं स्वरो [5]गतिः ।
वर्ण[6]श्चाष्टविधाः प्रोक्ता [7]बुधैर्लक्षणभूमिका ॥ ६

आ पादतलमीक्ष्याणि यावन्मौलि[8]रुहं क्रमात् ।
शुभाशुभानि वक्ष्यामि लक्षणानि मुने शृणु ॥ ७

---

1. अयं श्लोकः अ. ग. पुस्तकयोर्नास्ति
2. अ. ग. सत्सौंदर्य-
3. क. ख. अत-
4. क. ख, ग, वपुरावर्तगन्धाश्च
5. ग. गणः
6. क. ख. ग. श्चेत्यष्टधा
7. ग. विबुधैर्लक्ष्यभूमिका
8. ग. रुहः

आदौ पाद[1]तले रेखा[2]स्तालाङ्गुष्ठाङ्गुलीनखाः ।
पृष्ठं गुल्फद्वयं पार्ष्णिजङ्घारोमाणि जानुनि ॥ ८

ऊरू [3]कटी नितम्बस्फिग्भगा [4]जघनवस्तिके ।
[5]नाभिकुक्षिद्वयं पार्श्वोदरमध्यवलित्रयम् ॥ ९

रोमालिहृदयं [6]वक्षो वक्षोजद्वयचूचुकम् ।
जत्रुस्कन्धांसकक्षे दोर्मणिबन्धकरद्वयम् ॥ १०

पाणिपृष्ठं पाणितलं रेखाङ्गुष्ठाङ्गुलीनखम् ।
पृष्ठं कृकाटिका कर्णश्चुबुकञ्च हनुद्वयम् ॥ ११

कपोलौ वक्त्रमधरोत्तरोष्ठद्वय[7]जिह्विका ।
[8]घण्टिका [9]दन्तहसितं नासिका [10]क्षाममक्षिणी ॥ १२

[11]वक्षोभ्रूकण्ठफालानि मौलिसीमन्तमौलिजाः ।
[12]षष्टिः षडुत्तरा योषिदङ्गलक्षणवर्त्मनि ॥ १३

स्त्रीणां पादतलं स्निग्धं मांसलं मृदुलं समम् ।
अस्वेदमुष्णमरुणं बहुभोगोचितं स्मृतम् ॥ १४

रूक्षं विवर्णं परुषं खण्डितं [13]पुत्रविम्बकम् ।
शूर्पाकारं विशुष्कञ्च दुःख[14]सौभाग्यसूचकम् ॥ १५

चक्रस्वस्तिकशङ्खाब्जध्वजमीनातपत्रवत् ।
यस्याः पादतले रेखा सा भवेत् क्षितिपाङ्गना ॥ १६

भवेदखण्डभोगायोर्ध्वमध्याङ्गुलि[15]सङ्गता ।
नखाः सुवर्णवर्णाभा दुःखदारिद्र्यसूचकाः ॥ १७

---

1. क. ख. ग. तलं
2. क. ख. स्ततोऽङ्गु- ग. स्खमाङ्गु-
3. ग. कटिनितम्ब-
4. अ. जंघन
5. क. ख. ग. नाभिः
6. ग. वक्ष्ये
7. अ. जंधिका
8. ग. घणिका
9. क. ख. ग. तालु
10. क. ख. ग. क्षुत-
11. क. ख. ग. पक्ष्म.
12. अ. षष्ठ
13. क. ख. ग. प्रति
14. क. ख. ग. दौर्भाग्य
15. क. ख. रञ्जना

उन्नतो मांसलोऽङ्गुष्ठो [1]मृदुलो वर्तुलोऽगदः ।
वक्रो ह्रस्वश्च चिपिडः सुखसौभाग्य[2]वर्धकः ॥ १८

विधवा विपुलेन स्याद्दीर्घाङ्गुष्ठेन दुर्भगा ।
मृदवोऽङ्गुलयश्शस्ता घना वृत्ताः समुन्नताः ॥ १९

दीर्घाङ्गुलीभिः कुलटा कृशाभिरतिनिर्धना ।
ह्रस्वायुष्या च ह्रस्वाभि[3]र्भग्नाभि[4]र्भुग्नवर्धिनी ॥ २०

सा पांसुला प्रजायेत कुलत्रयविनाशिनी ।
यस्याः कनिष्ठिका भूमिं न गच्छन्त्याः परिस्पृशेत् ॥ २१

पतिद्वयं निहन्त्याद्या द्वितीया च पतित्रयम् ।
पतिहीनत्वकारिण्यौ हीने ते द्वे इमे यदि ॥ २२

प्रदेशिनी भवे[5]द्यस्मादङ्गुष्ठादतिरेकिणी ।
कन्यैव कुलटा सा स्यादेष एव विनिश्चयः ॥ २३

स्निग्धाः समुन्नता[6]स्ताम्रा वृत्ताः पादनखाः शुभाः ।
राज्ञीत्वसूचकं स्त्रीणां पादपृष्ठं समुन्नतम् ॥ २४

अस्वेदमसिराढ्यं च मसृणं मृदु मांसलम् ।
दरिद्रा मध्यनम्रेण सिरालेन सदाध्वगा ॥ २५

रोमाढ्येन भवेद्दासी [7]निर्मांसेन च दुर्भगा ।
[8]गूढगुल्फौ शुभौ यस्या असिरालौ सुवर्तुलौ ॥ २६

[9]विवृतौ शिथिलौ दृश्यौ स्यातां दौर्भाग्यसूचकौ ।
[10]चिबुकाभिर्भवेद्दासी [11]विरताभिर्दरिद्रिणी ॥ २७

---

1. क. ख. वर्तुलोऽतुलभोगदः
2. क. ख. वर्जकः
3. क. ख. र्भुग्नाभिर्भुग्नवर्त्तिनी
4. ग. भग्नव.र्वै नी
5. ग. त्तस्मात्
6. ग. स्त्रस्ताः
7. ख. रोमांसेन
8. क. ख. गूढौ
9. क. ख. ग. विपुलौ
10. क. ख. ग. चिपिटा-
11. क. ख. ग. विरला-

परस्परं समारूढाः पादाङ्गुल्यो भवन्ति चेत् ।
हत्वा बहूनपि पतीन् परप्रेष्या [1]तथा भवेत् ॥ २८

यस्याः पथि समायान्त्या रजो भूमेः समुच्चलेत् ।
सा पांसुला प्रजायेत कुलत्रयविनाशिनी ॥ २९

समपार्ष्णिः शुभा नारी पृथुपार्ष्णिश्च दुर्भगा ।
कुलटोन्नतपार्ष्णिः स्याद्दीर्घपार्ष्णिश्च दुःखभाक् ॥ ३०

रोमहीने समे स्निग्धे यज्जङ्घे क्रमवर्तुले ।
सा राजपत्नी भवति [2]विस्तीर्णे सुमनोहरे ॥ ३१

एकरोमा राजपत्नी द्विरोमा [3]तु सुखास्पदा ।
त्रिरोमा रोम[4]कूपेषु भवेद्वैधव्यदुःखभाक् ॥ ३२

वृत्तं पिशितसंमग्नं जानुयुग्मं प्रशस्यते ।
निर्मांसं स्वैरचारिण्या दरिद्रायाश्च विश्लथम् ॥ ३३

[5]विस्तीर्णैः करभाकारैरूरुभिर्मसृणैर्घनैः ।
सुवृत्तै रोमरहितैर्भवेयुर्भूपवल्लभाः ॥ ३४

वैधव्यं रोमशै[6]र्युक्तं दौर्भाग्यं [7]चिबुकैरपि ।
मध्यच्छिद्रैर्महद्दुःखं दारिद्र्यं कठिनत्वचा ॥ ३५

चतुर्भिरङ्गुलैः शस्ता कटिर्विंशतिसंयुतैः ।
समुन्नतनितम्बाढ्या चतुरश्रा मृगीदृशाम् ॥ ३६

विनता [8]चिबुका दीर्घा निर्मांसा सरटा[9]कृतिः ।
ह्रस्वा रोमयुता नार्यो दुःखवैधव्यसूचकाः ॥ ३७

नितम्बबिम्बो नारीणामुन्नतो मांसलः पृथुः ।
महाभोगाय संप्रोक्तस्तदन्योऽशर्मणे मतः ॥ ३८

---

1. क. ख. तदा
2. क. ख. ग. विघिरे
3. क. ख. च
4. अ. कोटीषु
5. क. ख. ग. विसिरैः
6. क. ख. रुक्तं
7. क. ख. ग. चिपिटै
8. क. ख. ग. चिपिटा
9. क. ख. कटिः

कपित्थफलवद्वृत्तौ मृदुलौ मांसलौ घनौ ।
स्फिजौ वलिविनिर्मुक्तावतिसौख्यविवर्धनौ ॥ ३९

शुभः [1]कमठिनीपृष्ठगजस्कन्धोपमो भगः ।
वामोन्नतस्तु कन्याजः पुत्रजो दक्षिणोन्नतः ॥ ४०

[2]आखुरोमा गूढमणिः सुश्लिष्टः सङ्गतः पृथुः ।
तुङ्गः कमल[3]वर्हाभः शुभोऽश्वत्थदलाकृतिः ॥ ४१

[4]उत्तुङ्गखुररूपो यश्चुल्लीकोटरसन्निभः ।
[5]रोमशो विवृतास्यश्च दृश्यनासोऽतिदुर्भगः ॥ ४२

शङ्खा[6]वर्तो भगो यस्याः सा [7]गर्भमिह नेच्छति ।
[8]चिबुकः कूर्पराकारः किङ्करीपददो भगः ॥ ४३

[9]वटवेतसपत्राभो [10]जघनो घननासिकः ।
विकटः [11]कमलाकारो लम्बगछस्तथाशुभः ॥ ४४

[12]भगस्याभं जघनं विस्तीर्णं तुङ्गमांसलम् ।
मृदुलं मृदुलोमाढ्यं दक्षिणावर्त[13]मण्डितम् ॥ ४५

वामावर्तञ्च निर्मांसं [14]भुग्नं वैधव्यसूचकम् ।
सङ्कटं स्थपुटं [15]रूक्षं जघनं दुःखदं सदा ॥ ४६

वस्तिः प्रशस्ता विपुला मृद्वी स्तोकसमुन्नता ।
रोमशा च सिराला च [16]रेखा नानैव शोभना ॥ ४७

---

1. अ. कर्मनविपृष्ठ
2. ग. माखुरामा
3. क. ख. ग. वर्णा-
4. ग. कुरङ्ग- क. ख. तुरङ्ग-
5. अ. रोमतो
6. ग. वृत्तो
7. अ. गम्य-
8. क. ख. ग. चिपिटः कर्प-
9. क. ख. ग. वंशा-
10. क. ख. गजरोमा विनासिकः
11. क. ख. ग. कुटिला
12. क. ख. भगस्यभालं ग. भगं सभाल
13. अ. पिण्डितम्
14. ग. भगं
15. ग. सूक्ष्मं
16. क. ख. ग. रेखाङ्का नैव

गम्भीरा दक्षिणावर्ता नाभिः स्यात्सुखसम्पदे ।
वामावर्ता समुत्ताना व्यक्तग्रन्थिर्न शोभना ॥ ४८

सूते सुतान् बहून्नारी पृथुकुक्षिः सुखास्पदम् ।
क्षितीशं जनयेत्पुत्रं मण्डूकाभेन कुक्षिणा ॥ ४९

उन्नतेन [1]वलीराजिसावर्तेनापि कुक्षिणा ।
वन्ध्या प्रव्रजिता दासी क्रमाद्योषा भवेदिह ॥ ५०

समैः समांसैर्मृदुभिर्योषिन्मग्नास्थिभिः शुभैः ।
पार्श्वैः सौभाग्यसुखयो[2]र्निदानं स्यादसंशयम् ॥ ५१

यस्या दृश्यसिरे पार्श्वे उन्नते रोमसंयुते ।
निरपत्या च दुःशीला सा भवेद्दुःखशेवधिः ॥ ५२

उदरे[3]णातितुच्छेन विसिरेण मृदुत्वचा ।
योषिद्भवति भोगाढ्या नित्यं मृष्टान्नसेविनी ॥ ५३

कुम्भाकारं दरिद्राया जठरं च मृदङ्गवत् ।
कूश्माण्डाभं यवाभञ्च [4]दुष्पूरं जायते स्त्रियः ॥ ५४

सुविशालोदरी नारी निरपत्या च दुर्भगा ।
प्रलम्बजठरा हन्ति श्वशुरं हन्ति देवरम् ॥ ५५

मध्ये क्षामा च सुभगा भोगाढ्या सवलित्रया ।
ऋज्वी तन्वी च रोमालिर्यस्याः सा शर्म[5]नर्मभूः ॥ ५६

कपिला कुटिला स्थूला विच्छिन्ना रोमराजिका ।
चौर्यवैधव्यदौर्भाग्यं विदध्यादिह योषितः ॥ ५७

निर्लोम हृदयं यस्याः समं निम्नत्ववर्जितम् ।
ऐश्वर्यश्चाप्यवैधव्यं [6]प्रियप्रेम लभेत सा ॥ ५८

---

1. ग. वलीपार्श्वे
2. क. ख. -र्निधानं
3. क. ख. -ण ह्यतुच्छेन
4. ग. दुष्करं
5. अ. नर्मजा
6. अ. प्रियमेव

विस्तीर्णहृदया योषा पुंश्चली निर्दया तथा ।
उद्भिन्नरोमहृदया पतिं हन्ति विनिश्चितम् ॥ ५९

अष्टादशाङ्गुलतत[1]मुरः पीवरमुन्नतम् ।
भवेत् सुखाय दुःखाय रोमशं विषमं पृथु ॥ ६०

घनौ वृत्तौ [2]दृढौ पीनौ समौ शस्तौ पयोधरौ ।
स्थूला[3]ग्रौ विरलौ शुष्कौ [4]वामोरूणां न शर्मदौ ॥ ६१

दक्षिणोन्नतवक्षोजा पुत्रिणीष्वग्रणीर्मता ।
वामोन्नतकुचा सूते कन्यां सौभाग्यसुन्दरीम् ॥ ६२

[5]शरद्घनतटीतुल्यौ कुचौ दौश्शील्यसूचकौ ।
पीवरांसौ सान्तरालौ पृथूपान्तौ न शोभनौ ॥ ६३

मूले स्थूलौ समकृशौ अग्रे तीक्ष्णौ पयोधरौ ।
सदृशं चूचुकयुगं शस्तं श्यामं सुवर्तुलम् ॥ ६४

अन्तर्मग्नञ्च दीर्घञ्च कृशं क्लेशाय जायते ।
पीवराभ्याञ्च जत्रुभ्यां धनधान्य[6]वती वधूः ॥ ६५

श्लथास्थिभ्याञ्च निम्नाभ्यां विषमाभ्यां दरिद्रिणी ।
आबद्धावनतौ स्कन्धावदीर्घावकृशौ शुभौ ॥ ६६

वक्रौ स्थूलौ च रोमाढ्यौ प्रेष्यवैधव्यसूचकौ ।
[7]निगूढबन्धिशस्ताग्रौ शुभावासौ सुसंहतौ ॥ ६७

वैधव्यदौ समुद्भग्रौ निर्मांसावतिदुःखदौ ।
कक्षे सुसूक्ष्मरोमे च तुङ्गे स्निग्धे च मांसले ॥ ६८

शस्ते न शस्ते गम्भीरे सिराले स्वेदमेदुरे ।
स्यातां दोषौ सुनिर्दोषौ गूढास्थिग्रन्थिकोमलौ ॥ ६९

---

1. अ. मुरोविवर-
2. क. ख. च. सुस्निग्धौ
3. ग. प्रासरलौ
4. क. ख. पृथूपान्तौ
5. ग. शरद्घट
6. क. ख. ग. निधिर्वधूः
7. क. ख. ग. पुस्तकेषु इदमनन्तरं चार्धं नास्ति

विशिरौ च विरोमाणौ सरलौ हरिणीदशाम् ।
वैधव्यं स्थूलरोमाणौ ह्रस्वौ दौर्भाग्यसूचकौ ॥ ७०

परिक्लेशाय नारीणां परिदृश्यसिरौ भुजौ ।
अम्भोजमुकुलाकारं स्वङ्गुष्ठाङ्गुलि सन्नखम् ॥ ७१

हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते ।
मृदुमध्योन्नतं रक्तं तलं पाण्योररन्ध्रकम् ॥ ७२

प्रशस्तहस्तरेखाढ्यमल्परेखं [1]शुभं स्त्रियः ।
विधवा बहुरेखेण विरेखेण दरिद्रिणी ॥ ७३

भिक्षुकी सुसिराढ्येन नारी करतलेन वै ।
विरोमं विसिरं शस्तं पाणिपृष्ठं समुन्नतम् ॥ ७४

वैधव्यहेतु रोमाढ्यं निर्मांसं स्नायुवत्त्यजेत् ।
[2]व्यक्ताव्यक्ता गभीरा च स्निग्धा पूर्णा च वर्तुला ॥ ७५

कररेखाङ्गनायाः स्याच्छुभा भाग्यानुसारतः ।
मत्स्येन सुभगा नारी स्वस्तिकेन [3]वसुप्रदा ॥ ७६

पद्मेन भूपतेः पत्नी जनयेद्भूपतिं सुतम् ।
चक्रवर्तिस्त्रियाः [4]पाणौ नन्द्यावर्तः प्रदक्षिणः ॥ ७७

शङ्खातपत्रकमठा देवमातृत्वसूचकाः ।
तुलामानाकृती रेखे वणिक्पत्नीत्व[5] हेतुके ॥ ७८

गजवाजिवृषाकाराः करे वामे मृगीदशाम् ।
रेखाः प्रासासिवज्राभा ब्रूयुस्तीर्थकरं शुभम् ॥ ७९

कृषीवलस्य पत्नी स्याच्छकटेन युगेन [6]च ।
[7]चामराङ्कुशकोदण्डै राजपत्नी भवेद्ध्रुवम् ॥ ८०

---

1. क. ख. शुभाश्रयम्
2. क. ख. ग. रक्ता व्यक्ता च-गंभीरा
3. अ. मनु
4. अ. प्राणाः संध्या-
5. अ. मश्नुते
6. क. ख. ग. वा
7. क. ख. चामरांशुक-

अङ्गुष्ठमूलान्निर्गत्य रेखा याति कनिष्ठिकाम् ।
यदि सा पतिहन्त्री स्याद्दूरतस्तां त्यजेद्बुधः ॥ ८१

त्रिशूलासिगदाशक्तिदुन्दुभ्याकृतिरेखया ।
नितम्बिनी कीर्तिमती त्यागेन पृथिवीतले ॥ ८२

कङ्कमण्डूकजम्बूक[1]वृकवृश्चिकभोगिनः ।
रासभोष्ट्रबिडालाः स्युः करस्था दुःखदाः स्त्रियः ॥ ८३

[2]सुखदः सरलोऽङ्गुष्ठो वृत्तो वृत्तनखो मृदुः ।
अङ्गुल्यश्च सुपर्वाणो दीर्घवृत्ताः क्रमात्कृशाः ॥ ८४

चिपिटा स्थविरा रूक्षाः पृष्ठे रोमयुजोऽशुभाः ।
अतिह्रस्वाः कृशा[3]वर्ताः कराला रोमहेतुकाः ॥ ८५

दुःखायाङ्गुलयः स्त्रीणां वहुपर्वसमन्विताः ।
अरुणाः [4]ससिरास्तुङ्गाः करजाः सदृशाः शुभाः ॥ ८६

निम्ना विवर्णाः शुक्लाभाः पीता दारिद्र्यदायकाः ।
नखेषु बिन्दवः श्वेताः पापाः [5]स्युः स्वैरिणीस्त्रियः ॥ ८७

पुरुषा अपि जायन्ते दुःखिनः पुष्पितैर्नखैः ।
अन्तर्निमग्नवंशास्थिपुष्टिः स्यान्मांसलाः शुभाः ॥ ८८

[6]पृष्ठेन रोमयुक्तेन वैधव्यं लभते ध्रुवम् ।
भग्नेन विनतेनापि ससिरेणापि दुःखिता ॥ ८९

ऋज्वी कृकाटिका श्रेष्ठा समांसा च समुन्नता ।
शुष्का सिराला रोमाढ्या विशाला कुटिला शुभा ॥ ९०

मांसलो वर्तुलः कण्ठः प्रशस्तश्चतुरङ्गुलः ।
शस्ता ग्रीवा त्रिरेखाढ्या [7]त्वव्यक्तास्थिसुसंहता ॥ ९१

---

1. क. ख. विष
2. इमे 84-87 श्लोकाः अ. पुस्तके न सन्ति
3. क. ख. वक्राः विरलाः
4. क. ख. सशिखाः
5. ग. स्युर्वारुणी-
6. इमौ 89, 90. श्लोकौ अ. पुस्तके न स्तः
7. अ. त्वत्यक्ता-

निर्मांसा[1]श्चुबुका दीर्घा [2]स्थपुटा न शुभप्रदाः ।
स्थूलग्रीवा च विधवा ह्रस्वग्रीवा च किङ्करी ॥ ९२

वन्ध्या हि [3]चिबिकग्रीवा [4]क्षुवग्रीवा च दुःखभाक् ।
चुबुकं द्व्यङ्गुलं शस्तं वृत्तं पीनं सुकोमलम् ॥ ९३

स्थूलं द्विधा संविभक्तमायतं रोमशं त्यजेत् ।
हनुश्चुबुकसंलग्ना निर्लोमा [5]सुखदा शुभा ॥ ९४

वक्रा स्थूला घना ह्रस्वा रोमशा न शुभप्रदा ।
शस्तौ कपोलौ वामाक्ष्याः पीनौ वृत्तौ समुन्नतौ ॥ ९५

रोमशौ परुषौ निम्नौ निर्मांसौ परिवर्जयेत् ।
समं समांसं सुस्निग्धं स्वामोदं वर्तुलं [6]मुखम् ॥ ९६

सुनेत्रं सुरदच्छायं धन्यानामिह जायते ।
पाटलो वर्तुलः स्निग्धो रेखाभूषितमध्यभूः ॥ ९७

सीमन्तिनीनामधरो धराजानिप्रियो भवेत् ।
[7]कृशः प्रलम्बः स्फुटितो रूक्षो दौर्भाग्यसूचकः ॥ ९८

श्यामः स्थूलोऽधरोष्ठः स्याद्वैधव्यकलहप्रदः ।
मसृणो मत्तकाशिन्याश्चोत्तरोष्ठः शुभोऽग्रतः ॥ ९९

किञ्चिन्मध्योन्नतोऽरोमा विपरीतो [8]विरुद्धकृत् ।
गोक्षीर[9]सन्निभा स्निग्धा द्वात्रिंशद्दशनाः शुभाः ॥ १००

अधस्तादुपरिष्टाच्च समाः स्तोकसमुन्नताः ।
पीताः [10]श्यामाश्च दशना स्थूला दीर्घा द्विपङ्क्तयः ॥ १०१

---

1. क. ख. ग. श्चिपिटा
2. अ. स्थपुटे न
3. क. ख. गं. चिपिट
4. ख. स्रवद्ग्रीवा
5. क. ग. स्याद्घना
6. ख. सुखम्
7. अ. प्रलम्बस्फुटितौ कूर्पौ ...दौर्भाग्यसूचकः ग. मुख-प्रलम्बस्फुटिता
8. क. ख. विरोध-
9. ग. सदृशा
10. क. ख. श्यावाश्च

[1]सूक्ष्माकाराश्च विरला दुःखदौर्भाग्य[2]सूचकाः ।
अधस्तादधिकैर्दन्तैर्मातरं भक्षयेत्स्फुटम् ॥ १०२

[3]पतिहीना च विकटैः कुलटा विरलैर्भवेत् ।
[4]जिह्वेष्टमृष्टभोक्त्री स्यात् स्निग्धा मृद्वी तथारुणा ॥ १०३

दुःखाय मध्यसङ्कीर्णा पुरोभागे [5]सुविस्तरा ।
[6]पीतया तोयमरणं श्यामया कलहप्रिया ॥ १०४

दरिद्रिणी मांसलया लम्बयाभक्ष्यभक्षिणी ।
विशालया रसनया प्रमदा[7]तिप्रमादभाक् ॥ १०५

स्निग्धं कोकनदाभासं [8]प्रशस्तं तालु कोमलम् ।
सिते तालुनि वैधव्यं पीते [9]प्रव्रजितं भवेत् ॥ १०६

कृष्णेऽपत्यवियोगार्ता रूक्षे चोरकुटुम्बिनी ।
कन्दे स्थूला सुवृत्ता च क्रमतीक्ष्णा च लोहिता ॥ १०७

अप्रलम्बा शुभा [10]घण्टी स्थूला कृष्णा च दुःखदा ।
अलक्षितद्विजं किञ्चित् किञ्चित् फुल्लकपोलकम् ॥ १०८

स्मितं प्रशस्तं सुदृशामनिमीलितलोचनम् ।
समवृत्तपुटा नासा लघुच्छिद्रा शुभावहा ॥ १०९

स्थूलाग्रा मध्यनम्रा च न प्रशस्ता समुन्नता ।
आकुञ्चितारुणाग्रा च वैधव्यक्लेशदायिनी ॥ ११०

परप्रेष्या च [11]चिबिका [12]ह्रस्वा दीर्घा कलिप्रिया ।
दीर्घायुःकृत् क्षुतं दीर्घं युगपद्द्वित्रिमण्डितम् ॥ १११

---

1. क. ख. ग. शुक्त्याकाराश्च
2. क. ख. कारणम्
3. ग. पितृहीना
4. ग. जिह्वोष्ठमृष्टभोक्त्री
5. क. सविस्तरा
6. क. ख. ग. सितया
7. अ. तीव्रमोद- ग. तीव्रमार-
8. क. ख. प्रशस्यं
9. क. ख. प्रव्रजिता
10. ग. कर्णी
11. क. ख. ग. चिपिटा
12. क. ख. ह्रस्वदीर्घा-

ललनालोचने शस्ते रक्तान्ते कृष्णतारके ।
गोक्षीर[1]वर्णे विशदे सुस्निग्धे कृष्णपक्ष्मणी ॥ ११२

उन्नताक्षी न दीर्घायुर्वृत्ताक्षी कुलटा भवेत् ।
मेषाक्षी मकराक्षी च महिषाक्षी न शोभना ॥ ११३

[2]गोपिङ्गाक्षी सुदुर्वृत्ता नितरां कामचारिणी ।
पारावताक्षी दुश्शीला रक्ताक्षी भर्तृनाशिनी ॥ ११४

पुंश्चली वामकाणाक्षी वन्ध्या दक्षिणकाणिका ।
मधुपिङ्गा च रमणी धनधान्यसमृद्धिभाक् ॥ ११५

पक्ष्मभिः सुघनैः स्निग्धैः कृष्णैः सूक्ष्मैः सुभाग्यभाक् ।
कपिलैर्विरलैः स्थूलैर्निन्द्या भवति भामिनी ॥ ११६

भ्रुवौ सुवर्तुले तन्व्यौ स्निग्धे कृष्णे [3]असंहते ।
प्रशस्ते मृदुरोमाणौ सुभ्रुवः कार्मुकाकृती ॥ ११७

खररोमा च पृथुला विवर्णा सरला स्त्रियाः ।
न भ्रूः प्रशस्ता मिलिता दीर्घरोमा च पिङ्गला ॥ ११८

[4]प्रलम्बौ च तथा कर्णौ शुभावर्तौ शुभप्रदौ ।
शष्कुलीरहितौ निन्द्यौ सिरालौ कुटिलौ कृशौ ॥ ११९

भालः सिराविरहितो निर्लोमार्धेन्दुसंनिभः ।
अनिम्नस्त्र्यङ्गुलो नार्याः सौभाग्यारोग्यकारणम् ॥ १२०

व्यक्तस्वस्तिक[5] रेखान्तं ललाटं राज्यसम्पदे ।
प्रलम्बश्चालको यस्या देवरं हन्ति सा ध्रुवम् ॥ १२१

रोमशेन सिरालेन [6]पांसुला गोधिना मता ।
सीमन्तः सरलः शस्तो मौलिः शस्तः समुन्नतः ॥ १२२

---

1. ग. वर्णविशदे
2. अयं श्लोकः अ पुस्तके नास्ति ग. गोपिकाक्षी
3. क. ख. असंगते
4. इमौ श्लोकौ 119, 120 अ. पुस्तके न स्तः
5. क. ख. रेखं च
6. अ. वामला

गजकुम्भनिभो वृत्तः सौभाग्यैश्वर्यसूचकः ।
स्थूलमूर्धा च विधवा दीर्घशीर्षा च वर्धकी ॥ १२३

विशालेनापि शिरसा भवेद्दौर्भाग्यभाजनम् ।
केशा अलिकुलच्छायाः सूक्ष्माः स्निग्धाः सुकोमलाः ॥ १२४

किञ्चिदाकुञ्चिताग्राश्च कुटिलाश्चातिशोभनाः ।
परुषाः स्फुटिताग्राश्च विरलाश्च शिरोरुहाः ॥ १२५

पिङ्गला लघवो रूक्षा दुःखदारिद्र्य[1]बन्धदाः ।
भ्रुवोरन्तर्ललाटे वा मशको राज्यसूचकः ॥ १२६

वामे कपोले मशकः शोणो मृष्टान्नदः स्त्रियाः ।
तिलकं लाञ्छनं वापि हृदि सौभाग्यकारणम् ॥ १२७

यस्या दक्षिणवक्षोजे शोणे तिलकलाञ्छने ।
कन्याचतुष्टयं सूते सूते सा च सुतत्रयम् ॥ १२८

तिलकं लाञ्छनं शोणं यस्या वामे कुचे भवेत् ।
[2]वीरं पुत्रं प्रसूयादौ ततः सा विधवा भवेत् ॥ १२९

गुह्यस्य दक्षिणे भागे तिलकं यदि योषितः ।
तदा क्षितिपतेः पत्नी सूते वा क्षितिपं सुतम् ॥ १३०

नासाग्रे मशकः शोणो महिष्या एव जायते ।
कृष्णः स एव भर्तृघ्न्याः पुंश्चल्या वा प्रकीर्तिताः ॥ १३१

नाभेरधस्तात्तिलकं मशको लाञ्छनं शुभम् ।
मशकस्तिल[3]कश्चिह्नं गुल्फदेशे दरिद्रकृत् ॥ १३२

करे कण्ठे कपोले वा कर्णे वामे स्फुरेद्यदि ।
एषां त्रयाणामेकं तु प्राग्गर्भे पुत्रसूर्भवेत् ॥ १३३

फालगेन त्रिशूलेन निर्मितेन स्वयम्भुवा ।
नितम्बिनीसहस्राणां स्वामित्वं योषिदाप्नुयात् ॥ १३४

---

1. क. ख. बांधवाः
2. क, ख. ग. एकं
3. ग. को बिन्दुः

सुप्ता परस्परं या तु दन्तान् कटकटायते ।
सुलक्षापि न सा शस्ता यत्किञ्चित्प्रलपेत्तथा ॥ १३५

पाणौ प्रदक्षिणा[1]वर्तौ धर्म्यौ वामौ न शोभनौ ।
नाभौ श्रुतावुरसि वा दक्षिणावर्त ईडितः ॥ १३६

सुखाय दक्षिणावर्तः पृष्ठवंशस्य दक्षिणे ।
अन्तःपृष्ठं नाभिसमो बह्वायुःपुत्रवर्धनः ॥ १३७

राजपत्न्याः प्रदृश्येत भगमूले प्रदाक्षिणः ।
स चेच्छकटभाङ्गिः स्यात् [2]पत्यपत्यविनाशनः ॥ १३८

[3]कटिगो गुह्यवेधेन प्रत्यपत्यनिपातनः ।
स्याता[4]मुदरवेधेन पृष्ठावर्तौ न शोभनौ ॥ १३९

एकेन हन्ति भर्तारं भवेदन्येन पुंश्चली ।
[5]कर्णगो दक्षिणावर्तो दुःखवैधव्यहेतुकः ॥ १४०

शीर्षे वाथ ललाटे वा त्याज्यो दूरात्प्रयत्नतः ।
सा पतिं हन्ति वर्षेण यस्या मध्ये कृकाटिका ॥ १४१

प्रदक्षिणौ वा वामौ वा रोम्णामावर्तकौ स्त्रियाः ।
एको वा मूर्धनि द्वौ वा वामावामगती अपि ॥ १४२

सा दशाहात् पतिं हन्ति त्याज्या दूरात्सुबुद्धिना ।
कट्यावर्ता च कुलटा नाभ्यावर्ता पतिव्रता ॥ १४३

पृष्ठावर्ता च भर्तृघ्नी कुलटा वापि जायते ।

स्कन्दः—

सुलक्षणापि दुःशीला कुलक्षणशिरोमणिः ॥ १४४

कुलक्षणापि या साध्वी सर्वलक्षणभूस्तु सा ।
सुलक्षणा सुचारित्रा स्वाधीना पतिदेवता ॥ १४५

---

1. क. ख. -वर्तो धर्म्यो वामो न शोभनः
2. ख. प्रत्यपत्यनिपातनः
3. अर्धमिदं अ पुस्तके नास्ति
4. ख. -मुत्तर-
5. अ. कण्ठको

विश्वेशानुग्रहादेव गृहे योषिदवाप्यते ।
अलङ्कृताः सुवासिन्यो याभिः प्राक्तनजन्मनि ॥ १४६

नानाविधैरलङ्कारैस्ताः सुरूपा भवन्ति हि ।
सुतीर्थेषु वपुर्याभिः क्षालितं वा विभावितम् ॥ १४७

ता लावण्यतरङ्गिण्यो भवन्ति हि सुलक्षणाः ।
अर्चिता जगतां माता याभिर्मृडवधूरिह ॥ १४८

ता भवन्ति सुचारित्रा योषाः स्वाधीनभर्तृकाः ।
स्वाधीनपतिकानाञ्च सुशीलानां मृगीदृशाम् ॥ १४९

स्वर्गापवर्गावत्रैव सुलक्षणफलं हि तत् ।
सुलक्षणैः सुचारित्रैरपि मन्दायुषं पतिम् ॥ १५०

दीर्घायुषं प्रकुर्वन्ति प्रमदाः [1]शुभलक्षणाः ।
[2]तस्मात्सुलक्षणा योषा परिणेया विचक्षणैः ॥ १५१

लक्षणानि परीक्ष्यादौ हित्वा दुर्लक्षणान्यपि ।
लक्षणानि मयोक्तानि सुखाय गृहमेधिनाम् ॥
प्रवृद्धिमुपयान्त्येव सत्यं विप्रा मयोदितम् ॥ १५२

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे सुलक्षणस्त्रीपरिग्रह-
कथनं नाम प्रथमोऽध्यायः

---

1. क, ख, ग, प्रमदास्पदम्    2. क, ख, ग, अतस्सु-

## ॥ द्वितीयोऽध्यायः ॥

### सौदर्यप्रशंसा

सूतः—

तपो महत्परो धर्मः श्रेयांसि सकलं च यत् ।
इह लोके परत्रापि सत्सौदर्येण सिध्यति ॥ १

कर्मणा मनसा वाचा [1]यस्य स्निग्धोऽस्ति सोदरः ।
स तेन दुःखमुत्तीर्य लभते परमं सुखम् ॥ २

इतिहासं पुरावृत्त[2]मस्मिन्नर्थे वदाम्यहम् ।
पुरा बभूवतुः ख्यातौ पुण्याश्रमनिवासिनौ ॥ ३

भ्रातरौ शङ्खलिखितौ परमे तपसि स्थितौ ।
[3]शान्तौ दान्तौ सदाचारौ ब्रह्मचर्यव्रते स्थितौ ॥ ४

उभौ लोकहितार्थाय [4]धर्मशास्त्रप्रवर्तकौ ।
अनपायमनुद्वेगकरं सद्धर्मसंहितम् ॥ ५

[5]ववृधे दिक्षु सर्वासु सौभ्रात्रं शाश्वतं तयोः ।
पितरं मातरं देवं धर्मं सत्यं तथा तपः ॥ ६

अमंस्त भ्रातरं ज्येष्ठं लिखितः सर्वकर्मवित् ।
प्रातर्हुताग्नी विधिवद्धर्मवादरतौ मिथः ॥ ७

[6]अयाचितव्रतरतौ चक्रतुः सुमहत्तपः ।
प्राप्ते मध्याह्नसमये सुस्नातौ ब्रह्मचारिणौ ॥ ८

देवानृषीन् पितॄंश्चापि सन्तर्प्य नियताशयौ ।
गृहीतपर्णपुटकौ चेरतुस्तरुमण्डले ॥ ९

---

1. क. यस्याः
2. क. ख. मर्थेऽस्मिन्प्रवदामि वः
3. अर्धमिदं अ. पुस्के नास्ति
4. क. ख. यथाशास्त्र
5. क. पप्रथे ख. प्रदधे
6. क. ख. अनाशक-

तरुभ्यो यन्निपतितं पत्रं पुष्पं फलं तथा ।
तेनैव विहिताहारौ धर्म्यं पन्थानमाश्रितौ ॥ १०

क्षुधया पीड्यमानौ च तपसा च नियन्त्रितौ ।
अयाचितव्रतं धीरौ न कदाचिदमुञ्चताम् ॥ ११

कदाचित् क्षुधया खिन्नो लिखितोऽप्याकुलाशयः ।
भ्रातरं वञ्चयित्वैव ज्यायांसमकुतो[1]भयः ॥ १२

पद्भ्यामाक्रम्य शाखाग्राण्यारुह्याश्रमपादपान् ।
उदरं पूरयामास यथेष्टोपचितैः फलैः ॥ १३

क्षुधायां विनिवृत्तायां चले मनसि सुस्थिते ।
अवरुह्य स वृक्षेभ्यो यथापूर्वं स्थितोऽभवत् ॥ १४

प्रसन्नमुखरागं तं लिखितं वीक्ष्य सर्ववित् ।
शङ्खो ज्ञात्वा च तद्वृत्तं चिन्तां तात्कालिकीं ययौ ॥ १५

अनेन सुमहच्चौर्यं कृतं वै मुग्धचेतसा ।
अधर्म्यं लोकविद्विष्टं तपोमाहात्म्यनाशनम् ॥ १६

अहिंसादिषु योगाङ्गेष्वस्तेयं परमं विदुः ।
तस्मादयं परिभ्रष्टश्चापलेन हताशयः ॥ १७

कुपितो न वदेत् किं वा कलुषः किं न चिन्तयेत् ।
व्याधितो न त्यजेत् किं वा क्षुधितो न करोति किम् ॥ १८

अलमन्यैरनात्मज्ञैरात्मानं शाश्वतं विदन् ।
अस्य दग्धोदरस्यार्थे कः कुर्या[2]दसमञ्जसम् ॥ १९

लिखितोऽयं मम भ्राता कनीयान् धर्मतत्त्ववित् ।
अनेनापि कृतं कर्म तदेतल्लोकगर्हितम् ॥ २०

उपेक्षे यद्यहं कर्म भ्रातरि स्थितमीदृशम् ।
निंद्यः स्यां दोष[3]दोषेक्षा यद्ययं दण्ड्यतां व्रजेत् ॥ २१

---

1. अ. भयम्
2. क. ख. -दसमञ्जसः
3. क. -तोपेक्षा अ. -तोपेक्ष्ये

स [1]एव खलु सद्भ्राता भ्रातुर्यत्पापमुल्बणम् ।
प्रशमय्य हिते मार्गे स्थापयत्येव तं पुनः ॥ २२

इति सञ्चिन्त्य निर्विण्णो विचार्य च पुनः पुनः ।
अवोचल्लिखितं शङ्खो रुषेव स्फुटिताधरः ॥ २३

कृतं हि सुमहच्चौर्यं मम भ्रात्रा त्वयाधुना ।
[2]न चिन्तितश्च सन्मार्गस्तस्माद्दण्ड्योऽसि नान्यथा ॥ २४

इति शङ्खस्य वचनं ज्येष्ठस्य परमौजसः ।
श्रुत्वा चकम्पे लिखितः किंकर्तव्यविमूढधीः ॥ २५

[3]पापान्मया कृतं चौर्यं प्रभो भ्रातः क्षमस्व तत् ।
इति जग्राह चरणौ शङ्खस्य लिखितस्तदा ॥ २६

मत्पादस्पर्शने योग्यो न त्वं संप्रति पापकृत् ।
प्रायश्चित्तेन शुद्धः सन् [4]स्प्रष्टुं योग्यो भविष्यसि ॥ २७

गच्छ धर्मध्वजं [5]ब्रूहि स त्वां पूतं करिष्यति ।
इत्युक्त्वा प्रेषयामास धर्मध्वजमहीपतेः ॥ २८

स धर्मविदुषः पार्श्वं लिखितं मुनिरग्रजः ।
यदाज्ञापयसीत्युक्त्वा नत्वा च लिखिते गते ॥ २९

शङ्खोऽप्यचीचरद्धर्मं सोदरस्नेहपीडितः ।
आलोड्य धर्मशास्त्राणि विचार्य च पुनः पुनः ॥ ३०

[6]स तु निःश्रेयसे भ्रातुर्दध्यौ देवं सदाशिवम् ।
जजाप मन्त्रान् जप्यांश्च तताप परमं तपः ॥ ३१

ननाम देवताः सर्वाश्चकारार्थकरीः क्रियाः ।
लिखितोऽप्यनुतापेन युक्तो ज्येष्ठगिरं स्मरन् ॥ ३२

---

1. क. ख. एवं
2. क. ख. निहतश्चैव
3. क. ख. पापं माय
4. अ. द्रष्टुं
5. ख. भूपं
6. ख. स मुनिः श्रे-

धर्मध्वजं जगामाशु धर्मविद्भिरुपासितम् ।
[1]दृष्ट्वा ऋषिषु विख्यातं वेदवेदाङ्गपारगम् ॥ ३३

लिखितं सह विप्रेन्द्रैरुदतिष्ठन्निजासनात् ।
प्रत्युद्गतश्च सहसा राज्ञा दीनमुखो मुनिः ॥ ३४

प्रशस्य तं सतां बन्धुं मध्येसभमभाषत ।
राजन् धर्मभृतां श्रेष्ठ गोप्तासि जगतां प्रभो ॥ ३५

शास्ता च कृतपापानां तस्मात्त्वामस्मि संश्रितः ।
मय्यस्ति सुमहत्पापमार्जितं चौर्यकर्मणा ॥ ३६

तस्मान्मां मोचयाद्य त्वं धर्मशास्त्रोक्तवर्त्मना ।
मुक्तपापो [2]यथाहं स्यां [3]तथा सम्भाव्य एव ते ॥ ३७

इत्युदीर्य निजं चौर्यं व्याचचक्षे स विस्तरात् ।
लिखितस्य वचः श्रुत्वा विषादस्तिमितेक्षणः ॥ ३८

अस्मिंश्च सम्भवेत्पापं कथमित्याकुलोऽभवत् ।
मा कृथास्त्वं महाराज विचारं मयि पापिनि ॥ ३९

यथोक्तेनैव दण्डेन दण्ड्यं मां दण्डयाधुना ।
उपेक्षसे[4]ऽद्य यदि मां शापस्ते भविता महान् ॥ ४०

तद्विचार्य समं सभ्यैः कुरु यद्धितमात्मनः ।
इति तस्य वचः श्रुत्वा राजा धर्मध्वजः कृती ॥ ४१

तथेत्यालोच्य शास्त्राणि युक्तं दण्डमवैक्षत ।
कार्यतत्त्वं विनिश्चित्य राजा सभ्यानुमोदितः ॥ ४२

लिखितस्य [5]करच्छेदं प्रायश्चित्तममन्यत ।
गृहीत्वा परशुं तीक्ष्णं स्वयमेव विशां पतिः ॥ ४३

तेनैव लिखितस्याशु हस्तौ चिच्छेद धीरधीः ।
पूतोऽसि कर्मणानेन गच्छ द्विजवरानघ ॥ ४४

---

1. क. ख. स दृष्ट्वा ऋषिषु ख्यातं
2. ख. यदाहं
3. ख. तदा
4. क. ख. यदिह मां
5. क. ख. करच्छेदः

तिष्ठ धर्मोपरि भ्रातुर्ज्येष्ठस्य कुरु शासनम् ।
इत्युक्त्वा तं प्रणम्याथ विशुद्धं शुद्धमानसः ॥ ४५

पुनः पुनश्च सम्पूज्य स पुरोधाः समं द्विजैः ।
उपचारैर्बहुविधैस्तोषयामास भूपतिः ॥ ४६

सत्यं [1]सत्त्वं क्षमां धैर्यं विनयं शास्त्रनिर्णयम् ।
दृष्ट्वा धर्मध्वजस्यैव तुतोष लिखितो मुनिः ॥ ४७

पुरःफलाभिराशीर्भिरभिवर्ध्यैनमात्मवित् ।
तपश्चर्यैकनिष्ठस्य ज्येष्ठस्यान्तिकमाययौ ॥ ४८

विछिन्नहस्तं तं दृष्ट्वा भ्रातरं भ्रातृवत्सलः ।
भ्रातः पूतोऽसि धन्यस्त्वमित्युदीर्य मुदान्वितः ॥ ४९

अस्यां नद्यां महाभाग स्नाहीति पुनरब्रवीत् ।
स च स्नात्वा महानद्यां भ्रातुर्ज्यैष्ठस्य शासनात् ॥ ५०

उत्तिष्ठंश्च [2]समुत्पन्नौ बाहू स्वौ समुदैक्षत ।
लिखितस्य पुनर्हस्तौ प्रादात्सा हि महानदी ॥ ५१

तदा प्रभृति लोकेऽस्मिन् बाहुदेत्येव पप्रथे ।
अथ ताभ्यां स हस्ताभ्यां गृहीत्वा चरणौ गुरोः ॥ ५२

कृतार्थोऽस्मीत्युदीर्योच्चैः प्रणनाम पुनः पुनः ।
तस्मिंश्च समये दिव्या पुष्पवृष्टिः पपात ह ॥ ५३

देवदुन्दुभयो नेदुस्तुष्टुवुश्च दिवौकसः ।
अथ लोकगुरुर्ब्रह्मा सेन्द्रैः सह सुधाशनैः ॥ ५४

शङ्खस्यान्तिकमागम्य प्रशशंस च तं मुदा ।
भ्रातृस्नेहेन तुष्टोऽस्मि शङ्ख योगीन्द्र सांप्रतम् ॥ ५५

तस्माद्भूयात्तपःसिद्धिर्भूयो भूयस्तवानघ ।
लिखितोऽप्येष धीरात्मा [3]तपस्वी धूतकल्मषः ॥ ५६

---

1. अ. सत्यं क्षमं
2. क. ख. समुद्भूतौ
3. अ. तरस्वी

[1]तस्यापि सिद्धयः सन्तु धर्म्यास्त्वद्वाक्यकारिणः ।
इह लोके चिरं कालमुषित्वा विश्ववन्दितः ॥ ५७

भ्रात्रा सह समागच्छ तमःपारे पदं मम ।
इत्युक्त्वा[2]न्तरभूत्तस्मै वरं दत्त्वा पितामहः ॥ ५८

सत्सोदर्यस्य माहात्म्यं प्रशंसन् [3]स्वपदं ययौ ।
शङ्खोऽपि हर्ष[4]सम्पूर्णो ब्रह्मणो वाक्यगौरवात् ॥ ५९

उवास लिखितोपेतः सुखी पुण्ये निजाश्रमे ।
तस्माल्लोकेषु सद्भ्रात्रा सुखं भ्रातुः प्रवर्तते ॥ ६०

[5]लक्ष्मणः परमां ख्यातिं संप्राप्तो भ्रातृसेवया ।
भरतोऽपि महातेजा ज्येष्ठचित्तानुवर्तनात् ॥ ६१

सौभ्रात्रात् पाण्डवाः सर्वे लेभिरे कीर्तिमुत्तमाम् ।
अन्येऽपि शतशो लोके सत्सोदर्येण भूयसा ॥
संप्राप्ताः परमां कीर्तिमिह लोके परत्र च ॥ ६२

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे सत्सौदर्यप्रशंसा
नाम द्वितीयोऽध्यायः

---

1. क. ख. अस्यापि
2. क. ख. स बहुं
3. ख. स्वपुरं
4. क. ख. संपन्नो
5. इमौ (61, 62) श्लोकौ अ. पुस्तके न स्तः

## ॥ तृतीयोऽध्यायः ॥

### कामदूषणम्

सूतः—

कामः कलुषयत्येव मनांसि महतामपि ।
को वा लङ्घयिता तस्य कौटिल्यं कुटिलात्मनः ॥ १

सङ्कल्पाज्जायते कामः कामाद्रागोऽभिजायते ।
रागाद्द्रव्येषु सक्तिः स्यात्तथा नाशं प्रयाति हि ॥ २

काङ्क्षन्ति परदारांश्च कामव्याकुलमानसाः ।
तद्दोषव्याकुलीभूताः प्रणाशमुपयान्ति हि ॥ ३

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
वसत्सु पाण्डुपुत्रेषु विराटनगरे तदा ॥ ४

याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती समाश्रिता ।
तां वीक्ष्य कीचकः कामकलुषीकृतमानसः ॥
तस्याः समीप[1]मागत्य वचनञ्चेदमब्रवीत् ॥ ५

शुभञ्च रूपं प्रथमञ्च ते वयो
निरर्थकं केवलमद्य भामिनि ।
अधार्यमाणा स्रगिवोत्तमा यथा
न शोभसे सुन्दरि [2]शोभयानया ॥ ६

दासस्तवाहं पृथुताम्रलोचने
तवानुगो वारणखेलगामिनि ।
कन्दर्पवेगाभिहतोऽस्म्यनिन्दिते
खगो वसन्तेष्विव [3]पुष्पमाश्रितः ॥ ७

---

1. क. ख. मागम्य
2. क. ख. शोभना तथा
3. क. ख. पुष्पमूर्च्छितः

[1]त्यजामि दरान् मम ये पुरातना-
स्ते कर्म कुर्युस्तव दास्य एव हि ॥ ८

[2]समा रूपेण वयसा मद्गृहं व्रज भामिनि ।
तत्र [3]यद्वर्तते द्रव्यं तव सर्वं ददामि [4]च ॥ ९

दारान् सुतान् कुलं कीर्तिं जीवितं धनमेव वा ।
त्यजामि त्वत्कृते सर्वं त्वमेव मम जीवितम् ॥ १०

यथा कामशराविद्धो न गच्छेयं यमालयम् ।
तथा कुरु विशालाक्षि [5]भवदालिङ्गनोत्सवात् ॥ ११

सूतः—

एवमुक्तानवद्याङ्गी कीचकेन दुरात्मना ।
द्रौपदी तमुवाचेदं सैरन्ध्रीवेषधारिणी ॥ १२

अप्रार्थनीयां सैरन्ध्रीं हीनां किमिति याचसे ।
अनेन यत्नेन [6]वरा प्राप्या त्वत्कुलवर्धिनी ॥ १३

सुखासुखे ध्रुवे रत्यां स्वदारपरदारयोः ।
परदारा वयमतो न स्प्रष्टव्यास्त्वयाधुना ॥ १४

यदि [7]स्पृशेस्त्वां ते हन्युर्गन्धर्वाः पतयो मम ।
निबद्धः कालपाशेन किमित्यग्निं प्रवेक्ष्यसि ॥ १५

प्रत्याख्यातः कृष्णयैवं कीचकः काममोहितः ।
प्रविश्य राजभवनं सुदेष्णापुरतः स्थितः ॥ १६

प्रार्थयामास [8]सैरन्ध्रीसङ्गमं तत्र पूर्वजाम् ।
सुदेष्णा भ्रातरं प्राह तवैषा न शुभा मतिः ॥ १७

---

1. अस्य श्लोकस्यार्धमेकं न कुत्राप्युपलब्धम्
2. क. ख. समरूपेण
3. क. ख. यद्विद्यते
4. क. ख. तत्
5. क. ख. त्वदङ्गालिङ्ग-
6. क. परा ख. पुरा
7. क. ख. स्पृष्टास्त्वया हन्यु-
8. अ. क. सैरंध्रीं सङ्गमं तत्र पूर्वकम्

पतयोऽस्यास्तु गन्धर्वाः पञ्च त्वां हन्युरोजसा ।
त्वमेकः पापकृत् पापात् स्वजनं घातयिष्यसि ॥ १८

गच्छ वेश्म प्रेषयामि तां साम्ना स्व[1]वशे कुरु ।
तच्छ्रुत्वा कीचके याते सैरन्ध्रीं सावदद्वचः ॥ १९

सैरन्ध्रि कीचकगृहं गच्छ मध्वानय क्षणात् ।
न गच्छमीति मा ब्रूहि नास्ति मे त्वादृशी सखी ॥ २०

तयैवमुक्ता कृष्णा तु शङ्कमाना हृदन्तरे ।
ब्रह्माणं विष्णुमीशानं स्कन्दं वरुणमश्विनौ ॥ २१

कुबेरं मारुतं वह्निं रक्षार्थं पर्यकीर्तयत् ।
पूषा [2]चास्यै महावेगं रक्षो रक्षार्थमादिशत् ॥ २२

सा मृगीव परित्रस्ता कीचकालयमासदत् ।
स दृष्ट्वा तां कामवशादुत्थाय प्रलपन् बहु ॥ २३

बाले मया रमस्वेति दक्षिणं पाणिमामृशत् ।
तं विधूय सभां यान्तीं स तु केशे परामृशत् ॥ २४

[3]तथाविधं विराटस्तं सांत्वेनैव न्यवारयत् ।
पार्थयुक्तां सभां प्राप्तां सभ्याः कृष्णामपूजयन् ॥ २५

[4]कृष्णावेद्य सुदेष्णायै वृत्तान्तं स्वगृहं ययौ ।
भीमेन च रहः कृत्वा संविदं तस्य वाक्यतः ॥ २६

नाट्यशालां कीचकस्य सङ्केतस्थानमादिशत् ।
कृष्णावाक्यात्कीचकोऽपि प्रीतश्चाकल्पभूषितः ॥ २७

सङ्केतस्थानमगमद्रात्रौ कामविमोहितः ।
तमागतं भीमसेनः पूर्वं तत्स्थानमागतः ॥ २८

---

1. क. ख. वशं
2. क. ख. तस्यै गूढतरं
3. अ. परामृशन्तं तं क्रुद्धं
4. इत आरभ्य अष्टमाध्यायान्तो भागः अ. पुस्तके नोपलभ्यते

स्पृशन्तं रक्ष सैरन्ध्रि पश्येति स्मरपीडितम् ।
न त्वयेदृग्विधा नारी दृष्टपूर्वेति [1]संलपन् ॥ २९

जग्राह प्रहसन् केशे सिंहः क्षुद्रमृगं यथा ।
आक्षिप्य कीचकः केशान् द्वन्द्वयुद्धे व्यवस्थितः ॥ ३०

तावुभौ क्रोधताम्राक्षौ मत्ताविव मतङ्गजौ ।
मुहूर्तं चक्रतुर्युद्धं स्मरणादतिभीषणम् ॥ ३१

ततो भीमः क्रोधयुक्तः केशेष्वागृह्य वै बलात् ।
मुष्टिना ताडयामास सोऽप्यार्तो व्यसुरापतत् ॥ ३२

तस्य पादौ करौ शीर्षं मृदित्वाङ्गे न्यवेशयत् ।
कृष्णायै दर्शयित्वा तं मृतं स्वस्थानमाययौ ॥ ३३

ततः सा पञ्चगन्धर्वैर्मत्प्रियैर्निहतः स्वयम् ।
उवाच सहसा पालान् तेऽपि तं ददृशुर्मृतम् ॥ ३४

तच्छ्रुत्वा सूतपुत्राश्च यदर्थं कीचको हतः ।
तत्तां [2]सहैव धक्ष्याम इत्यूचुः शोक[3]वेगिताः ॥ ३५

तान् भीमः [4]पादतो घातात् प्राहिणोद्यमसादनम् ।
[5]एकस्य पापाद्बहवो विनश्यन्तीति वै श्रुतिः ॥ ३६

दृष्ट्वा तु तांस्तथा भूतान्दुःखव्याकुलमानसः ।
विराटः सूतपुत्राणामकरोदुत्तरक्रियाम् ॥ ३७

ततः प्रभृति तां सर्वे भीता दृष्ट्वा च वीक्षितुम् ।
[6]एवं ते निहताः सर्वे सूतपुत्राश्च षट्शतम् ॥ ३८

तस्मात्कामाभिभूतानां भवत्येवेदृशी दशा ।
तस्मादात्महितप्रेप्सुर्न भवेत्काममोहितः ॥ ३९

1. ख. सर्पवत्
2. क. सहाति-
3. क. वेगतः
4. क. पादपाघातात
5. क. पुस्तके इदमर्धं 37 श्लोकः, 38 श्लो० पूर्वार्धं च न दृश्यते।
6. क. एकस्य पाप-

हृत्वा सीतां रावणोऽपि रामेण निहतो रणे ।
एवमन्येऽपि बहवो हताः कामानुरोधतः ॥ ४०

नृणां ग्रहगृहीतानां मन्त्रौषधमनुत्तमम् ।
कामग्राहाभिभूतानां मृतिः केवलमौषधम् ॥ ४१

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे कामदूषणं
नाम तृतीयोऽध्यायः

॥ चतुर्थोऽध्यायः ॥

## कोपदूषणम्

सूतः—

शृण्वन्तु कोपकालुष्यमृषयः संशितव्रताः ।
कोपोऽन्तरारिषड्वर्गेष्वत्यन्तं कुटिलोत्तमः ॥ १

धैर्यं शौर्यं श्रुतिं प्रज्ञामैश्वर्यं परमार्जितम् ।
सर्वं निहन्ति वै सद्यः कोपः कालुष्यकारणम् ॥ २

[1]भ्रश्यन्ति सम्पदः सर्वाः सम्भवन्ति विपत्तयः ।
पुंसां निसर्गदुर्व्याधिः कोपावेशाकुलात्मनाम् ॥ ३

कोपो नाम मनुष्याणां रिपुरात्यन्तिको मतः ।
भवन्ति दूषितास्तेन गुणिनां सद्गुणोदयाः ॥ ४

अज्ञानतिमिरोन्मेषविहितज्ञानचक्षुषाम् ।
कृत्याकृत्यानभिज्ञानां कुतः कोपवतां सुखम् ॥ ५

शूरं तपस्विनं दान्तं धर्मज्ञं वेदपण्डितम् ।
सहसा मोहयत्येव कोपस्तु स्वीयलीलया ॥ ६

आत्माभिमानिनः केचित् कोपादनुचिते पदे ।
संक्रुध्य चान्तस्तप्यन्ते निमग्नास्तु महापदि ॥ ७

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
नाभागतनयः पूर्वमम्बरीषो महामतिः ॥ ८

सप्तद्वीपवतीं पृथ्वीं शशासाप्रतिमो भुवि ।
तस्य पालयतः पृथ्वीं सप्तसागरमेखलाम् ॥ ९

वासुदेवे भक्तिरभूत्तथा भागवतेषु च ।
मनः कृष्णपदाम्भोजे वाचं तद्गुणवर्णने ॥ १०

---

1. क. नश्यन्ति

श्रोत्रे कृष्णकथास्वादे करौ तद्गृह[1]मार्जने ।
गात्रं भगवतः स्पर्शे दृशौ वैकुण्ठदर्शने ॥ ११

पादौ तत्क्षेत्रगमने शिरस्तत्पादवन्दने ।
घ्राणं वैकुण्ठपादाब्जतुलस्यां विदधे नृपः ॥ १२

एवं नाभागतनयो महाभागवताग्रणीः ।
दासभावे हरौ सक्तः श्रियं निश्चित्य चञ्चलाम् ॥ १३

ईजे च विविधैर्यज्ञैर्यज्ञमूर्तिधरं हरिम् ।
एवं सद्भक्तियुक्तस्य तपसा तोषितो हरिः ॥ १४

ददौ सुदर्शनं तस्य रक्षार्थममितौजसः ।
स विष्णुचक्रमाहात्म्यान्निर्भिन्नारातिमण्डलः ॥ १५

सांवत्सरं स्त्रिया सार्धं [2]चकार द्वादशीव्रतम् ।
व्रतान्ते कार्तिके मासे त्रिरात्रं समुपोषितः ॥ १६

स्नातः कदाचित् कालिन्द्यां हरिं नित्यं वनेऽर्चयन् ।
महाभिषेकविधिनाभिषिच्य पुरुषोत्तमम् ॥ १७

गवां रुक्मविषाणानां रूप्याङ्घ्रीणां सुवाससाम् ।
पयःशीलवयोरूपवत्सोपस्करसम्पदाम् ॥ १८

प्राहिणोत् साधुविप्रेभ्यः [3]सहस्राण्यर्बुदानि षट् ।
भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तरम् ॥ १९

लब्धकामैरनुज्ञातः पारणायोपचक्रमे ।
तत्र तस्यातिथिः साक्षाद्दुर्वासा भगवानभूत् ॥ २०

तमानर्च्यातिथिं भूपः प्रत्युत्थानासनार्हणैः ।
ययाचेऽभ्यवहाराय पादमूलमुपागतः ॥ २१

प्रतिनन्द्य स तद्याच्ञां कर्तुमावश्यकं गतः ।
ममज्ज सुचिरं ध्यायन् कालिन्दीसलिले शुचौ ॥ २२

---

1. क. जीवने
2. क. चकारैकादशी-
3. क. सहस्रं विविधानि

मुहूर्तार्धावशिष्टायां द्वादश्यां पारणं प्रति ।
चिन्तयामास धर्मज्ञैः कुतस्तद्धर्मसङ्कटम् ॥ २३

ब्राह्मणातिक्रमे दोषो द्वादश्यामप्यपारणे ।
यत्कृत्वा साधु मे भूयादधर्मो वा न संस्पृशेत् ॥ २४

अम्भसा केवलेनाथ करिष्ये व्रतपारणम् ।
आहुरब्भक्षणं प्राज्ञा असितानां सितं च[अशितं नाशितं च]तत् ॥ २५

इति प्राश्य स राजर्षिश्चिन्तयन् मनसा हरिम् ।
[1]प्रत्याचष्टे द्विजश्रेष्ठा द्विजागमनमेव तत् ॥ २६

दुर्वासाश्च नदीतीरात् कृतावश्यक आगतः ।
राज्ञोऽपि प्राशितं तस्य बुबुधे चेष्टितं धिया ॥ २७

मन्युमाकारयामास मान्यताभङ्गकारणम् ।
तथा हि विदुषां चित्तं कोपः कलुषयत्यहो ॥ २८

कोपेन प्रचलद्गात्रो भ्रुकुटीकुटिलाननः ।
अवकीर्य जटाजालमवमुच्य कमण्डलुम् ॥ २९

अजानञ्श्रवणोद्देशाद्गलितामक्षमालिकाम् ।
दशनच्छदमामृद्नन्नसकृद्दन्तपङ्क्तिभिः ॥ ३०

निर्दहन्निव दिग्भागान् दृशा कोपाभिताम्रया ।
अवमत्य सदस्यानामखिलाः सान्त्वनक्रियाः ॥ ३१

कल्पाग्निकालकूटानां कालुष्यांशसहोदरैः ।
वाक्यैः सन्तर्जयन् भूपं कोपावेशातिनिष्ठुरैः ॥ ३२

इतस्ततोऽपि निर्व्याजात् सञ्चरन् विकटोत्कटम् ।
अन्तरार्भटिनैष्ठुर्यरोषसंरम्भसूचकम् ॥ ३३

उवाच वचनं क्रूरं दुर्वासाः कोपिनां प्रभुः ।
अहो अस्य नृशंसस्य श्रिया मत्तस्य पश्यत ॥ ३४

---

1. क. प्रत्याचष्ट

महद्व्यतिक्रमं विष्णोरभक्तस्येशमानिनः ।
यो माममतिथिमायान्तमातिथ्येन निमन्त्र्य च ॥ ३५

अदत्त्वा भुक्तवांस्तस्य सहसा दर्शये फलम् ।
एवं ब्रुवन् समुत्कृत्य जटां रोषेण दीपितः ॥ ३६

तया स निर्ममे कृत्यां तस्मै कालान्तकोपमाम् ।
तां ज्वलन्तीमापतन्तीं कम्पयन्तीं पदा महीम् ॥ ३७

प्रेषयन्तीं समुद्वीक्ष्य न चचाल पदा नृपः ।
प्रदिष्टं भृत्यरक्षायै पुरुषेण महात्मना ॥ ३८

ददाह कृत्यां तां [1]चक्रमिद्धैध इव पावकः ।
तदभिद्रवमुद्वीक्ष्य स्वप्रभावं च निष्फलम् ॥
दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया ॥ ३९

तं चान्वधावद्भगवद्रथाङ्गं
दिवाग्निरुद्धूतशिखो यथा हिमम् ।
तथानुषक्तं मुनिरीक्षमाणो
गुहां विविक्षुः प्रससार मेरोः ॥ ४०

दिशो नभः क्ष्मां वितलं समुद्रान्
स लोकपालांस्त्रिदिवं गतश्च ।
यतो यतो धावति तत्र तत्र
सुदर्शनं दुष्प्रसहं ददर्श ॥ ४१

अलब्धनाथः स तदा ब्रह्माणं शरणं गतः ।
भगवन् रक्ष रक्षेति चक्रतापोपतापितः ॥ ४२

ब्रह्मा तमाह न त्वाहं रक्षितुं प्रभुरागतम् ।
को निवारयिता विष्णुचक्रस्यास्य पराक्रमम् ॥ ४३

प्रत्याख्यातो विरिञ्चेनाप्येवं चक्रोपपीडितः ।
दुर्वासाः शरणं यातः शर्वं कैलासवासिनम् ॥ ४४

1. क, चक्रं हेमांग्निमिव

शङ्करोऽपि तमालोक्य तञ्च चक्रभयाकुलम् ।
अवदन्नैव शक्तोऽहं विष्णुचक्रनिवारणे ॥ ४५

अहं ब्रह्मासुराः सर्वे यस्य मायासमावृताः ।
तस्य विश्वेश्वरस्येदं चक्रं दुर्विषहं हि नः ॥ ४६

तमेव शरणं याहि हरिस्ते शं विधास्यति ।
ततो निराशो दुर्वासाः पदं भगवतो ययौ ॥ ४७

आक्रोशन् कृष्ण कृष्णेति रक्ष रक्षेति च ब्रुवन् ।
अजानता तेऽनुभावं विहितं च प्रियाप्रियम् ॥ ४८

विधेहि तस्यापचितिं विधेयं नरकापह ।

श्रीभगवान्—

अहं भक्तपराधीनो ह्यहं भक्तजनप्रियः ॥ ४९

नाहमात्मानमाशंसे मद्भक्तैः साधुभिर्विना ।
ये दारागारपुत्राप्तान् प्राणान् वित्तमिवापरम् ॥ ५०

हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ।
मयि निर्बद्धहृदयाः साधवः समदर्शिनः ॥ ५१

वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ।
मत्सेवया प्रदिष्टं ते सालोक्यादिचतुष्टयम् ॥ ५२

नेच्छन्ति स्वेच्छया पूर्णं कुतोऽन्यत् कालविप्लुतम् ।
साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ॥ ५३

मदन्यं ते न जानन्ति नाहं तेभ्यो मनागपि ।
अयं ह्यात्मापचारस्ते यतस्तं यातु वै भवान् ॥ ५४

साधुषु प्रहतं तेजः प्रहर्तुः कुरुते भयम् ।
तपो विद्या च विप्राणां निःश्रेयसकरे उभे ॥ ५५

ते एव दुर्विनीतस्य कल्पेते कर्तुमन्यथा ।
ब्रह्मंस्तं गच्छ भद्रं ते नाभागतनयं नृपम् ॥ ५६

क्षमापय महाभागं ततः शान्तिर्भविष्यति ।

सूतः—

एवं भगवतादिष्टो दुर्वासाश्चक्रतापितः ॥ ५७

अम्बरीषमुपागम्य तत्पादौ दुःखितोऽग्रहीत् ।
स तु तद्व्यसनं वीक्ष्य पादस्पर्शविलज्जितः ॥ ५८

अस्तावीत्तद्धरेश्चक्रं कृपया पीडितो भृशम् ।
स्तुत्वा तत्तु हरेश्चक्रमेवमप्याददे वचः ॥ ५९

यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः ।
कुलं नो विप्रदेवं चेद् द्विजो भवतु विज्वरः ॥ ६०

यदि नो भगवान् प्रीत एकः सर्वगुणाश्रयः ।
सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥ ६१

इत्युक्तमात्रे भूपेन चक्रं तं प्रमुमोच च ।
मुक्तं चक्रभयाद्विप्रं भूयोऽप्यभ्यवहारतः ॥ ६२

पूजयामास तदनु पारणां च चकार ह ।
अभिवर्ध्य तमाशीर्भिर्दुर्वासाः प्रीतिसंयुतः ॥ ६३

ययौ विहायसा ब्रह्मसदनं सुरसेवितम् ।
महीपोऽपि महीं सर्वां शशासावध्यशासनः ॥ ६४

सर्वलोकप्रधानस्य विष्णोराज्ञापुरस्सरम् ।

सूतः—

कोपात् समृद्धिमायाति यस्य दुर्वाससस्तपः ॥ ६५

सोऽप्यकारणकोपेन प्रयातो हि महापदम् ।
[1]तस्मादात्महितप्रेप्सुर्न क्रोधवशगो भवेत् ।
यदि क्रोधवशं याति स चाप्नोति महापदम् ॥ ६६

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे कोपदूषणं
नाम चतुर्थोऽध्यायः

---

1. एष श्लोकः क. पुस्तके नास्ति

## ॥ पञ्चमोऽध्यायः ॥

### लोभदूषणम्

ऋषयः—

कामक्रोधौ त्वया प्रोक्तौ लोभं वद महामते ।
यस्माद्देहगतः शत्रुर्लोभो जेतव्य एव हि ॥ १

सूतः—

दानार्हेष्वप्रदानत्वमकारणधनग्रहम् ।
लोभमाहुर्महानर्थं तस्मात्तं परिवर्जयेत् ॥ २

यथा तरुः समुत्थेन वह्निना नाशमृच्छति ।
तथाकृतात्मा लोभेन सहजेन विनश्यति ॥ ३

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
आसीत् कृतयुगे राजा सुप्रतीको महारथः ॥ ४

तस्य भार्याद्वयं चासीत् सुविशिष्टं मनोहरम् ।
विद्युत्प्रभा कान्तिमती द्वयोरेते तु नामनी ॥ ५

तयोः पुत्रमसौ राजा न लेभे यत्नवानपि ।
यदा तदा मुनिश्रेष्ठं दुर्वाससमकल्मषम् ॥ ६

तोषयामास विधिना चित्रकूटे नगोत्तमे ।
स ऋषिस्तोषितस्तेन दीर्घकालं वरार्थिना ॥ ७

वरं च दित्सुर्यावत्तमब्रवीदत्रिजो मुनिः ।
तावदिन्द्रोऽपि करिणा गतः [1]पार्श्वं हि तस्य च ॥ ८

देवसैन्यैः परिवृतस्तूर्णीमेत्र महाबलः ।
नाकरोत्तं मुनिं दृष्ट्वा प्रणतिं सोऽथ वै मुनिः ॥ ९

चुकोप देवराजाय शापमुग्रं मुमोच ह ।
यस्मात्त्वया ममावज्ञा कृता मूढ मरुत्पते ॥ १०

---

1. क. पार्श्वेन

ततस्त्वं चलितो राज्यान्मर्त्यलोके निवत्स्यसि ।
एवमुक्त्वातिकोपेन सुरेशमथ भूपतिम् ॥ ११

उवाच राजन् पुत्रस्ते भविता दृढविक्रमः ।
इन्द्रदर्पहरः श्रीमानुद्धताखप्रतापवान् ॥ १२

विद्युत्प्रभायां धर्मज्ञ क्रूरकर्मा भविष्यति ।
दुर्जयोऽतिबलो राजन्नेवमुक्त्वा गतो मुनिः ॥ १३

विद्युत्प्रभायां धर्मज्ञो भार्यायां गर्भमादधे ।
तस्यां पुत्रः समभवद्दुर्जयाख्यो महाबलः ॥ १४

जातकर्मादिसंस्कारं चक्रे तस्य मुनिः स्वयम् ।
ततो दुर्वासनामासौ दिष्टया देहमवीवृधत् ॥ १५

तस्य चेष्टाबलेनासौ युवा सद्यो बभूव ह ।
द्वितीया याभवत् पत्नी नाम्ना कान्तिमती [1]तथा ॥ १६

सुद्युम्न इति विख्यातस्तस्यां पुत्रो बभूव ह ।
अथ कालेन महता स राजा दुर्जयं सुतम् ॥ १७

आत्मनो वृद्धभावञ्च वाराणस्यधिपो बली ।
तदा सञ्चिन्त्य धर्मात्मा तस्य राज्यं ददौ नृपः ॥ १८

स्वयञ्च चित्रकूटाख्यं पर्वतेन्द्रं जगाम ह ।
दुर्जयोऽपि महद्राज्यं प्राप्य हस्त्यश्वपत्तिभिः ॥ १९

समेतां वाहिनीं कृत्वा चोत्तरां दिशमास्थितः ।
तस्य चोत्तरतो देशाः सर्वे सिद्धा महात्मनः ॥ २०

भारताख्यमिमं वर्षं साधयित्वाथ दुर्जयः ।
ततः किंपुरुषं नाम वर्षं स्ववशमातनोत् ॥ २१

ततः परतरं चान्यद्धरिवर्षं जगाम सः ।
रम्यं हिरण्मयं चैव कुरुं भद्राश्वमेव च ॥ २२

---

1. क. शुभा

इलावृत्तं केतुमालमेतत्सर्वं जगाम सः ।
नारदो दुर्जयं देवैर्देवराजे ह्यशंसत ॥ २३

तत इन्द्रः समायुक्तो लोकपालसमान्वितः।
जगाम दुर्जयं हन्तुं स च तेनाशु निर्जितः ॥ २४

विहाय पर्वतं मेरुं मर्त्यलोकमथाप सः ।
गन्धमादनपृष्ठेन स्कन्धावारनिवेशनम् ॥ २५

कृत्वा यावत् स्थितस्तावदागतौ तापसावुभौ ।
तावागतावथाब्रूतां राजन् दुर्जय लोकप ॥ २६

निर्घाटितास्त्वया स्वर्गा लोकपालैर्विना जगत् ।
न प्रवर्तेत तस्मान्नो देहि तत्पदमुत्तमम् ॥ २७

विद्युत्सुविद्युतावावां विद्धि सिद्धावथासुरौ ।
एवमुक्ते दुर्जयेन तौ स्वर्गे विनिवेशितौ ॥ २८

धनदस्य वनं दिव्यम् [1]आजगाम सुदुर्जयः ।
तत्र चम्पकवृक्षाधः कन्याद्वयमदृश्यत ॥ २९

अतीव रूपसम्पन्नमतीवाद्भुतदर्शनम् ।
दृष्ट्वा विस्मयमापन्नः कस्येदं युगलं शुभम् ॥ ३०

[2]तापसौ समदृश्येतां तस्य चिन्तयतः पुरः ।
तौ दृष्ट्वा सहसा राजा दुर्जयः परया मुदा ॥ ३१

अवतीर्य द्विपाद्भूमिं नमश्चक्रे तयोस्त्वरन् ।
उपविष्टश्च तावाह युवां कौ कुत आगतौ ॥ ३२

तापसौ—

आवां हेतिप्रहेत्याख्यौ स्वायम्भुवमनोः सुतौ ।
निर्जितौ वासुदेवेन युद्धे महति दारुणे ॥ ३३

अतस्तमेव शरणं गतावाराधयावहे ।
त्वं चासि मित्रतनयः सुप्रतीकस्य चानघ ॥ ३४

---

1. ख. आजहार
2. क. ख. पुस्तकयोरेवं पाठो- दृश्यते 'इति चिन्तयतस्तस्य तापसौ समदृश्यताम्'

इदानीमावयोः कन्ये गृहाण मनुजेश्वर ।
हेतिकन्या सुकेशी च मिश्रकेशी प्रहेतिनः ॥ ३५

दुर्जयस्त्वेवमुक्तस्तु हेतिना ते उभे अपि ।
कन्ये जग्राह विधिवद्भार्यार्थं नृपसत्तमः ॥ ३६

ताभ्यां युक्तः स्वकं राष्ट्रमाजगाम महीपतिः ।
ततः कालेन महता जगामारण्य[1]मन्तिके ॥ ३७

तत्र श्वापदबृन्दानि विचिन्वानोऽतिभीषणः ।
ददर्शारण्यमध्यस्थं मुनिं सौम्यमकल्मषम् ॥ ३८

तपस्यन्तं महात्मानं नाम्ना गौरमुखं नृपम् ।
दृष्ट्वा नमश्चकाराथ राजा परमहर्षितः ॥ ३९

चकार पूजां धर्मात्मा तदा गौरमुखो मुनिः ।
चिन्तयामास किञ्चास्य मया देयं तु भोजनम् ॥ ४०

अक्षौहिण्यश्च बहुलास्तस्य राज्ञो महात्मनः ।
एवं चिन्तयतस्तस्य दत्तो वै विष्णुना पुरा ॥ ४१

चिन्तामणिः प्रादुरभूत्तेन सर्वं विनिर्ममे ।
स्वागतादिक्रियां कृत्वा स मुनिः प्राह तं नृपम् ॥ ४२

स्वशक्त्याहं नृपश्रेष्ठ सावरोधस्य भोजनम् ।
कारयिष्यामि मुञ्च त्वं साधुलोभमिति द्विजः ॥ ४३

आत्मानं चिन्तयन् विप्र आस्ते गौरमुखो मुनिः ।
हिमवच्छिखराकारं महामेरुमिवोन्नतम् ॥ ४४

शशाङ्करश्मिसङ्काशं गृहं विंशैकभूमिकम् ।
तादृशानां सहस्राणि लक्षकोट्यश्च सर्वशः ॥ ४५

एतत् कृत्वा स विप्रस्तु राजानं भूरितेजसम् ।
उवाच सर्वसैन्यानि प्रविशन्तु गृहानिति ॥ ४६

---

1. क. मन्तिकात्

एवमुक्तस्तदा राजा तद्गृहं पर्वतोपमम् ।
प्रविवेशान्तरेष्वन्ये भृत्या विविशुरादरात् ॥ ४७

ततस्तेषु प्रविष्टेषु तदा गौरमुखो मुनिः ।
प्रगृह्य तं मणिं हस्ते राजानं चेदमब्रवीत् ॥ ४८

मज्जनाभ्यवहारार्थं परिधानकृते तथा ।
विलासिनीस्तथा दासान् प्रेषयिष्यामि तेऽनघ ॥ ४९

एवमुक्त्वा तु स मुनिः स्थापयामास तं मणिम् ।
अस्मिन् स्थापितमात्रे तु मणौ शुद्धशशिप्रभे ॥ ५०

निश्चेरुर्योषितस्तत्र दिव्यरूपाः सहस्रशः ।
दृश्यामलकहस्ताश्च काश्चित्तत्र वराननाः ॥ ५१

काश्चित्सुवर्णपात्रीश्च गृहीत्वा संप्रतस्थिरे ।
एवं योषिद्गणास्तत्र नराः कर्मरतास्तथा ॥ ५२

निर्जग्मुस्तस्य नृपतेः साश्वभृत्यद्विपस्य ह ।
तत्क्षणान्मज्जनं पूर्वं परिधानं च सर्वतः ॥ ५३

ताः स्त्रियः सर्वभृत्यानां चक्रुरादरसंयुताः ।
ददुर्नरगवाश्वानां हस्तिनाश्चापि भक्षणम् ॥ ५४

मज्जने नृपतेस्तस्य मनोज्ञा योषितः पुरः ।
जगुरप्सरसस्तत्र शक्रस्येव प्रमज्जतः ॥ ५५

एवं दिव्योपचारेण स्नात्वा राजा महामनाः ।
ततः परं शुभे वस्त्रे परिधायोत्तमे तदा ॥ ५६

विविधान्नं तु विधिना बुभुजे स नृपोत्तमः ।
यथा च नृपतेः पूजा कृता तेन महर्षिणा ॥ ५७

तद्वद्भृत्यजनस्यापि चकार मुनिसत्तमः ।
यावत्स राजा बुभुजे सभृत्यबलवाहनः ॥ ५८

तावदस्तगिरिं भानुर्जगामारुणसप्रभः ।
ततो रात्र्यां व्यतीतायां ते नरास्ताः स्त्रियः पुनः ॥ ५९

प्राविशन् हि मणिं तं तु दृष्ट्वा तानि गृहाणि च ।
अदृश्यानि महार्हाणि वरासनवलानि च ॥ ६०

स राजा विस्मयाविष्टश्चिन्तयामास लोभतः ।
कथमेष मणिर्मह्यं भवेदिति पुनः पुनः ॥ ६१

चिन्तामणिमिमं चास्य हरामीति व्यचिन्तयत् ।
लोभेनाक्रान्तहृदय आश्रमाच्च बहिर्गतः ॥ ६२

स्थित्वा विरोचनाख्यं स प्रेषयामास मन्त्रिणम् ।
ऋषेर्गौरमुखस्यापि मणियाचनकर्मणि ॥ ६३

स गत्वा तमृषिं मन्त्री प्रोवाच वचनं त्विदम् ।
भगवन् दुर्जयो राजा मणिमेतं महाप्रभम् ॥ ६४

प्रार्थयत्याश्रमोपान्ते निविष्टो मुनिसत्तम ।
[1]स तस्मै दीयतां ब्रह्मन्नविचारेण नान्यथा ॥ ६५

एवमुक्तस्तदा विप्रो भूसुरास्तेन मन्त्रिणा ।
नाहं दद्यां हि नृपते[2]र्मणिमेतं च कर्हिचित् ॥ ६६

प्रतिगृह्णाति विप्रस्तु राजा चैव ददाति च ।
त्वं तु राजा पुनर्भूत्वा याचसे दीनवत् कथम् ॥ ६७

मनः सङ्कल्पवीर्येण कामेन विषयेषुभिः ।
विद्धः पतति लोभाग्नौ ज्योतिर्लोभात् पतङ्गवत् ॥ ६८

एवं ब्रूहि दुराचारं राजानं दुर्जयं सुखम् ।
गच्छ मन्त्रिन् वृथाचार मा ते कालोऽत्यगादिति ॥ ६९

एवमुक्तस्तदा मन्त्री जगाम स्वनृपान्तिकम् ।
कथयामास तत्सर्वं यथोक्तं ब्राह्मणेन तु ॥ ७०

ततः क्रोधपरीतात्मा श्रुत्वा ब्राह्मणभाषितम् ।
दुर्जयः प्राह नीलाख्यं सानन्दं गच्छ मा चिरम् ॥ ७१

---

1. क. तस्मै प्रदी-    2. क. -र्मणिं तस्य न कर्हिचित्

मणिं गृहीत्वा विप्राच्च तूर्णमेहि यदृच्छया ।
एवमुक्तस्तदा नीलो बहुसैन्यसमावृतः ॥ ७२

ययौ तस्याश्रमपदं दृष्ट्वा तं मणिमन्तिके ।
जिघृक्षुः [1]स्वरथान्नीलस्त्ववारोहच्च भूतलम् ॥ ७३

अवतीर्णे ततस्तस्मिन् नीले परमदारुणे ।
क्रूरबुद्ध्या मणेस्तस्मान्निर्जग्मुः शस्त्रपाणयः ॥ ७४

सरथाः सध्वजाश्चैव सगजाश्च सवर्मणः ।
सधनुष्काः सतूणीराः योधाः परमदुर्जयाः ॥ ७५

तत्रासन्नायकाः शूरा दश पञ्चेति संख्यया ।
ततो विरोचनं दृष्ट्वा बृहत्सैन्यसमावृतम् ॥ ७६

योधयामासुरत्यन्तं विविधायुधपाणयः ।
तस्मिन् हते रणे योधैरमात्यैर्दुर्जयस्य हि ॥ ७७

ततस्तेन समं राज्ञा महत् कदनमाबभौ ।
मणिजातं तदापूर्वं देवासुरयुधोपमम् ॥ ७८

यावत् सङ्ग्राम एषां वै महांस्तेषामवर्धत ।
तावत्समित्कुशादानं कृत्वा गौरमुखो मुनिः ॥ ७९

आगतो महदाश्चर्यं सङ्ग्राममभिवीक्ष्य च ।
चिन्तयामास देवेशं तदा प्रादुरभूद्धरिः ॥ ८०

किमत्र ते मया कार्यमिति वाणीमुदीरयन् ।
स ऋषिः प्राञ्जलिर्भूत्वा प्राह तं पुरुषोत्तमम् ॥ ८१

जहीमं दुर्जयं भीमं लोभाविष्टं ससैनिकम् ।
एवमुक्तस्तदा देवः शङ्खचक्रगदाधरः ॥ ८२

निमेषान्तरमात्रेण भस्मसादकरोन्नृपम् ।
एवमुक्त्वा तदा देवो मुनिं गौरमुखं तदा ॥ ८३

---

1. क. स र-

उवाच निमिषेणाद्य ससैन्यो नृपतिर्हतः ।
अस्मिन् हते ततस्त्वेतन्नैमिशारण्यसंज्ञितम् ॥ ८४

भविष्यति हितार्थं वै ब्राह्मणानां विशेषतः ।
अहं च यज्ञपुरुषो वसाम्यत्रोत्तमे वने ॥ ८५

नाम्ना राज्ञः सदा चेमे दश पञ्चैव नायकाः ।
कृते युगे भविष्यन्ति राजानो मणिजा मुने ॥ ८६

[1]एवमुक्त्वा तदा देवः शङ्खचक्रगदाधरः ।
निमेषान्तरमात्रेण सद्योऽन्तर्धानमागतः ॥ ८७

द्विजोऽपि स्वाश्रमे तस्थौ मुदा परमया युतः ।

सूतः—

तस्मान्न लोभं कुर्वीत य इच्छेच्छ्रेय आत्मनः ॥ ८८

पुरा पुरूरवा नाम राजा परपुरञ्जयः ।
दृष्ट्वा सौवर्णपात्राणि मुनीनामाश्रमेऽहरत् ॥ ८९

तैरेव निहतः क्रोधान्मुनिभिश्च कुशायुधैः ।
हैहयोऽपि महाराजो लोभेनाक्रान्तमानसः ॥ ९०

जमदग्नेः कामगवीं समाहृत्य विमूढधीः ।
क्रोधाविष्टस्तदा पूर्वं तत्सुतेनैव पातितः ॥ ९१

भूतिर्लोभाभिभूतस्य भूभर्तुर्भूरिदुःखदा ।
लुब्धः प्राप व्यथां शुक्रः पिनाकिजठरानलैः ॥ ९२

सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः ।
छेत्तारः संशयानां च क्लिश्यन्ते लुब्धबुद्धयः ॥
तस्माल्लोभं न कुर्वीत य इच्छेच्छ्रेय आत्मनः ॥ ९३

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे लोभदूषणं
नाम पञ्चमोऽध्यायः

---

1. क. एवमुक्त्वा तदा देवः सद्योऽन्तर्धानमागतः

## ॥ षष्ठोऽध्यायः ॥

### मोहदूषणम्

सूतः—

मोहो नाम मनुष्याणां रिपुरात्यन्तिको मतः ।
अनेनैव जनाः सर्वे मोहिता यान्त्युपप्लवम् ॥ १

अत एव हि जेतव्यो मोहः पूर्वं विजानता ।
अनेनैव जितश्चेत्स पुमानापदमाप्नुयात् ॥ २

पुंसां मोहाभिभूतानां हिताहितमजानताम् ।
आपदः सहसा चित्तं क्षोभयन्त्येव वेगतः ॥ ३

ऐश्वर्यमायुर्विद्यां च कुलं शीलं बलं श्रियम् ।
पुंसां मोहो हरत्येव कलुषीकृत्य मानसम् ॥ ४

मोहाकुलितचित्तानामापदः सम्भवन्ति हि ।
तन्न शक्यं वारयितुं सेन्द्रैरपि सुरासुरैः ॥ ५

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
आसीन्महीपतिः पूर्वं परीक्षिदिति विश्रुतः ॥ ६

उदारः कौरवे वंशे बलवीर्यगुणान्वितः ।
असौ कदाचिन्मृगयाव्यसनाहृतमानसः ॥ ७

विध्यन् मृगान् वराहांश्च तरक्षून् महिषांस्तथा ।
मृगमेकं हि विव्याध बाणेन नतपर्वणा ॥ ८

तेन विद्धः स तु मृगो जीवन्नेवातिवेगतः ।
तद्वनेनैव सहसा प्रविष्टो गहनं वनम् ॥ ९

अन्वगच्छन्महीपोऽपि मृगमप्राप्य मूर्छितः ।
परिश्रान्तो भृशं वेगादाससाद मुनिं वने ॥ १०

गवां प्रचारेष्वासीनं वत्सानामास्यनिस्सृतम् ।
भूयिष्ठमुपभुञ्जानं फेनमापिबतां पयः ॥ ११

समीकमिति विख्यातं मौनव्रतपरायणम् ।
तमभिद्रुत्य वेगेन स राजा दर्शितव्रतम् ॥ १२

पप्रच्छ धनुरुद्यम्य तं मृगं क्षुच्छ्रमान्वितः ।
भो भो ब्रह्मन्नहं राजा परीक्षिदिति विश्रुतः ॥ १३

मया विद्धो मृगः कश्चिन्नष्टस्तं दृष्टवान् किमु ।
स मुनिस्तस्य नोवाच किञ्चिन्मौनव्रतान्वितः ॥ १४

तस्य स्कन्धे मृतं सर्पं मोहाद्राजा समासजत् ।
धनुष्कोट्या समुत्क्षिप्य स चैनं समवैक्षत ॥ १५

न च किञ्चिदुवाचैनं शुभं वाप्यथ वाशुभम् ।
स राजा मोहसंरम्भव्याकुलीकृतमानसः ॥ १६

मृतसर्पधरं कृत्वा मुनिं स नगरं ययौ ।
क्षमया परया युक्तो मुनिः सोऽपि तथा स्थितः ॥ १७

तरुणं तस्य पुत्रं तु क्रीडन्तं तिग्मतेजसम् ।
उवाच मुनिपुत्रोऽन्यः कृश इत्यभिविश्रुतः ॥ १८

तेजस्विनस्तव पिता तथैव च तपस्विनः ।
शवं स्कन्धेन वहति मा शृङ्गिन् गर्वितो भव ॥ १९

एवमुक्तस्तु तेजस्वी शृङ्गी कोपसमन्वितः ।
तमपृच्छत् कथं तातः स मेऽद्य मृतधारकः ॥ २०

आसञ्जितं च केनापि तस्य पित्रा च किं कृतम् ।
एतद्राजकृतं श्रुत्वावदन्मुनिकुमारकम् ॥ २१

परीक्षिन्नाम भूपालो मृगयाहृतमानसः ।
ससार मृगमेकाकी विद्धा बाणेन पत्त्रिणा ॥ २२

न चापश्यन्मृगं राजा चरंस्तस्मिन् महावने ।
पितरं ते स दृष्ट्वैव पप्रच्छानभिभाषिणम् ॥ २३

स च मौनव्रतरतो न च तं प्रत्यभाषत ।
तस्य राजा धनुष्कोट्या सर्पं स्कन्धे समासजत् ॥ २४

शृङ्गिंस्तव पिता चासौ तथैवास्ते दृढव्रतः ।
सोऽपि राजा स्वनगरं प्रयातो नागसाह्वयम् ॥ २५

तच्छ्रुत्वा मुनिपुत्रस्तं शशाप नृपतिं क्रुधा ।
यो वै मम पितुः स्कन्धे मृतं सर्पं न्यवीविशत् ॥ २६

स स्यान्मृतः सप्तमेऽह्नि संदष्टस्तक्षकेण तु ।
इति शप्त्वा नृपं स्वस्य पितुः सर्वं न्यवेदयत् ॥ २७

तच्छ्रुत्वा पुत्रवचनं प्रत्युवाच सुतं प्रति ।
न मे प्रियं कृतं वत्स नैष धर्मस्तपस्विनाम् ॥ २८

वयं तस्य नरेन्द्रस्य वसामो विषये खलु ।
न्यायतो रक्षिता तात तस्य शापं न रोचये ॥ २९

परीक्षिता कृतं मोहात् क्षन्तव्यं तु भवद्विधैः ।
न ह्यर्हति नृपः शापं तस्माद्बाल्यात् कृतं त्वया ॥ ३०

तत्पितुर्वचनं श्रुत्वा शृङ्गी वचनमब्रवीत् ।
प्रियं वाप्यप्रियं वापि वागुक्ता न मृषा मम ॥ ३१

पूर्वमुक्तं मया कोपान्नैतन्मिथ्या भविष्यति ।
तच्छ्रुत्वा तु समीकोऽपि मुखाद्गौरमुखस्य हि ॥ ३२

भूपं विदितवृत्तान्तमकरोत् कृपयान्वितः ।
तच्छापवचनं श्रुत्वा स राजा दुःखितोऽभवत् ॥ ३३

मन्त्रिभिः सह संमन्त्र्य तन्त्रतत्त्वविशारदैः ।
प्रासादं कारयामास चैकस्तम्भं सुरक्षितम् ॥ ३४

रक्षां तु विदधे तत्र भिषग्भिरपि चौषधैः ।
एवं सुरक्षिते तस्मिन् प्रासादे न्यवसत् स तु ॥ ३५

प्राप्ते तस्मिन् सप्तमेऽह्नि नागास्तक्षकचोदिताः ।
मुनिरूपधरा राज्ञे फलं दत्त्वा गताः पुनः ॥ ३६

यज्जग्राह फलं राजा तस्मिन् कृमिरभूदणुः ।
स तं दृष्ट्वा नृपश्रेष्ठः सचिवानिदमब्रवीत् ॥ ३७

सत्यवागस्तु स मुनिः कृमिको मां दशत्वयम् ।
तक्षको नाम भूत्वेति ग्रीवायां च न्यवेशयत् ॥ ३८

तद्वाक्यानन्तरं सोऽपि तक्षकेणैव वेष्टितः ।
मूर्छितो विषवेगेन बभूव गतचेतनः ॥ ३९

तत्क्षणे मन्त्रिणो दृष्ट्वा भूपं नागेन वेष्टितम् ।
विवर्णवदनाः सर्वे रुरुदुर्भृशदुःखिताः ॥ ४०

ततस्तु ते तद्गृहमग्निनावृतं
प्रदीप्यमानं विषजेन तत्क्षणात् ।
भयात् परित्यज्य दिशः प्रपेदिरे
पपात तच्चाशनिताडितं यथा ॥ ४१

ततो नृपे तक्षकतेजसा हते
प्रयुज्य सर्वाः परलोकसत्क्रियाः ।
नृपं शुभं तस्य सुतं प्रचक्रिरे
ते मन्त्रिणस्तं जनमेजयं द्विजाः ॥ ४२

सूतः—

तस्मान्नृणां सम्भवन्ति मोहादित्थं महापदः ।
तेनैव प्रलयं यान्ति प्राणैः प्रियतमैः सह ॥ ४३

तस्मादेव परित्याज्यो मोहः सर्वैर्जनैरपि ।
यस्तु मोहपरित्यागी तस्यैव स्युः समृद्धयः ॥ ४४

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे मोहदूषणं नाम
षष्ठोऽध्यायः

॥ सप्तमोऽध्यायः ॥

मदनिन्दा

सूतः—

आन्तरेष्वरिवर्गेषु मदो नाम महान् रिपुः ।
तज्जये हि महान् यत्नः कर्तव्यो भूतिमिच्छता ॥ १

[1]मदोद्रिक्तान्नृपतयो ब्राह्मणाश्च तपस्विनः ।
कार्याकार्यमजानन्तो नाशमेव प्रयान्ति हि ॥ २

उत्तमं पदमाप्तोऽपि मदेनैव पतत्यधः ।
अत्र वः कथयिष्यामि चेतिहासं पुरातनम् ॥ ३

हत्वा त्वाष्ट्रं पुरा शक्रे ब्रह्महत्याभयार्दिते ।
अराजकं जगत्सर्वमभिभूतमुपप्लवैः ॥ ४

ऋषयोऽथाब्रुवन् सर्वे देवाश्च त्रिदिवेश्वराः ।
अयं वै नहुषः श्रीमान् देवराज्येऽभिषिच्यताम् ॥ ५

ते गत्वाथाब्रुवन् सर्वे राजा नो भव पार्थिव ।
नहुषस्तद्वचः श्रुत्वा प्राप्तो राज्यं त्रिविष्टपम् ॥ ६

शचीं स दृष्ट्वा दुष्टात्मा प्राह सर्वान् सभासदः ।
इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति ॥ ७

तच्छ्रुत्वा तु शचीदेवी विललाप सुदुःखिता ।
यदि दत्तं यदि हुतं गुरवस्तोषिता यदि ॥ ८

एकभर्तृकता मेऽस्तु सत्यं यद्यस्ति वा मयि ।
अथैनां रूपिणीं साध्वीमुपातिष्ठदुपश्रुतिः ॥ ९

---

1. क. मदोद्रिक्ता नृ-

इन्द्राणी सम्प्रहृष्टा सा सम्पूज्येदमुवाच ताम् ।
[1]यत्र स्ते देवराजस्तु तं देशं दर्शयस्व मे ॥ १०

तथेति प्रस्थितां देवीमिन्द्राणीं तु समन्वगात् ।
आससाद महद्द्वीपं नानाद्रुमलताकुलम् ॥ ११

तत्रापश्यत् सरो दिव्यं नानाशकुनिभिर्वृतम् ।
पद्मस्य भित्त्वा नालं सा विवेश सहिता तया ॥ १२

बिसतन्तुप्रविष्टा सा तत्रापश्यच्छतक्रतुम् ।
शक्रस्य कथयामास नहुषस्य विचेष्टितम् ॥ १३

तच्छ्रुत्वा देवराजोऽपि तस्या नीतिमुपादिशत् ।
गत्वा नहुषमेकान्ते ब्रूहि त्वं तनुमध्यमे ॥ १४

ऋषियानेन दिव्येन मामुपैहि जगत्पते ।
एवं चेत्त्वद्वशे भूप भविष्यामीति तं वद ॥ १५

इत्युक्ता देवराजेन नहुषं प्रति सा गता ।
नहुषस्तां ततो दृष्ट्वा विस्मितो वाक्यमब्रवीत् ॥ १६

भक्तं मां भज कल्याणि करिष्ये त्वं यदिच्छसि ।

शची—

इच्छाम्यहमिहापूर्वमासनं ते सुराधिप ॥ १७

वहन्तु त्वां महाभाग मुनयः सङ्गता विभो ।
सर्वे शिबिकया राजन् मह्यमेतद्धि रोचते ॥ १८

नहुषः—

अपूर्वं वाहनमिदं त्वयोक्तं वरवर्णिनि ।
न ह्यल्पवीर्यो भवति यो वाहान् कुरुते मुनीन् ॥ १९

अहं तपस्वी भगवान् भूतभव्यभवत्प्रभुः ।
सप्तर्षयोऽपिवक्ष्यन्ति सर्वे ब्रह्मर्षयश्च माम् ॥ २०

---

1. इतः सार्धश्लोकः क. पुस्तके न दृश्यते

एवमुक्त्वा तु तां देवीं विसृज्य च वराननाम् ।
मदेन महता युक्तः परिभूय महामुनीन् ॥ २१

वाहने योजयामास मदोद्रिक्तः स दुर्मतिः ।
तत्राप्यगस्त्यं पादेन वहन्तं स्पृष्टवान् मदात् ॥ २२

सर्प सर्पेति चोवाच मदेनाविष्टमानसः ।
[1]ततः सर्पो भवेत्येवं शशाप स मुनिः क्रुधा ॥ २३

ततस्तस्माद्विमानाग्रात् प्रच्युतश्च्युतभूषणः ।
प्रापतत् प्रच्युतमदो व्यालीभूतोऽप्यधोमुखः ॥ २४

अयाचत ततो विप्रं शापस्यान्तं तदा नृपः ।
अज्ञानात् सम्प्रवृत्तस्य भगवन् क्षन्तुमर्हसि ॥ २५

ततः स तमुवाचेदं प्रयतं तं कृपान्वितः ।
अत्युन्नतपदस्थोऽपि पतितस्त्वं मदोद्धतः ॥ २६

युधिष्ठिरो धर्मराजः शापात्त्वां मोक्षयिष्यति ।
एवं शापान्तमासाद्य सर्पो भूत्वा वने स्थितः ॥ २७

सूतः—

तस्माल्लोकद्वयध्वंसी न कर्तव्यो मदो बुधैः ।
जाजलिर्नाम विप्रर्षिस्तपोमदसमन्वितः ॥ २८

सम्प्राप्य तपसो हानिमज्ञानित्वमवाप्तवान् ॥
यवक्रीतोऽपि मतिमान् विद्यामदविमोहितः ॥
महतीमापदं प्राप्तः पित्रा सह विमूढधीः ॥ २९

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे मदनिन्दा नाम
सप्तमोऽध्यायः

---

1. क. ख. पुस्तकयोरेष पाठो दृश्यते 'ततः क्रुद्धस्तु स मुनिस्सर्पो भव इतीरयत्'

## ॥ अष्टमोऽध्यायः ॥

### मात्सर्यनिन्दा

सूतः—

उन्नतैः सह मात्सर्यं न कुर्याद्बुद्धिमान्नरः ।
यदि कुर्यात्प्रमादेन न यात्यौन्नत्यमात्मनः ॥ १

अत्राप्युदाहरन्तीममितिहासं पुराविदः ।
कदाचिन्नारदः श्रीमान् स्नात्वा वै नर्मदाम्भसि ॥ २

श्रीमदोङ्कारमभ्यर्च्य शर्मदं सर्वदेहिनाम् ।
पुरो विलोकयाञ्चक्रे पुरा विन्ध्यं धराधरम् ॥ ३

संसारतापसंहारिरेवावारिपरिष्कृतम् ।
द्वैरूप्येणापि कुर्वन्तं स्थावरेण चरेण च ॥ ४

स्वाभिख्येन यथार्थाख्यामुच्चैः सुमहतीमिमाम् ।
रसालयं रसालैस्तैरशोकैः शोकनाशनम् ॥ ५

गुरुश्रियं चागरुभिः कपिपिङ्गकपित्थकैः ।
वन्नश्रियः कुचाकारैर्वकुलैश्च मनोहरम् ॥ ६

सुधाफलसमारम्भिरम्भाभिः परिवासितम् ।
तालैस्तमालैर्हिन्तालैः सालैः सर्वत्र शालिनम् ॥ ७

सुरङ्गैश्चापि नारङ्गै रङ्गमण्टपमुच्छ्रितम् ।
वानीरैश्चापि जम्बीरैर्बीजपूरैः प्रपूरितम् ॥ ८

अनिलोल्लोलकल्लोलवल्लीभिः परिवेष्टितम् ।
लवलीलवलीलाभिर्लास्यलीलालयं क्वचित् ॥ ९

सदाफलसदापुष्पवल्लीनिचयशोभितम् ।
अय सूर्यशताभासे नभसि द्योतिताम्बरम् ॥ १०

नारदं दृष्टवान् शैलो दूरात् प्रत्युज्जगाम तम् ।
ब्रह्मसूनुवपुस्तेजोदूरीकृतदरीतमः ॥ ११

तमागच्छन्तमालोक्य मानसं तम उज्जहौ ।
ब्रह्मतेजःसमुद्भूतसाध्वसः साध्वसाकुलः ॥ १२

कठिनोऽपि परित्यज्य धत्ते [1]मृदुलतां किल ।
दृष्ट्वा मृदुलतां तस्य द्वैरूप्येऽपि स नारदः ॥ १३

सन्तोषं परमं प्राप्तस्तस्य नम्रतया गिरेः ।
गृहानायन्तमालोक्य गुरुं वागुरुमेव वा ॥ १४

यो गुरुर्नम्रतां धत्ते स गुरुर्न गुरुर्गुरुः ।
यः प्रत्युच्चैःशिराः सोऽपि विनम्रतरकन्धरः ॥ १५

शैलः शिलामिलन्मौलिः प्रणनाम महामुनिम् ।
तमुत्थाप्य कराग्राभ्यामाशीर्भिरभिवर्ध्य च ॥ १६

तदुद्दिष्टासनं भेजे मनसोऽपि समुच्छ्रितम् ।
स दध्ना मधुनाज्येन नीरार्द्राक्षतदूर्वया ॥ १७

तिलैः कुशैः प्रपूतैश्च सप्ताङ्गार्घ्यैरपूजयत् ।
गृहीतार्घ्यं किल श्रान्तं पादसंवाहनादिभिः ॥ १८

गतश्रममथालोक्य बभाषेऽवनतो गिरिः ।
अद्य सद्यः परिहृतं त्वदङ्घ्रिरजसा रजः ॥ १९

त्वदङ्गसङ्गिमहसा सहसाभ्यन्तरं तमः ।
सफलर्द्धिरहं चाद्य सुदिवाद्य च मे मुने ॥ २०

स्वकृतैः सुकृतैरद्य फलितं मे चिरार्जितैः ।
धराधरत्वं कुलिषु मान्यं चाद्य भविष्यति ॥ २१

इति श्रुत्वा तदा किञ्चिदुच्छ्वसस्य स्मितवान् मुनिः ।
पुनरूचे कुलगिरिः संभ्रमापन्नमानसः ॥ २२

---

1. ख. मण्डलतां

उच्छ्वासकारणं ब्रह्मन् ब्रूहि सर्वार्थकोविद ।
अनुक्रोशोऽत्र मयि चेदुच्यतां प्रणतोऽस्म्यहम् ॥ २३

त्वदागमनजानन्दसन्दोहैर्मेदुरोदरः ।
अलं न वक्तुमसक्तस्तदाप्येकं वदाम्यहम् ॥ २४

धराधराणां सामर्थ्यं मेर्वाद्यैर्वृद्धपूरुषैः ।
वर्ण्यते समुदायं तदहमेको धरे धराम् ॥ २५

न मेरुः [1]स्वर्णवर्णत्वाद्रक्तसानुत्वतोऽपि वा ।
सुरसद्मतया वापि क्वापि मान्यो मतो मम ॥ २६

परश्शतं न किं शैला इलाकलनकेलयः ।
इह सन्ति सतां मान्या मान्यास्ते तु स्वभूमिषु ॥ २७

मन्देहदेह[2]सन्दोहादुदयो [3]न दयाश्रितः ।
निषधो नौषधिधरो ह्यस्तो ह्यस्तमितप्रभः ॥ २८

नीलश्च नीलनिलयो मन्थानो मन्दराचलः ।
सर्पालयः स मलयो रायं नावैति रैवतः ॥ २९

हेमकूटत्रिकूटाद्याः कूटोत्तरपदास्तु ते ।
किष्किन्धक्रौञ्चसह्याद्या भारसह्या न ते भुवः ॥ ३०

इति विन्ध्यवचः श्रुत्वा नारदोऽचिन्तयद्धृदि ।
अखर्वगर्वसर्वस्वो महत्वाय न कल्पते ॥ ३१

श्रीशैलमुख्याः किं शैला न ते सन्त्यमलश्रियः ।
येषां शिखरमात्रादिदर्शनं मुक्तये सताम् ॥ ३२

अथास्य बलमालोक्यमिति ध्यात्वाब्रवीन्मुनिः ।

नारदः—

सत्यमुक्तं हि भवता गिरिसारं विवृण्वता ॥ ३३

[4]परः शैलेन्द्रशैलेषु मेरुस्त्वामवमन्यते ।
मया निश्वसितं चैतत्त्वयि चापि निवेदितम् ॥ ३४

---

1. ख. वर्ण्य
2. क. संदेहा
3. अ. क. ख. नयदाश्रितः
4. क. परं

अथ वा मद्विधानां हि केयं चिन्ता महात्मनाम् ।
स्वस्त्यस्तु तुभ्यमित्युक्त्वा ययौ स व्योमवर्त्मना ॥ ३५

गते मुनौ निनिन्द स्वमतीवोद्विग्नमानसः ।
चिन्तामवाप महतीं विन्ध्यो वन्ध्यमनोरथः ॥ ३६

विन्ध्यः—

धिग्जीवितं शास्त्रकलोज्झितस्य
धिग्जीवितं चोद्यमवर्जितस्य ।
धिग्जीवितं व्यर्थमनोरथस्य
धिग्जीवितं ज्ञातिपराजितस्य ॥ ३७

कथं भुनक्ति स दिवा कथं रात्रौ स्वपित्यपि ।
रहः शर्म कथं तस्य यस्याभिभवनं रिपोः ॥ ३८

अधो दवाग्निर्दहतु तथा मां स न बाधते ।
बाधते तु यथा चित्ते चिन्तासन्तापसन्ततिः ॥ ३९

युक्तमुक्तं पुराविद्भिश्चिन्तामूर्तिस्तु दारुणा ।
न भेषजैर्लङ्घनैर्वा घनैरप्युपशाम्यति ॥ ४०

चिन्ताज्वरो मनुष्याणां क्षुधं निद्रां बलं हरेत् ।
रूपं श्रियं जीवितं चोत्साहं बुद्धिं न संशयः ॥ ४१

ज्वरे व्यतीते षडहे जीर्णज्वर इहोच्यते ।
असौ चिन्ताज्वरस्तीव्रः प्रत्यहं नवतां व्रजेत् ॥ ४२

धन्यो धन्वन्तरिर्नात्र चरकश्चरतीह न ।
नासत्यावपि नासत्यावत्र चिन्ताज्वरे किल ॥ ४३

किं करोमि क्व गच्छामि कथं मेरुं जयाम्यहम् ।
उत्प्लुत्य चास्य शिरसि पतामि न पताम्यधः ॥ ४४

शक्रं कोपयता पूर्वमस्मद्गोत्रेण केनचित् ।
पक्षहीनः कृतो यत्र धिगपक्षस्य जीवितम् ॥ ४५

अथ वा स कथं मेरुस्तयो[1]च्चैर्वर्धतेतराम् ।
नूनं [2]धर्मभृतः प्रायो भवन्ति भ्रान्तबुद्धयः ॥ ४६

अलीकवाक्यमथ वा सम्भाव्यं नारदे कथम् ।
ब्रह्मचारिणि दैवज्ञे सत्यलोकनिवासिनि ॥ ४७

युक्तायुक्तविचारोऽथ मादृशे नोपयुज्यते ।
विचक्षणैरुपेक्ष्यौ न वर्धमानौ परामयौ ॥ ४८

प्रदक्षिणं प्रचरति मेरुं नित्यं दिवाकरः ।
सग्रहर्क्षगणो नूनं मन्यमानोऽचलाधिपम् ॥ ४९

इति मात्सर्यमापन्नो विन्ध्यश्च ववृधे क्षणात् ।
अनन्तगगनस्यान्तं कुर्वद्भिः शिखरैरिव ॥ ५०

निरुध्य भ्राम्नमध्वानं कृतकृत्य इवाद्रिराट् ।
यो मामुल्लङ्घ्य तेजस्वी दक्षिणं प्रक्रमिष्यति ॥ ५१

स कुलीनस्स च श्रीमान् स महान्महितस्स च ।
इति चिन्तामहाभारं त्यक्त्वा तस्थौ स्थिरोद्यमः ॥ ५२

आकांक्षमाणस्तरणेरुदयं ब्राह्मणो यथा ।
सूर्य आत्मास्य जगतस्तस्थुषस्तमसो रिपुः ॥ ५३

यश्चोदयन्पूर्वगिरौ शुचिप्रसृमरैः करैः ।
संवर्धयन् सतां धर्मं न्यक्कुर्वन् तामसीं स्थितिम् ॥ ५४

प्रक्रान्तुं दक्षिणामाशां न शेकुर्हरयो रवेः ।
अनूरुस्तत्समालोक्य त्वाशानाथं व्यजिज्ञपत् ॥ ५५

भानो मात्सर्यवान् विन्ध्यो निरुध्य गगनं स्थितः ।
स्पर्धते मेरुणा प्रेप्सुस्त्वदत्तं च प्रदक्षिणम् ॥ ५६

अनूरुवाक्यमाकर्ण्य सविता ह्यचिन्तयत् ।
अहो गगनमार्गोऽपि रुध्यते चातिविस्मयः ॥ ५७

---

1. [स्पर्धते मया] 2. [भार]

सूरश्शूरोऽपि किं कुर्यात्प्रान्तरे वर्त्मनि स्थितः ।
बलवानपि को मार्गं रुद्धमेको विलङ्घयेत् ॥ ५८

योजनानां सहस्रे द्वे द्वे शते द्वे च योजने ।
योजनस्य निमेषाच्च याति सोऽपि चिरं स्थितः ॥ ५९

अथ व्याकुलिते लोके सुरासुरनरोरगे ।
हा किमेतदकाण्डेऽभूदित्येवं दुद्रुवुः प्रजाः ॥ ६०

ततः सर्वे समालोक्य ब्रह्माणं शरणं ययुः ।
स्तुवन्तो विविधैः स्तोत्रै रक्ष रक्षेति चाब्रुवन् ॥ ६१

ब्रह्माथ संस्तुतो देवैस्तानाहेदं वचस्तदा ।
मनसा ज्ञानदृष्ट्या [1]च युक्तं चागमकारणम् ॥ ६२

स्पर्धते मेरुणा विन्ध्यो ब्रध्नाध्वपरिरोधकृत् ।
तदर्थमागता यूयं तमुपायं दिशामि वः ॥ ६३

ब्रह्मा—

अगस्त्यस्तप्यमानस्तु तप उग्रं महातपाः ।
मैत्रावरुणिराधाय चित्तं विश्वेश्वरे विभौ ॥ ६४

याचध्वं तत्र गत्वा तं स वः कार्यं विधास्यति ।
इत्युक्त्वान्तर्दधे वेधास्ते विप्रा मुदिताननाः ॥ ६५

देवाः परस्परं प्रोचुरहो धन्यतरा वयम् ।
इति ब्रुवाणा गीर्वाणाः प्राप्य वाराणसीं पुरीम् ॥ ६६

अगस्त्यं ददृशुस्तत्र भूमिस्थमिव भास्करम् ।
विसर्जितसमाधिं च धृतकर्णाक्षमालिकम् ॥ ६७

दृष्ट्वा देवास्ततः प्रोचुर्वाचं जय जयेति च ।
तत उत्थाय तान्सर्वानुपवेश्य यथोचितान् ॥ ६८

आशीर्भिरभिवर्ध्याथ पप्रच्छागमकारणम् ।
अगस्त्यवचनं श्रुत्वा देवाः प्रोचुर्निजेप्सितम् ।
श्रुत्वा तेषामीप्सितं तदगस्त्यः प्राह बुद्धिमान् ॥ ६९

---

1. क. बो

अभ्यर्थितं देवगणाः करोमि
परोपकाराय न किं विधीयते ।
दधीचिरस्थीनि न किं पुरा ददौ
जगत्त्रयं किं न ददेऽर्थिने बली ॥ ७०

इत्युक्त्वा सकलान् देवान् लोपामुद्रासखो मुनिः ।
तपोयानं समारुह्य निमेषार्धाद्ययौ तदा ॥ ७१

अग्रे ददर्श तं विन्ध्यमाक्रम्य स्थितमम्बरम् ।
चकम्पे चाचलस्तूर्णं दृष्ट्वाग्रस्थितं मुनिम् ॥ ७२

तमगस्त्यं सपत्नीकं वातापील्वलवैरिणम् ।
प्रलयानलवत्तीव्रं ज्वलन्तं त्रिभिरग्निभिः ॥ ७३

विन्ध्यः खर्वतरो भूत्वा विविक्षुरवनीमिव ।
आज्ञाप्रसादः क्रियतां किं करोमीति चाब्रवीत् ॥ ७४

अगस्त्यः—

विन्ध्य साधुरसि प्राज्ञ मां च जानासि तत्त्वतः ।
दक्षिणाशां प्रयाम्यद्य तीर्थयात्राप्रसङ्गतः ॥ ७५

पुनरागमनं यावत्तावत्खर्वतरो भव ।
इत्युक्त्वा खर्वतां नीत्वा विन्ध्यं मात्सर्यसंयुतम् ॥ ७६

देवानां वासवादीनां प्रीतिमग्र्यां विधाय च ।
ततः स दक्षिणामाशां सनाथामकरोन्मुनिः ॥ ७७

गते तस्मिन्मुनिवरे वेपमानस्तदा गिरिः ।
उत्कण्ठमसकृत्पश्यन् गतश्चेत्साध्वभूदिति ॥ ७८

अद्य जातः पुनरहं नाशपत्कुम्भजो यतः ।
न मया सदृशो धन्य इति मेने स वै गिरिः ॥ ७९

अरुणोऽपि च तत्काले कालज्ञोऽश्वानचालयत् ।
जगत् स्वास्थ्यमवापोच्चैः पूर्ववद्भानुभानुभिः ॥ ८०

अद्य श्वो वा परश्वो वाप्यागमिष्यति वै मुनिः ।
इति चिन्तामहाभारैर्गिरिराक्रान्तवत् स्थितः ॥ ८१

नाद्यापि मुनिरायाति नाद्यापि गिरिरेधते ।
यथा खलु जनानां हि मनोरथमहीरुहः ॥ ८२

सूतः—

विवर्धिषति यो नीचः सद्भिर्मात्सर्यमुद्वहन् ।
दूरे तद्वृद्धिवार्तास्तां प्राग्वृद्धेरपि संशयः ॥ ८३

सद्भिः स्पर्धयतां पुंसां मात्सर्याविष्टचेतसाम् ।
मनोरथा न सिध्येयुः सिद्धा नश्यन्त्यपि ध्रुवम् ॥ ८४

भवेत्कूलङ्कषा यद्वदल्पवर्षेण किंनदी ।
तद्वन्मात्सर्ययुक्तानामौन्नत्यं स्वकुलक्षयम् ॥ ८५

अविज्ञायान्यसामर्थ्यं स्वसामर्थ्यं प्रदर्शयन् ।
अपहासमवाप्नोति मात्सर्योद्धतविन्ध्यवत् ॥ ८६

तस्मान्न कुर्यान्मात्सर्यं महद्भिश्चपलाशयः ।
यदि कुर्यात्प्रमादेन क्षिप्रमेव विनश्यति ॥ ८७

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे मात्सर्यनिन्दा
नामाष्टमोऽध्यायः

## ॥ [1]नवमोऽध्यायः ॥

### अन्यासक्ताङ्गनासङ्गदोषकथनम्

सूतः—

अन्यासक्तां स्त्रियं यस्तु कामाद्रागाच्च वञ्चयेत् ।
अनुभूय महद्दुःखं जायते कष्टयोनिषु ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
दिवि दुर्मदनामासीद्गन्धर्वो निसृतिप्रियः ॥ २

बाल्यात्प्रभृति दुर्मेधाः कामबाणवशानुगः ।
स कदाचिन्महीदेवा दुर्मदः पापचेतनः ॥ ३

ददर्श पथि गच्छन्तीमुर्वशीं तनुमध्यमाम् ।
हरिणीखेलगमनां श्रृङ्गाररसविग्रहाम् ॥ ४

अशेषयोषित्सौभाग्यलक्ष्मीं मूर्तिमतीमिव ।
तां पुरूरवसो विप्राः समीपं समुपेयुषीम् ॥ ५

दृष्ट्वाथ दुर्मदस्तूर्णमभ्युपेत्यैवमब्रवीत् ।
प्रिये कामाभितप्तोऽस्मि चिराच्च प्रार्थिता मया ॥ ६

कामाग्निना दह्यमानं मां जीवयितुमर्हसि ।
इत्यादिबहुवाक्यानि तस्य सा नान्वमन्यत ॥ ७

अपेहीत्यब्रवीद्विप्रा नान्यत् किञ्चिदवोचत ।
पश्यन्त्यपश्यमानेव [अपश्यन्तीव पश्यन्ती] तच्चापलमशेषतः ॥ ८

प्रजगामैत्र विप्रेन्द्राः सा पुरूरवसोऽन्तिकम् ।
सरःसु जृम्भदम्भोजमकरन्दसमुत्सुका ॥ ९

किंशुकप्रसवं भृङ्गी न जिघ्रति कदाचन ।
स तत्प्रसादनव्याजाद[2]न्तरं प्रेप्सुरन्वहम् ॥ १०

---

1. अस्मिन्नध्याये आद्यनवश्लोकाः अ. पुस्तके न दृश्यन्ते

2. क. ख. -न्तरप्रे-

अतिष्ठदपि राजेन्द्र न तं साह्यभ्यपद्यत ।
[1]राज्ञा संप्रार्थिता तत्र गतिं मध्यां[मन्दां]गतोर्वशी ॥ ११

रहःसंकेतमकरोन्नन्दने दृष्टिसूचनात् ।
तयोरपाङ्गानुमितं संकेतं नन्दने वने ॥ १२

दृष्ट्वा बुबोध मेधावी दुर्मदः काममोहितः ।
तयोश्चिकीर्षितं ज्ञात्वा स वञ्चयितुमुर्वशीम् ॥ १३

शठबुद्धितया [2]राजन्नुन्मदामिदमब्रवीत् ।

दुर्मदः—

भद्रे त्वाहमनुप्राप्तः कार्यगौरवयन्त्रितः ॥ १४

करणीयं तु यत्किञ्चिद्विद्यते मानिनि त्वया ।
[3]ममैवाभीप्सितं प्रायस्तवापि गजगामिनि ॥ १५

तस्मान्मयोक्तं सुभगे प्रकुरुष्वाविचारणम् ।
आवयोरर्थसंसिद्धिस्ततोऽवश्यं भविष्यति ॥ १६

इत्युक्ता तेन तन्वङ्गी दुर्मदेन तथोन्मदा ।
उवाच वचनं राजन् सविस्मयमुदीक्ष्य तम् ॥ १७

कृत्यं ब्रूहि मया सार्धं तव [4]यत्तु मनोगतम् ।
यदि मे [5]शक्यतेऽत्यर्थं करिष्ये तदसंशयः ॥
आवयो[6]रर्थसिद्धिः स्याच्चेत्तत्किं वा न रोचये ॥ १८

दुर्मदः—

उर्वशी कृतसङ्केता [7]रम्येऽस्मिन् नन्दने वने ।
समायास्यति सा यावत्तावत्तद्वेषधारिणी ॥ १९

---

1. अ. पुस्तके 11. श्लोकोत्तरार्धं, 12. श्लोकः, 13. श्लोकपूर्वार्धं च न सन्ति
2. क. ख. तां तु उन्मदा-
3. अ. मैयवाधीप्सितप्रायस्तव वा गजगामिनि
4. अ. युक्तं मयोगतम्
5. क. ख. शक्यते कर्तुं
6. क. ख. -रर्थसंसिद्धिः स्याच्चेत्तत्किं न रोचये
7. क. -त्वेतस्मिन्

उपह्वरमुपागच्छ राज्ञः शीघ्रमनिन्दिते ।
अहञ्च पौरूरवसं बिभ्राणो वपुरुत्तमम् ॥ २०

[1]ऊर्वशीं ह्लादयिष्यामि तव चाभीष्टसिद्धये ।
ततः सा रूपमुर्वश्या बिभ्राणा सुमनोहरम् ॥ २१

[2]इत्युक्तं वचनं श्रुत्वा दुर्मदेन तदोन्मदा ।
विस्मयं परमापेदे विषादं हर्षमेव च ॥ २२

शनकैरथ तं देशमुपेत्य गजगामिनी ।
सलज्जातिलतागुल्मगह्नं सुमनोहरम् ॥ २३

विविक्तमतिरम्यञ्च प्रदेशं साभ्यपद्यत ।
मालतीकुसुमामोदलतामण्डपसन्निधौ ॥ २४

निषसाद कचित्तस्मिन्नष्टापदशिलातले ।
उपविश्य शनै[3]स्तस्मिन् गान्धारस्वरसंश्रिता ॥ २५

जगौ तुङ्गस्वरकलं तारमन्द्रकृतश्रमम् ।
[4]स तस्मिन्विचरन् राजा स्वहस्त[5]तलमूर्छनम् ॥ २६

आकर्ण्य ललितं गीतं तस्याश्चातिमनोहरम् ।
सम्भ्रमं परमा[6]पेदे हर्षनिर्भरमानसः ॥ २७

उर्वशीं मन्यमानस्तां गायन्तीं राजकुञ्जरः ।
हर्षस्मेरमुखो भूत्वा गाढमालिङ्ग्य तां प्रियाम् ॥ २८

आनयच्च मनोहारि लतागुल्मकृताजिरम् ।
[7]ततस्तौ मानिनौ राजन् परस्परमानोगतम् ॥ २९

सुचिरोत्कण्ठितं [8]यावन्निषेवाते मनोहरम् ।
तावद्राज्ञो वपुर्बिभ्रद्दुर्मदः काममोहितः ॥ ३०

---

1. अयं श्लोकः क. ख. पुस्तकयोर्नास्ति
2. इमौ 22,23. श्लोकौ अ पुस्तके न स्तः
3. क. ख. -स्तन्वी
4. क. ख. तस्मिंस्तु वि-
5. क. ख. लय-
6. अ. मावेद-
7. क. ख. तत्र तौ मानितौ
8. क. ख. तावत्त्विषे-

त्वरितोऽभ्यागमद्विप्रा उर्वशीसङ्गमोत्सुकः ।
सङ्केतस्थानमायान्तीं[1] स गन्धर्वस्तदोर्वशीम् ॥ ३१

अपश्यदवनीभर्तुः समागमसमुत्सुकाम् ।
मनोहराकृतिं कामी दृष्ट्वा तां पथि दुर्मदः ॥ ३२

वीरोऽपि सहसा शङ्कामवाप भयमेव च ।
स्वरूपं दर्शयामास शनैस्तस्यै नृपाकृतिः ॥ ३३

परिरब्धा च सा तेन भुजाभ्यां गाढमुर्वशी ।
पपौ यथेष्टं हन्तास्याः सोत्कण्ठमधरामृतम् ॥ ३४

ततस्तामित एहीति दत्तहस्तः शनैः शनैः ।
निनाय नन्दनोपान्तं मायावी स्वेच्छयोर्वशीम् ॥ ३५

उपविश्य क्वचित्तस्मिंश्चामीकरशिलातले ।
रममाणो यथा[2]कालं तया सह सुमध्यया ॥ ३६

निषसाद महीदेवाः संवृतात्मा स्वमायया ।
तया सह निविष्टः सन् बुद्धया सम्यगियं मया ॥ ३७

वञ्चिता सुचिरायेति दुर्मदः प्राहसच्छनैः ।
अथ तस्य स्मितं साधु विलोक्य कपटाकृतेः ॥ ३८

अवाप्य महतीं शङ्कां व्याजहार रुषान्विता ।
राजन्नव्याजहासस्य कारणं ब्रूहि तत्त्वतः ॥ ३९

स तु दुष्टः शठमति[3]र्व्यलीकं वचनं वदन् ।
वञ्चयामास तां मुग्धां सापि रुष्टा बभूव ह ॥ ४०

तं मन्यमाना दयितं तत्प्रलोभचिकीर्षया ।
उत्थाय प्रययौ राजन्नुर्वशी दुर्मदान्तिकात् ॥ ४१

अथ तस्मात्प्रदेशाच्च दुर्मदश्छन्नविग्रहः ।
अतिष्ठन्नन्दनोपान्त उर्वशीभयशङ्कितः ॥ ४२

---

1. क. ख. -न्तीमन्तरा स तदो-
2. क. ख. कामं
3. क. ख. व्यलीकवचनं

मायाबलेन राजानं रमयन्ती [1]मदोन्मदा ।
लतागृहाद्विनिष्क्रम्य क्षणेनागात्ततोऽन्यतः ॥ ४३

तामयान्तीमुपालक्ष्य दुर्मदो निजरूपधृत् ।
अभ्यगच्छत् सुरूपां तां शनकैरथ दुर्मदः ॥ ४४

लतागृहाद्विनिष्क्रम्य नरेन्द्रोऽपि नभस्वता ।
वीज्यमानः सुरभिणा साशङ्कः पर्यवर्तत ॥ ४५

ऊर्वशी तु ततस्तिर्यगभिवीक्ष्य समन्ततः ।
राजवेषप्रतिच्छन्नं नालक्षयत दुर्मदम् ॥ ४६

विजिज्ञासुर्वने तस्मिन् परिचक्राम भूसुराः ।
ततो ददर्श सा दूरे दुर्मदं त्वरयोन्मदा ॥ ४७

आयान्तमुपसर्पन्तं भयेन कुहकेक्षणम् ।
अमंस्त चोर्वशी विप्रा अनेनैव दुरात्मना ॥ ४८

वञ्चिता धर्षिता चाहमनेन [2]सुतरामिति ।
वितर्कयन्त्यामुर्वश्यामेवं पुण्यवतां वरः ॥ ४९

त्वरितोऽभ्याययौ राजा तत्समीपमुदारधीः ।
अब्रवीच्च स तां भद्रे किमिदं ते मुखाम्बुजम् ॥ ५०

नातिप्रसादसुभगं भग्नभ्रूस्फुरिताधरम् ।
इत्युक्ता तेन सा सम्यग्दुर्मदुस्य विचेष्टितम् ॥ ५१

अनुमानेन विप्रेन्द्र विजज्ञे तद्यथातथम् ।
आचचक्षेऽथ सा राज्ञे दुर्मदस्य विचेष्टितम् ॥ ५२

[3]यावदुन्मदया राजा वञ्चितो वृषलीकृतः ।
राजन् मद्रूपधारिण्या स्वैरमुन्मदया भवान् ॥ ५३

त्वद्रूपधारिणा चाहं दुर्मदेन प्रलोभिता ।
यस्मादावां नृपश्रेष्ठ च्छद्मना भृशवञ्चितौ ॥ ५४

---

1. क. ख. तदोन्मदा
2. क. ख. सुचिरादिति
3. अ. वञ्चितोन्मदया यावद्राजंस्त्वन्तु बलीकृतः क. ख. वञ्चितोन्मदया यावद्राजा च वृषलीकृतः

तदुन्मदादुर्मदयोरतिनिन्दितकर्मणोः ।
सुदुःसहतरं शापं प्रदास्याम्यवलिप्तयोः ॥ ५५

इत्युक्त्वा रोषताम्राक्षी स्फुरिताधरपल्लवा ।
उर्वशी प्रददौ शापं तयोरल्पसुखावहम् ॥ ५६

मत्तोऽपनीय राजानं स यस्मान्मामवञ्चयत् ।
तस्मात्तु योनौ राक्षस्यां जातश्चरतु भूतले ॥ ५७

वञ्चयामास राजानं या सापि भुवि कस्यचित् ।
भूभर्तुरुन्मदा पुत्री भविष्यति न संशयः ॥ ५८

तत्कृते केनचिद्राज्ञा निहतो राक्षसीं तनुम् ।
अपहाय पुनस्तस्याः पुत्रतां यातु दुर्मदः ॥ ५९

सा तु राजसुताभीष्टं चिराभिलषितं पतिम् ।
अनिच्छन्ती विहायान्यमुन्मदा पतिमाप्नुयात् ॥ ६०

सूतः—

[1]उर्वशीशप्यमानौ तावुभौ सद्यो बभूवतुः ।
तस्याः समीपमागम्य शापानुग्रहमात्मनः ॥ ६१

पादप्रणामावनतौ ययाचाते भृशातुरौ ।
ततस्तयोर्महा[2]र्हाभिः प्रार्थनाभिरनुग्रहम् ॥ ६२

चक्रे[3] कोपस्य सा कोपः सतां हि न चिराय हि ।

उर्वशी—

[4]उन्मदा जनयत्येकं पुत्रं भर्तृवधेन तु ॥ ६३

[5]दुःखिता संप्रविश्याग्निं पुनः स्वर्गमवाप्स्यति ।
दुर्मदोऽपि नरेन्द्रेण युध्यमानः स्वशत्रुणा ॥ ६४

---

1. क. ख. ऊर्वश्या शप्यमानौ
2. क. ख. हर्षात्
3. अ. चक्रे कोपस्य [साचान्तं] सान्त्वपूर्वं तदोर्वशी
4. क. ख. जनयित्वैकं
5. अ. दुःखिता सा प्रविश्याग्निं न च स्वर्गमवाप्स्यति

समरे निधनं प्राप्य त्रिदिवं प्रति गच्छतु ।
इति दत्वा तयोर्विप्राः शापानुग्रहमुर्वशी ॥ ६५

जगाम स्वेच्छया [1]तत्र राज्ञा सह वनान्तरम् ।
एवं शप्तावुभौ विप्रा उन्मदादुर्मदौ भुवि ॥ ६६

यथोक्तामापतुर्योनिं मानुषीं राक्षसीमपि ।
उन्मदा च सुता राज्ञो जनकस्य महीभृतः ॥ ६७

हरिणीति समाख्याता रूपेणाप्रतिमा भुवि ।
दुर्मदो दीर्घजङ्घस्य हिरण्यपुरवासिनः ॥ ६८

राक्षसस्य सुतो जज्ञे पिङ्गाक्षो नाम नामतः ।
तस्मादात्मसुखप्रेप्सुरन्यासक्तां न वञ्चयेत् ।
यदि कुर्याद्दुःखयुक्त[2]श्चान्ययोनिषु जायते ॥ ६९

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे अन्यासक्ताङ्गनादूषणं
नाम नवमोऽध्यायः

1. क, ख, तस्मात्  2. क. ख. श्चान्य-

## ॥ दशमोऽध्यायः ॥

### कन्यकातपःकथनम्

सूतः—

सभर्तृकाणां नारीणां पतिरेव परा गतिः ।
कन्यका पतिकामा चेत् [1]तपसा योग्यतां व्रजेत् ॥ १

असंस्कृता च या कन्या पतिकामा तपश्चरेत् ।
लभेत सुलभं कान्तं पद्मेव पुरुषोत्तमम् ॥ २

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
कन्या कलावती नाम कुम्भयोनेर्महात्मनः ॥ ३

आजगामाश्रमपदं नाभिक्षेत्रसमीपतः ।
पिशुनैर्मत्सरोपेतैर्दुष्टैरपि विवर्जितम् ॥ ४

तामगतां समालोक्य धृतकृष्णाजिनाम्बराम् ।
मनःकुरङ्गग्रहणवागुरामिव [2]विस्तृताम् ॥ ५

रुद्राक्षमालां दधतीं हृदि पीनस्तनोपरि ।
सर्वेन्द्रियमहा[3]मीनाकलनाय धृतां यथा ॥ ६

वल्कलं शीर्णवटकं शरीरे दधतीं पराम् ।
शिष्य[4]हस्तैश्च स मुनिर्दत्त्वार्घ्यं त्वासनादिकम् ॥ ७

[5]आपृच्छय कुशलं चापि कुत आगम्यते त्वया ।
तपः किमर्थं बाल्येऽपीत्यपृच्छत् कुम्भसम्भवः ॥ ८

कन्या—

श्रूयतां भगवन् सर्वं वृत्तान्तं मामकं त्विह ।
आसीत्काम्पिल्यनगरे धर्मसेतुर्महीपतिः ॥ ९

---

1. क. ख. तपसे
2. अ. विष्टिताम्
3. क, ख, मीनगलनाय
4. क. ख. हस्तेन
5. आपृच्छत्

वदान्यः सत्यवान् वीरो निर्जितारातिमण्डलः ।
कुमुद्वती बभूवास्य पत्नी [1]पद्मनिभानना ॥ १०

स राजा सर्वसम्पन्नः स्वात्मजालोकनोत्सुकः ।
दानानि व्रतचर्यां च तीर्थयात्रां चकार ह ॥ ११

तद्गेहमागता काचिद्भिक्षां देहीत्युवाच [2]ह ।
[3]भिक्षां नादाय निरगाद्योगिनीं तां कुमुद्वती ॥ १२

कस्माद्भिक्षां न गृह्णासीत्यवदन्मधुरं वचः ।

योगिनी—

अनपत्यमभोज्यान्नं प्रवदन्ति मनीषिणः ॥ १३

[4]ततो गृह्णामि नो ग्रास[5]मपुत्रायास्तवाधुना ।
कुमुद्वती तद्वचनं श्रुत्वा तत्प्रार्थनां व्यधात् ॥ १४

भुङ्क्ष्वान्नं मामकमिति सा बुभोज च तद्गृहे ।
रसैर्नैकैश्च सन्तुष्टा राज्ञ्यै सा तु वरं ददौ ॥ १५

कुमुद्वति वरारोहे गृहाण फलमुत्तमम् ।
तिन्त्रिण्युपवने चैतत् त्वं [6]भुक्त्वा सुप्रजा भव ॥ १६

एवमुक्ता सावहिता राजभार्या यशस्विनी ।
तिन्त्रिणीनामधो गत्वा[7]पश्यत्सा पादपे फलम् ॥ १७

बह्वपत्यार्थिनी तानि सम्भूयैकफलं त्वभूत् ।
तद्भुक्त्वा सुषुवे पुत्रं पुत्रीमपि सुमध्यमाम् ॥ १८

इन्द्रकीर्तिः सुतो नाम्ना सुता नाम्ना कलावती ।
साहं मामवलोक्याथ राजा यौवनमध्यगाम् ॥ १९

विवाहयोग्या कन्येयमिति चिन्तामवाप सः ।
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ॥ २०

---

1. क. ख. चन्द्र-
2. ख. च.
3. क. ख. भिक्षामादाय
4. क. ख. अतो
5. क. -मपवित्रमपुत्रयोः
6. क. ख. भुंक्ष्व
7. क. ख. बहुसौ

दशवर्षा भवेत्कन्या ह्यत ऊर्ध्वं रजस्वला ।
कन्यां रजस्वलां दृष्ट्वा पतन्ति पितरो दिवः ॥ २१

पिता तथैव माता च ज्येष्ठो भ्राता तथैव च ।
[1]ते चैव नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ २२

मातुः पितुश्च दुःखाय जायते कन्यका ध्रुवम् ।
[2]न कन्यापत्यता लोके वरं सा ह्यनपत्यता ॥ २३

मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ।
कुलत्रयं च सा कन्या कृत्वा तिष्ठति संशये ॥ २४

तस्माद्देया कस्य कन्येत्येवं चिन्तासमन्वितः ।
आहूय नृपतीन् सर्वान् स्वयंवरमकल्पयत् ॥ २५

अङ्गवङ्गाकलिङ्गाद्या नृपाः प्राप्य स्वयंवरम् ।
इयं मम ममेयं स्यादिति क्रुद्धाः परस्परम् ॥ २६

अन्योन्यशस्त्र[3]सम्पातात् संहारमगमन्नृपाः ।
एवं स्वयंवरे भग्ने राजा चिन्ताग्निना मृतः ॥ २७

मम माता पतिस्नेहाद्दीप्तमग्निं विवेश ह ।
[4]ततो मन्त्रिशतैर्वृद्धैरिन्द्रकीर्तिर्नृपः कृतः ॥ २८

पितृमातृवियुक्ताहमनूढपतिका तथा ।
पतिभक्तिश्च तत्पूजा पतिधर्मानुसारिता ॥ २९

पातिव्रत्यञ्च नारीणां नाल्पस्य तपसः फलम् ।
राज्यं मित्राणि धर्माश्च बान्धवाश्चार्थसञ्चयाः ॥ ३०

योषितः पतिहीनाया भवन्त्यसुखदायिनः ।
तस्मात्समस्तसुखदं पतिमेव समाश्रयेत् ॥ ३१

करोति पतिशुश्रूषां पादसंवाहनादिभिः ।
पतिपादोदकं यावत् सेवते श्रद्धयासकृत् ॥ ३२

---

1. क. तेनैव ख. त्रयोऽपि
2. अयं सार्धश्लोकः अपुस्तके नास्ति
3. क. ख. संघातात्
4. अ. ततो मन्त्रिसुतैर्वृद्धैः

तया गङ्गादितीर्थानां जलं पीतं न संशयः ।
इति चिन्तान्विता साह्माश्वस्ता मंत्रिभिस्तदा ॥ ३३

एवं गते बहुतिथे पितुर्मातु[1]र्महीभुजाम् ।
नाशहेतुरियं कन्येत्येवं लोकोऽ[2]भ्यसूययत् ॥ ३४

अथ वैराग्यमापन्ना निर्गता पितृवेश्मनः ।
आत्मव्यापादनोद्युक्ता प्रयागं क्षेत्रमागता ॥ ३५

असूर्या नाम ये लोका अन्धेन तमसा वृताः ।
तान् प्रयान्ति ध्रुवं पापा ये भवन्त्यात्मघातिनः ॥ ३६

एवं श्रुत्वा पुराणोक्तिं निवृत्ता चात्मनो वधात् ।
दीक्षिता च [3]भरद्वाजमुनिनार्थपरायणा ॥ ३७

विन्ध्याद्दक्षिणदेशस्थं विरजं तीर्थमुत्तमम् ।
समस्तपापदलनं भरद्वाजेन कीर्तितम् ॥ ३८

[4]तत्र तीव्रं तपः कृत्वा शोधयिष्ये कलेबरम् ।
विष्णुरेव हि मे भर्ता जन्मजन्मान्तरेष्वपि ॥ ३९

भवेत्तथा तपः कुर्यां यो लक्ष्म्याश्चापि दुर्लभः ।
तमृते वरमात्मानं नान्यमिच्छामि कंचन ॥ ४०

अगस्त्यः—

विरजेऽस्मिन् विशालाक्षि तपः कुरु यथामति ।
इत्युक्त्वा भोजयामास फलैर्मूलैः कलावतीम् ॥ ४१

एकरात्रमुषित्वा सा मुनेस्तस्याश्रमे ततः ।
अनुज्ञाप्य प्रातरेव तमृषिं तपसे ययौ ॥ ४२

ततस्तपः प्रारभत मुनीनामपि दुर्लभम् ।
निमग्ना शैशिरे काले नाभिदघ्नोदके तु सा ॥ ४३

जपन्ती वैष्णवं मन्त्रं विष्णुध्यानपरायणा ।
ग्रीष्मे पञ्चाग्निमध्यस्था वर्षाकाले निराश्रया ॥ ४४

---

1. क, ख. हिं भूभुजाम्
2. क. ख. -ह्यसूचयत्
3. क. ख. भरद्वाजेनाद्य तीर्थ-
4. श्लोकद्वयमिदं (39,40.) अपुस्तके नास्ति

छिन्नवासास्तु हेमन्ते वसन्ते तपती तथा ।
कृच्छ्रैरुग्रैः सान्तपनैश्चान्द्रैर्मासोपवासकैः ॥ ४५

व्रतैश्च शोषमनयद्देहं तत्र कलावती ।
[1]आज्यैर्गन्धैश्च माल्यैश्च धूपदीपोपहारकैः ॥ ४६

विष्णुमाराधयामास सर्वपापप्रणाशनम् ।
ततः प्रसन्नो भगवान् शङ्खचक्रगदाधरः ॥ ४७

पीताम्बरधरः स्रग्वी तपसाराधितस्तया ।
गरुडस्कन्धमारुह्य तस्याः पार्श्वमुपागतः ॥ ४८

वृणीष्व त्वं वरं सुभ्रु इत्युवाच श्रियान्वितः ।
कलावती ततः स्तुत्वा नत्वा देवं वचोऽब्रवीत् ॥ ४९

उद्धृता [2]शफरी पूर्वं शङ्खं दत्वा यथार्णवात् ।
तथा मामुद्धरानन्त [3]अपतिं पतिकामुकीम् ॥ ५०

एवं स्तुतस्तया राजन् भगवान् कमलेक्षणः ।
वरं वृणीष्वेति मुदा भूयोभूयोऽब्रवीद्वचः ॥ ५१

ततः सा वरयामास पतित्वे विष्णुमव्ययम् ।
ततस्तद्वचनं श्रुत्वा क्रोधाल्लक्ष्मीः कलावतीम् ॥ ५२

उवाच मयि तिष्ठन्त्यां वृणीषे मे कथं पतिम् ।
नास्मिन् जन्मनि भार्या त्वं भविष्यसि कदाचन ॥
जन्मान्तरे भवित्री च [4]जानाम्येतदहं खलु ॥ ५३

विष्णुः—

[5]अद्य लक्ष्मीवचस्तत्तु सत्यमस्तु कलावति ।
अस्मात्कृतयुगा[6]त्तच्च तृतीयं द्वापरञ्च यत् ॥ ५४

---

1. क. ख. पूज्यै-
2. अ. शबरी
3. क. अयतिं यतिकामुकीम्
   ख. आयतिं यतिकार्मुकाम्
4. क. ख. न जाने तदहं खलु
5. क. ख. अस्या लक्ष्म्या व-
6. क. ख. त्तन्वि

आगमिष्यति तत्राहमुत्पत्स्ये [1]यदुवंशतः ।
वसुदेवेन देवक्यां ताभ्यामाराधितः पुरा ॥ ५५

भुवो भारावताराय भविता निजमायया ।
इयं लक्ष्मीर्भवित्री च रुक्मिणीसंज्ञिता क्षितौ ॥ ५६

त्वं च सत्राजितः कन्या सत्यभामा भविष्यसि ।
मम प्रियतमा तस्मान्मा शोकं कुरु भामिनि ॥ ५७

तावत्कालं पुण्यजिताँल्लोकान् प्राप्य सुखार्जितान् ।
सम्भविष्यसि लोकेऽस्मिन् त्वं भार्या भवितुं मम ॥ ५८

इत्युक्त्वा[2]न्तर्दधे देवः पुण्याँल्लोकानवाप सा ।
यावद्भविष्यति पतिर्देवदेवो जनार्दनः ॥ ५९

तावत्पुण्येषु लोकेषु स्थिता सा वरवर्णिनी ।
द्वापरे समनुप्राप्ते वसुदेवकुलोद्भवम् ॥ ६०

विष्णुं तं वल्लभं [3]प्राप्ता सत्यभामेति विश्रुता ।
तस्मात्कन्या तपः कर्तुं वल्लभार्थमिहार्हति ॥ ६१

गर्गस्य कन्यका सौम्य तपस्तप्त्वा सुदुष्करम् ।
यायावरकुले जातं लेभे [4]प्राक् श्रृङ्गवन्मुनिम् ॥ ६२

सती च कन्यका भूत्वा तपस्तप्त्वा सुदारुणम् ।
अवाप शङ्करं कान्तं तस्य [5]देहार्धभागभूत् ॥ ६३

य इदं श्रृणुयान्नित्यं श्रावयेद्वा समाहितः ।
स भुक्त्वा सकलान् भोगान् स्वर्गलोके महीयते ॥ ६४

[6]कन्या श्रृणोति चेन्नित्यं षण्मासाभ्यन्तरे सुधीः ।
इष्टं पतिमवाप्नोपि पुत्रपौत्रैश्च वर्धते ॥ ६५

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे कन्यकातपःकथनं नाम
दशमोऽध्यायः

---

1. क. ख. वृष्णि-
2. क. ख. -न्तर्हिते देवे
3. क. ख. प्राप्य
4. क. ख. ऋकूश्रृङ्गवर्त्मनि
5. अ. भागार्धभागयुक्
6. अयं श्लोकः अ. क. पुस्तकयोर्नास्ति

## ॥ एकादशोऽध्यायः ॥

### कन्यादूषणदोषकथनम्

सूतः—

कन्यकादूषणे दोषं वक्ष्यामि द्विजसत्तमाः ।
न हीदृशमनायुष्यं लोके किञ्चन विद्यते ॥ १

कन्यामदत्तां पित्राद्यैर्यो भुङ्क्ते काममोहितः ।
स घोरामापदं प्राप्य नरकं चापि गच्छति ॥ २

अत्रार्थे संप्रवक्ष्यामि कथां दण्डक[1]संश्रिताम् ।
शुक्रः कदाचिद्भगवानाहूतो वृषपर्वणा ॥ ३

तेना[2]र्चितश्चिरं तस्थौ तत्र भार्गवसत्तमः ।
कदाचिच्छुक्रतनया सदने स्वे तु कन्यका ॥ ४

अतिष्ठत सुचार्वङ्गी शुश्रुषन्ती हुताशनम् ।
तस्मिन् काले दण्डकस्तु राजा त[3]द्गृमागतः ॥ ५

क्व शुक्र इति पप्रच्छ तमूचुस्तद्गृहे स्थिताः ।
गतः शुक्रो याजयितुं सुपर्वाणं दनोः सुतम् ॥ ६

तच्छुत्वा तस्य तनयां दृष्ट्वा दण्डकभूपतिः ।
प्रविश्य दृष्टवांश्चैव सुरूपां शुक्रकन्यकाम् ॥ ७

तां दृष्ट्वा कामसन्तप्तस्तत्क्षणादेव पार्थिवः ।
सर्वान् विसर्जयामास [4]भृत्यान् भ्रातॄन् सुहृत्तमान् ॥ ८

शुक्रशिष्यांनपि बली ह्येकाकी हृष्ट आगमत् ।
तमागतं शुक्रसुता प्रत्युत्थाय यशस्विनी ॥ ९

---

1. क. ख. संज्ञिनः
2. क. ख. र्थित-
3. क. -द्गेह-
4. क. भृत्यान्भृत्यान् ख. तस्या भृत्यान्

पूजयामास संहृष्टा भ्रातृभावेन कन्यका ।
ततस्तामाह नृपतिर्बाले कामाग्नितापितम् ॥ १०

मां समह्लादयस्वाद्य स्वपरिष्वङ्गवारिणा ।
सापि प्राह नृपश्रेष्ठं मा कृथा दुर्णयं नृप ॥ ११

पिता मम महा[1]क्रोधस्त्रिदशानपि निर्दहेत् ।
भगिनी धर्मतस्तेऽहं भवान् शिष्यः पितुर्मम ॥ १२

सोऽब्रवीद्भीरु मां शुक्रः कालेन परिधक्ष्यते ।
कामाग्निर्निर्दहति मामद्यैव तनुमध्यमे ॥ १३

सा प्राह दण्डनृपतिं मुहूर्तं परिपालय ।
[2]स्वयं याचस्व पितरं स ते दास्यत्यसंशयम् ॥ १४

दातुं शक्ता न चात्मानं न स्वतन्त्रा हि योषितः ।
ततोऽब्रवीत्तां नृपतिः पुरावृत्तं शृणुष्व मे ॥ १५

पूर्वं चित्राङ्गदा नाम कन्या वै विश्वकर्मणः ।
स्वसखीभिः [3]स्वयं स्नातुं नैमिशारण्यमभ्यगात् ॥ १६

तां दृष्ट्वा सुरथो नाम सुदेवतनयो नृपः ।
समभ्येत्याब्रवीदेनां कन्दर्पशरपीडितः ॥ १७

त्वं मुग्धे मोहयसि मां [4]दृष्ट्वैव मदिरेक्षणे ।
त्वद्दृष्टिशरपातेन [5]स्मरेणाभ्येत्य चार्दितः ॥ १८

ततः सा चारुसर्वाङ्गी राज्ञे राजीवलोचना ।
वार्यमाणा सखीभिश्च प्रादादात्मानमात्मना ॥ १९

एवं तया पुरा तन्व्या परित्रातः स भूपतिः ।
तस्मान्मामपि सुश्रोणि त्वं परित्रातुमर्हसि ॥ २०

---

1. क. ख. कोपी
2. क. ख. स्वमेव याचस्व गुरुं
   ख. तमेव याचस्व गुरुं
3. क. ख. समं
4. ख. दृष्ट्यैव
5. क. ख. स्मरस्याभ्येत्य ताडितः

राजानं साब्रवीद्दण्डं तस्या यद्वृत्तमुत्तरम् ।
किं त्वया न परिज्ञातं तस्मात्ते कथयाम्यहम् ॥ २१

यदा [1]तया तु तन्वंग्या सुरथस्य महीपतेः ।
आत्मा प्रदत्तः स्वातन्त्र्यात् तस्मात्तामशपत् पिता ॥ २२

अस्वातन्त्र्यं तवास्तीह [2]प्रदाने स्वात्मनोऽनघे ।
आत्मा प्रदत्तः स्वातन्त्र्यान्न सुखं च भविष्यति ॥ २३

न च पुत्रफलञ्चैव पत्या योगं समेष्यसि ।
उत्सृष्टमात्रे शापे तु चापोवाह सरस्वती ॥ २४

अकृतार्थं नरपतिं योजनानां त्रयोदश ।
अपकृष्टे तु नृपतौ सापि मोहमुपागता ॥ २५

जलैः [3]संसिच्यमानापि मृतकल्पाभवत्तथा ।
तां मृतामिति विज्ञाय जग्मुः सख्यस्त्वरान्विताः ॥ २६

काष्ठान्याहर्तुमपरा वह्निमानेतुमाकुलाः ।
सा च तास्वपि सर्वासु गतासु वन[4]मुत्तमम् ॥ २७

संज्ञां लेभे सुचार्वङ्गी दिशश्चैव व्यलोकयत् ।
अपश्यन्ती नरपतिं तथा स्निग्धं सखीजनम् ॥ २८

निपपात सरस्वत्याः पयसि स्फुरितेक्षणा ।
गोमत्यां परिचिक्षेप सा वेगात्ताञ्च कन्यकाम् ॥ २९

तयापि च परिक्षिप्ता सिंहव्याघ्राकुले वने ।
एवं तस्याः स्वतन्त्राया दुरवस्था मया श्रुता ॥ ३०

तस्मान्न दास्याम्यात्मानं रक्षन्ती शीलमुत्तमम् ।
तस्यास्तद्वचनं श्रुत्वा तां दण्डः प्राह कन्यकाम् ॥ ३१

---

1. अ. तदा तया तन्व्या
2. क. वराके स्वात्मनोऽनघे
   अ. परार्थे स्वात्मनोऽबले
3. क. ख. संवीज्य
4. अ. मुत्तमा

तस्याश्चाप्युत्तरं वृत्तं तत्पितुश्च कृशोदरि ।
सुरथस्य तथा राज्ञस्तच्छ्रोतुं त्वमिहार्हसि ॥ ३२

यदापकृष्टे नृपतौ पतितां तां महावने ।
तदा गगनसञ्चारी दृष्ट्वा प्रोवाच गुह्यकः ॥ ३३

मा विषादं हि सुभगे गच्छ त्वं वल्लभं प्रति ।
[1]ध्रुवमेष्यसि तेन त्वं संयोगमसितेक्षणे ॥ ३४

तस्माद्गच्छ सु शीघ्रं त्वं द्रष्टुं श्रीकण्ठमीश्वरम् ।
[2]इत्येवमुक्त्वा सा तेन कालिन्द्या दक्षिणे तटे ॥ ३५

दृष्ट्वा महेशं श्रीकण्ठं स्नात्वा रविसुताजले ।
व्यतिष्ठत नमस्कृत्य यावद्व्योम्नि स्थितो रविः ॥ ३६

अथो जगाम तं देशं स्नातुं कश्चित्तपोधनः ।
श्रुतः पाशुपताचार्यः सामवेदी ऋतुध्वजः ॥ ३७

तां दृष्ट्वा स मुनिर्ध्यानमगमत् केयमित्यतः ।
अथ सा तमृषिं नत्वा कृताञ्जलिरुपस्थिता ॥ ३८

तां प्राह पुत्रि कस्यासि किमर्थं वनमागता ।
अथ सा मुनये प्राह याथातथ्यं कृशोदरी ॥ ३९

श्रुत्वा स कोपमगमदशपच्छिलिपिनां वरम् ।
यस्मात् स्वतनुजातेयं परदेयापि पापिना ॥ ४०

योजिता न च पत्या वै ततः शाखामृगोऽस्तु सः ।
गच्छ त्वं सुभगे देशं सप्तगोदावरं शुभम् ॥ ४१

तत्रोपास्य महेशानं वस त्वं हाटकेश्वरम् ।
तत्र स्थितायाश्चाभ्याशं तव वेदवती शुभा ॥ ४२

आगमिष्यति दैत्यस्य पुत्री कन्दरशालिनः ।
तथान्या गुह्यकसुता दमयन्तीति विश्रुता ॥ ४३

---

1. इद मनन्तरं चार्धं क. पुस्तके नास्ति

2. इतः सार्धाष्टकश्लोकाः अ. पुस्तके न सन्ति

तथापरा वेदवती पर्जन्यदुहिता शुभा ।
इत्येवमुक्ता मुनिना बाला चित्राङ्गदा तदा ॥ ४४

सप्तगोदावरं तीर्थं संप्राप्य त्वरिता ततः ।
समुपास्ते हाटकेशं कन्दमूलफलाशना ॥ ४५

स ऋषिर्ज्ञानसम्पन्नः श्रीकण्ठायतनेऽलिखत् ।
श्लोकमेकं [1]तदाख्यातं [2]तस्याश्च प्रियकाम्यया ॥ ४६

न सोऽस्ति कश्चित् त्रिदशोऽसुरो वा
यक्षोऽथ मर्त्यो रजनीचरो वा ।
इदं हि दुःखं मृगशावनेत्र्याः
[3]निर्मार्जयेत स्वपराक्रमेण ॥ ४७

[4]एवं लिखित्वा स मुनिर्जगाम
द्रष्टुं विभुं पुष्करनाथमीशम् ॥ ४८

दण्डः—

चित्राङ्गदाया[5]स्तपसि तत्रस्थाया यथासुखम् ।
समीक्ष्य सुरथं वीरं महान् कालः समभ्यगात् ॥ ४९

विश्व[6]कर्मा हि मुनिना शप्तो [7]वानरतां गतः ।
न्यपतन्मेरुशिखराद् भू[8]पृष्ठे विधिचोदितः ॥ ५०

तत्रासतोऽस्य सुचिरान्महान् कालोऽत्यगात्ततः ।
एकदा दैत्यशार्दूलः कन्दराख्यसुतां प्रियाम् ॥ ५१

प्रतिगृह्य समभ्यागात् भूगतां देवतामिव ।
तां दृष्ट्वा वानरश्रेष्ठो गृहीत्वा च बलात्करम् ॥ ५२

तयैव सह तन्वङ्ग्या हिमाचलमुपागमत् ।
तस्मिन् महाश्रमे पुण्ये स्थाप्य वेदवतीं कपिः ॥ ५३

1. क. ख. तथा-
2. अ. ततस्तस्याश्च काम्यया
3. क. ख. निर्मार्जयेद्यः
4. अस्य श्लोकस्य अवशिष्टमर्धं नोपलभ्यते
5. क. ख. स्त्वरजे
6. क. ख. कर्मापि
7. अ. दानवतां
8. क. ख. पृष्ठं

न्यमज्जत स कालिन्द्यां पश्यतो दानवस्य च ।
स चापि वानरो देव्याः कालिन्द्या वेगतो धृतः ॥ ५४

नीतः शिवेति विख्यातं देशं शिवजलावृतम् ।
अथापश्यत्समायान्तं मज्जन्तं गुह्यकोत्तमम् ॥ ५५

[दमयन्त्या] (नन्दयन्त्या) समं पुत्र्या गङ्गां जिगमिषुं कपिः ।
तां दृष्ट्वामन्यत श्रीमान् सेयं वेदवती ध्रुवम् ॥ ५६

तन्मे वृथा श्रमो जातो जलमज्जनसम्भवः ।
इति सञ्चिन्तयन्नेव समाद्रवत सुन्दरीम् ॥ ५७

सा तद्भयाच्च न्यपतन्नदीमनु हिरण्वतीम् ।
गुह्यको वीक्ष्य तनयां पतितामापगाजले ॥ ५८

दुःखशोकसमाक्रान्तो जगामाञ्जनपर्वतम् ।
[1]तत्रासौ तप आस्थाय मौनव्रतधरः शुचिः ॥ ५९

समास्ते वै महातेजाः संवत्सरगणान् बहून् ।
[दमयन्त्यपि] (नन्दयन्त्यपि)वेगेन हिरण्वत्या[2]वगाहिता ॥ ६०

नीता देशं महापुण्यं कैलासं[कोसलं] साधुभिर्वृतम् ।
गच्छन्ती सा च रुदती दृष्ट्वा च वटपादपम् ॥ ६१

तत्र विश्रम्य सुचिरं प्रशुश्राव गिरं ततः ।
न सोऽस्ति पुरुषः कश्चिद्यस्तं ब्रूयात्तपोधनम् ॥ ६२

[3]यथा स तनयस्तुभ्यमुद्बद्धो वटपादपे ।
सा श्रुत्वा तां ततो वाणीं विस्पष्टाक्षरसंयुताम् ॥ ६३

तिर्यगूर्ध्वमधस्ताच्च समन्तादप्यवैक्षत ।
ददर्श वृक्षशिखरे शिशुं पंचाब्दकं स्थितम् ॥ ६४

---

1. अ. तत्रान्ते
2. क. ख. पवाहिता
3. इदमर्धं वामनपुराणादुद्धृतम्

पिङ्गलाभिर्जटाभि[1]स्तु चोनद्धं [2]यत्नतः शुभे ।
प्राह बालक केनासि बद्धस्त्वं पापिना वद ॥ ६५

स तामाह महाभागे बद्धोऽस्मि कपिना वटे ।
अहं नाम्ना तु जाबालिः पिता मम ऋतुध्वजः ॥ ६६

[3]यन्मामकथयत् सोऽपि तच्छृणु त्वं वरानने ।
पञ्चवर्षसहस्राणि बाल एव भविष्यसि ॥ ६७

[4]दशवर्षशतान्येव यौवनस्थो भविष्यसि ।
चत्वारिंशच्छतान्येव वृद्धस्त्वञ्च भविष्यसि ॥ ६८

इत्येवमुक्तः पित्राहं बालः पञ्चाब्दवार्षिकः ।
विचरामि महीपृष्ठं गच्छन् स्नातुं हिरण्वतीम् ॥ ६९

दृष्टोऽहं कपिना तेन वटे [5]बद्धो जटासुतैः ।
भवती का कस्य हेतोः प्रविष्टा निर्जनं वनम् ॥ ७०

तच्छ्रुत्वा [6]नन्दयन्ती[दमयन्ती]च स्ववृत्तान्तमचीकथत् ।

जाबालिः—

[7]श्रीकरं गच्छ सुभगे प्रसिद्धं यमुनातटे ॥ ७१

तत्रागच्छति मध्याह्ने मत्पिता शर्वमर्चितुम् ।
तस्मै निवेद[8]याशु त्वं ततः श्रेयोऽपि [9]लप्स्यसे ॥ ७२

ततस्तु त्वरिता बाला श्रीकण्ठं प्राप्य तत्र हि ।
श्लोकं लिखितमालोक्य तदनु श्लोकमालिखत् ॥ ७३

[10]मुद्गलेनास्मि सञ्जीव्या [गदिता] राजपत्नी [11]भविष्यति ।
[12]सा [तां] चावस्थामिमां [13]प्राप्तां कश्चिन्मां त्रातुमीश्वरः ॥ ७४

---

1. ख. स्च
2. क. ख. यत्ततः
3. अ. यन्ममा-
4. इदमर्धं क. ख. पुस्तकयोर्नास्ति
5. ख. बाल इहाधुना
6. क. ख. मदयन्ती
7. क. ख. श्रीकण्ठं
8. क. ख. -य त्वं तु
9. क. ख. लभ्येत
10. क. मद्गतेनास्मि. ख. मुद्गतेनास्मि
11. क. ख भविष्यसि
12. क. ख. स चा-
13. क. ख. प्राप्य

इत्युल्लिख्य शिलापट्टे संप्रविष्टा शिवालयम् ।
ददर्श सा वेदवतीं साप्येनां समलोकयत् ॥ ७५

पप्रच्छतुस्तथान्योन्यं कथयामासतु[1]स्ततः ।
ते परिज्ञाततत्त्वार्थे समासाते उभे तदा ॥ ७६

एतस्मिन्नन्तरे प्राप्तः श्रीकण्ठं स ऋतुध्वजः ।
स्वहस्तलिखिताच्छलोकादनुश्लोकं ददर्श च ॥ ७७

ततः सा तं नमस्कृत्य सर्वं वृत्तं न्यवेदयत् ।
तच्छ्रुत्वा शङ्करं पूज्य प्राप्येक्ष्वाकुमथाब्रवीत् ॥ ७८

राजंस्त्वद्विषये बद्धो मत्पुत्रः कपिना [2]वटे ।
तं तु मोचयितुं नान्यः शक्तस्त्वत्तनयादृते ॥ ७९

तच्छ्रुत्वा सोऽपि भूपालो व्यादिदेश प्रियं सुतम् ।
पित्रादिष्टस्तु शकुनिस्तेनैव ऋषिणा सह ॥ ८०

ददर्श वृक्षशिखर उद्बद्धमृषिपुत्रकम् ।
[3]तत्र च्छित्त्वा लतापाशान् बाणैरारुह्य तं वटम् ॥ ८१

जटां मोचयितुं तस्य न च शक्तोऽभवत्तदा ।
ततोऽवतीर्य बाणेन शाखां चिच्छेद स त्रिधा ॥ ८२

शाखया कृत्तया सोऽपि ऋषिपुत्रोऽवतीर्णवान् ।
ऋतुध्वजः शकुनिना पुत्रेण च समन्वितः ॥ ८३

आजगामाथ [4]कालिन्द्यां स्नानार्थमृषिसत्तमः ।
एतस्मिन्नन्तरे प्राप्तः श्रीकण्ठं गालवो मुनिः ॥ ८४

यक्षासुरसुताभ्यां वै पूजितो नतिपूर्वकम् ।
ताभ्यां युक्तस्तु कार्तिक्यां पुष्करारण्यमभ्यगात् ॥ ८५

---

1. क. ख. स्तथा
2. अ. तपे
3. क. ख. ततः
4. क. कालिन्दीस्ना- ख. कालिन्दीं

स ददर्श महामत्स्यं निमग्नं सलिलाशये ।
तं रागोऽभयतः [दः] प्रोक्तो राजा [रागस्त्व] त्वपयशःप्रदः ॥ ८६

इति ब्रुवाणो मत्स्येन[ब्रुवाणे मत्स्ये तु] कन्याः प्रोचुरिदं वचः ।
भो न पश्यसि किं मत्स्य गालवं मुनिसत्तमम् । ८७

कन्याभ्यां सहितं स त्वं जनवादाद्बिभेषि किम् ।
तच्छ्रुत्वा मत्स्यनारीणां वचनं गालवो मुनिः ॥ ८८

लज्जया परया युक्तो नोत्ततार जलाशयात् ।
स्नात्वा ते अपि रम्भोरू समुत्तीर्य तटे स्थिते ॥ ८९

ते उभे [दमयन्तीं] नन्दयन्तीं च दृष्ट्वा चित्राङ्गदा तदा ।
के उभे इति [1]पप्रच्छ चेति ताभ्यां समागते ॥ ९०

[2]पृष्टा च चित्राङ्गदया पर्जन्यदुहिताब्रवीत् ।
जाता घृताच्यां पर्जन्यान्नाम्ना वेदवती त्वहम् ॥ ९१

क्रीडन्ती कपिनानीता मधुजीवं नगोत्तमम् ।
तेनैव वृक्षः सहसा पादाक्रान्तस्त्वभज्यत ॥ ९२

तदास्य विपु[3]लाः शाखाः समालिङ्ग्य स्थिता ह्यहम् ।
ततः प्लवङ्गमो वृक्षं प्राक्षिपत् सागराम्भसि ॥ ९३

सह तेनैव वृक्षेण पतितास्मि समाकुला ।
न तु जाने स केनापि छिन्नो वृक्षः सहस्रधा ॥ ९४

ततोऽस्मि बलिना वेगादूधृतानलसखेन हि ।
तथा वेदवती चापि निजवृत्तमचीकथत् ॥ ९५

चित्राङ्गदापि [4]चरितं निजं ताभ्यां व्यजिज्ञपत् ।
ततो गुह्यकपुत्री च नन्दयन्ती[दमयन्ती] निजं क्रमम् ॥ ९६

एवं चतस्रस्तत्रैव ज्ञातवृत्ताः परस्परम् ।
पूजयन्त्यो हाटकेशं तीर्थे तस्थुर्यथासुखम् ॥ ९७

---

1. अ. पृच्छाव
2. अ. पृष्ट्वा
3. क. ख. -लां शाखां
4. अ. वचनं

एवं गतेषु कालेषु शकुनिः स ऋतुध्वजः ।
सजाबालिः समभ्यागादिन्द्रद्युम्नस्य चान्तिकम् ॥ ९८

इन्द्रद्युम्नोऽपि तान् दृष्ट्वा सार्घ्यपात्रो विनिर्ययौ ।
तत्पूजां जगृहुः सर्वे तमुवाच ऋतुध्वजः ॥ ९९

राजन् मे कन्यका नष्टा [दमयन्ती] नन्दयन्तीति विश्रुता ।
तस्या ह्यर्थे च वसुधा अस्माभी रटिता नृप ॥ १००

तस्मादुत्तिष्ठ मार्गस्व साहाय्यं कर्तुमर्हसि ।
अथोवाच नृपो ब्रह्मन् मयापि ललनोत्तमा ॥ १०१

दृष्टा कृतश्रमेणापि मया छिन्नः सहस्रधा ।
बाणैश्च पर्वताकारः पतन् खलु नगोत्तमः ॥ १०२

मया हि सा वरारोहा न भिन्ना हस्तलाघवात् ।
न तां जानामि कुत्रेति तस्माद्गच्छेति[गच्छत] मार्गितुम् ॥ १०३

इत्युक्तास्ते रथान् दत्तानधिरुह्य महीभुजा ।
मार्गन्तो वसुधां मार्गे ददृशुस्ते तपोनिधिम् ॥ १०४

पृष्टवन्तश्च कस्त्वं किं कारणं [1]तपसि स्थितः ।
स चाब्रवीदहं नाम्ना सुरथो भूमिपात्मजः ॥ १०५

चित्राङ्गदार्थं तपसा कर्शयामि कलेवरम् ।
इन्द्रद्युम्नस्तु तच्छ्रुत्वा मा मुञ्च स्वकलेवरम् ॥ १०६

आगच्छ यामस्तन्वङ्गीं विचेतुं भ्रातृजोऽसि मे ।
इत्युक्त्वा रथमारोप्य तं गन्तुमुपचक्रमे ॥ १०७

ततः सर्वेऽपि ते सप्तगोदावरमुपागताः ।
अवतीर्णा [2]रथैर्दृष्टा यत्र ताः कन्यकाः स्थिताः ॥ १०८

एतस्मिन्नेव काले तु घृताची शोकविह्वला ।
विचचारोदयगिरिं विचिन्वन्ती निजां सुताम् ॥ १०९

---

1. क. तपसे ख. तपसस्तव  2. क. ख. तथा

तामेव च नदीं स्नातुं सा पुण्यामाजगाम ह ।
तामन्वेव कपिः प्रायाद् दृष्टो जाबालिना तदा ॥ ११०

पूर्वं त्वनेन बद्धोऽहमिति प्रादर्शयत् स तम् ।
तज्जाबालिवचः श्रुत्वा शकुनिः क्रोधमूर्छितः ॥ १११

आदाय सशरं चापमिदं वचनमब्रवीत् ।
[1]हनिष्येऽहमिमं पापं वानरं पापचेतसम् ॥ ११२

इति ब्रुवाणे शकुनाविदं प्रोवाच वानरः ।
ऋतुध्वजं महात्मानं नत्वा भक्त्या कृताञ्जलिः ॥ ११३

चित्राङ्गदायाः पितरं मां त्वष्टारं तपोधन ।
अभिजानीहि भवतः शापाद्वानरतां गतः ॥ ११४

सुबहूनि च पापानि मया यानि कृतानि हि ।
कपिचापलदोषेण तानि मे यान्तु संक्षयम् ॥ ११५

ऋतुध्वजस्ततः प्राह शापस्यान्तो भविष्यति ।
यतो घृताच्यां तनयो जनिष्यति महाबलः ॥ ११६

इत्येवमुक्तः सहसा संहृष्टोऽभूत् कपीश्वरः ।
ततस्तु सर्वे क्रमशः स्नात्वा तु पितृदेवताः ॥ ११७

देवतायतनं प्राप्ता घृताची च दिवं ययौ ।
[2]तुरङ्गखुरनिर्घोषं श्रुत्वा ता अपि कन्यकाः ॥ ११८

अग्रे निषेदुः शर्वस्य गायन्त्यो गीतिकां शुभाम् ।
स्वरतालल्योपेतां सर्वलक्षणलक्षिताम् ॥ ११९

शर्व शम्भो त्रि[3]नेत्राद्य देवदेव उमापते ।
दक्षयज्ञविध्वंसक कामाङ्गनाशन शङ्कर,
भव वृषभध्वज रुद्र नीलग्रीव जटाधर,
गङ्गाधर महेश्वर पञ्चवक्त्र त्रिनयन,

---

1. इतः सार्धश्लोकः क. ख. पुस्तकयो- र्नास्ति
2. क. ख. तुरङ्गनेमि-
3. क. ख. नेत्रेश चारुनेत्र

त्रिशूलधर अविमुक्त एकलिङ्ग,
कालीप्रिय श्रीकण्ठ नीलकण्ठ अपराजित,
त्रिपुरक्षयङ्कर सद्योजात वामदेव अघोर,
घोरमूर्ते भवैकभव कालाग्निरुद्र हर,
महीधरप्रिय सर्वतीर्थनिवास कामेश्वर,
केदाराधिपते परिपूर्ण भुजङ्गकुण्डल,
कृपाणपाणे भैरव भयङ्कर विद्याराजरञ्जक,
[1]महालीलावसते [2]समुद्रशायिन् वटेश्वर,
गोकर्ण बाडवानलनेत्र ब्रह्मयोने,
सहस्रवक्त्राक्षिचरण ओं हाटकेश्वर नमस्ते नमस्ते ॥ १२०

एतस्मिन्नन्तरे प्राप्ताः सर्व एव महीभुजः ।
द्रष्टुं त्रैलोक्यभर्तारं शङ्करं हाटकेश्वरम् ॥ १२१

संशुद्धास्ते च सुस्नाता ददृशुर्योषितश्च ताः ।
स्थिताश्च पुरतस्तस्य गायन्त्यो गेयमुत्तमम् ॥ १२२

ततः सुदेवतनयो विश्वकर्मा सुतां शुभाम् ।
दृष्ट्वा [3]संहृष्टचित्तस्तु संरोहत्पुलको बभौ ॥ १२३

ततश्चित्रा[4]ङ्गदा दृष्ट्वा ऋतुध्वजपुरोग[5]मान् ।
समं ताभिः कृशाङ्गीभिरभ्युत्थायाभ्य[6]वादयत् ॥ १२४

ततः कपीश्वरः प्राप्तो घृताच्या सह तत्र हि ।
ततो घृताची स्वां पुत्रीं परिष्वज्य न्यपीडयत् ॥ १२५

ऋतुध्वजस्ततः श्रीमान् कपिं वचनमब्रवीत् ।
गच्छानेतुं गुह्यकं तं ह्यञ्जनाद्रौ [7]सहाञ्जनम् ॥ १२६

---

1. क. ख. मही-
2. क. ख. [पितृ]सद्म-
3. क. ख. हृषित
4. क, ख, ङ्गदां
5. क. ख. गमाः
6. क. ख. वादयन्
7. अ. सहानुजम्

पातालादपि दैत्येशं वीरं कन्दरमालिनम् ।
स्वर्गाद्गन्धर्वराजं च पर्जन्यं शीघ्रमानय ॥ १२७

इत्येवमुक्ते वचने कपिर्मारुतविक्रमः ।
गत्वाञ्जनं समामन्त्र्य जगाम रघुपर्वतम् ॥ १२८

पर्जन्यं तत्र चामन्त्र्य प्रेषयित्वा [1]महाश्रमे ।
सप्तगोदावरीतीर्थे पातालमगमत् कपिः ॥ १२९

तत्रामन्त्र्य महावीर्यः कपिः कन्दरमालिनम् ।
पातालादपि निष्क्रम्य महीं पर्यच[2]रज्जवी ॥ १३०

गालवं तपसा श्रेष्ठं दृष्ट्वा माहिष्मतीमनु ।
समुत्पत्यानयत् क्षिप्रं सप्तगोदावरं जलम् ॥ १३१

ते दृष्ट्वा गालवं चैव समुत्थायाभ्यवादयन् ।
तेषूपविष्टेषु तदा वानरेण निमन्त्रिताः ॥ १३२

समायाता महात्मानो यक्षगन्धर्वदानवाः ।
तानागतान् समीक्ष्यैव पुत्र्यस्ताः पृथुलोचनाः ॥ १३३

स्नेहार्द्रनयनाः सर्वा गाढं सस्वजिरे पितॄन् ।
सबाष्प[3]वदना जाता विश्वकर्मसुता शुभा ॥ १३४

अथ तामाह स मुनिस्तदा सत्यध्वजो वचः ।
मा विषादं कृथाः पुत्रि पितायं तव वानरः ॥ १३५

जाते पुत्रे घृताच्यां तु शापान्मोक्षमवाप्स्यति ।
इत्येवमुक्ता संहृष्टा तस्थौ चित्राङ्गदा तदा ॥ १३६

सर्वास्ता अपि तावन्तं कालं तत्रैव कन्यकाः ।
प्रतीक्षमाणा उद्वाहं तस्या एव प्रियेच्छया ॥ १३७

ततो दशसु मासेषु समतीतेष्वथाप्सराः ।
तस्मिन् गोदावरी[4]तीर्थे प्रासूत तनयं नलम् ॥ १३८

---

1. अ. महाश्रिते
2. ख. -रत्कपिः
3. क. ख. नयना
4. क. ख. तीरे

जातापत्यः कपित्वाच्च विश्वकर्मा व्यमुच्यत ।
समभ्येत्य प्रियां पुत्रीं पर्यष्वजत चादरात् ॥ १३९

ततः प्रीतेन मनसा सस्मार सुरवर्धकिः ।
सुराणामधिपं शक्रं सहकिन्नरचारणैः ॥ १४०

त्वाष्ट्रार्थं संस्मृतः शक्रो मरुद्गणवृतस्तदा ।
सुरैः सरुद्रैः संप्राप्तस्तत्तीर्थं हाटकेश्वरम् ॥ १४१

[1]समायातेषु देवेषु गन्धर्वेष्वप्सरस्सु च ।
इन्द्रद्युम्नो मुनिश्रेष्ठमृतुध्वजमुवाच ह ॥ १४२

जाबालेर्दीयतां ब्रह्मन् सुता कन्दरमालिनः ।
नन्दयन्तीश्च [दमयन्तीं च] शकुनिः परिणेता स्वरूपवान् ॥ १४३

ममैव वेदवत्यस्तु त्वाष्ट्री सुरथस्य च ।
बाढमित्यब्रवीद्धृष्टो मुनिर्मनुसुतं नृपम् ॥ १४४

ऋत्विजो गालवाद्याश्च हुत्वा वह्निं विधानतः ।
चक्रे विवाहं सर्वेषां विप्रा विक्रमतः सुधीः ॥ १४५

वृत्ते विवाहे शक्राद्या हृष्टा जग्मुर्दिवं क्रमात् ।
भार्याश्चादाय राजानः [2]स्वसंस्थानं समाश्रिताः ॥ १४६

चित्राङ्गदायाः कल्याणमेवं वृत्तं पुरा किल ।
तस्मात् कमलपत्राक्षि [3]रक्षस्व ललनोत्तमे ॥ १४७

तच्छ्रुत्वा शुक्रदुहिता तं नृपं वाक्यमब्रवीत् ।
आत्मानं न तु दास्यामि बहुनोक्तेन किं तव ॥ १४८

सूतः—

[4]इत्थं विवदमानां तां भार्गवस्य सुतां बलात् ।
कामोपहतचित्तः सन् व्यध्वंसयत मन्दधीः ॥ १४९

---

1. सार्धश्लोकः अ. पुस्तके नास्ति
2. क. ख. स्वं स्वं स्थानं
3. क. ख. भजस्व
4. क. ख. एवं

स कृत्वा क्षतगात्रीं तां मोहान्धः पृथिवीपतिः ।
निश्चक्रामाश्रमात्तस्माद् गतश्च नगरं निजम् ॥ १५०

सा च शुक्रसुता तन्वी त्वरजा [1]रजसि प्लुता ।
आश्रमादथ निष्क्रम्य बहि[2]स्तस्थावधोमुखी ॥ १५१

महाग्रहोपरुद्धेव रोहिणी शशिनः प्रिया ।
ततो बहुतिथे काले समाप्ते यज्ञकर्मणि ॥ १५२

पाताला[3]दागतः शुक्रः स्वमाश्रमपदं प्रति ।
आश्रमान्ते च ददृशे सुतामेत्य रजस्वलाम् ॥ १५३

तां दृष्ट्वा स तु पप्रच्छ पुत्रि केनासि धर्षिता ।
कः क्रीडति सरोषेण सममाशीविषेण हि ॥ १५४

ततः सा पितरं दृष्ट्वा कम्पमाना पुनः पुनः ।
रुदती व्रीडयोपेता मन्दं मन्दमुवाच ह ॥ १५५

तव शिष्येण दण्डेन वार्यमाणेन चासकृत् ।
बलादनाथा रुदती याताहं वञ्चनीयताम् ॥ १५६

स तु पुत्र्या वचः श्रुत्वा क्रोधाद्वचनमब्रवीत् ।
यस्मात्तेनाद्य नीचेन मत्तोऽद्य भयमुत्तमम् ॥ १५७

गौरवञ्च तिरस्कृत्य च्युतधर्मा रजःकृता ।
तस्मात् सराज्यः सबलः सभृत्यो वाहनैः सह ॥ १५८

सप्त[4]रात्रान्तराद्भस्म ग्रावणां वृष्ट्या भविष्यति ।
शप्त्वेत्थं भगवान् शुक्रो दण्डमिक्ष्वाकुनन्दनम् ॥ १५९

जगाम शिष्यसहितः पातालं दानवालयम् ।
दण्डोऽपि भस्मसाद्भूतः सराष्ट्रबलवाहनः ॥ १६०

---

1. क. ख. रजसा
2. क. ख. -स्तावद-
3. क. ख. दगमच्छुक्र
4. क. ख. -रात्र्यन्तरा-

महता ग्राववर्षेण सप्तरात्रान्तरात्तदा ।
तस्मान्न धर्षयेत् कन्यामदत्तां पितृबन्धुभिः ॥ १६१

यदि भुङ्क्ते बलात् सोऽपि महाविपदमाप्नुयात् ।
त्याज्यं धर्मपरैर्नित्यं बलात् कन्योपसेवनम् ॥
नयन्त्यदत्ताः कन्यास्तु नरकानेकविंशतिम् ॥ १६२

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे कन्यादूषणदोष-
कथनं नाम एकादशोऽध्यायः

## ॥ द्वादशोऽध्यायः ॥

### ब्रह्महत्यादूषणम्

सूतः—

ब्रह्महत्यां न कुर्वीत कर्मणा मनसा गिरा ।
आत्मार्थं वा परार्थं वा यः कुर्यात् स विनश्यति ॥ १

वृद्धोऽहं वेदविद्वाहं देवताप्रतिमो ह्यहम् ।
इति यः कुरुते पापं स तु तेनैव दह्यते ॥ २

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यच्छ्रुत्वा पापकर्मापि गच्छेद्धि परमां गतिम् ॥ ३

पुरा[1]तनौ महाभागौ नरनारायणावृषी ।
ताभ्यां कार्येण देवानां ब्रह्महत्या कृता किल ॥ ४

तयाभिभूतौ देवौ तावात्मना सुमहाबलौ ।
अभूतां नष्टसंज्ञौ तौ तिर्यग्योनिगतौ भृशम् ॥ ५

अथ संवत्सरे दिव्ये समतीते महात्मवान् ।
अगाद्ब्रह्मा स्वयं तत्र दैवतैर्मुनिभिः सह ॥ ६

अथ तौ बोधयामास न शुद्धौ तौ च पाप्मना ।
ततो [2]ब्रह्मा तु तान् प्राह सर्वान् देवान् दिवौकसः ॥ ७

[3]स्वयं नारायणस्यार्थे धर्मं चरत चोत्तमम् ।
ततो विमोक्ष्यते देवाः स ततो ब्रह्महत्यया ॥ ८

तमेवं वादिनं देवाः प्रणम्य शिरसा तदा ।
ऊचुः प्राञ्जलयः सर्वे किं कुर्मः शाधि नस्तपः ॥ ९

---

1. क. ख. तौ तु
2. क. ख. ब्रह्मापि
3. क. सोऽयं ख. यूयं

ब्रह्मा—

यजध्वं प्रयताः सर्वे वायुभक्षा जितेन्द्रियाः ।
रुद्राणां हृदयं सम्यक् तथा योगमवाप्स्यथ ॥ १०

तमेवमस्त्विति प्रोच्य संजेपुः सलिलेशयाः ।
ऋषिभिः सह देवेशो वर्षायुतशतानि षट् ॥ ११

अथ कालेन महता तेषां युक्तात्मनां तथा ।
योगः प्रादुरभूत्तेन [1]सुसूक्ष्माग्निरभूत्ततः ॥ १२

तेनाग्निना ब्रह्महत्या निर्दग्धा नितरामपि ।
नरनारायणौ त्यक्त्वा सलिलं प्रविवेश ह ॥ १३

तया चापः संप्रविष्टा रसवत्यो न जज्ञिरे ।
अगन्धाश्च विवर्णाश्च प्रभावत्यो न जज्ञिरे ॥ १४

पृथिवी [2]चलवीर्याभूत्तेजः सूक्ष्म[3]मिवाभवत् ।
ततस्ते तत्तथा दृष्ट्वा जज्वलुर्भवमेव हि ॥ १५

हृदयं चैव संजेपुः रुद्राणां युक्तमानसाः ।
अथ तान् भगवान् देवः शूलपाणिर्वृषध्वजः ॥ १६

उवाच देवांस्तुष्टोऽस्मि ब्रूत यद्वोऽभिकाङ्क्षितम् ।
[4]ततस्ता देवता रुद्रं नत्वा स्तुत्वेदमब्रुवन् ॥ १७

हरिरेष महादेवः पाप्मना हृतमानसः ।
तमस्य निर्दह क्षिप्रं नीहारमिव भास्करः ॥ १८

एष लोकहितार्थाय देवानाञ्च महाबल ।
कुरुते कर्म सर्वं वै पाप्मानं ह्यस्य नाशय ॥ १९

देवः—

विष्णुरेष सुराः सद्यो मोक्ष्यते तेन पाप्मना ।
पाप्मा चायं महाभागा उपरिष्टाद्भविष्यति ॥ २०

---

1. क. सूक्ष्माग्निरुदभूत्ततः
2. ख. -चाल्प-
3. क. ख. मथा-
4. क. ततस्ते

निर्यासश्चैव वृक्षाणामपां फेनस्तथैव च ।
महोरगाणां गन्धश्च स्त्रीणां निन्दा तथैव च ॥ २१

दीक्षितस्य [1]च विप्रस्याशुभ[2]स्यापरिकीर्तनम् ।
ब्राह्मणानां परीवादो गवा[3]मपरिकीर्तनम् ॥ २२

[4]अग्नेरज्वलनं चैव भविष्यति महीतले ।
तपस्तप्त्वा महातीव्रं चीर्त्वा पाशुपतव्रतम् ॥ २३

विधूतपाप्मा स नरो भविष्यति न संशयः ।
इत्युक्त्वा देवदेवस्य देवास्ताभ्यां [ययुस्तदा] सदैव हि ॥ २४

पुरु[5]श्चन्द्रव्रतं चीर्त्वा कृतकृत्योऽभवत् क्षणात् ।
एवं महात्मनां चापि पाप्मा मोहं करोति हि ॥ २५

विशेषाद्ब्रह्महत्यां तु को वा लङ्घयितुं क्षमः ।
तस्मान्न कुर्यात्पापानि विशेषाद्ब्रह्महन्तृताम् ॥ २६

इतिहासमिमं पुण्यं यः शृणोति महामतिः ।
स मुक्तः सर्वपापेभ्यः प्राप्नोति परमां गतिम् ॥ २७

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे ब्रह्महत्यादूषणं
नाम द्वादशोऽध्यायः

---

1. क. विचित्रस्य ख. चिकित्सस्य
2. क. ख. स्यावकीर्तनम्
3. क. मापरिकीर्तनम् अ. मपरिकर्तनम्
4. ख. अग्नेरुज्वलनं अ. अनेन ज्वलनं
5. क. श्चन्द्रे ख. -श्चन्द्रो

## ॥ त्रयोदशोऽध्यायः ॥

### अहङ्कारदूषणम्

सूतः—

अहङ्कृतिर्विनाशाय महापुरुषसन्निधौ ।
महात्मनां वशे तिष्ठेत् स्वयं सद्गुणवानपि ॥ १

अहङ्कारमदाविष्टो ह्यकार्येष्वेव वर्तते ।
कृत्वा चित्ते विनश्यन्ति जगतः कारणान्यपि ॥ २

अस्मिन्नर्थे पुरावृत्तं कथयिष्यामि भूसुराः ।
रामस्तु भार्गवः श्रीमान् यज्ञैरीजे महामनाः ॥ ३

अधोऽगमत्सा पृथिवी तस्य यज्ञैः पुरा द्विजाः ।

ऋषयः—

किमर्थं पृथिवी तस्य यज्ञैः पातालमाविशत् ॥ ४

कारणं तत्र किं ह्येतदिच्छामः सूत वेदितुम् ।
ततस्तु पृथिवीपालः काश्यपं मुनिसत्तमम् ॥ ५

उवाच मम होता त्वं भव सत्यवतां वर ।
तं तथा वादिनं विप्रा[1]स्तदोवाच नराधिपम् ॥ ६

काश्यपः कुपितो भूत्वा निन्दंस्तं तु भृगूत्तमम् ।
पतितस्त्वं दुराचारो भिन्नशीलश्च पापकृत् ॥ ७

कथं त्वां याजयिष्यामि भ्रूणहत्याभिसंयुतम् ।
ततः स तेन वाक्येन प्रोवाच मुनिसत्तमम् ॥ ८

विषये मम मा तिष्ठ त्वमद्य मुनिसत्तम ।
ततः स तस्य तं देशं परित्यज्य व्रजंस्तदा ॥ ९

---

1. क. ख. -स्तथोवाच

नाससाद च तं देशं यत्रासौ नाभवद् भृगुः ।
अनासादयमानस्तु अटवीमाश्रितस्तदा ॥ १०

अन्तर्धानगतो भूत्वा चचार बहुलाः समाः ।
अथापश्यत्समासीनं कपोतं पादपस्थितम् ॥ ११

अनङ्गेनाभिसंविद्धं कपोत्यां काममोहितम् ।

कपोतः—

यदा प्रभृति सुश्रोणि मया दृष्टासि शोभने ॥ १२

तदा प्रभृति कामार्तो विन्दामि न शुभं क्वचित् ।

कपोती—

मैवं ब्रूया दुराचार ह्यधर्मं मां कदाचन ॥ १३

कपोतः—

न चेद्दास्यसि मेऽत्यर्थं बलात्तेऽहं सुमध्यमे ।
स्वीकरिष्यामि सम्भोगं गतोऽस्मि तव पादयोः ॥ १४

कपोती—

किं न तेऽस्ति भयं क्रुद्धाज्जामदग्न्यान्महाबलात् ।
येन त्वं वर्तसे दुष्ट पतिहीनां पतिव्रताम् ॥ १५

सूतः—

एवमुक्तस्तु स तया कपोतः कलुषाशयः ।
उवाच रामः कोऽयं मे मम तुल्यो न कश्चनं ॥ १६

इत्येवं वदतस्तस्य रामनामाङ्कितस्तदा ।
[1]शरः शिरो जहाराशु काश्यपस्तु तदैक्षत । १७

स तु दृष्ट्वा सतां वृत्तं भीतस्तस्मान्महाबलात् ।
भार्गवस्यान्तिकं प्राप्य वचनं चेदमब्रवीत् ॥ १८

याजयाम्यहमद्यैव राजन् भार्गवसत्तम ।
यदि वाभीप्सितां मे त्वं ददासि शुभदक्षिणाम् ॥ १९

---

1. क. ख. बाणः

रामः—

यद् ब्रवीषि न सन्देहो दाताहं ते महा[1]मते ।
मां याजय यथान्याय्यं भवतोऽस्मि वशे स्थितः ॥ २०

सूतः—

ततस्तस्याभवद्याग: सुमहान् भूरिदक्षिणः ।
[2]तस्याथ दक्षिणाकाले जामदग्न्यः प्रतापवान् ॥ २१

उवाच काश्यपं ब्रूहि दक्षिणां तां ददामि ते ।
स प्राह पृथिवीं सर्वां सशैलवनकाननाम् ॥ २२

दक्षिणां यच्छ मह्यं त्वं यच्च तेऽस्ति गृहे वसु ।
स तस्मै तत्तथा कृत्वा विशुद्धेनान्तरात्मना ॥ २३

चीराण्यादाय तं प्राह काश्यपं किं करोम्यहम् ।

काश्यपः—

मम देशं परित्यज्य देशमन्यं प्रयाहि च ॥ २४

भार्गवस्तद्वचः श्रुत्वा समुद्रं स्थानमाप्तवान् ।
जामदग्न्येन सा दत्ता तदा पृथ्वी महात्मने ॥ २५

अहङ्कारेण संयुक्ता चिन्तयामास मानसे ।
अहं विश्वम्भरा वीरभोग्या नृपतिवल्लभा ॥ २६

प्राप्ता किमस्य दान्तस्य जटिलस्य तपस्विनः ।
इत्यहङ्कृतिसंनाहदुर्विदग्धेन चेतसा ॥ २७

क्षणात्पातालमगमदवमत्य च तं मुनिम् ।
तामुवाच मुनिः क्रुद्धस्तिष्ठ तिष्ठ वसुन्धरे ॥ २८

किमर्थं मां परित्यज्य पातालं यासि तद्वद ।

पृथिवी—

जामदग्न्यं विना रामं प्रियमप्रतिमद्युतिम् ॥ २९

न [3]शक्नोमि वरा स्थातुं तद्गुणाहृतचेतना ।
यदि मां यच्छसि त्वं तु रामाय मुनिपुङ्गव ॥ ३०

---

1. क. ख. बल
2. क. ख. स तस्य
3. क. ख. शक्नोति मनः

यास्याम्यहमधो नाद्य न तिष्ठेयमतोऽन्यथा ।
अहं योग्या महीपानां बहुवीर्योपजीविनाम् ॥ ३१

शमादिगुणयुक्तानां नाहं योग्या महीभुजाम् ।
मय्येवा[1]धारताशक्तिः सुस्थिता च यतोऽद्य हि ॥ ३२

सकलेष्वपि भूतेषु ह्यहं सर्वगुणान्विता ।
वियतः शब्दः एव स्याच्छब्दस्पर्शयुतो मरुत् ॥ ३३

शब्दस्पर्शौ च रूपञ्च वह्नौ स्यात्सलिलस्य तु ।
[2]शब्दस्पर्शौ रूपरसौ विशेषान्मयि दृश्यते ॥ ३४

शब्दस्पर्शौ रूपरसौ गन्धश्चापि महामते ।
तस्मात्सर्वेषु [3]भूतेषु मामाद्यां प्रवदन्ति हि ॥ ३५

मत्तो हि सम्भवत्येतत् सस्यजा[4]तं विशेषतः ।
इत्यहङ्कृतिसंरब्धवाक्याधो गन्तुमुद्यता ॥ ३६

तामहङ्कृतिसंयुक्तां दृष्ट्वासौ काश्यपो मुनिः ।
तदहङ्कारनाशाय वचनं त्विदमब्रवीत् ॥ ३७

गच्छ त्वं सुदुराचारे अधः पुनरधोगतिम् ।
[5]वसुधा सम्भविष्यामि पश्य मे तपसो बलम् ॥ ३८

इत्युक्त्वा योगमास्थाय बहुवर्षसहस्रकम् ।
पृथिवीत्वमनुप्राप्तो धारयामास मानुषान् ॥ ३९

अथ भीता तु पृथिवी तत्प्रसादाय काश्यपम् ।
उपागम्याब्रवीद्वाक्यं विनयावनता स्थिता ॥ ४०

भगवंस्तपसा तेऽद्य योगेन च बलेन च ।
न कश्चिदपि तुल्योऽस्ति दिवि वा भुवि वा विभो ॥ ४१

---

1. ख. -धारिका अ. धारिता
2. अर्धमिदं अ. पुस्तके नास्ति
3. अ. लोकेषु
4. क. ख. तमनेकशः
5. ख. वसुधाहं भ- इतः अर्धत्रयं, क. पुस्तके नास्ति

प्रसादये त्वां शिरसा दृष्टं ते बलमुत्तमम् ।
यन्मयापकृतं किञ्चित् तत् क्षमस्व महामते ॥ ४२

अहमेव हि लोकेषु पृथिवी स्यां त्वदाज्ञया ।
दीनायामिह विप्रेन्द्र प्रसादं कर्तुमर्हसि ॥ ४३

तां तथावस्थितां दृष्ट्वा भगवानृषिसत्तमः ।
उवाच प्रहसन् देवीं पृथिवीं प्रणतां स्थिताम् ॥ ४४

दृष्ट्वा तवैवाहङ्कारं मयेह कृतमीदृशम् ।
त्वमिदानीं मया दत्तं पृथिवीत्वं समाचर ॥ ४५

मम त्वं दुहितृत्वं हि गत्वा काश्यपवंशजा ।
काश्यपी [1]विदिता लोके भविष्यसि वसुन्धरे ॥ ४६

इत्युक्त्वा प्रददौ पृथ्व्याः पृथ्वीत्वं काश्यपः पुरा ।
सा च विश्वम्भरा देवी अहङ्कारोदयं जहौ ॥ ४७

तस्मादहङ्कारवतां स्वाधिकाराच्च्युतिर्भवेत् ।
अहङ्कारपरित्यक्तः सर्वां सम्पदमश्नुते । ४८

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे अहङ्कारदूषणं
नाम त्रयोदशोऽध्यायः

1. क. ख. विहिता

## ॥ चतुर्दशोऽध्यायः ॥

### पुष्पापचयनिन्दा

सूतः—

कुर्यात्समुचिते काले पुष्पापचयमर्थवित् ।
स एवापद[1]मादत्ते निर्बन्धेन कृतो यदि ॥ १

अस्मिन्नर्थे पुरावृत्तमाख्यानं प्रवदामि वः ।
पुरा हि पाण्डवास्तत्र नरनारायणाश्रमे ॥ २

विजह्रुः पुष्पितलताफलपादपसङ्कुले ।
तत्र पूर्वोत्तरो वायुः कमलं समुपाहरत् ॥ ३

तं दृष्ट्वाघ्राय तद्गन्धं [2]कृष्णा भीममवोचत ।
आहरेदृशमम्भोजं यदि त्वं मे प्रियङ्करः ॥ ४

भीमस्तद्वाक्यमाकर्ण्य ययौ पुष्पजिघृक्षया ।
रुक्मपृष्ठं धनुर्गृह्य शरांश्चाशीविषोपमान् ॥ ५

पश्यन्मृगान् बहुविधान् वनानि विविधानि च ।
तस्योरुवेग[3]संक्षुब्धमृगपक्षि[4]स्वनेन तु ॥ ६

कदलीवनमध्यस्थः प्रबुद्धो हनुमान् कपिः ।
ततोऽन्योन्यं दृष्टवन्तौ भीमसेनमहाकपी ॥ ७

स्मितेनाभाष्य कौन्तेयं हनुमान् भीममब्रवीत् ।
अतः परमगम्योऽयं पर्वत[5]स्त्वमरग्रहः ॥ ८

नातः परं त्वया गन्तुं [6]शक्यमाश्वसिहि प्रभो ।
इत्युक्तो भीमसेनस्तु प्रोवाचामितविक्रमः ॥ ९

---

1. क. ख. -माधत्ते
2. अ. क. दृष्ट्वा
3. क. संरब्ध-
4. क. ख. -स्वने वने
5. ख. स्स तु दुर्ग्रहः
6. ख. शक्योऽयं पर्वतोत्तमः

को भवान् किंनिमित्तं वा वानरं वपु[1]रास्थितः ।
इत्युक्तः स पुनः प्राह तं भीममनिलात्मजः ॥ १०

[2]हनुमान् वानरोऽहं ते मार्गं दास्ये महाबल ।
नास्ति शक्तिर्मे[3]मोत्थातुं जरया पीडितस्य च ॥ ११

यद्यवश्यं प्रयातव्यं लङ्घयित्वा प्रयाहि माम् ।
गन्तव्यं यदि मे पश्चात्पुच्छमुत्सार्य गम्यताम् ॥ १२

इत्युक्तो भीमसेनस्तु कर्तुं लाङ्गूलचालनम् ।
अशक्तः सर्वसारेण व्रीडयाधोमुखः स्थितः ॥ १३

सोऽपि तस्य विनीतस्य निजवृत्तमचीकथत् ।
तौ परिज्ञातवृत्तान्तौ [4]प्रीतियुक्तौ परस्परम् ॥ १४

पुनश्च वानरो भीममुवाचामितविक्रमः ।
गच्छ भीम स्वमावासमित्युक्त्वान्तरधीयत ॥ १५

गते तस्मिन् हरिवरे वनान्युपवनानि च ।
[5]विलोलयामास भीमः सौगन्धिक[6]दिदृक्षया ॥ १६

द्रौपदीवाक्यपाथेयः सञ्चरन् गिरिसानुषु ।
मत्तकारंडसंयुक्तां फुल्लकाञ्चनपङ्कजाम् ॥ १७

[7]नदीं ददर्श तस्यां तु सौगन्धिकवनं महत् ।
दृष्ट्वा स लब्धकामः सन् जगाम मनसा प्रियाम् ॥ १८

कुबेरभवनाभ्याशे फुल्लसौगन्धिकं सरः ।
रक्षः[न्]क्रोधवशो नाम निवसत्युद्धतो बली ॥ १९

नित्यं तमनुसेवन्ते यक्षराक्षसपन्नगाः ।
ते रक्षिणस्तु सम्भूय कोऽयं पुष्पापहारकः ॥ २०

---

1. क. ख. -राश्रितः
2. ख. हनुमान, वानरोऽहं न ते- मार्गं प्रदास्यमि महाबल
3. अ. -मोद्धर्तुं
4. क. ख. प्रीतचित्तौ
5. क. ख. विलोडयामास
6. क. ख. जिघृक्षया
7. अर्धमिदं अ. क. पुस्तकयो- र्नास्ति

को भवानिति पप्रच्छुर्विचार्यैवञ्च सत्वराः ।

भीमः—

पाण्डवं भीमसेनं मां धर्मपत्न्याः प्रियेप्सया ॥ २१

सौगन्धिकान्युपाहर्तुमिह प्राप्तं निबोधत ।

राक्षसाः—

आक्रीडोऽयं कुबेरस्य [1]स्वामिनः पुरुषर्षभ ॥ २२

नेह शक्यं मनुष्येण विहर्तुं मर्त्यधर्मिणा ।
अन्यायेन हि यत्किञ्चिदवमत्य धनेश्वरम् ॥ २३

विहर्तुमिच्छेद् दुःखार्तः स विनश्यत्यसंशयम् ।
त्वमनादृत्य पद्मानि जिहीर्षसि बलादिह ॥ २४

धर्मराजस्य चात्मानं ब्रवीषि भ्रातरं कथम् ।

भीमः—

याचन्ते न हि राजानो धर्म एष सनातनः ॥ २५

इयञ्च नलिनी दिव्या जाता पर्वतनिर्झरे ।
समा हि सर्वभूतानां [2]यथा वैश्रवणस्य च ॥ २६

इत्युक्त्वा राक्षसान् सर्वान् भीमसेनोऽभ्यगाहत ।
तां तु पुष्करणीं भूयः प्रभिन्न इव कुञ्जरः ॥ २७

ते तं तथा तोमरपट्टसाद्यै[3]-
राविध्य शस्त्रैरिति चाहुरुच्चैः ।
गृह्णीत बध्नीत विकर्ततेऽसौ
पचाम खादाम च भीमसेनम् ॥ २८

ततः स भीमोऽ[4]भ्यहसच्च तूर्णं
शस्त्राणि निर्धूय च शात्रवाणाम् ।
विदार्यमाणाः पवनात्मजेन
कैलासशृङ्गाण्यभिदुद्रुवुस्ते ॥ २९

---

1. क. ख. दयितः
2. क. ख. तथा
3. क. ख. ॰द्यैर्व्याविध्य
4. क. ख. ऽभ्यहनद्रिपूंस्तान्

तत्क्षणं धर्मपुत्रस्तु निमित्तान्यशुभानि च ।
दृष्ट्वा विचिन्वन्नापश्यद्भीमसेनं महाबलम् ॥ ३०

ततः कृष्णा त्वकथयद्भीमवृत्तमशेषतः ।
ततो [1]हैडिम्बसहिताः पार्था गत्वा वनान्तरम् ॥ ३१

उत्फुल्लनलिनीतीरे भीमसेनं महाबलम् ।
ददृशुर्निहतांश्चैव यक्षान् सुविपुलेक्षणान् ॥ ३२

ततस्तं धर्मराजोऽपि [2]परिष्वज्याथ पाण्डवम् ।
उवाच श्लक्ष्णया वाचा कौन्तेय किमिदं कृतम् ॥ ३३

न कर्तव्यं न कर्तव्यं साहसं साहसप्रिय ।
एतत्कार्यं महाभाग देवानामपि चाप्रियम् ॥ ३४

क्रुद्धेषु देवसङ्घेषु जायते सुमहद्भयम् ।
न कर्तव्यं न कर्तव्यं कार्यमेवंविधं त्वया ॥ ३५

येन त्वदङ्गमेतद्धि शस्त्रपाताकुलीकृतम् ।
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम् ॥ ३६

सूतः—

युधिष्ठिरोऽनुशास्यैवं भीमं युक्तार्थया गिरा ।
तेनाहृतानि पद्मानि गृहीत्वा कृष्णया युतः ॥ ३७

तस्या नलिन्याः पर्यन्ते विजहारामरोपमः ।
एवं महाबलस्यास्य भीमस्य कृतकर्मणः ॥ ३८

बभूव गर्हितं कर्म भ्रातृभिर्दैवतैरपि ।
तस्मात्पुष्पापचायं हि न कुर्याद् दुष्करं बुधः ॥
यदि कुर्यात्प्रमादेन प्राप्नोति विपदं पराम् ॥ ३९

इति श्रीपुरुषार्थसुधानिधौ कामस्कन्धे पुष्पापचयनिन्दा नाम चतुर्दशोऽध्यायः

इति श्रीसायणाचार्यविरचिते पुरुषार्थसुधानिधौ कामस्कन्धः समाप्तः

---

1. क. ख. वै भीमरहिताः 2. क. ख. परिश्लिष्याथ

## ॥ अथ मोक्षस्कन्धः ॥

### ॥ प्रथमोऽध्यायः ॥

#### सङ्गनिन्दा

स्कन्धे तुर्ये सङ्गनिन्दा रागद्वेषविकुत्सनम् ।
विष्णुशङ्करयोर्नामस्मृतिस्तीर्थनिषेवणम् ॥ १

अहिंसाशीलमाहात्म्यं महापुरुषदर्शनम् ।
भस्मधारणमाहात्म्यं परिचर्या वृषध्वजे ॥ २

कर्मणा मोक्षकथनं दोषो निर्माल्यलङ्घने ।
शिवक्षेत्रादिकालोकः शिवभक्तस्य पूजनम् ॥ ३

नियमः शोकनाशोक्तिर्ज्ञानमाध्यात्मिकं तथा ।

सूतः—

संसारासारतां ज्ञात्वा विषयांश्चातिचञ्चलान् ॥ ४

[1]सङ्गः सदैव संत्याज्यस्तत्त्यागो गुणकृन्नृणाम् ।
बुद्धिमानिन्द्रियार्थेषु तेष्वसङ्गी सदा भवेत् ॥ ५

येषां तृप्तिर्न भोगेषु त्यागश्चैवोपकारकृत् ।
कृच्छ्रचान्द्रायणादीनि नरैस्तस्मान्मुमुक्षुभिः ॥ ६

निष्कामैरेव कार्याणि फलाय च फलेप्सुभिः ।
तत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ ७

अश्विभ्यां सह संवृत्तमैलस्य च महात्मनः ।
ऐलः पुरूरवाः पूर्वं बभूव मनुजाधिपः ॥ ८

चकमे यं महाभागमुर्वशी सुरकामिनी ।
नासत्यदस्रौ रूपेण देवानामधिकौ ततः ॥ ९

---

1. अ. सङ्गेषु सक्तिस्सुत्याज्या

उर्वशीलोभनं तस्य रूपं द्रष्टुं समुत्सुकौ ।
प्रतिष्ठानपुरं रम्यं जग्मतुः पृथिवीपतेः ॥ १०

द्वारदेशस्थितं प्राप्य क्षत्तारमिदमूचतुः ।
क्षत्तो मद्वच[1]नादेवं ब्रूहि त्वं वसुधाधिपम् ॥ ११

द्रष्टुं त्वामश्विनौ प्राप्तौ रूपसम्पद्गुणान्वितौ ।
आश्चर्यभूतं लोकेऽस्मिन्नुर्वशीलोभनं वपुः ॥ १२

तत् कौतुकं न कुरुते कस्य वै भूसुरोत्तम ।
द्वाःस्थस्तथेति प्रोवाच महीपाय तयोर्वचः ॥ १३

तच्छ्रुत्वा वचनं राजा द्वाःस्थमाह मुहूर्तकम् ।
परिपाल्य महाभागौ ब्रूहि तौ वचनान्मम ॥ १४

व्यायामतैलसंसर्गमलिनो न [2]विभूषितः ।
प्रसाधनयुतः पश्चान्निर्गच्छामीति सादरम् ॥ १५

स [3]निष्क्रम्य तदाचष्ट राज्ञा ताभ्यां यदीरितम् ।

अश्विनौ—

अप्रसाधितमे[4]वाशु भवन्तं वसुधाधिप ॥ १६

पश्यावो [5]भूषितं पश्चादिति क्षत्तारमूचतुः ।
एवमुक्त्वा समानीतो निर्गतः स महीपतिः ॥ १७

तैलाभ्यक्ततनुः शीघ्रं व्यायामपरिधानधृत् ।
स प्रणामं तयोः कृत्वा किञ्चिन्नतशिरा नृपः ॥ १८

प्रोवाच यन्मया कार्यं भवतोस्तदिहोच्यताम् ।
सप्तद्वीपवती पृथ्वी पुत्रदारगृहं धनम् ॥ १९

यद्वान्यन्मम तत्सर्वं युवयोर्विनिवेदितम् ।
इत्युदीरितमाकर्ण्य नृपतेरश्विनावपि ॥ २०

---

1. क. ख. नादलं
2. क. विवर्जितः ख. विरूपितः
3. क. ख. निर्गम्य
4. क. -वाब्ज-
5. अ. क. भूपतिं

अङ्गोपाङ्गादिकं सर्वं शनकैस्तावपश्यताम् ।
शिरोललाटजिह्वास्यनयनादि विशेषतः ॥ २१

अश्विनौ—

प्रविश स्नाहि भूपाल यथार्हैश्च विभूषणैः ।
विभूषिततनुं भूयस्त्वां पश्यावो नरेश्वर ॥ २२

स तथेति प्रविश्यान्तः स्नात्वा [1] देहप्रसाधनम् ।
कृत्वानुलिप्तः स्रग्धारी सुवस्त्रपरिभूषितः ॥ २३

नासत्यदस्रयोः पार्श्वमियाय स नराधिपः ।
भूयोऽपि तौ यथापूर्वमङ्गोपाङ्गविलोकनम् ॥ २४

चक्रतुर्नृपतेस्तस्य स्मितभिन्नोष्ठपल्लवौ ।
तौ सहासौ समुल्लक्ष्य तदा स वसुधाधिपः ॥ २५

हासस्य कारणं देवभिषजौ तावपृच्छत ।
पृच्छतस्तु तदा विप्रा नृपतेर्हासकारणम् ॥ २६

यदूचतुर्महाभागौ तच्छृण्वन्तु वदामि वः ।

अश्विनौ—

श्रृणु भूपाल सकलमावयो[2]र्हास्यकारणम् ॥ २७

अस्नातस्याभवत्पूर्वं यादृशी ते सुरूपता ।
सांप्रतं तादृशं नैव भूषितस्यापि भूषणैः ॥ २८

राजा—

किं तु तत्कारणं येन व्यायाममलिनाम्बरः ।
शोभनोऽहमभूवं प्रागिदानीं किं न शोभनः ॥ २९

अश्विनौ—

जन्मनोऽनन्तरं बाल्यं पौगण्डवमतः परम् ।
यौवनं मध्यदेहत्वं वार्धकं तु जरा नृणाम् ॥ ३०

स्थूलदृष्ट्या प्रपश्यन्ति न तु तत्सूक्ष्मदर्शिनः ।
निमेषशतभागस्य सहस्रांशक्षणो नृप ॥ ३१

---

1. अ, क, देव- 2. क, ख, -र्हास

तस्याप्ययुतभागांशैर्भवत्यपचयो नृणाम् ।
तदहं ज्ञातबाल्यस्य पौगण्डस्य हि सा कुतः ॥ ३२

तत्कान्तिसौकुमार्याद्यैः शीर्णमेव हि यौवनम् ।
कान्त्यादिसम्पदो हानिः परमा नृप वार्धके ॥ ३३

तस्याप्यनुक्षणं हानेर्हानिरामृत्युतो नृप ।
एवं प्रतिक्षणांशांशो नृणामपचयप्रदः ॥ ३४

अस्मद्दृष्टो भवान् यावत्प्रविष्टो निजमन्दिरम् ।
तावद्धानिमानुप्राप्तः किमु यामार्धमास्थितः ॥ ३५

एवं समस्तभूतानि स्थावराणि चराणि च ।
प्रतिक्षणांशापचयं प्राप्नुवन्ति महीपते ॥ ३६

[1]तस्मान्न कौतुकं कार्यं भवतात्र नरेश्वर ।

सूतः—

राजा पुरूरवा भूयः श्रुत्वा वाक्यमिदं तयोः ॥ ३७

चिन्तयित्वा तु वचनं प्राह शङ्कितमानसः ।
तदापचयदोषेण दुष्टे काये सुरोत्तमौ ॥ ३८

यत्कार्यं पुरुषैस्तन्मे कथ्यतां हितकाम्यया ।

अश्विनौ—

[2]अतिमूढश्च लोकोऽयं सदापचयकर्मणि ॥ ३९

ततस्तदुपभोग्यानि सर्वाणि परिमार्गति ।
आसनं शयनं यानं परिधानं गृहं धनम् ॥ ४०

वाञ्छत्यहोऽतिमोहेन सुस्थिरं स्वयमस्थिरः ।
तस्मा[3]देतन्मनुष्येण विचार्यात्महितैषिणा ॥ ४१

श्रेयस्यामुष्मिके यत्नः कर्तव्यो हितमिच्छता ।
भोग्येष्वसक्तिः सततं तथैवात्मावलोकनम् ॥ ४२

---

1. क. ख. तस्मिन् 3. क. ख. -देव
2. क. ख. अतिमूढे चले काये

श्रेयः परं मनुष्याणां सफलं प्राह पार्थिव ।
सर्वत्र समदर्शित्वं निर्ममत्वमसंगता ॥ ४३

श्रेयः परं मनुष्याणां प्राह पञ्चशिखो मुनिः ।
कर्तव्यमिति यत्कर्म ऋग्यजुःसामसंज्ञितम् ॥ ४४

क्रियते तत् परं श्रेयो जैगीषव्योऽब्रवीन्मुनिः ।
[1]यद्यत्त्यजति कामानां तत्सुखस्यापि [2]पूर्यते ॥ ४५

कामानुसारी पुरुषः कामाननु विनश्यति ।
अश्रेयसां पदं चैतद्यद्भूपातिकामिता ॥ ४६

एवं विज्ञाय तत्त्वार्थं जनको योगिनां वरः ।
नरेन्द्रः प्राह विप्राणां परमार्थपरम्पराम् ॥ ४७

द्वे कर्मणी नरश्रेष्ठ ब्रह्मणा समुदाहृते ।
प्रवृत्त्याख्यं निवृत्त्याख्यं स्वर्गमुक्तिफले हि ते ॥ ४८

[3]सामान्यमचलं श्रेयः सर्ववर्णाश्रमेषु यत् ।
तच्छृणुष्व महाराज आवाभ्यां चैव तत्त्वतः ॥ ४९

सत्यं वाच्यं सर्वमित्रेण भाव्यं
त्याज्यं राज्यं राज्यमायासकारि ।
लोकेऽमुष्मिन् यद्विरुद्धं तथास्मि-
[4]स्तस्मादात्मा स्थापनीयो नरेन्द्र ॥ ५०

तीर्थस्नानैः सोपवासैरजस्रं
पात्रे दानैः शुद्धभावेन नित्यम् ।
शुद्धिं नेयो देवताद्यर्चनैश्च
शुद्धोऽप्यात्मा सङ्गदोषैरशुद्धः ॥ ५१

[5]शुद्धं वस्त्रं सङ्गदोषादशुद्धं
भूयः शुद्धिं शोध्यमानं प्रयाति । ५२

---

1. क. ख. यद्यंत्यजाति
2. अ. पूज्यते
3. क. ख. सामान्यं चापरं
4. तस्मान्नात्मा ख. आत्मा नित्यं
5. अस्य श्लोकस्य एकमर्धमेवोपलभ्यते

सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सन्तः संगस्य भेषजम् ॥ ५३

इत्युक्त्वा तं महीपालं यातौ तेन च पूजितौ ।

सूतः—

स चाश्विनोर्वचः श्रुत्वा निःसङ्गोऽभून्महीपतिः ॥ ५४

तस्मान्निःसङ्गशीलेन भवितव्यं महीसुराः ।
तेनैव सुलभाः प्राप्तुं पुण्यलोका मनीषिणाम् ॥ ५५

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे सङ्गनिन्दा
नाम प्रथमोऽध्यायः

## ॥ द्वितीयोऽध्यायः ॥

### रागद्वेषनिन्दा

सूतः—

रागद्वेषौ च मोहश्च नृपाणामापदां प्रदाः ।
तानत्यजन् वै पुरुषो महाविपदमाप्नुयात् ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
आसीद्ब्रह्मनदीतीरे रैभ्यो नाम [1]महामुनिः ॥ २

तदाश्रमोपकण्ठे च भरद्वाजो महातपाः ।
भरद्वाजश्च रैभ्यश्च सखायौ संबभूवतुः ॥ ३

रैभ्यस्य द्वौ सुतावास्तामर्वावसुपरावसू ।
नानाशास्त्रविशेषज्ञौ वेदवेदाङ्गपारगौ ॥ ४

भरद्वाजस्य पुत्रोऽभूद्यवक्रीत इति श्रुतः ।
लालनात्पालितः [2]पित्रा ववृधे नैव शिक्षितः ॥ ५

जातु संक्रीडमानः सन् विहारेषु विनोदतः ।
मूर्खोऽयमिति रैभ्यस्य पुत्राभ्यां निन्दितो मुहुः ॥ ६

तच्छ्रुत्वा निन्दयाविष्टो निनिन्दात्मानमात्मना ।
अजागलस्तनस्येव धिङ्मे जन्म निरर्थकम् ॥ ७

इति शीघ्रं तपस्तेपे सर्वज्ञत्वाय संयमी ।
इन्द्रस्ततः समासाद्य तपस्यन्तं तमब्रवीत् ॥ ८

वरं वृणीष्व भद्रं ते वरदोऽहमिहागतः ।
अहमद्यैव सर्वज्ञो भवेयं त्वत्प्रसादतः ॥ ९

इन्द्रस्तथास्त्वितीत्युक्त्वा प्रययौ निजमाश्रमम् ।
मुनिपुत्रः प्रसन्नात्मा जगाम पितुरन्तिकम् ॥ १०

---

1. क. ख. महानृषिः    2. क. ख. पुत्रो

आलिलिङ्ग भरद्वाजः प्रेम्णा लब्धवरं सुतम् ।

भरद्वाजः—

भवतोऽभ्यधिका लोके [1]विद्यन्ते खलु दुर्जयाः ॥ ११

एष रैभ्यो महावीर्यः पुत्रौ चापि तथाविधौ ।
ते यथा नैव कुप्येयुस्तथा वर्तितुमर्हसि ॥ १२

इति पित्रा समादिष्टो विद्यामदविमोहितः ।
विप्रकुर्वन् [2]जनानन्यान् विजहार महीतले ॥ १३

अथ रैभ्याश्रमं गत्वा वादविद्याविशारदः ।
जिगाय तस्य तनयौ दृष्ट्वा भार्यां परावसोः ॥ १४

सुप्रभां स्नातुमायान्तीं चरन्तीमिव विद्युतम् ।
स यायचे किमप्येनां कामेन हृतचेतनः ॥ १५

सा तस्य शीलमाज्ञाय तस्य [3]शापाच्च बिभ्यती ।
तेजस्विनश्च रैभ्यस्य तथेत्युक्त्वा जगाम सा ॥ १६

तत एकान्त आसाद्य शुशोचातीव [4]लज्जिता ।
आजगाम तदा रैभ्यः स्वमाश्रमपदं प्रति ॥ १७

रुदतीं तामथो दृष्ट्वा किमेतदिति चिन्तया ।
स तां तु श्लक्ष्णया वाचा पर्यपृच्छ[5]न्महामुनिः ॥ १८

सा चास्मै सर्वमाचष्ट यवक्रीतस्य भाषितम् ।
तच्छ्रुत्वा मन्युनाविष्टस्तपस्वी भृशकोपनः ॥ १९

अवलुप्य जटामेकां जुहावाग्नौ समेधिते ।
ततः समभवन्नारी तस्या रूपेण संमिता ॥ २०

अवमुच्यापरां चापि जुहावाग्नौ जटां पुनः ।
ततः समभवद्घोरो राक्षसो घोरमूर्तिमान् ॥ २१

---

1. क. ख. विद्यया खलु दुर्जनाः
2. क. ख. मुनी-
3. अ. शीलाच्च
4. ख. भर्त्सिता
5. ख. महामतिः

तावुभावूचतू रैभ्यं ब्रूहि किं करवावहे ।
तावब्रवीदृषिः क्रुद्धो यवक्रीर्वध्यतामिति ॥ २२

जग्मतुस्तौ तथेत्युक्त्वा यवक्रीतजिघांसया ।
[1]यवक्रीः सहसोत्थाय प्राद्रवद्यत्र वै सरः ॥ २३

[2]कमण्डलुं जहाराशु मोहयित्वा तु मायया ।
उच्छिष्टं तं यवक्रीतमपकृष्टकमण्डलुम् ॥ २४

दृष्ट्वा स शूलमुद्यम्य राक्षसस्तमुपाद्रवत् ।
तमापतन्तं सम्प्रेक्ष्य शूलहस्तं जिघांसया ॥ २५

यवक्रीः सहसोत्थाय प्राद्रवद्यत्र वै सरः ।
जलहीनं सरो दृष्ट्वा यवक्रीस्त्वरितं पुनः ॥ २६

अग्निहोत्रं पितुर्भीतः प्रवेष्टुं समुपस्थितः ।
निवारितस्तु सहसा शूद्रेणान्धेन रक्षिणा ॥ २७

निगृहीतो बलाद्द्वारि सोऽतिष्ठत्तत्र वै मुनिः ।
निगृहीतं तु शूद्रेण यवक्रीतं स राक्षसः ॥ २८

ताडयामास शूलेन विद्धस्तत्रापतत् क्षणात् ।
ततः स भगवान् कृत्वा जपं स्वाध्यायमाह्निकम् ॥ २९

प्रविश्य स्वाश्रमपदं निहतं ददृशे सुतम् ।
ततः शूद्रं तु पप्रच्छ स्वसूनोर्मृतिकारणम् ॥ ३०

स च सर्वं यथावृत्तं तस्मै शूद्रो न्यवेदयत् ।
स पुत्रं मृतमादाय विललापातिदुःखितः ॥ ३१

प्रतिषिद्धो मया [3]तत्र रैभ्यावसथदर्शनात् ।
गतवानेव तं द्रष्टुं कालान्तकयमोपमम् ॥ ३२

ततोऽहं पुत्र भवता सार्धं त्यक्ष्ये कलेवरम् ।
यथाहं पुत्रदुःखेन देहं त्यक्ष्यामि [4]किल्बिषम् ॥ ३३

---

1. क. ख. पुस्तकयोः इदमर्धं द्विः (23, 26) दृश्यते
2. अ. इदमर्धं नास्ति
3. क. ख. तात
4. क. ख. किल्बिषी

तथा ज्येष्ठसुतो रैभ्यं हिंस्याच्छी[द्रुग्या]प्रमनागसम् ।
विलप्यैवं बहुविधं भरद्वाजोऽदहत् सुतम् ॥ ३४

सुसमिद्धं ततः कृत्वा प्रविवेश हुताशनम् ।

सूतः—

एतस्मिन्नेव काले तु बृहद्द्युम्नो महीपतिः ॥ ३५

वव्रे सहायं सत्रार्थमर्वावसुपरावसू ।
[1]ततस्तौ समनुज्ञातौ पित्रा वेगेन चागतौ ॥ ३६

ततः प्रवृत्ते सत्रे तु [2]राज्ञे द्वादशवार्षिके ।
अथ द्रष्टुं समायातो गच्छन्नेव परावसुः ॥ ३७

व्याघ्राजिनेन संवीतं ददर्श पितरं वने ।
निशावसाने निद्रान्धः सावशेषतमस्यपि ॥ ३८

स तं व्याघ्रं तु मन्वानः सन्त्रासचकितेक्षणः ।
अभिमन्त्र्य कुशाग्रेण जघान स्वात्मरक्षणात् ॥ ३९

भवितव्यं भवत्येव नृणां कर्मफलं हि तत् ।
दुरतिक्रमणीयं हि नान्यथा मुनिभाषितम् ॥ ४०

ततः समीक्ष्य पितरं पतितं गतजीवितम् ।
बभूव भयसन्त्रस्तो महापातकदूषितः ॥ ४१

स तस्य प्रेतकार्याणि कृत्वा सर्वाणि वै द्विजः ।
पुनरागत्य संत्रस्तो यथावृत्तं न्यवेदयत् ॥ ४२

तच्छ्रुत्वा तेऽब्रुवन् विप्रा यावद्द्वादशवत्सरम् ।
पुण्यानेकनदीस्नानाद्धूतपाप्मा भविष्यसि ॥ ४३

परावसुः—

अर्वावसो समर्थोऽहमेकः कर्तुमिमां क्रियाम् ।
अस्मदर्थे व्रतं साधु चर त्वं विधिचोदितम् ॥ ४४

---

1. इदमर्धमनन्तरश्च श्लोकः क. पुस्तके नास्ति 2. क. ख. राज्ञा

इत्युक्तः स तु तत्पापप्रायश्चित्तार्थमादरात् ।
स्नात्वा सर्वेषु तीर्थेषु पुनस्तत्सत्रमभ्यगात् ॥ ४५

ततः परावसुर्दृष्ट्वा भ्रातरं राजकिङ्करैः ।
बृहद्[1]द्युम्नाज्ञया चैव ब्रह्महेति न्यवारयत् ॥ ४६

अर्वावसुः—
मम भ्रात्रा कृतमिदं मया तु परिरक्षितम् ।
इत्युक्त्वा तस्य सन्तुष्टा देवाः सेन्द्रादयस्तदा ॥ ४७

वरं वृणीष्व ते भद्रमित्यर्वावसुमूचिरे ।
स चापि वरयामास पितुरुत्थानमात्मनः ॥ ४८

अनागस्त्वं तथा भ्रातुः पितुश्च स्मरणं वधे ।
भारद्वाजस्य चोत्थानं यवक्रीतस्य च क्षणात् ॥ ४९

सर्वे प्रादुरभूवंस्ते भरद्वाजमुखास्तदा ।
अथाब्रवीद्यवक्रीतो देवानिन्द्रपुरोगमान् ॥ ५०

समधीता मया वेदा व्रतानि चरितानि च ।
कथं नु रैभ्यो हतवानधीयानं तपस्विनम् ॥ ५१

देवाः—
विना गुरुमधीता हि सुखं वेदास्त्वया पुरा ।
अनेन हि गुरुं दुःखात्तोषयित्वा सुकर्मणा ॥ ५२

कालेन महता क्लेशाद्ब्रह्माधीतमनुत्तमम् ।

सूतः—
यवक्रीतं तमूचुस्ते देवा इन्द्रपुरोगमाः ॥ ५३

सञ्जीवयित्वा तान् सर्वान् पुनर्जग्मुस्त्रिविष्टपम् ।
तस्मात्सर्वैरपि त्याज्यं रागद्वेषादिकं द्विजाः ॥ ५४

रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम् ।
[2]तावुभौ यदि न स्यातां तपसा किं प्रयोजनम् ॥ ५५

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे रागद्वेषनिन्दा
नाम द्वितीयोऽध्यायः

---

1. अ. क. द्युम्नक्षयायव 2. इदमर्धं अ. पुस्तके नास्ति

## ॥ तृतीयोऽध्यायः ॥

### विष्णुनामस्मरणमाहात्म्यम्

सूतः—

यः कोऽपि पुरुषो लोके दुराचारपरायणः ।
सोऽपि मुक्तो भवेद्विष्णोर्नामस्मरणमात्रतः ॥ १

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पुरा किल दुराचारो दुर्बुद्धिरजितेन्द्रियः ॥ २

क्षत्रबन्धुरभूत्पापः परमर्मविकृन्तनः ।
मातापित्रोरशुश्रूषुर्द्वेष्टा बन्धुजनस्य हि ॥ ३

गुरुदेवद्विजादीनां निन्दासु सततोद्यतः ।
[1]द्वेष्टा विश्वासिनां जिह्मोऽसुप्रीतः प्रीतिमिच्छताम् ॥ ४

ऋजूनामनृजुः क्षुद्रः परहिंसापरायणः ।
स बान्धवैः परित्यक्तस्तथान्यैः साधुवृत्तिभिः ॥ ५

आवृत्तिनामविश्वास्यो मृगयाजीवनोऽभवत् ।
अहन्यहनि चक्राङ्कानेणजातीस्तथा मृगान् ॥ ६

हत्वात्मपोषणं चक्रे व्याधकर्मरतः सदा ।
एतया तस्य पापस्य प्रवृत्त्या पापचेतसः ॥ ७

जगाम सुमहान् कालः कुर्वतः कुक्षिपोषणम् ।
एकदा तु मुनिस्तेन निदाघे निर्जने वने ॥ ८

मृगयामटता दृष्टो सार्थतः प्रच्युतः पथि ।
क्षुत्क्षामकण्ठः सुश्रान्तः शुष्कजिह्वास्यतालुकः ॥ ९

क्षुत्परीतोऽतिविश्रान्तः कृच्छ्रात्प्राणान् समुद्वहन् ।
सूर्यांशुतापात् प्रगलत्स्वेदार्द्रचरणो द्विजः ॥ १०

---

1. क. ख. मोष्टा

तस्मिन् दृष्टे तदा तस्य क्षत्रबन्धोरजायत ।
कारुण्यं दारुणस्यापि कृपया तमभाषत ॥ ११

नैष पन्था द्विजश्रेष्ठ विमार्गे वर्तते भवान् ।
मामन्वेहि त्वरायुक्तो मा विपत्तिं समेष्यसि ॥ १२

अन्वगच्छत् क्षत्रबन्धुं श्रुत्वा तद्वचनं द्विजः ।
ददर्श च पुरोभागे प्रफुल्लनलिनं सरः ॥ १३

सुशीतवनषण्डेन समन्तात्परिवेष्टितम् ।
[1]तत्क्षणात् तृट्परीतानां चक्षुराह्लादकारणम् ॥ १४

दृष्ट्वा सूर्यांशुतापार्तो निपपात तदम्भसि ।
ततः कृतमनोह्लादः पपौ वारि नराधिप ॥ १५

उज्जीवयन् मुनिवरो जिह्वाताल्लु शनैः शनैः ।
ततः क्षत्रियबन्धुश्च मुनित्राणपरायणः ॥ १६

विहाय सशरं चापमुज्जहार बिसानि सः ।
ददौ च तस्मै विप्राय क्षुधिताय तपस्विने ॥ १७

ययौ च तृप्तिं विप्रोऽपि बिसनालाम्बुभक्षणात् ।
तमाश्वस्तं सरस्तीरे स्थितं ब्राह्मणपुङ्गवम् ॥ १८

प्रणम्य चक्रे तस्यैवं पादसंवाहनादिकम् ।
गतश्रमो मुनिः क्षत्रबन्धुं वाक्यमथाब्रवीत् ॥ १९

विभ्रष्टमार्गो मूढोऽहं क्षुत्पिपासाश्रमातुरः ।
त्रातस्त्वया महाभाग कस्त्वमत्राजने वने ॥ २०

केषां कुले त्वमुत्पन्न[2]स्तत्त्वं ब्रूहि महामते ।

क्षत्रबन्धुः—

हर्यश्वस्य कुले जातः पुत्रो विश्वरथस्य हि ॥ २१

विमतिर्नाम नाम्नाहं हन्तुमभ्यागतो मृगान् ।
न रक्षार्थं न शिक्षार्थं मृगयाव्यसनं [3]मम ॥ २२

---

1. क. ख. तत्क्षणं 2. क. ख. ॰स्तन्मे 3. क. ख. न च

वृत्तिर्नष्टा मम ब्रह्मन् परित्यक्तस्य बान्धवैः ।

ब्राह्मणः—

किमर्थं त्वं परित्यक्तो भृत्यस्वजनबन्धुभिः ॥ २३

सूतः—

इत्युक्तः सोऽभवन्मौनी पश्यन् स्वं दोषमात्मनः ।
कृपां चकार च मुनिः क्षत्रबन्धोर्दयापरः ॥ २४

उवाच स मुनिश्रेष्ठः क्षत्रबन्धुं कृपायुतः ।
उपकारिणमुग्रेण कर्मणा तं विदूषितम् ॥ २५

अपि शक्नोषि संयन्तुमकार्यप्रसृतं मनः ।
प्राणिपीडानिवृत्तिश्च कर्तुं क्रोधादि[1]संयमात् ॥ २६

अपि मैत्रीं जने कर्तुं शक्नोषि मुनिसेवया ।

क्षत्रबन्धुः—

न शक्नोमि क्षमां कर्तुं नैव मैत्रीञ्च चेतसि ॥ २७

प्राणिनामथ वा ब्रह्मन् नास्ति [2]दारादिपोषणम् ।
अनायत्तञ्च मे चित्तं विषयानेव धावति ॥ २८

तदप्राप्तौ च सर्वेषां क्रोधादीनां समुद्भवः ।
सोऽहं न मैत्रीं न क्षान्तिं न हिंसादिविसर्जनम् ॥ २९

कर्तुं शक्नोमि यत्कार्यं तदन्यदुपदिश्यताम् ।

ब्राह्मणः—

तदेतदखिलं कर्तुं न शक्नोषि ब्रवीमि ते ॥ ३०

उत्तिष्ठता प्रस्वपता प्रस्थितेन गमिष्यता ।
गोविन्देति सदा वाच्यं [3]क्षुतप्रस्खलनादिषु ॥ ३१

कार्यं वाद्य निरुद्यानक्षेममार्गावतारिणाम् ।
हितञ्च वाच्यं पृष्टेन शत्रुणापि विजानता ॥ ३२

---

1. क. ख. -संयमान्
2. अ. दानादि-
3. क. च्युत ख. प्रस्थानस्ख-

इत्युक्त्वा प्रययौ विप्रः सोऽपि तच्छासनं व्यधात् ।
गोविन्देति क्षुते गच्छन् प्रस्थानस्खलनादिषु ॥ ३३

उदीरयाञ्चकारास्य[सौ] रतिं तत्र शनैः शनैः ।
तत्र कालेन महता क्षत्रबन्धुर्ममार वै ॥ ३४

अजायत च विप्रस्य कुले जातिस्मरो द्विजः ।
तस्य संस्मरतो जातिं शतशोऽथ सहस्रशः ॥ ३५

निर्वेदः सुमहान् जज्ञे संसारे दुःखकारणे ।
तदा संसारचक्रेऽस्मिन् केन प्राप्स्यामि निर्वृतिम् ॥ ३६

यन्नामोच्चार[1]मात्रेण जाता जातिस्मृतिर्मम ।
तमेवाराधयिष्यामि जगतामीश्वरं हरिम् ॥ ३७

सोऽहं [2]मुक्तेः प्रदानार्थमनन्तमजमव्ययम् ।
तच्चित्तस्तन्मयो भूत्वा तोषयिष्यामि केशवम् ॥ ३८

इति निश्चित्य मनसा भक्त्या तुष्टाव केशवम् ।
भक्त्या स्तोत्रेण संतुष्टः कृष्णः प्रत्यक्षतां ययौ ॥ ३९

स तं प्रत्यक्षमीशानमनन्तमजमव्ययम् ।
देवदेवमुवाचेदमनादिनिधनं हरिम् ॥ ४०

धन्योऽस्मि सर्वनाथेन यत्कृतो मय्यनुग्रहः ।
तदेवमेकं त्वत्तोऽहं वरमिच्छामि केशव ॥ ४१

यदक्षरं [3]यत्परमं यत् स्यात् सूक्ष्मं च यत्परम् ।
विशेषणविशेष्यश्च गच्छेयं तत्पदं तव ॥ ४२

सूतः—

एवं भविष्यतीत्युक्त्वा प्रसादसुमुखस्ततः ।
तं द्विजं भूसुरवरा गतोऽन्तर्धानमीश्वरः ॥ ४३

---

1. क. ख. मार्गेण
2. क. ख. मुक्तिप्रदानार्थं हरिं तमज-
3. ख. क. यदचलं व्यापि सूक्ष्मं च

तत्प्रसादाद् द्विजः सोऽपि तन्मयस्तद्वयपाश्रयः ।
प्रक्षीणकर्मबन्धस्तु प्रयातः परमं पदम् ॥ ४४

तस्मादेव सदा विष्णोर्नामस्मरणमादरात् ।
कर्तव्यं भूसुरवरास्तेन सिद्धिर्भवेद्ध्रुवम् ॥ ४५

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे विष्णुनामस्मरणमाहात्म्यं
नाम तृतीयोऽध्यायः

## ॥ चतुर्थोऽध्यायः ॥

### शिवनामोच्चारणमाहात्म्यम्

सूतः—

नामस्मरणमाहात्म्यं शम्भोः शृणुत भूसुराः ।
यन्नामोच्चारमात्रेण प्राप्नुवन्ति परां गतिम् ॥ १

नामानि ये महेशस्य [1]गृणन्त्यज्ञानतोऽपि वा ।
तेषामपि शिवो मुक्तिं ददाति किमतः परम् ॥ २

अस्मिन्नर्थे पुरावृत्तं कथयामि महीसुराः ।
रामाय शम्भुना प्रोक्तं कलायाश्चरितं प्रति ॥ ३

देवरातात्मजा बाला कला नामातिरूपिणी ।
धनञ्जयसुतस्यासीद्भार्या शोणस्य धीमतः ॥ ४

तावुभौ नियतौ नित्यं धर्मैकप्रवणौ शुभौ ।
लब्धवन्तौ निधिमतो गङ्गास्नानाय तौ गतौ ॥ ५

राजतं चोर्ध्वपाषाणं दृष्टवन्तौ महोत्कटम् ।
अथ शोणः प्रियां प्राह किं कर्तव्यं मनोहितम् ॥ ६

कला—

न नारीमतमालम्ब्य किञ्चित्कार्यं समाचरेत् ।
न च नार्यां वदेद्गुह्यमप्रियं वा कदाचन ॥ ७

यदि नारीसमक्षं हि द्रविणं दृष्ट[2]मावदेत् ।
वञ्चयित्वा ततो नारी ह्यन्यस्मै सम्प्रयच्छति ॥ ८

तदा स्वातन्त्र्यमाप्नोति नारी लब्धधना सती ।
विस्रम्भो जायते [3]तस्या अहं [4]संरम्भणीति च ॥ ९

---

1. क. ख. गृह्णन्त्य-
2. अ. मापतेत् क. मापये
3. क. त:य
4. ख. विश्रंभिणी

विस्रम्भो जायते स्त्रीणां नानाविध[1]निचेष्टितैः ।
द्रव्यमादाय यत्किञ्चिदनुगच्छेत् स्वतन्त्रतः ॥ १०

मृते पत्यौ तु पूर्वं सा प्रविशेन्नाशुशुक्षणिम् ।
वैधव्ये द्रविणं सर्वं मद्वशे सम्भविष्यति ॥ ११

इति निश्चित्य मनसा नष्टा भवति कामिनी ।
तस्मान्मयापि भवतो न विचारे प्रयोजनम् ॥ १२

एवमेतन्न सन्देहो गच्छ त्वं तिष्ठ दूरतः ।
इत्युक्त्वा तां महाभागः स्नानाय प्रययौ मुनिः ॥ १३

तद्भार्यापि कला स्नानं कृत्वा सम्पूज्य पार्वतीम् ।
गच्छेति भर्त्रा सा प्रोक्ता स्ववेश्माभ्यगमत्तदा ॥ १४

एनामेकाकिनीं ज्ञात्वा मारीचो नाम राक्षसः ।
तद्भर्तृरूपमास्थाय कलामेतदुवाच ह ॥ १५

सप्तगोदावरीतीरे पवित्रं पापनाशनम् ।
द्रा[दा]क्षाराममिति प्रोक्तं यत्र भीमः स्वयं शिवः ॥ १६

तत्र गच्छाव वै शीघ्रं निर्गच्छ त्वं स्वमन्दिरात् ।

कला—

इदानीमभिषेकाय प्रयातो नाभिषिक्तवान् ॥ १७

कथमेतादृशं त्वं हि पूर्वानुक्तं वदिष्यसि ।
प्रकृतेरन्यथाभाव उत्पातस्तव किं त्वयम् ॥ १८

राक्षसः—

भर्तुरप्रतिकूलत्वं नारीणां धर्म उच्यते ।
प्रतिकूलानुकूला वा मम तद्वद तत्त्वतः॥ १९

तूष्णींभूताथ सा साध्वी भर्तेत्ये[2]व विचार्य तम् ।
निर्ययौ तेन सा बाला वनमध्यं विवेश ह ॥ २०

अथ मध्याह्नकाले वै महद्वीक्ष्य सरस्तदा ।
कलां प्रोवाच तद्रक्षः फलं भुङ्क्ष्वेति सादरम् ॥ २१

---

1. अ. क. विचेष्टितम्  2. क. ख. -वं

कला सातद्वचः श्रुत्वा भोजनार्थं समुद्यता ।
कला दध्यौ शिवं गौरीं प्रणता भक्तितत्परा ॥ २२

अयं धवो मम न वेत्त्येवं ध्यानपराभवत् ।
अथ ध्यानेन तं चोरं विनिश्चित्य पतिव्रता ॥ २३

भीता विवर्णवदना चाश्रुपूर्णमुखी तदा ।
कष्टमापतितं पापमित्युक्त्वा सा पपात ह ॥ २४

रुदतीं तामथो दृष्ट्वा राक्षसः पापनिश्चयः ।
धर्षितुं तामथारेभे धर्षणे न क्षमोऽभवत् ॥ २५

बलाद्धर्षयितुं तां तु यतमाने तु राक्षसे ।
आजानुनाभिपर्यन्तं सा शिलारूपतां दधौ ॥ २६

एवम्भूतां तु तां दृष्ट्वा राक्षसः क्रोधमूर्छितः ।
[1]शिरश्चिच्छेद शोणस्य कान्ता[2]या निर्दयस्तदा ॥ २७

कला नमः शिवायेति तस्मिन् काले जजाप ह ।
प्राप्तायां दुर्मृतिं तस्यां शिवदूताः समागताः ॥ २८

एनां विमानमारोप्य शिवलोकमुपानयन् ।
तामागतां गिरिसुता हर्षेण प्रतिपूज्य च ॥ २९

स्वपदप्रणतां शुद्धामुमा वाक्यमुवाच ह ।
पातिव्रत्येन तुष्टास्मि किं ते कामं ददाम्यहम् ॥ ३०

कला—

दासीभावं प्रयच्छ त्वं मम त्वत्पादपङ्कजे ।
प्राप्तिः किमन्यैर्बहुभिस्तथास्त्विति शिवाब्रवीत् ॥ ३१

एतस्मिन्नन्तरे प्राप्तः शोणो मुनि[3]रथाश्रमम् ।
तस्मिन्नदृष्ट्वा तां भार्यां ध्यानयोगपरोऽभवत् ॥ ३२

रक्षोहतां मृतिं प्राप्तां शिवलोकगतामपि ।
उमादत्तवरां चापि दृष्टवान् ज्ञानचक्षुषा ॥ ३३

---

1. इतः सार्धश्लोकः क. पुस्तके नास्ति
2. क. ख. याः कौणप-
3. क. ख. -रथो गृहम्

किञ्चिद्दुःखयुतो गत्वा देवरातं मुनीश्वरम् ।
निवेद्य सर्ववृत्तान्तं वसिष्ठाय न्यवेदयत् ॥ ३४

वसिष्ठो हि मुनीन् प्राह देवं दृष्ट्वा महेश्वरम् ।
आनयामः शोणभार्यां पार्वतीभवनाद्वयम् ॥ ३५

इति निश्चित्य ते सर्वे कैलासं शङ्करालयम् ।
गत्वा प्रणम्य देवेशं वीरभद्रेण पूजिताः ॥ ३६

ततो विज्ञापयामासुः शोणभार्यार्थमादरात् ।
शिवः प्राह [1]मुनीन्द्रांस्तान् ज्ञात[2]मेवं मया त्विति ॥ ३७

अकालमृत्युयुक्तानां पुनर्जीवितमस्ति च ।
शतपुत्रप्रसविनी कला रूपगुणान्विता ॥ ३८

भवद्भिरिति निश्चित्य समागतमिह द्विजाः ।
यमलोकगतानां तु पुनरावृत्तिरस्ति हि ॥ ३९

मल्लोकमागतानां तु न पुनर्विद्यते गतिः ।
मन्नाम कीर्तितं यस्मादनया प्राणनिर्गमे ॥ ४०

अतो नष्टा यमलिपिः सर्वे मत्पार्श्वमागताः ।
भवन्तो गिरिजातायै निवेदयत कृत्स्नशः ॥ ४१

अथ ते पार्वतीपाददर्शनाय गता द्विजाः ।
प्रणेमुर्मातरं तत्र विश्वामित्रोऽब्रवीदिदम् ॥ ४२

कला पौत्री ममेयं त्वामाराध्याप पतिं त्वमुम् ।
शोणं लब्धवती देवि त्वत्पूजायाः फलं त्विदम् ॥ ४३

तां मातर्देहि शोणाय कात्यायनि दयां कुरु ।

पार्वती—

[3]यादृशी शोणभार्या सा तादृशी दीयते मया ॥ ४४

---

1. क. ख. मुनींस्तांश्च
2. क. ख. -मेव
3. क. ख. यादृशी चास्य भार्या या

नैनां त्यक्तुमहं शक्ता किं वा त्वं मन्यसे मुने ।

विश्वामित्रः—

मातस्त्व[माता त्व]मित्येव मया त्वयि शङ्कित[1]मीरितुम् ॥ ४५

शोणो मुनिरयं मातस्तत्र विज्ञापयिष्यति ।

शोणः—

सैव मे दीयतां भार्या तस्यां मे प्रीतिरुत्तमा ॥

न सा मदन्तिकं[यदि मेऽन्तिकम]प्राप्ता त्यक्ष्ये देहं न संशयः ॥ ४६

[2]देवी—

[3]न वै मदन्तिकं प्राप्तां त्यक्ष्ये देहविवर्जिताम् ।

धनं वा प्रतिदास्यामि यदि वा राज्यमुत्तमम् ॥ ४७

लोकान्तरमथो वापि दास्याम्येनां विनैव हि ।

शोणः—

यदि नो दीयते भार्या नान्यथा मे प्रयोजनम् ॥ ४८

राज्येन किं फलं देवि शिवे भक्तिं प्रयच्छ मे ।

पार्वती—

भविष्यति शिवे भक्तिस्त्वं च सर्वोत्तमो भव ॥ ४९

इत्युक्त्वा तं ततः प्राह मुनिं शैलेन्द्रनन्दिनी ।

भोक्तव्यमिह युष्माभिर्ममास्मिन् दिवसे व्रतम् ॥ ५०

प्रतीन्दुवारं देवस्य महेशस्यैव तुष्टये ।

भोजनीयाः सदाकालमष्टौ विप्रा मुनीश्वराः ॥ ५१

इच्छया यत्र कुत्रापि व्रतमेतदुपक्रमेत् ।

वत्सरे परिपूर्णे तु माहाराजतमीश्वरम् ॥ ५२

चतुर्निष्कप्रमाणेन [4]दशनिष्केण वा पुनः ।

श्वेतवस्त्रयुगं सूक्ष्मं चामरव्यजने तथा ॥ ५३

---

1. क. ख. मीरितम्
2. क. पार्वती
3. अयं श्लोकः ख. पुस्तके नास्ति
4. क. ख. तदर्धार्धेन

पादुकोपानहौ छत्रं सर्वं विप्रे विवेदयेत् ।
स्वशक्त्या दक्षिणां दत्त्वा ब्राह्मणांश्च विसर्जयेत् ॥ ५४

दिने दिने [1]यथा पूजा सोमस्य परमात्मनः ।
स्थण्डिले पूजये[2]द्देवं प्रतिमायामथापि वा ॥ ५५

एक[3]भुक्तं स्वयं कुर्याद् ब्रह्मचर्यसमन्वितः ।
एतत्सोमव्रतं प्रोक्तं शिवतुष्टिप्रदं शिवम् ॥ ५६

य एवं कुरुते भक्त्या नारी वा पुरुषोऽपि वा ।
[4]छायेव शङ्करस्यासौ नित्यमेवानुवर्तते ॥ ५७

अद्य सोमदिनं प्राप्तं भोजयिष्ये द्विजोत्तमान् ।
यूयं च सर्वे मुनयो भोक्तुमर्हथ सत्तमाः ॥ ५८

मातुर्वचनमाकर्ण्य तथेत्युक्त्वा प्रणम्य च ।
अनुष्ठानाय ते सर्वे गत्वा भागीरथीं नदीम् ॥ ५९

माध्याह्निकक्रियां कृत्वा पूजयित्वा महेश्वरम् ।
[5]ते गत्वा पार्वतीगेहे [6]तथा देवीं प्रणम्य च ॥ ६०

लोकनाथनियोगेन [7]सामप्रणयपूर्वकम् ।
पादप्रक्षालनमुखानुपचारान् प्रकल्प्य च ॥ ६१

विलिप्तपञ्चगन्धेषु ब्राह्मणेषु महात्मसु ।
[8]आसीनेषु तदा प्रायाद् ब्राह्मणः स्थविरः कृशः ॥ ६२

उन्मत्तवेषो दिग्वासा जरया परिपीडितः ।
खर्वाटश्चाप्रकाशश्च बहुभुक् तृट्क्षुधान्वितः ॥ ६३

अष्टवर्षा तथा नारी सर्वाभरणसंयुता ।
रूपलावण्यसंयुक्ता लोकोत्कृष्टा मनोहरा ॥ ६४

---

1. क. ख. तथा
. क. ख. देवीं
3. क. भक्तं
4. इतः सार्धश्लोकः क. पुस्तके नास्ति
5. क. ख. आगत्य
6. क. ख. स्थिता
7. क. ख. सा तु
8. क. ख. आगतेषु

गायन्ती [1]सुस्वरं गीतं हसन्ती वीक्ष्य तं पतिम् ।
याचन्ती तं वृद्धधवमन्नमेव बुभुक्षया ॥ ६५

स्त्रियैवंविधया युक्तः स तु देवीगृहं ययौ ।
अनुज्ञायैव गिरिजामिदं वचनमब्रवीत् ॥ ६६

अन्नार्थिनमिह प्राप्तं [2]विद्धि मामतिथिं मुनिम् ।
भोजनावसरे प्राप्तं मां भोजय वरानने ॥ ६७

इत्युक्ता पार्वती चैनमासने चोप[3]वेश्य च ।
जाम्बूनदकृतान्येवमासनानि समर्प्य हि ॥ ६८

अरुन्धतीमथाहूय पर्यवेषयदम्बिका ।
भुञ्जानेषु च विप्रेषु दिग्वासा ब्राह्मणः कृशः ॥ ६९

क्षणेन बुभुजे सर्वं न शेकुर्दातुमङ्गनाः ।
अथ सा गिरिजा देवी स्वयं दातुं प्रचक्रमे ॥ ७०

तया दत्तमशेषञ्च क्षणेनाश्नाति स द्विजः ।
भाण्डे स्थितमशेषञ्च भोक्तुमैच्छद् द्विजोत्तमः ॥ ७१

अथाम्बिकान्नमादाय प्रादाद[4]क्षयमस्त्विति ।
अथ वामकरेणासौ भोक्तुमैच्छत्तत[5]स्ततः ॥ ७२

[6]तत्राप्यक्षयमेवास्तु तच्चान्नमिति चार्पयत् ।
ततः करसहस्रं तु कृत्वैच्छद्भोजनं द्विजः ॥ ७३

दत्वा दत्वा पुनर्देवी सन्तुष्टा न हि कुप्यति ।
प्रक्षाल्य हस्तौ तुष्टस्तु करार्पितसुगन्धवान् ॥ ७४

पार्वतीं वाक्यमाहेदं तोषितोऽहं वरं वृणु ।
वरेण मम यत् कार्यं शङ्करो मे यतः पतिः ॥ ७५

1. अ. सुस्वरा
2. क. ख. सिद्धं
3. अ. -वेशयत्
4. क. ख. -क्षय्य-
5. क. ख. -स्सती
6. सार्धश्लोकोऽयं अ. पुस्तके नास्ति

[1]अथ ज्ञात्वाथ तच्चित्तं भगवान् परमेश्वरः ।
द्व्य[अ]ष्टादशवया भूत्वा सुस्निग्धकचबन्धुरः ॥ ७६

विशालचारुनयनो गोक्षीरसमविग्रहः ।
कोटिकन्दर्पलावण्यः सर्वाभरणभूषितः ॥ ७७

स्वपार्श्वस्थित[2]भार्यांसे प्रसारितकरद्वयः ।
गायन्त्या च तया सार्धमुमया प्रीतिमाययौ ॥ ७८

अथ सा पार्वती तुष्टा देवं प्राह पिनाकिनम् ।
किमित्येतादृशं भावमास्थाय त्वमिहागतः ॥ ७९

नारीं कृत्वा तदा विष्णुं भोजनार्थं महेश्वर ।

ईश्वरः—
अस्मिन् व्रते महाभागे अतिथेर्भोजनं स्मृतम् ॥ ८०

भुञ्जाने त्वतिथौ येषां विषादो नोपजायते ।
[3]व्रतं जाते विषादे तु न सम्यगिति निश्चितम् ॥ ८१

सोम[4]वारव्रतं देवि यः करोति महामतिः ।
स भोगानखिलान् भुङ्क्ते सर्वैश्वर्यसमन्वितः ॥ ८२

[5]सर्वविद्याप्रवीणश्च सर्वसम्पत्समन्वितः ।
[6]सभार्यापुत्रबन्धुश्च वेदोक्ता[7]युश्च जीवति ॥ ८३

इत्युक्त्वा देवदेवेशस्त्ववसत्पार्वती[8]युतः ।
अथ देवे स्थिते तत्र मुनयस्त्रिः प्रदक्षिणम् ॥ ८४

कृत्वा पञ्चनमस्कारान् पुनः कृत्वा प्रदक्षिणम् ।
पुनश्च दण्डवन्नत्वा विसृष्टा निर्ययुस्ततः ॥ ८५

---

1. क. ख. अथ ज्ञात्वा च-
2. क. ख. भार्याङ्के
3. अ. ध्रुवं
4. क. ख. वारे
5. क. ख. पुस्तकयोरिदमर्धं नास्ति
6. इदमर्धमनन्तरार्धं च क. पुस्तके नास्ति
7. ख. युस्स जीवति
8. ख. पतिः

[1]तदीशवचनं स्मृत्वा कृत्वा तद्व्रतमात्मवान् ।
तामेव शोणः कृपया भार्यां प्राप महेशितुः ॥ ८६

[2]ततः शोणस्त्वभिमतां भार्यां [3]प्राप्य [4]विसर्जिताम् ।
[5]उमेश्वराभ्यां तुष्टाभ्यां सन्तोषं परमं ययौ ॥ ८७

मानुषानखिलान् भोगानवाप्य शिवभक्तिमान् ।
मृतश्च गतवाँल्लोकं शङ्करस्यातिशोभनम् ॥ ८८

सूतः—

एवं हि भूसुरश्रेष्ठाः शिवस्य परमात्मनः ।
नामकीर्तनमाहात्म्यं प्रसङ्गात् परिकीर्तितम् ॥ ८९

शृण्वतां सर्वपापघ्नं वक्तॄणाञ्च तथा द्विजाः ।
शिवभक्तिप्रदं गोप्यं नाभक्ताय वदेद्बुधः ॥
तस्माच्छिवस्य नामानि सर्वदा परिशीलयेत् ॥ ९०

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे पशुपतिनामोच्चारणमाहात्म्यं नाम चतुर्थोऽध्यायः

---

1. क. ख. पुस्तकयोरयं श्लोको नास्ति
2. क. ख. अथ.
3. क. ख. प्राप
4. क. विनिर्मिताम्
5. इदमर्धं क. ख. पुस्तकयोर्नास्ति

## ॥ पञ्चमोऽध्यायः ॥

### तीर्थयात्राफलकथनम्

सूतः—

अथाहं संप्रवक्ष्यामि तीर्थयात्राफलं द्विजाः ।
यस्तीर्थसेवी धर्मात्मा स तु सद्गतिमाप्नुयात् ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
मधुरायां द्विजः कश्चिदभवद्देव[1]सम्मतः ॥ २

तस्य पुत्रो महातेजाः शिवशर्मेति विश्रुतः ।
अधीत्य वेदान् विधिवदर्थं [2]विज्ञाय तत्त्वतः ॥ ३

पठित्वा सर्वशास्त्राणि पुराणान्यधिगम्य च ।
अङ्गान्यभ्यस्य [3]तर्कञ्च परिवीक्ष्य समन्ततः ॥ ४

मीमांसाद्वयमालोक्य धनुर्वेदं विगाह्य च ।
आयुर्वेदं विगाह्यापि नाट्यवेदकृतश्रमः ॥ ५

अर्थशास्त्राण्यनेकानि प्राप्याश्वगजचेष्टितम् ।
कलासु च कृताभ्यासो मन्त्रशास्त्रविचक्षणः ॥ ६

चेष्टाश्च नानादेशानां लिपीर्ज्ञात्वा विदेशगाः ।
अर्थानुपार्ज्य धर्मेण भुक्त्वा भोगान् यथेप्सितम् ॥ ७

उत्पाद्य पुत्रान् सुगुणान् [4]तेभ्योऽर्थं प्रविभज्य च ।
[5]यौवनञ्च गतं ज्ञात्वा [6]राज्ञां [जरां] दृष्ट्वा प्रतिश्रुतिम् ॥ ८

चिन्तामवाप महतीं शिवशर्मा द्विजोत्तमः ।
पठतो मे गतः कालस्तथा चार्जयतो धनम् ॥ ९

---

1. अ. सत्तमः
2. क. ख. ज्ञात्वा च
3. क. ख. तर्कांश्च परिलोक्य
4. अ. तेभ्यो ह्यर्थं विभज्य च
5. क. ख. गौरवं गतवान् राज्ञां
6. क. तथा दृष्ट्वा फलश्रुतिम्
ख. जरां दृष्ट्वा गतां श्रुतिम्

नाराधितो महेशानः कर्मनिर्मूलनक्षमः ।
न मया तोषितो विष्णुः सर्वपापहरो हरिः ॥ १०

सर्वकामप्रदो नृणां गणेशो नार्चितो मया ।
तमस्स्तोमहरः सूर्यो नार्चितो हि मया प्रभुः ॥ ११

महामायां जगद्धात्री न ध्याता भवबन्धहृत् ।
न प्रीणिता मया देवा यज्ञैः सर्वसमृद्धिदाः ॥ १२

तुलसीवनशुश्रूषा न कृता पापशान्तये ।
न मया प्रीणिता विप्रा मृष्टान्नैर्मधुरै रसैः ॥ १३

इहापि च परत्रापि विपदामन्तकारकाः ।
बहुपुष्टफलोपेताः सुच्छायाः स्निग्धपल्लवाः ॥ १४

पथि नारोपिता वृक्षा इहामुत्र फलप्रदाः ।
दुकूलैश्चानुकूलैश्च चोलैः प्रत्यङ्गभूषणैः ॥ १५

नालङ्कृताः सुवासिन्य इहामुत्र सुखप्रदाः ।
द्विजाय नोर्वरा दत्ता यमलोकनिवारिणी ॥ १६

सुवर्णं नाग्निवर्णं यद्दत्तं दुरितह[1]त्तरम् ।
अलङ्कृता सवत्सा गौः पात्रे न प्रतिपादिता ॥ १७

ऋणापनुत्तये मातुः कारितो न जलाशयः ।
नातिथिस्तोषितः कोऽपि स्वर्गमार्गप्रदायकः ॥ १८

छत्रोपानत्कुण्डिकाश्च नाध्वगाय समर्पिताः ।
यास्यतां संयमिनां हि दुर्गमार्गनिवारकाः ॥ १९

न च कन्याविवाहार्थं वसु क्वापि समर्पितम् ।
न वाजपेयावभृथे स्नातो लोभवशादहम् ॥ २०

न मया स्थापितं लिङ्गं कृत्वा देवालयं शुभम् ।
यस्मिन् संस्थापिते लिङ्गे विश्वं संस्थापितं भवेत् ॥ २१

---

1. क. ख. च्चिरम्

विष्णोरायतनं नैव कृतं सर्वसमृद्धिदम् ।
न च सूर्यगणेशानप्रतिमाः कारिता मया ॥ २२

न च गौरीमहा[1]लक्ष्मीचित्रे च प्रतिलेखिते ।
न सूत्रमणिचित्राणि नोज्ज्वलान्यंशुकानि च ॥ २३

समर्पितानि विप्रेभ्यो दिव्याम्बरसमृद्धये ।
न तिलाश्च घृतेनाक्ताः सुसमिद्धे हुताशने ॥ २४

हुता वै मन्त्रपूतास्तु सर्वपापापनुत्तये ।
श्रीसूक्तं [2]पावमानञ्च ब्राह्मणं मण्डलानि च ॥ २५

जप्तं पुरुषसूक्तञ्च पापारिशतरुद्रियम् ।
अश्वत्थसेवा न कृता [3]त्यक्ता ह्यर्कत्रयोदशी ॥ २६

शयनीयं न चोत्सृष्टं मृदुला च प्रतूलिका ।
दीपदर्पणसंयुक्ता सर्वभोगसमृद्धिदा ॥ २७

अजाश्वमहिषीदासीमेषीकृष्णाजिनं तिलाः ।
सरंभाश्चोदकुम्भाश्च नासनं मृदुपादुके ॥ २८

पादाभ्यङ्गं दीपदानं प्रपादानं विशेषतः ।
व्यजनं [4]वस्तु ताम्बूलं तथान्यन्मुखवासकृत् ॥ २९

नित्यश्राद्धं भूतबलिस्तथातिथिसमर्चनम् ।
विंशत्येतानि दत्तानि [5]सुखदानि यमालये ॥ ३०

न यमं यमदूतांश्च न याम्या अपि यातनाः ।
पश्यन्त्येते पुण्यभाजो [6]नैतच्चापि कृतं मया ॥ ३१

कृच्छ्रचान्द्रायणादीनि तथा [7]सत्रव्रतानि च ।
शरीरशुद्धिकारीणि न कृतानि क्वचिन्मया ॥ ३२

---

1. क. ख. -लक्ष्म्यौ चित्रे
2. क. ख. पावमानीं
3. क. त्यक्त्वा चार्कं त्रयोदशीम्
   अ. त्यक्त्वा ह्यर्कत्रयोदशीम्
4. क. ख. वस्त्र-
5. क. ख. सुपथ्यानि
6. क. ख. नैकं चापि
7. क. ख. नक्त-

[1]गवां हि किञ्चिन्नो दत्तं गोकण्डूतिर्न वै कृता ।
नोद्धृता पङ्कमग्ना गौर्गोलोकसुखदायिनी ॥ ३३

नार्थिनः प्रार्थितैरर्थैः कृतार्था हि मया कृताः ।
देहि देहीति जल्पाको भविष्याम्यन्यजन्मनि ॥ ३४

न वेदा न च शास्त्राणि नार्था दारा न नो सुताः ।
न क्षेत्रं न च हर्म्यादि गन्तारमनुयास्यति ॥ ३५

शिवशर्मेति [2]सञ्चिन्त्य बुद्धिं सन्धाय सर्वतः ।
निश्चिकाय मनस्येवं भवेत् क्षेमकरं मम ॥ ३६

याव[3]त्स्वस्थो हि मे देहो यावन्नेन्द्रियविप्लवः ।
तावत् स्वश्रेयसो हेतुं तीर्थयात्रां करोम्यहम् ॥ ३७

दिनानि पञ्चषाण्येवमतिवाह्य गृहे द्विजः ।
उपोष्य रजनीमेकां प्रातः शुद्धिं विधाय च ॥ ३८

गणेशं ब्राह्मणान्नत्वा भुक्त्वा प्रस्थितवान् सुधीः ।
भुवि तीर्थान्यनेकानि नालमायुश्चलं मनः ॥ ३९

इति निश्चित्य मनसा ततः सप्तपुरीं ययौ ।
अयोध्याञ्च पुरीं गत्वा सरयूमवगाह्य च ॥ ४०

ततस्तीर्थेषु सन्तर्प्य पितॄन् पिण्डप्रदानतः ।
पञ्चरात्रमुषित्वा च ब्राह्मणान् परिभोज्य च ॥ ४१

प्रयागमगमद्विप्रस्तीर्थराज्यं सुहृष्टवान् ।
सितासिते सरिच्छ्रेष्ठे यत्र स्तः सुरदुर्लभे ॥ ४२

यत्राप्लुतो [4]नरोऽपापः परं ब्रह्माधिगच्छति ।
क्षेत्रं प्रजापतेः पुण्यं सर्वेषामेव दुर्लभम् ॥ ४३

लभ्यते पुण्यसन्दोहैर्नान्यथा पुण्यकर्मभिः ।
प्रकृष्टं सर्वयागेभ्यः प्रयागमिति गीयते ॥ ४४

---

1. क. ख. गवाह्निकं च नो
2. क. ख. निश्चित्य
3. क. ख. स्वस्थोऽस्ति
4. क. ख. नरः पापः

यज्वनां पुनरावृत्तिर्न प्रयागार्द्रवर्ष्मणाम् ।
यत्र स्थितः स्वयं साक्षाच्छूलटङ्कधरो हरः ॥ ४५

तत्र स्थितानां जन्तूनां मोक्षमार्गप्रदर्शकः ।
यत्राक्षयवटोऽप्यस्ति सप्तपातालमूलवान् ॥ ४६

प्रलयेऽपि यमारुह्य मृकण्डुतनयोऽवसत् ।
तत्समीपे द्विजान् भक्त्या सम्भोज्याक्षय्यपुण्यभाक् ॥ ४७

यत्र लक्ष्मीपतिः साक्षान्माधवः परिदृश्यते ।
ऋषिभिः परिगीते ते सितासितसरिद्वरे ॥ ४८

शिवलोकाच्च गोलोकादुमालोकाद्विशेषतः ।
कुमारलोकाद्वैकुण्ठात् सत्यलोकात्समन्ततः ॥ ४९

तपोजनमहद्व्दयश्च स्वर्लोकाच्च विशेषतः ।
भुवर्लोकाच्च भूलोकान्नागलोकात्तथाखिलात् ॥ ५०

अचलाद्धिमवन्मुख्यात् सर्वे वै संशितव्रताः ।
कैलासपर्वतान्मुख्यात् कल्पवृक्षादयो नगाः ॥ ५१

स्नातुं माघे समायान्ति प्रयागमरुणोदये ।
दिगङ्गनाः प्रार्थयन्ते यत्प्रयागानिलानपि ॥ ५२

अश्वमेधादियागैश्च प्रयागस्य रजः पुरा ।
तुलितं ब्रह्मणा सत्यं न ते तद्रजसः समाः ॥ ५३

मज्जद्गतानि पापानि बहुजन्मार्जितानि च ।
प्रयागनामग्रहणाल्लीयन्तेऽतीव भूसुराः ॥ ५४

धर्मतीर्थमिदं सम्यगर्थतीर्थमिदं परम् ।
कामिकं तीर्थमेतच्च मोक्षतीर्थमिदं [1]परम् ॥ ५५

सूतः—

विप्राः शृण्वन्तु कस्तस्य गुणान् वर्णयितुं क्षमः ।
तीर्थराजप्रयागस्य तीर्थैः [2]संवेदितस्य च ॥ ५६

---

1. क. ख. ध्रुवम्  2. क. ख. संसेवितस्य

प्रयागस्य गुणान् ज्ञात्वा शिवशर्मा द्विजः सुधीः ।
तत्र माघमुषित्वा च प्राप वाराणसीं पुरीम् ॥ ५७

आगत्य दृष्ट्वा मणिकर्णिकाया-
मुदग्वहां स्वर्गतरङ्गिणीं सः ।
सचेलमाप्लुत्य जलेऽमलेऽमलोऽ-
विलम्बमालम्बितशुद्धबुद्धिः ॥ ५८

न कर्म सत् कर्मकृतो विकुर्वते
न कुर्वते सर्वगुणाश्च सर्वतः ।
प्रबन्धभेदा व्यतिरिक्तपुस्तक-
प्रतिर्यथा[1]नल्पविपङ्क्तिभेदः ॥ ५९

संसारचिन्तामणिरत्र यस्मात्
तत्तारकं सज्जनकर्णिकायाम् ।
गिरो विधत्ते सहसान्त्यकाले
तद्गीयतेऽसौ मणिकर्णिकेति ॥ ६०

मुक्तिलक्ष्मीमहा[2]पीठमणिस्तच्चरणाब्जयोः ।
कर्णिकेयं ततः प्राहुस्तन्नाम्ना मणिकर्णिकाम् ॥ ६१

जरायुजाण्डजोद्भिज्जस्वेदजा ह्यत्र वासिनः ।
न समा मोक्षभाजस्ते त्रिदशैर्मुक्तिदुर्दशैः ॥ ६२

पुनः पुनश्च तत्क्षेत्रमतिथीकृत्य नेत्रयोः ।
विचित्रञ्च पवित्रञ्च तृप्तिं नाधिजगाम सः ॥ ६३

सप्तानाञ्च पुरीणां हि धुरीणामेव याम्यहम् ।
वाराणसीं सुनिर्वाणविश्राणनविचक्षणाम् ॥ ६४

तथापि न पुरश्रेणी मया दृग्विषयीकृता ।
तासां प्रभावं विज्ञायाप्यागमिष्याम्यहं पुनः ॥ ६५

---

1. क. ख. सङ्क्लिपपङ्क्तिभेदतः 2. क. ख. -पीठं मणि-

तीर्थयात्रां प्रतिदिनं कुर्वन् नूनं सवत्सरम् ।
न प्राप सर्वतीर्थानि तीर्थं काश्यां पदे पदे ॥ ६६

जानन्नपि गुणान् विप्राः क्षेत्रस्यास्य परं द्विजः ।
नाना[1]प्रमाणैः प्रवणो निरगाच्च तथाप्यहो ॥ ६७

किं कुर्वन्ति हि शास्त्राणि सप्रमाणानि भामिनि ।
महामायां भवित्रीं तां को वा वारयितुं क्षमः ॥ ६८

कः समुच्चलितं चित्तं तोयराशिं प्रतीपयेत् ।
प्रोच्चस्थानस्थितमपि स्वभावाच्चलनं तयोः ॥ ६९

शिवशर्मा व्रजन् सोऽथ देशाद्देशान्तरं [2]क्रमात् ।
महाकालपुरीं प्राप कलिकालविवर्जिताम् ॥ ७०

कल्पे कल्पेऽखिलं विश्वं कलयेद्यः स्वलीलया ।
तं कालं कलयित्वा यो महाकालोऽभवत् किल ॥ ७१

यापयन्ती च यां विश्वमवन्तीति निगद्यते ।
जगाम नगरीं काञ्चीं काञ्चीं त्रिभुवनस्य च ॥ ७२

लक्ष्मीकान्तः स्वयं साक्षादास्ते यत्र सदा हरिः ।
तत्र कृत्यञ्च यत् कृत्यं तत् कृत्वा सर्वकृत्यवित् ॥ ७३

सप्तरात्रमुषित्वाथ ययौ द्वारवतीं प्रति ।
चतुर्णामपि वर्गाणां यत्र द्वाराणि सर्वतः ॥ ७४

ततो मायापुरीं प्राप दुष्प्रापां पापकर्मभिः ।
प्रातः स्नात्वा च गङ्गायां [3]पारं तर्तुं समुद्यतः ॥ ७५

तावच्छीतज्वराक्रान्तश्चकम्पेऽत्यर्थमातुरः ।
चिन्तार्णवे निमग्नोऽसौ बद्धाशो जीविते धने ॥ ७६

क्व क्षेत्रं क्व कलत्रं मे क्व पुत्राः क्व च तद्वसु ।
तत्तद्विचित्रं सद्मर्म्यं सा च पुस्तकसंभृतिः ॥ ७७

---

1. अ. प्रणामैः 2. क. ख. भ्रमन् 3. क. ख. पारणां कर्तुमुद्यतः

किमेभिश्चिन्तनै[1]र्बन्धैरतितापकरैर्मम ।
चिन्तयामि हृषीकेशं शिवदं शिवमेव च ॥ ७८

अथ वा चिन्तया किं मे त्वनया दुरवस्थया ।
तीर्थे हि मरणं श्रेयः क्षत्रियस्य रणे यथा ॥ ७९

एवं चिन्तयतस्तस्य पीडा सीदति दारुणा ।
तावद्वैकुण्ठभवनाद्विमानं समुपस्थितम् ॥ ८०

[2]विमानं महदारुह्य पीतवासाश्चतुर्भुजः ।
अलङ्चक्रे नभोवर्त्म स द्विजो द्विजभूषणः ॥ ८१

तस्माद्धि तीर्थयात्रायाः फलमुत्तममेव हि ।
येनाज्ञानी च परमं पदमाप्नोति दुर्लभम् ॥ ८२

य इदं शृणुयान्नित्यमुपाख्यानं [3]सुखावहम् ।
तीर्थस्नानफलोपेतः स महत्पदमाप्नुयात् ॥ ८३

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे तीर्थयात्राफलकथनं नाम पञ्चमोऽध्यायः

---

1. क. -वन्ध्यै-
2. क. ख. विमानमथ चारुह्य
3. क. मनोरमम् ख. मनोहरम्

## ॥ षष्ठोऽध्यायः ॥

### अहिंसाकथनम्

ऋषयः—

को धर्मः सर्वधर्मेभ्यो भवतः परमो मतः ।
तमेव कथयास्माकं सूत पौराणिकोत्तम ॥ १

सूतः—

अहिंसा परमो धर्मः सर्वेषामिति निश्चयः ।
अहिंसाधर्मनिष्ठो हि परं ब्रह्माधिगच्छति ॥ २

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
इन्द्रशाकलसंवादं सर्वपापप्रणाशनम् ॥ ३

इन्द्रप्रस्थे वसन् धीमान् शाकलो नाम वै द्विजः ।
अहिंसाधर्ममार्गस्थो भिक्षाहारकृताशनः ॥ ४

दयालुः सर्वभूतेषु सर्वद्वन्द्वविवर्जितः ।
जितक्रोधः सदाचारः सर्वार्थेषु गतस्पृहः ॥ ५

समः शत्रौ च मित्रे च परित्यक्तमदो द्विजः ।
सर्वारम्भपरित्यागी संयतात्मा दृढव्रतः ॥ ६

तमिन्द्रो लुब्धको भूत्वा शशमादाय कृत्रिमम् ।
इन्द्रप्रस्थं ययौ विप्रास्तस्याहिंसां परीक्षितुम् ॥ ७

तस्याश्रमाद्बहिस्तिष्ठन् कृत्वा शशममित्रजित् ।
इन्द्रो लुब्धकरूपेण शाकलं समुपागमत् ॥ ८

क्षुत्परीतोऽतिसंभ्रान्तस्तृषया परिपीडितः ।
पपात पुरतस्तस्य शाकलस्य स लुब्धकः ॥ ९

तं दृष्ट्वा पतितं भूमौ लुब्धकं दीनमानसः ।
कृपयाविष्टचित्तः सन् शाकलो वाक्यमब्रवीत् ॥ १०

उत्तिष्ठोत्तिष्ठ कल्याण किं करोमि तवानघ ।
यद्यदिच्छसि भद्राहं तत्तद्दास्ये यथोचितम् ॥ ११

लुब्धकः—

आहारं देहि मे विप्र येन जीवामि सुव्रत ।
अनाहारतया मेऽद्य जातावस्थेयमीदृशी ॥ १२

सूतः—

ततो गत्वा पुरीं सोऽपि समानीयान्नमुत्तमम् ।
भुङ्क्ष्वेत्युक्त्वा [1]ददौ तस्मै यथेष्टं लुब्धकाय वै ॥ १३

दृष्ट्वा तदन्नं विप्रेन्द्राः समानीतं स लुब्धकः ।
उवाचान्नं न मे योग्यमन्यदानीयतामिति ॥ १४

मांसेषु मे सदा प्रीतिर्नान्येषु मुनिसत्तम ।
तस्मान्मांसेन मां रक्ष न लोभं कर्तुमर्हसि ॥ १५

नातिदूरे चरत्येव शशोऽयं पश्यताद् द्विज ।
तस्य मांसप्रदानेन त्वं मां रक्षितुमर्हसि ॥ १६

शाकलः—

अहिंसकोऽयं सर्वत्र कथं हिंसनमेष्यति ।
निन्दिता सर्वलोकेषु प्राणिहिंसा सदा बुधैः ॥ १७

तोयानामाकरः सिन्धु[2]रोषधीनां हिमालयः ।
पापानामाकरो हिंसा सा मया क्रियते कथम् ॥ १८

यो हिंसको दयाविष्टः प्राणिनां पापपूरुषः ।
स मृतो याति दुष्टात्मा नरकानेकविंशतिम् ॥ १९

दुःखं यथात्मनो नेष्टं तथान्येषां विशेषतः ।
तज्जानता मया दुःखं क्रियते प्राणिनां कथम् ॥ २०

स प्रेत्य नरकं याति तेन पापेन कर्मणा ।
हन्यमानं परैर्जन्तुं शक्तो यः समुपेक्षते ॥ २१

---

1. अ. यथेष्टं हि शाकलो 2. अ. स्तोमधांनां

तस्य वै नरकावासं प्रवदन्ति मनीषिणः ।
तेनाधीतं श्रुतं दत्तं तपस्तप्तमुपासितम् ॥ २२

तत्सर्वं निष्फलं चास्य येन [1]हिंसा सदा कृता ।
अहिंसाभिरता मर्त्या वन्दनीयाः प्रयत्नतः ॥ २३

तैरेव धार्यते सर्वं जगत्स्थावरजङ्गमम् ।
तस्माद्धर्ममिमं त्यक्त्वा पुरुषार्थैक[2]साधकम् ॥ २४

न हिंस्यां शशक[3]श्चैनमन्यद्वरय लुब्धक ।

लुब्धकः—

नाहमन्येन जीवामि विना मांसेन सत्तम ॥ २५

यतोऽहं वर्धितो मांसैर्नान्येनान्नेन सत्तम ।
शाकलोऽतीव धर्मिष्ठः सर्व[4]सत्त्वहिते रतः ॥ २६

इति श्रुत्वा द्विजश्रेष्ठ क्षुधितोऽहमिहागतः ।
स त्वं वदस्यकारुण्यं वचनं मम शोकदम् ॥ २७

धर्मनिश्चयतत्त्वज्ञा नैवमाहुर्मनीषिणः ।
क्षुत्क्षामदेहो भोज्यार्थे कथम[5]प्याश्रमं तव ॥ २८

आशया परया प्राप्तः प्रायस्त्वं रक्षसीत्यहम् ।
सर्वो मनोरथो व्यर्थः सञ्जातो द्विजसत्तम ॥ २९

प्रायः पञ्चत्वमेवात्र प्राप्यते मे विधेर्बलात् ।
अहिंसालक्षणो धर्मो जायते द्विजसत्तम ॥ ३०

यदि धर्मोऽविरुद्धः स्यादसौ धर्म इतीष्यते ।
अधर्मायैव यो धर्मो [6]न स धर्मो मतो बुधैः ॥ ३१

अधर्मक्षपणायालं यः स धर्मो विधीयते ।
अधर्मोऽपि यदा धर्महानिं न कुरुते द्विज ॥ ३२

---

1. क. ख. हिंसासकृत्कृता
2. क. ख. साधनम्
3. क. ख. -न्त्वेन-
4. क. ख. जन्तु-
5. क. ख. -प्याश्रयं
6. क. ख. नासौ

तदासौ धर्म एव स्यात्सेतुनाश इवोदधेः ।
तस्मान्मदर्थां हिंसेयं शशस्यास्य परंतप ॥ ३३

[1]न सा हि धर्मो हि मतो धर्मतत्त्वविशारदैः ।
अहो नु खल्वधर्मे ते धर्मबुद्धिः समाहिता ॥ ३४

न हीदं शोभते सत्सु न चेहामुत्र कीर्त्यते ।
तस्माच्छशवधे मोहं परित्यज्यात्ममोहदम् ॥ ३५

मां त्वं रक्ष सुधर्मज्ञ बुद्धिमास्थाय सात्त्विकीम् ।

शाकलः—

यदस्ति [2]मे निवासेऽत्र तद्दत्तमखिलं मया ॥ ३६

तस्मिंस्ते [3]नास्ति सन्तोषः किं करोमि पुनस्तव ।
अन्नं विधात्रा विहितं प्राणिनां प्राणधारणम् ॥ ३७

तदनादृत्य विहितमन्यत् प्रार्थयते भवान् ।
अन्नाद्भूतानि जायन्ते वर्धन्ते तेन चैव हि ॥ ३८

अन्नं प्राणा हि भूतानामन्नं बलकरं मतम् ।
[4]मुक्त्वा तदामिषे वाञ्छा तव लुब्धक वर्तते ॥ ३९

नाहं शक्तो वधं कर्तुमहो [5]कष्टमुपस्थितम् ।
अहिंसया च भूतानां वर्तयामीति भावयन् ॥ ४०

संस्थितः स च मे विघ्नः केनायमिति निर्मितः ।
बाल्यादेव समारब्धं व्रतमेदहिंसकम् ॥ ४१

तस्यैतस्यावघाताय विघ्नोऽयं समुपस्थितः ।

लुब्धकः—

तव किं बहुनोक्तेन मम पीडा हि जायते ॥ ४२

यदि दास्यसि जीवामि मांसं नो चेन्मृतिर्मम ।
[6]परिश्रान्तः क्षुधाविष्टो यस्य गेहे मरिष्यति ॥ ४३

---

1. अ. नासौ हि धर्मतो हीनो
2. क. ख. मेऽधिवासे
3. क. ख. नातिसन्तोषः
4. क. ख. मुक्त्वतदा-
5. क. -कर्तु-
6. ख. पथ.श्रा-

स तिष्ठेन्नरके घोरे यावदाभूतसंप्लवम् ।
सीदन्ति मम गात्राणि कम्पन्ते च मुहुर्मुहुः ॥ ४४

न विद्यते चेन्मांसं वै भव भक्ष्यस्त्वमेव मे ।

सूतः—

इत्युक्तः संप्रहृष्टात्मा शाकलो द्विजसत्तमः ॥ ४५

बाढमित्यब्रवीत्तं वै लुब्धकं दीनमानसः ।
परदुःखविनोदाय सन्तो हि खलु भूसुराः ॥ ४६

परित्यजन्ति चात्मानं [1]काङ्क्षन्ति न सुखानि च ।
ततः स शाकलो विप्राः प्रहृष्टेनान्तरात्मना ॥ ४७

कुरु तुष्टिं यथेच्छं ते मन्मांसेन[2] तु वाञ्छितम् ।
ततः पुरन्दरः प्रीतः शाकलस्य महात्मनः ॥ ४८

धृतिं विदित्वा विप्रेन्द्रा देवैरपि सुदुष्कराम् ।
आत्मनो रूपमास्थाय शाकलं स शचीपतिः ॥ ४९

उवाच तं वरं मत्तो वृणीष्वेति च सादरम् ।
अहो ते धैर्यमतुलमहो व्यवसितं त्वया ॥ ५०

धर्ममेवावलम्ब्य त्वं शरीरं त्यक्तुमात्मनः ।
[3]स्वर्ग आरुह्यतां विप्र मम वाक्येन सादरम् ॥ ५१

शाकलस्तद्वचः श्रुत्वा तमिन्द्रं प्रत्यभाषत ।

शाकलः—

स्वर्गं नाहं गमिष्यामि स्वर्गे नापि प्रयोजनम् ॥ ५२

इति ब्रुवाणं तं विप्रं शाकलं स शचीपतिः ।
एतन्मे वद विप्रेन्द्र परं कौतूहलं हि मे ॥ ५३

स्वात्मानन्दं [स्वर्गानन्दं] विना नान्यत्सुखमस्ति हि शाश्वतम् ।
एवंविधं तु तद्विप्र किमर्थं नेष्यते त्वया ॥ ५४

---

1. क. ख. कांक्षन्तः स्वसुखानि च
2. क. ख. -नेत्युवाच तम्
3. अ. क. पुस्तकयोरिदमर्धं 52 श्लोकः 53 पूर्वार्धं च न दृश्यते

शाकलः—

अस्मिन्नमुष्मिंल्लोके च विशेषो नास्ति कश्चन ।
अविशेषे सतीहैव संस्थानं मे हि रोचते ॥ ५५

यथेह सततं चोरव्याघ्रतश्च वधो नृणाम् ।
स्वर्लोकेऽपि तथा दैत्यदानवेभ्यो महद्भयम् ॥ ५६

यथास्मिन् मृत्युतो मर्त्या भयं यान्ति शतक्रतो ।
तत्रापि पतनाद्भीतिस्तथैवास्ति दिवौकसाम् ॥ ५७

दुःखमुत्पद्यते पुंसामिह दृष्ट्वा परश्रियम् ।
तथा तत्रापि देवानामन्योन्यं दुःखसञ्चयः ॥ ५८

यथा कर्मक्षयान्मृत्युरत्र पुंसां प्रजायते ।
तथा फलोपभोगेन प्रक्षीणा स्वर्गसंस्थितिः ॥ ५९

[1]यथैव च विशेषोऽत्र पुंसां समभिजायते ।
तथैव देवलोकेऽपि देवतानां शचीपते ॥ ६०

अतः स्वर्गाभिधो लोको भगवन् न श्रितो मया ।
इह चात्यन्तभूयिष्ठो गुणः समभि[2]जायते ॥ ६१

कृते कर्मण्यनाकाङ्क्षी फलेषु विबुधाधिप ।
नरो ज्ञानमनुप्राप्य पुनर्मोक्षाय कल्पते ॥ ६२

तस्मात् साध्यविहीने मे स्वर्गे नास्ति प्रयोजनम् ।
तथात्रैव यतिष्येऽहं यथा लप्स्येऽपुनर्भवम् ॥ ६३

नमस्ते शक्र गच्छ त्वमहमत्र प्रतिष्ठितः ।
तपसा कर्शयित्वेदं शरीरं याम्यमर्त्यताम् ॥ ६४

सूतः—

शाकलेनैवमुक्तोऽसौ तस्मै दत्त्वा वरं दिवम् ।
जगाम वायुमार्गेण शक्रस्त्रिभुवनेश्वरः ॥ ६५

---

1. क. ख. यथैश्वर्यं विशे-  2. क. ख. -धीयते

सोऽपि तत्रैव धर्मात्मा तपसा शुद्धमानसः ।
संन्यस्य सर्वकर्माणि मुमुक्षुरभवद् द्विजः ॥ ६६

तस्मादहिंसा सर्वेषां धर्माणामुत्तमोत्तमः ।
यः पठेदिदमाख्यानं धन्यमंहोविनाशनम् ।
स मुक्तः सर्वपापेभ्यो विष्णुलोके महीयते ॥ ६७

परिहरति वधं यः प्राणिनां पापहेतुं
यमनियमविशिष्टः सर्वभूतानुकम्पी ।
स भवभयनिबन्धान्मुच्यते लब्धबुद्धिः
पदमतुलमनन्तं प्राप्नुते चैव विष्णोः ॥ ६८

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे अहिंसाकथनं
नाम षष्ठोऽध्यायः

## ॥ सप्तमोऽध्यायः ॥

### शीलप्रशंसा

ऋषयः—

धर्मार्थकामाः किंमूलाः कस्माज्जाता महामते ।
लोकत्रयी च कार्त्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता ॥ १

मूलं शीलं त्रिवर्गस्य ततः सर्वे गुणाः स्थिताः ।
शीलेनैव त्रयो लोकाः शक्या जेतुं न संशयः ॥ २

न हि किञ्चिदसाध्यं वै लोके शीलवतां सताम् ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ ३

एकदा ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।
श्रुत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥ ४

प्रह्लादस्त्वब्रवीद्विप्रं क्षणो नास्ति द्विजोत्तम ।
त्रैलोक्यराज्ये सक्तस्य ततो नोपदिशामि ते ॥ ५

ब्राह्मणस्त्वब्रवीद्वाक्यं यस्मिन् काले क्षणो भवेत् ।
तदा तद्वेदितुं श्रेय इच्छामि दनुजाधिप ॥ ६

इत्युक्त्वा ब्राह्मणः सोऽपि गुरुवृत्तिमनुत्तमाम् ।
चकार सर्वभावेन यद्यत्स्वमनसेच्छति ॥ ७

ततः प्रीतो ज्ञाततत्त्वं ददौ विप्राय दानवः ।
पृष्टश्च तेन प्रह्लादः कथं प्राप्तमरिंदम ॥ ८

त्रैलोक्यराज्यधर्मज्ञ तद्ब्रूहीति स चावदत् ।
[1]नासूयामि द्विजान् विप्र राजाहमिति गर्वितः ॥ ९

शीलेन मम सन्तुष्टा द्विजाः कुर्वन्त्यनुग्रहम् ।
शीलं पृथिव्याममृतं शीलं चक्षुरनुत्तमम् ॥ १०

---

1. अ. न हिनस्मि

एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिने ।
यदि राजन् प्रसन्नस्त्वं मम चेच्छसि यद्धितम् ॥ ११

भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ।
एवमस्त्विति तत् प्रादात् प्रह्लादोऽप्यविचार्य च ॥ १२

स विप्रस्तद्वरं लब्ध्वा यथेच्छमगमद् द्विजाः ।
लब्ध्वा वरं गते विप्रे प्रह्लादश्चिन्तयान्वितः ॥ १३

ततश्चिन्तयतस्तस्य देहात्तेजः समुत्थितम् ।
तदपृच्छन्महाकायं प्रह्लादः को भवानिति ॥ १४

प्रोवाच तेजः शीलं मां विद्धि त्वं ब्राह्मणान्तिकम् ।
गच्छामीति गते [1]तस्य देहादन्यः समुत्थितः ॥ १५

सोऽपि पृष्टश्च मां धर्मं विद्धि यामि द्विजान्तिकम् ।
तत्रैवाहं यत्र शीलमित्युक्त्वा स तिरोदधे ॥ १६

तस्मिन् गते क्षणादन्यः शरीरा[2]त्तस्य निस्सृतः ।
तेन पृष्टोऽब्रवीत् सोऽपि सत्यं मां विद्धि दानव ॥ १७

अहं शीलेन धर्मेण सह यामि द्विजान्तिकम् ।
[3]तत्रैवाहं यत्र शीलमित्युक्त्वा स तिरोदधे ॥ १८

इत्युदीर्य गते सत्ये तद्देहादुत्थितोऽपरः ।
पृष्टश्च तेन मां वृत्तं विद्धि यामि द्विजांतिकम् ॥ १९

इत्युक्त्वान्तर्हिते वृत्ते देहात्तस्योदभूत् परः ।
स तेन कस्त्वमित्युक्तो बलं मां विद्धि दानव ॥ २०

अनुयास्याम्यहं वृत्तमेवेत्युक्त्वा गते बले ।
ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ ॥ २१

तामपृच्छत् स दैत्येन्द्रः सा चैनमिदमब्रवीत् ।
उषितास्मि चिरं नित्यं त्वयि सत्यपराक्रमे ॥ २२

---

1. अ. तस्मिन्
2. क. ख. -दस्य
3. अ. पुस्तके इदमर्धं अनन्तरश्च श्लोको नास्ति

त्वया त्यक्ता गमिष्यामि बलं यत्र ततोऽस्म्यहम् ।
ततो भयं प्रादुरभूत् प्रह्लादस्य महात्मनः ॥ २३

तामपृच्छत्ततो देवीं प्रह्लादः कमलालयाम् ।
कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुम् ॥ २४

लक्ष्मीः—

स शक्रो ब्राह्मणश्रेष्ठो यस्त्वयैवोपशिक्षितः ।
शीलेन हि त्रयो लोकास्त्वया धर्मज्ञ निर्जिताः ॥ २५

तद्विज्ञाय महेन्द्रेण तव शीलं हृतं प्रभो ।
नाभागो नहुषश्चैलो मान्धाता जनमेजयः ॥ २६

एते हि पार्थिवा राज्यं शीलेनैव प्रपेदिरे ।
धर्मः सत्यं तथा वृत्तं बलं चैव तथा ह्यहम् ॥ २७

[1]शीलमूलं महाभाग तथा नास्त्यत्र संशयः ।
एवमुक्त्वा गता सापि प्रह्लादः शीलवर्जितः ॥ २८

तथा धर्मेण सत्येन वृत्तेन च बलेन च ।
[2]शीलमूलं यतस्तस्माच्छीलं त्रैवर्ग्यसाधनम् ॥ २९

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेव प्रकीर्त्यते ॥ ३०

इति शीलं समासेन कथितं हि महीसुराः ।
यद्यप्यशीलाः पुरुषाः प्राप्नुवन्ति श्रियं क्वचित् ॥ ३१

न भुञ्जते श्रियं सम्यक् समूलाश्च पतन्ति ते ।
एतद्विदित्वा तत्त्वेन शीलयुक्तो भवेन्नरः ॥ ३२

इतिहासमिदं पुण्यं यो वेत्ति परमार्थतः ।
शीलं धर्मो बलं सत्यं वृत्तं श्रीस्तं न मुञ्चति ॥ ३३

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे शीलप्रशंसा नाम सप्तमोऽध्यायः

---

1. इतः सार्धश्लोकः अ. पुस्तके नास्ति

2. क. ख. श्रिया च रहितस्तस्मात् शीलं त्रैलोक्यसाधनम्

## ॥ अष्टमोऽध्यायः ॥

### महापुरुषदर्शनम्

सूतः—

सर्वकामफलं विद्धि सर्वार्थानां परां गतिम् ।
[1]विन्दन्ते सर्वकामांश्च महापुरुषदर्शनात् ॥ १

अस्मिन्नर्थे पुरावृत्त[2]मितिहासं वदामि वः ।
भद्राश्वायाथ कथितमगस्त्येन महात्मना ॥ २

भद्राश्वः—

भगवंस्त्वं शरीरे तु यद्वृत्तं मुनिसत्तम ।
चिरंजीवी भवांस्तन्मे वक्तुमर्हसि सत्तम ॥ ३

अगस्त्यः—

[3]मच्छरीरमिदं राजन् बहुकौतूहलान्वितम् ।
अनेककल्पसंस्थायि देवविद्याविशोधितम् ॥ ४

अहं महीमिमां कृत्स्नां गतवानस्मि पार्थिव ।
इलावृतं महावर्षं मेरोः पार्श्वे व्यवस्थितम् ॥ ५

तत्र रम्यं सरो दृष्टं तस्य तीरे महाकुटिः ।
तत्रोपवासशिथिलं दृष्टवानस्मि तापसम् ॥ ६

अस्थिचर्मावशेषञ्च शीर्णवल्कलधारिणम् ।
तं दृष्ट्वाहं [4]नरश्रेष्ठ क एष इति सत्तम ॥ ७

इत्यहं चिन्तयाविष्टः स मां प्राह महामुनिः ।
स्थीयतां स्थीयतां ब्रह्मन्नातिथ्यं करवाणि ते ॥ ८

एतच्छ्रुत्वा वचस्तस्य मुनेः परमशोभनम् ।
को भवानिति संप्रोक्तो मया भक्त्या दृढव्रतः ॥ ९

---

1. क. ख. विन्दते
2. क. ख. -माख्यानं प्रवदामि
3. इतः सार्धश्लोकः क. ख. पुस्तकयोर्नास्ति
4. क. ख. नृप-

वचनात्तस्य विप्रस्य प्रविष्टोऽहं कुटीं तदा ।
तावत्पश्याम्यहं विप्रं ज्वलन्तमिव तेजसा ॥ १०

भूमौ स्थितं तु मां दृष्ट्वा हुङ्कारमकरोन्मुनिः ।
तद्धुङ्कारा[1]त्तु पातालं भित्त्वा पञ्च हि कन्यकाः ॥ ११

निर्ययुः काञ्चनं पीठमेका तासां प्रगृह्य वै ।
मम प्रादात्तथा न्यायात् सलिलं करकस्थितम् ॥ १२

गृहीत्वान्या तु मे पादौ क्षालितुं चोपचक्रमे ।
अन्ये द्वे व्यजनं गृह्य मत्पक्षाभ्यां व्यवस्थिते ॥ १३

[2]ततो हुंकारमकरोत् पुनरेव महातपाः ।
तच्छब्दानन्तरं हैमीं द्रोणीं योजनविस्तृताम् ॥ १४

गृह्याजगाम मकरः प्लवं सरसि पार्थिव ।
तस्यां तु कन्याः शतशो हेमकुम्भकराः शुभाः ॥ १५

आययुस्ता अथो दृष्ट्वा स मुनिः प्राह मां नृप ।
स्नानार्थं कल्पितं ब्रह्मन्निदं ते सर्वमेव तु ॥ १६

द्रोणीं प्रविश्य चेमां त्वं स्नातुमर्हसि सत्तम ।
ततोऽहं तस्य वचसा तस्यां द्रोण्यां नराधिप ॥ १७

यावद्विशामि सरसि तावद्द्रोणी न्यमज्जत ।
द्रोण्यां जले निमग्नोऽहमिति मत्वा नराधिप ॥
उन्मज्जामि ततो लोकमपूर्वं दृष्टवानहम् ॥ १८

सुहर्म्यकक्ष्यायतनं विशालं
रथ्यापथं शुद्धजनानुकीर्णम् ।
[3]अत्युत्तमैः सेवितमात्मवद्भि-
[4]र्नृपैः पुराणै[5]र्नयमार्गसंस्थैः ॥ १९

---

1. क. ख. -द्धि
2. इतः सार्धश्लोकः अ. पुस्तके न दृश्यते
3. क. ख. नीत्यु-
4. अ. अ. र्नृभिः
5. क. ख. र्नव-

साट्टालचर्यापरिघाभिरुग्रं
गम्भीरपातालतलस्थमाद्यम् ।
सितैर्नृपैः पाशवराग्रहस्तै-
[1]द्विपार्श्वसंस्थैर्विबुधैरुपेतम् ॥ २०

विचित्रपद्मोपलसंवृतानि
सरांसि नानाविहगाकुलानि ।
अम्भोजपत्रस्थितभृङ्गनादै-
रुद्गापयन्ती वलयैरनेकैः ॥ २१

कैलासशृङ्गप्रतिमानि तीरे-
ष्वनेकरत्नोपलसञ्चितानि ।
गृहाणि धन्याध्युषितानि नीचै-
रुपस्थितानां भुवि देव विप्रान् [नाकभाजाम्] ॥ २२

पद्मानि भृङ्गावनतानि चेलुः
पुनः पुनर्गुरुभारादजस्रम् ।
[2]जले तु येषां सुगृहाणि तस्थु-
र्द्विजातिदेवोपगतानि नित्यम् ॥ २३

सिताब्जमालार्चितगात्रवन्ति
हंसोत्तरीयाणि खगस्वनेन ।
सरांसि नैकानि कथां विचित्रां
पठन्ति यज्ञार्थविधिं पुराणम् ॥ २४

भ्रमन्नुपान्तेषु सरांसि पश्यन्
बृंदान्यनेकानि सुराङ्गनानाम् ।
विद्याधराणां च तथा हि कन्याः
स्नानाय तं देशमुपागताश्च ॥ २५

ततः कदाचिद् भ्रमता नृपोत्तम
प्रहृष्टमेकं सरसः सुखोदयम् ।

---

4. अ. द्विपार्श्वसंघैर्विविधै- 1. क. ख. जलेषु

प्राग्दृष्टमेकं तु तथैव तीरे
कुटिं प्रविष्टोऽस्मि यथा पुराहम् ॥ २६

यावत् कुटिं तां प्रविशामि राजं-
स्तपस्विनं संस्थितमेकदेशे ।
दृष्ट्वाभिगम्याथ वदामि याव-
दहं तु वाचाप्रतिमप्रभावम् ॥ २७

किं मां विप्र न जानीषे द्विदृष्टिरपि सत्तम ।
येन त्वं मूढवल्लोकमिममेकं न पश्यसि ॥ २८

पश्यसीममलं लोकं यन्न देवैस्तु दृश्यते ।
त्वत्प्रियार्थमयं लोको दर्शितस्ते द्विजोत्तम ॥ २९

साम्प्रतं पश्य लोकस्य मदीयस्य महामते ।
दधिक्षीरवहा नद्यस्तथा सर्पिर्मयान् घटान् ॥ ३०

गृहाणां हेमरत्नानां नानास्तम्भमयांस्तथा ।
रत्नोपलचितां भूमिं पद्मरागसमप्रभाम् ॥ ३१

पद्मरागप्रसूनाढ्यां सेवितां यक्षकिन्नरैः ।
एवमुक्तस्तदा तेन तापसेन नराधिप ॥ ३२

विस्मयापन्नहृदयस्तमेव द्विजमुक्तवान् ।
भगवंस्त्वदयं लोकः सर्वलोकपरो मतः ॥ ३३

सर्वलोका मया दृष्टा ब्रह्मादीनां महामुने ।
अयं चापूर्वलोको मे प्रतिभाति तपोधन ॥ ३४

संपदैश्वर्यतो भाति हर्म्यरत्नचयैस्तथा ।
सरोभिः सूदकैः पुण्यैर्जलजैश्च विशेषतः ॥ ३५

अत्यद्भुतमिमं लोकं दृष्टवानस्मि ते विभो ।
इत्थंभूतः कथं लोको भवांश्चेत्थं व्यवस्थितः ॥ ३६

कथं चैतत्त्वमेकस्य कश्च त्वं मुनिपुङ्गव ।
कथं खिलावृते वर्षे सरस्तीरे भवान् मुने ॥ ३७

दृष्टवानसि सैवाहं सरस्येव कुटीं मुने ।
हेमहर्म्याकुले लोके किं वा स्थानं न ते कुटी ॥ ३८

एवमुक्तः स भगवान् मयासौ मुनिपुङ्गवः ।
प्राह मह्यं यथावृत्तं यत्तु राजेन्द्र तच्छृणु ॥ ३९

अहं नारायणो देवो जलरूपी सनातनः ।
येन व्याप्तमिदं विश्वं त्रैलोक्यं सचराचरम् ॥ ४०

या सा चाप्यतनुस्तस्य देवस्य परमेष्ठिनः ।
सोऽयं वरुण इत्युक्तः स्वयं नारायणः स्थितः ॥ ४१

त्वया च सप्तजन्मानि अहमाराधितः पुरा ।
तेन त्रैलोक्य[1]नाशेऽपि मयैकस्त्वं तु रक्षितः ॥ ४२

एवमुक्तस्तथा तेन निद्राघूर्णितलोचनः ।
पतितोऽहं धरापृष्ठे तत्क्षणात् पुनरुत्थितः ॥ ४३

यावत् पश्याम्यहं राजंस्तमृषिं तु यथापुरम् ।
तावन्मेरुगिरेर्मूर्ध्नि पश्याम्यात्मानमात्मना ॥ ४४

समुद्रान् सप्त पश्यामि तथैव कुलपर्वतान् ।
सप्तद्वीपवतीं पृथ्वीं दृष्टवानस्मि पार्थिव ॥ ४५

एवं मद्देहवृत्तान्तं महीप कथितं तव ।
तच्छ्रुत्वा स महीपालो विस्मयं परमं ययौ ॥ ४६

तस्माद्धि दर्शनात् पुंसां महतां भूसुरोत्तम ।
सर्वं संपद्यते पुंसः सत्यमेतदुदीरितम् ॥ ४७

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे महापुरुषदर्शनं
नाम अष्टमोऽध्यायः

---

1. अ. नाथेन

## ॥ नवमोऽध्यायः ॥

### विभूतिमाहात्म्यकथनम्

सूतः—

पापं नाशयते कृत्स्नमपि जन्मान्तरार्जितम् ।
भस्मनो धारणं विप्राः शिवस्मरणपूर्वकम् ॥ १

[1]यथाविधि ललाटे तु अङ्गोपाङ्गे तु कृत्स्नशः ।
धारयेन्मन्त्रपूतं तु भस्म सर्वार्थसिद्धिदम् ॥ २

आयुष्यवर्धनं चैतत् सर्वस्यापि च देहिनः ।
पापघ्नं शीतमुष्णं च स्पर्शाच्छित्रपदप्रदम् ॥ ३

अत्र वः [2]कीर्तयिष्यामि हीतिहासं पुरातनम् ।
आसीद्वसिष्ठवंश्यस्तु धनञ्जय इति द्विजः ॥ ४

तस्य भार्याशतं चासीद्रूपलावण्यसंयुतम् ।
तासां ज्येष्ठा तु सुषुवे शलाकाकरुणं सुतम् ॥ ५

भार्याणां सङ्ख्यया विप्राः सुताश्चासंस्तपस्विनः ।
तेषां विभागः पुत्राणां विषमः परिकल्पितः ॥ ६

भ्रातृणाञ्च तथान्योन्यं वैरबन्धो महानभूत् ।
ज्ञातित्वे नैकनारीत्वे वैरं नियतमेव तत् ॥ ७

तथासौ करुणो गत्वा भवनाशनिकातटम् ।
नानामुनिगणैः सार्धं नारसिंहदिदृक्षया ॥ ८

नृसिंहदर्शनार्थं तु ब्राह्मणेन तु केनचित् ।
जम्बीरफलमुत्कृष्टमानीतं गन्धरूपवत् ॥ ९

करुणस्तु तदादाय व्यजिघ्रत् फलमुत्तमम् ।
तत्र स्थिता द्विजगणाः शापेन समयोजयन् ॥ १०

---

1. इमौ श्लोकौ (2, 3) अ. पुस्तके न स्तः 2. क. ख. कथयि-

मक्षिका भव पापात्मन् वर्षाणां शतमेव च ।
शापावसानं भविता दधीचेन महात्मना ॥ ११

अथ मक्षिकतां प्राप्तो भार्यामिदमभाषत ।
मक्षिकात्वमहं प्राप्तो मां गेहे पालयस्व भो ॥ १२

इत्युक्त्वा स तथाभूतो बभ्राम च ततस्ततः ।
अथैवंविधमाज्ञाय ज्ञातिनः पापनिश्चयाः ॥ १३

तद्वधे यत्नमास्थाय तैल[1]मध्य[ज्ज]ममारयन् ।
पतिं मृत[2]मथाज्ञाय दुःखिता सा कृशोदरी ॥ १४

तद्दुःखशमनार्थाय प्राह देवीमरुन्धतीम् ।
अरुन्धति महाभागे पतिं सञ्जीवयाशु मे ॥ १५

अथाग्निहोत्रजं भस्म सा गृहीत्वा ह्यरुन्धती ।
मृत्युञ्जयेन मन्त्रेण मृतजन्तौ तदाक्षिपत् ॥ १६

उदतिष्ठत तज्जन्तुर्भस्मनोऽस्य प्रभावतः ।
ततो वर्षशते पूर्णे ज्ञातिरेको ह्यमारयत् ॥ १७

पुनर्मृते भर्तरि सा दुःखेन महतान्विता ।
दधीचिं नाम विप्रेन्द्रं महामाहेश्वरं मुनिम् ॥ १८

जगाम शरणं साध्वी मुनिराह ततो वचः ।
त्रियायुषाविहीनं तु जमदग्निं तपोनिधिम् ॥ १९

भस्मैव जीवयामास काश्यपश्च तथाविधम् ।
तस्माद्भस्म समानीय पतिं ते जीवयाम्यहम् ॥ २०

इत्युक्त्वा भस्मनैवाशु दधीचिस्तमजीवयत् ।
स्वस्वरूपमथो गत्वा स्वमाश्रमपदं ययौ ॥ २१

दधीचिमपि सा साध्वी गृहमानीय [3]भोजनम् ।
प्रार्थयामास [4]विप्रर्षिं भुक्तवानपि स द्विजः ॥ २२

---

1. क. ख. मध्ये विनिक्षिपन्
2. क. ख. मथ ज्ञात्वा
3. क. ख. भोजनं
4. क. ख. विप्रर्षिः

मुक्तव[1]त्यपि विप्रेन्द्रे कोटिशिष्याः समागताः ।
तथा देवाः समायाता भस्मोद्धूलितविग्रहाः ॥ २३

[2]दधीचिं च नमस्कृत्य पप्रच्छुः शिवपूजकम् ।

देवाः—

अस्माकं तु पुरा ज्ञानं नष्टमासीन्महामते ॥ २४

गौतमस्य च भार्यां वै दृष्ट्वा कामातुरा वयम् ।
तां वै कामयमानानां नष्टं ज्ञानमभूच्च नः ॥ २५

ततः सर्वे वयं भीता गता दुर्वाससं मुनिम् ।
स उवाचाथ नः सर्वान् शमयिष्यामि वो मलम् ॥ २६

शतरुद्रेण मन्त्रेण मन्त्रितं भस्म शंभुना ।
ममापि दत्तं तेनैव ब्रह्महत्यादिशान्तये ॥ २७

इत्येवमुक्त्वा सर्वेषां दत्तवान् भस्म चोत्तमम् ।
अथ तद्वचनादेव वयं सर्वे गतैनसः ॥ २८

शतरुद्रियमन्त्रेण भस्मोद्धूलितविग्रहाः ।
निर्धूत[3]पापाः सर्वेऽपि तद्भस्मपरिलाञ्छनाः ॥ २९

आश्चर्यमेतज्जानीमो भस्मसामर्थ्यमीदृशम् ।

दधीचिः—

शैवस्य भस्मनो भक्तिं संक्षेपेण वदामि वः ॥ ३०

विस्तरेण न शक्यं वै वक्तुं वर्षशतैरपि ।
अत्रैव कथयिष्यामि पुरावृत्तं तु देवयोः ॥ ३१

हरिशङ्करयोः सर्वं ब्रह्महत्यादिनाशनम् ।
पुरा चैकार्णवे घोरे ब्रह्मणः प्रलये सति ॥ ३२

महाविष्णुश्च भगवान् शयितैव महाम्भसि ।
तन्नाभिमण्डले केचिद्रोमशाद्या मुनीश्वराः ॥ ३३

---

1. क. ख. -त्यथ
2. इत आरभ्य 24-29 श्लोकाः अ. पुस्तके न सन्ति
3. क. ख. किल्बिषास्सर्वे

संस्थिता देवदेवेशमीश्वरं समुपासते ।
अथ विष्णुश्च शयनादुत्थितस्तु सिसृक्षया ॥ ३४

ध्यानयोगपरो भूत्वा न किञ्चित्पर्यपश्यत ।
एतस्मिन्नन्तरे प्राप्तो भगवान् परमेश्वरः ॥ ३५

तं दृष्ट्वा तु महेशानं तुष्टाव गरुडध्वजः ।
तस्य स्तवेन सन्तुष्टः प्राह तं गिरिजापतिः ॥ ३६

शिवज्ञानं प्रदास्यामि कुरु स्नानञ्च वारुणम् ।
भस्मस्नानं ततः पश्चात्ततो ज्ञानं ददामि ते ॥ ३७

अथ स्नात्वा तु [1]विधिवद्बाहू उत्तीर्य चोक्तवान् ।
स्नातोऽस्मि किमतः कार्यं शम्भुराह हरिं ततः ॥ ३८

[2]भस्मस्नानेन संशुद्धौ लप्स्यसे परमं पदम् ।
स्ववक्षःस्थितभस्मैव नखेनादाय शङ्करः ॥ ३९

प्रणवेनाभिमन्त्र्यैव शिवेन च विशेषतः ।
तद्भस्म धृत्वा स हरिर्दिव्यं ज्ञानमवाप्तवान् ॥ ४०

सामर्थ्याद्भस्मनो विष्णुः कृतकृत्योऽभवत्तदा ।
इत्थमुक्तं मया ज्ञानं भस्मसम्भवमादितः ॥ ४१

तस्माद्यूयं सुराः सर्वे धारयध्वं तदादरात् ।

सूतः—

विस्मयोत्फुल्लनयना देवा[3]स्त्वासंस्तथास्त्विति ॥ ४२

तस्माद्धार्यं विशेषेण भस्म पुंसा विजानता ।
य इदं शृणुयान्नित्यं पुण्याख्यानमनुत्तमम् ॥
स मुक्तः सर्वपापेभ्यो यात्यसौ शाङ्करं पदम् ॥ ४३

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे विभूतिमाहात्म्यकथनं नाम नवमोऽध्यायः

---

1. क. ख. विधिना बाहू
2. अ. भस्मनानेन
3. क. ख. स्त्वासन्

## ॥ दशमोऽध्यायः ॥

### शिवपरिचर्याकथनम्

सूतः—

नाराधितोऽपि यः पुंसामैहिकामुष्मिकं फलम् ।
ददाति भगवान् देवः कस्तं न प्रतिपूजयेत् ॥ १

यद्वा तद्वा शिवं कर्म पुमान् कृत्वा शिवालये ।
भोगाननेकान् संप्राप्य सर्वलोकाधिको भवेत् ॥ २

आत्मार्थं वा शिवार्थं वा यः कुर्याच्छिवमन्दिरे ।
शिवप्रीतिकरं कर्म स तु सर्वाधिको भवेत् ॥ ३

अस्मिन्नर्थे पुरावृत्तमाख्यानं प्रवदामि वः ।
कश्चिदासीद् द्विजोऽवन्त्यां शिवशर्मेति विश्रुतः ॥ ४

पुत्रक्षेत्रकलत्रादिव्यापारादिरतः सदा ।
विहायाथ स गार्हस्थ्यं धनार्थं लोभमोहितः ॥ ५

प्रचचार महीमेनामनेकग्रामसङ्कुलाम् ।
भार्या तस्य विशालाक्षी तस्मिन्नथ विनिर्गते ॥ ६

स्वच्छन्दचारिणी नित्यं बभूवानङ्गमोहिता ।
तस्यां कदाचित् पुत्रस्तु शूद्राज्जातो विधेर्बलात् ॥ ७

दुष्टस्त्वतीव निश्शङ्को नाम्ना दुःसह इत्युत ।
सोऽथ कालेन महता नाम कर्मप्रवर्तितः ॥ ८

व्यसनोपहतः पापस्त्यक्तो बन्धुजनैस्तदा ।
पूजोपकरणद्रव्यं स कस्मिंश्चिच्छिवालये ॥ ९

बहुदोषास्पदं दृष्ट्वा हर्तुकामोऽविशत्तदा ।
यावद्दीपः शमं प्राप्तो वर्तिच्छेदाद् द्विजोत्तमाः ॥ १०

तावदेव दशा दत्ता द्रव्यान्वेषणकारणात् ।
तेन दीपप्रकाशेन लिङ्गं चापि प्रकाशितम् ॥ ११

प्रबुद्धश्चोत्थितस्तस्माच्छिवपूजाकरो द्विजः ।
कोऽयं कोऽयमिति प्रोच्चैर्व्याहरन् परिघाकरः ॥ १२

स च प्राणभयाविष्टो वित्रस्तश्चातिमूढधीः ।
निनिन्द चात्मनो [1]निन्दन् कर्म चापि सुदुःखितः ॥ १३

[2]करवालैर्हतो वध्यो मृतः कालादभूत्ततः ।
गान्धारविषये ख्यातो राजा नाम्ना सुदर्शनः ॥ १४

गीतवाद्यरतः स्तब्धो वेश्यापानरतस्तथा ।
प्रजोपद्रवकृन्मूर्खः सर्वकर्मबहिष्कृतः ॥ १५

किञ्चार्चयत् सदैवासौ लिङ्गं राज्यक्रमागतम् ।
पुष्पस्रग्धूपनैवेद्यगन्धादिभिरमन्त्रवत् ॥ १६

मखेषु च सदाकालं देवतायतनेष्वपि ।
कृतवान् परिचर्यां च बहुशः शिवसद्मनि ॥ १७

एवंविधः स भूपालो मृगयाहृतचेतनः ।
पूर्वारिभिर्हतो धूर्तैः सरस्वत्यास्तटे शुभे ॥ १८

शिवपूजाप्रभावेण विध्वस्ताशेषकिल्बिषः ।
ततो विश्रवसश्चासौ पुत्रोऽभूद्बहुविश्रुतः ॥ १९

यः स एव महातेजाः सर्वयक्षाधिपोऽभवत् ।

सूतः—

तस्माज्ज्ञानादथाज्ञानात् कृतं कर्म शिवालये ॥ २०

शिवस्य प्रीतिदं तत्तु कुरुते सुमहत्पदम् ।
तत् कर्मणा महज्ज्ञानं प्राप्नोति शिवदर्शनम् ॥ २१

---

1. अ. सीदन् 2. क. ख. पुरःपाले-

स्वर्गस्य मार्गा बहवः प्रविष्टा-
स्ते यत्नसाध्याः कुटिलाश्च विघ्नाः ।
निमेषमात्रेण सदाफलं तु
ददाति शम्भोः परिचारकर्म ॥ २२

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे शिवपरिचर्याकथनं नाम
दशमोऽध्यायः

## ॥ एकादशोऽध्यायः ॥

### कर्ममोक्षकथनम्

ऋषयः—

कर्मिणा प्राप्यते मोक्ष उताहो ज्ञानिना मुने ।
एतं नः संशयं छिन्धि सूत पौराणिकोत्तम ॥ १

सूतः—

मुक्तिर्नानाविधा प्रोक्ता सायुज्यादिप्रभेदतः ।
तत्र सायुज्यरूपाया मुक्तेः साक्षात्तु कारणम् ॥ २

सम्यग्ज्ञानं न कर्मोक्तं नानयोश्च समुच्चयः ।
कर्मणैव हि सिध्यन्ति पुंसामन्याश्च मुक्तयः ॥ ३

कर्तारं कर्म बध्नाति खलु वेदविदां वराः ।
यत्किञ्चित्कर्मजं कर्म कुरुते साध्वसाधु वा ॥ ४

सर्वं नारायणे न्यस्य कुर्वन् मुक्तो भविष्यति ।
अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ॥ ५

वसुरासीन्नृपश्रेष्ठो विद्वान् दानपतिः पुरा ।
चाक्षुषस्य मनोः काले ब्राह्मणान्वयवर्धनः ॥ ६

एकदा ब्रह्मणः सद्म गतवांस्तद्दिदृक्षया ।
पथि चैत्ररथं दृष्ट्वा विद्याधरपतिं द्विजाः ॥ ७

अपृच्छत्तं वसुः प्रीत्या ब्रह्मणोऽवसरं द्विजाः ।
सोऽब्रवीद्देवसमितिर्वर्तते ब्रह्मणो गृहे ॥ ८

एवं श्रुत्वा वसुस्तस्थौ द्वारि ब्रह्मौकसस्तदा ।
तावत्तत्रैव रैभ्यस्तु आजगाम महातपाः ॥ ९

तं राजापूज्य पप्रच्छ क्व प्रयासीति वै मुनिः ।

रैभ्यः—

अहं बृहस्पतेः पार्श्वमागतोऽस्मि महानृप ॥ १०

किञ्चित्कार्यान्तरं प्रष्टुमहं देवपुरोहितम् ।
एवं वदति रैभ्ये तु ब्रह्मणस्तन्महत्पदम् ॥ ११

उत्तस्थुः स्वानि धिष्ण्यानि गता देवगणास्तदा ।
तावद्बृहस्पतिस्तत्र रैभ्येण सह संविदम् ॥ १२

कृत्वा स्वधिष्ण्यमगमद्वसुनापि सुपूजितः ।
अथ देवगुरुः प्राह रैभ्यमेतद्वचस्तदा ॥ १३

किं ते करोमि विप्रेन्द्र कथ्यतां राजसत्तम ।

वसुः—

बृहस्पते कर्मिणा किं प्राप्यते ज्ञानिनाथवा ॥ १४

मोक्ष एतन्ममाचक्ष्व पृच्छतः संशयं प्रभो ।

बृहस्पतिः—

यत्किञ्चित्पुरुषः कर्म कुरुते साध्वसाधु वा ॥ १५

सर्वं नारायणे न्यस्य कुर्वन् मुक्तिं प्रयास्यति ।
श्रूयते [1]च महाराज संवादो विप्रलुब्धयोः ॥ १६

आत्रेयो ब्राह्मणः कश्चिद्वेदाभ्यासरतो मुने ।
वसत्यविरतं विप्राः सावित्रीव्रततत्परः ॥ १७

नाम्ना संयमनः पूर्वमेकस्मिन् दिवसे नदीम् ।
धर्मारण्यं गतस्तत्र स्नातुं भागीरथीं नदीम् ॥ १८

ततः सन्नं महायूथं हरिणानां ददर्श सः ।
लुब्धो विष्टरको नाम धनुष्पाणिः कृतान्तवत् ॥ १९

आस्थितो मृगयां कर्तुं चापे संयोज्य सायकम् ।
ततः संयमनो विप्रो दृष्ट्वा तं मृगयारतम् ॥ २०

वारयामास मा भद्र जीवघातमिमं कुरु ।
एतच्छ्रुत्वा वचो व्याधः स्मितपूर्वमिदं वचः ॥ २१

1. क. ख. हि

उवाच नाहं हिंस्यामि वृथा जीवान् द्विजोत्तम ।
कः केन हन्यते जन्तुर्जन्तुः कः केन रक्ष्यते ॥ २२

हन्ति रक्षति चैवात्मा असत् साधु समाचरन् ।
परमात्मा स्वयंभूतैः क्रीडत्यव्याहतः स्वयम् ॥ २३

कृत्वा मृदा बलीवर्दांस्तद्वदेतन्न संशयः ।
अहंभावः सदा ब्रह्मन्नविधेयं मुमुक्षुणाम् ॥ २४

यत्रात्मना प्रणीतश्च जगदेतद्विचेष्टते ।
तत्राहमिति यः शब्दः साधुत्वं न च गच्छति ॥ २५

इत्याकर्ण्य स विप्रेन्द्रो द्विजः संयमनस्तदा ।
विस्मयेनाब्रवीद्वाक्यं लुब्धं विष्टरकं द्विजाः ॥ २६

किमेतदुच्यते भद्र प्रत्यक्षं हेतुमद्वचः ।
एतच्छ्रुत्वा पुनर्विप्रं लुब्धकः प्राह धर्मवित् ॥ २७

कृत्वा लोहमयं [1]जालं तस्याधो ज्वलनं कुरु ।
ततो विप्रोऽपि तत्सर्वं कृत्वा तु विरराम ह ॥ २८

ज्वलिते तु तदा वह्नौ तज्[2]जालं लोह[3]सम्भवम् ।
गवाक्षनिर्ग[4]तं जालं बभौ कादम्बमालवत् ॥ २९

[5]पृथक् पृथक् सहस्राणि निश्चेरुर्जलिकैः शिखाः ।
एकस्थानगतस्यापि वह्नेरायसजालकैः ॥ ३०

तदा लुब्धोऽब्रवीद्वाक्य[6]मेकां ज्वालां महामते ।
गृहाण येन शेषाणां करिष्याम्यपकारिणम् ॥ ३१

एवमुक्त्वा हुताशं तु तोयपूर्णे घटे द्रुतम् ।
चिक्षेप सहसा [7]वह्निं प्रशशामाशु पूर्ववत् ॥ ३२

---

1. ख. ज्वालं
2. ख. ज्वालं
3. क. ख. सन्निभम्
4. क. ख. -तज्ज्वालं
5. अ. पुस्तके अर्धमिदं नास्ति
6. ख. मेता ज्वाला
7. क. ख. वह्निः

ततोऽब्रवील्लुब्धचरो ब्राह्मणं तं तपोनिधिम् ।
भगवन् या त्वया [1]ज्वाला गृहीतासीद्धुताशने ॥ ३३

प्रयच्छ येन मार्गेण मांसान्या [2]तस्य भक्षय ।
एवमुक्ते तदा विप्रो यावदायसजालकम् ॥ ३४

पश्येत्तावन्न तत्राग्निर्मूलनाशे गतेऽक्षमः ।
ततो विलक्षभावेन ब्राह्मणः संशितव्रतः ॥ ३५

[3]तूष्णीमेव स्थितस्तावल्लुब्धको वाक्यमब्रवीत् ।
एकस्य ज्वलतो वह्नेर्बहुशाखस्य सत्तम ॥ ३६

मूलनाशे भवेन्नाशस्तद्वदेतदपि द्विज ।
आत्मनः प्रकृतिस्थस्य भूतानां संशयो भवेत् ॥ ३७

विकृता वृत्तयो भूय एषैव हि जगत्स्थितिः ।
पिण्डग्रहणधर्मेण यद्यस्य विहितं व्रतम् ॥ ३८

तत्तदात्मनि संयोज्य कुर्वाणो नावसीदति ।
एवमुक्तेन व्याधेन ब्राह्मणस्य द्विजोत्तमाः ॥ ३९

पुष्पवृष्टिरथाकाशात् पपातोरसि तस्य वै ।
विमानानि च दिव्यानि कामगानि महान्ति च ॥ ४०

बहूनि रत्नमुख्यानि ददर्शे ब्राह्मणोत्तमः ।
तेषां विष्टरकं लुब्धं सर्वेषु च मुदा स्थितम् ॥ ४१

ददर्शे ब्राह्मणस्तत्र कामरूपिणमुत्तमम् ।
अद्वैतवासनासिद्धं योगाद्दृढशरीरकम् ॥ ४२

दृष्ट्वा विप्रो मुदा युक्तः प्रययौ निजमाश्रमम् ।
एवं ज्ञानवतः कर्म कुर्वतोऽपि स्वजातिजम् ॥ ४३

---

1. क. ख. बाला
2. क. ख. धत्स्व
3. क. ख. तूष्णींभूतः

भवेन्मुक्तिर्द्विजश्रेष्ठ रैभ्यराजन्यशो ध्रुवम् ।
एवं तौ संशयच्छेदं प्राप्तौ रैभ्यवनू द्विजाः ॥
बृहस्पतेस्ततो धिष्ण्याज्जग्मतुर्निजमाश्रमम् ॥ ४४

सूतः—

तस्मात्कर्माणि कुर्वीत ब्रह्मार्पणधिया नरः ।
तत् कर्म ज्ञानमुक्ती च ददाति न च बन्धकृत् ॥ ४५

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे कर्मणा मोक्षकथनं नाम
एकादशोऽध्यायः

## ॥ द्वादशोऽध्यायः ॥

### निर्माल्यलङ्घनदूषणम्

सूतः—

न लङ्घयेच्च निर्माल्यं विष्णोर्वा शङ्करस्य वा ।
प्रमादाल्लङ्घितं चेत्तत् प्रायश्चित्तं समाचरेत् ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
पुरा हि शन्तनुर्भक्तो नृसिंहस्य महात्मनः ॥ २

नारदोक्तविधानेन पूजयामास माधवम् ।
कदाचित्तेन निर्माल्यं नारसिंहस्य लङ्घितम ॥ ३

तस्मिन्नेव क्षणे राजा शन्तनुः स्यन्दनोत्तमम् ।
देवदत्तं समारोढुमशक्तोऽभून्महीक्षुराः ॥ ४

तथा च राज्ञा किमियं स्यन्दनारोहणे गतिः ।
भग्नेति चिन्तानिर्विण्णो नारदस्तत्पुरः स्थितः ॥ ५

किं विषण्णस्ततो राजन्निति पप्रच्छ शन्तनुम् ।

शन्तनुः—

नारदैतन्न जानामि गतिभङ्गस्य कारणम् ॥ ६

इत्युक्तो नारदो ज्ञात्वा ध्यानात्तत्कारणं ततः ।
शन्तनुं प्राह राजानं विनयावनतं स्थितम् ॥ ७

यत्र क्वापि महाराजं नृसिंहस्य महात्मनः ।
निर्माल्यं लङ्घितं तस्माद्रथारोहणकर्मणि ॥ ८

गतिर्भग्ना महाराज श्रूयतामस्य कारणम् ।
अन्तर्वेद्यां महाराज कश्चिदासीन्महामतिः ॥ ९

मालाकारो ऋषि[1]र्नाम्ना तेन बृन्दावनं कृतम् ।
अनेकविधपुष्पार्थं वनानि स विनिर्ममे ॥ १०

मल्लिकामालतीजातिबकुलानि समन्ततः ।
तस्य प्राकारमकरोदलङ्घ्यमतिकोमलम् ॥ ११

तस्यान्तः स्वगृहं चक्रे मालाकारो महामतिः ।
सुपुष्पं तद्वनं चासीद्गन्धामोदितदिङ्मुखम् ॥ १२

भार्यया सह पुष्पाणि समाहृत्य वने वने ।
कृत्वा मालां यथान्यायं नरसिंहाय नित्यशः ॥ १३

ददौ काश्चिद् द्विजेभ्यश्च काश्चिद्विक्रीय पोषणम् ।
स चक्रे जीवनार्थाय भार्यादेरात्मनश्च ह ॥ १४

अथ स्वर्गात् समागत्य इन्द्रपुत्रो रथेन वै ।
अप्सरोगणसंयुक्तो निशि पुष्पाणि संहरन् ॥ १५

तद्गन्धलिप्सुः सर्वाणि चिन्वन्नाहृत्य गच्छति ।
हृते दिने दिने पुष्पे मालाकारोऽतिबुद्धिमान् ॥ १६

नान्यद्द्वारं वनस्यास्यालङ्घ्यं प्राकारमूर्जितम् ।
केनोच्छ्रायेण पुष्पाणि नाशं यान्तीति चिन्तयन् ॥ १७

जाग्रदेव निशीथेऽथ वनमध्ये व्यवस्थितः ।
पूर्ववच्छक्रपुत्रोऽपि पुष्पाण्याहृत्य वै गतः ॥ १८

तं दृष्ट्वा दुःखितोऽतीव निद्रामाप वने तु सः ।
तस्य स्वप्ने समागत्य नृहरिर्वाक्यमब्रवीत् ॥ १९

पुत्र भो दुःखमुत्सृज्य मम निर्माल्यमुत्तमम् ।
आनीय पुष्पारामस्य परितः क्षिप वेगतः ॥ २०

एतन्मुक्त्वेन्द्रपुत्रस्य नान्यदस्ति निवारणम् ।
इति श्रुत्वा वचः क्षिप्रं नरसिंहस्य बुद्धिमान् ॥ २१

---

1. क. ख. नाम

बुद्ध्वानीय च निर्माल्यं तथा चक्रे यथोचितम् ।
सोऽप्यागत्य यथापूर्वं रथेनालङ्कृतेन सः ॥ २२

रथादुत्तीर्य निर्माल्यं तथैव स्थितवान् भुवि ।
ततः सङ्गृह्य पुष्पाणि रथमारोढुमाययौ ॥ २३

अशक्तिरभवद्भूयो रथारोहणकर्मणि ।
तं रथारोहणेऽशक्तं दृष्ट्वा सूतोऽवदद्वचः ॥ २४

इन्द्रपुत्र नृसिंहस्य सद्यो निर्माल्यलङ्घनात् ।
गति[1]भङ्गोऽभवत् स्वर्गं गच्छामि त्वं वसावनौ ॥ २५

तेनैवमुक्तः सूतेन तमाह हरिनन्दनः ।
सारथे कर्मणा केन [2]पापशान्तिर्भवेन्मम ॥ २६

उक्त्वा तत्कर्म गच्छ त्वं त्रिदिवं सारथे [3]द्रुतम् ।

सारथिः—

रामसत्रे द्वादशाब्दे कुरुक्षेत्रे तु नित्यशः ॥ २७

द्विजोच्छिष्टापनयनं कृत्वा त्वं सिद्धिमाप्स्यसि ।
इत्युक्त्वा स गतः स्वर्गं सारथिर्देवसेवितम् । २८

इन्द्रसूनुः कुरुक्षेत्रं प्राप्य सारस्वतं ह्रदम् ।
रामसत्रे तथा कृत्वा द्विजोच्छिष्टप्रमार्जनम् ॥ २९

पूर्णे सत्रे तु तत्रत्यास्तमूचुः कृपयान्विताः ।
न च भुङ्क्षे न स्वपिषि कस्त्वमुच्छिष्टमार्जकः ॥ ३०

इत्युक्तः कथयित्वा स यथावृत्तमनुक्रमात् ।
जगाम त्रिदिवं राजन् रथेन तनयो हरेः ॥ ३१

तस्मात्त्वमपि राजेन्द्र ब्राह्मणोच्छिष्टमार्जनम् ।
आदरात् कुरु रामस्य सत्रे द्वादशवत्सरे ॥ ३२

ब्राह्मणेभ्यः परं नास्ति सर्वपापहरं परम् ।
एवं कृते भवेद्भूयः स्यन्दनारोहणे गतिः ॥ ३३

---

1. ख. भङ्गो भवेत्
2. क, ख. ताप-
3. अ. ध्रुवम्

इत ऊर्ध्वं च निर्माल्यं न लङ्घय महामते ।
नरसिंहस्य देवस्य तथान्येषां दिवौकसाम् ॥ ३४

इत्युक्तः शन्तनुस्तेन ब्राह्मणोच्छिष्टमार्जनम् ।
कृत्वा द्वादशवर्षं तु आरुरोह रथं पुनः ॥ ३५

[1]सूतः—

एवं वः कथितो विप्रा दोषो निर्माल्यलङ्घने ।
पुण्यं तथा द्विजानां तु प्रोक्तमुच्छिष्टमार्जने ॥ ३६

भक्त्या द्विजोच्छिष्टमपि प्रमार्जये-
च्छुचिर्नरो यस्तु समाहितात्मा ।
स [2]पापबन्धं [3]परिहाय भुङ्क्ते
गवां प्रदानस्य फलं प्रयाति ॥ ३७

तस्मान्न कुर्याच्छ्रेयोऽर्थी देवनिर्माल्यलङ्घनम् ॥ ३८

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे निर्माल्यलङ्घनदूषणं नाम द्वादशोऽध्यायः

---

1. अयं श्लोकः अ. पुस्तके नास्ति
2. अ. शाप
3. क. ख. प्रवि॰

## ॥ त्रयोदशोऽध्यायः ॥

### शिवक्षेत्रनिवासमाहात्म्यकथनम्

श्रीसूतः—

सर्वेषामेव दानानां सर्वेषां तपसामपि ।
शिवक्षेत्रनिवासस्तु ददाति सुमहत्पदम् ॥ १

अत्रैवोदाहरन्तीममितिहासं [1]पुरातनम् ।
शिवेन कथितं पूर्वं विष्णवे सर्वजिष्णवे ॥ २

शृणु विष्णो महाबुद्धे शिवक्षेत्रनिवासतः ।
यत्फलं लभते मर्त्यः कथयामि समासतः ॥ ३

वेदारण्यमिति ख्यातं क्षेत्रमस्ति महत्तरम् ।
दक्षिणाम्भोनिधेस्तीरे सार्धयोजनविस्तृतम् ॥ ४

अनेकऋषिसङ्कीर्णं पादयोजनमायतम् ।
श्रीमद्वल्मीकसंज्ञस्य मम स्थानस्य दक्षिणे ॥ ५

नानाद्रुम[2]लताकीर्णं नानापक्षिसमाकुलम् ।
श्रवणादेव सर्वेषामन्तःकरणशुद्धिदम् ॥ ६

वेदारण्यं महत्तत्र वर्तते कमलेक्षण ।
पुरा सर्गे महाविष्णो प्रलये विलयं गते ॥ ७

मयि संस्काररूपेण स्थिता वेदाः सनातनाः ।
कल्पादौ पूर्ववन्मत्तः प्रसृता विमलाः पुनः ॥ ८

समस्तलोकरक्षार्थं हरे भूत्वा [3]शरीरिणः ।
पूजयामासुरीशानं वेदारण्यस्य नायकम् ॥ ९

---

1. क. ख. पुराविदः
2. क. ख. -नाना-
3. अ. क. समीरणः

सोऽपि प्रसादमकरोद्वेदानामम्बिकापतिः ।
यूयं समेताः क्षेत्रेऽस्मिन् मां पूजयत नित्यशः ॥ १०

इदं त्व आख्यया ख्यातं वेदारण्यं भविष्यति ।
इति तेषां वरं दत्त्वा शिवस्तत्र प्रतिष्ठितः ॥ ११

तदा प्रभृति तत्क्षेत्रं वेदारण्यं विदुर्बुधाः ।
एवंविधं मम क्षेत्रं कश्चित् कोलाहलाभिधः ॥ १२

वृषलः पापचरितः पशुमार्गैकतत्परः ।
कामेन पीडितः स्वस्य पितरं [1]पङ्कजेक्षण ॥ १३

हत्वा मातरमादाय गत्वा पङ्कजलोचन ।
वेदारण्यं यथाकामं चरित्वा मरणं गतः ॥ १४

[2]तत्र वर्तनमात्रेण स तु वै पुरुषाधमः ।
प्रनष्टपापः शुद्धात्मा वेदारण्यव्रतो मम ॥ १५

प्रसादाद्ब्राह्मणो भूत्वा वेदान्तज्ञानमाप्तवान् ।
तस्माद्विमुक्तिकामानां विशिष्टेषु जनार्दन ॥ १६

शिवक्षेत्रेषु मद्भक्त्या केवलं वर्तनं परम् ।

सूतः—

एतच्छ्रुत्वा केशवोऽपि शङ्करात् प्रीतिमाप्तवान् ।
तस्माद्वासः शिवक्षेत्रे महापातकनाशनः ॥ १७

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे शिवक्षेत्रनिवासमाहात्म्यकथनं
नाम त्रयोदशोऽध्यायः

---

1. क. ख. कमलेक्षण 2. अ. पुस्तके इतस्त्रयः श्लोका न दृश्यन्ते

## ॥ [1]चतुर्दशोऽध्यायः ॥

### शिवक्षेत्रदर्शनमाहात्म्यकथनम्

सूतः—

इह जन्मनि चान्यस्मिन् यः कृतः पापसञ्चयः ।
सर्वोऽपि नश्यति क्षिप्रं शिवक्षेत्रस्य दर्शनात् ॥ १

पुरा खल्विममेवार्थं सर्वानुग्राहकः शिवः ।
कृपया परया प्राह विष्णवे सर्वजिष्णवे ॥ २

विष्णोःसकाशादश्रौषींद्ब्रह्मा लोकपितामहः ।
सनत्कुमारो भगवांस्तस्मादेतदवाप्तवान् ॥ ३

सनत्कुमारात् सर्वज्ञात् कृष्णद्वैपायनो मुनिः ।
तस्मादवाप्तविज्ञानस्तस्मादेतच्छ्रुतं मया ॥ ४

तदहं संप्रवक्ष्यामि शृणुत द्विजसत्तमाः ।
सद्गुरोः कृपया सद्भिः सहवासेन भूयसा ॥ ५

पूर्वपुण्यविपाकाच्च पापं न कुरुते जनः ।
ज्ञानतोऽज्ञानतो वापि यदि दुष्कृतकृद्भवेत् ॥ ६

स याति नरकान् घोराननुभुङ्क्ते च वेदनाः ।
ततः कर्मानुगुण्येन जन्म [2]प्राप्य महीतले ॥ ७

तांस्तान् रोगानवाप्नोति तत्तत्पापैकसूचकान् ।

ऋषयः—

पापानां सूचका रोगा इति प्रोक्तं त्वयानघ ॥ ८

---

1. आसन्नध्याये आदितः पञ्चदश श्लोकाः अ. पुस्तके न सन्ति
2. ख. प्रायो

किं पापं केन [1]रोगेण सूच्यते तद्वदाद्य नः ।

सूतः—

भोगावशिष्टपापानां लक्षणं प्रवदामि वः ॥ ९

ब्रह्महा क्षयरोगी स्यात् सुरापी श्यावदन्तकः ।
स्वर्णापहारी कुनखी दुश्चर्मा गुरुतल्पगः ॥ १०

परिवादरतः पङ्गुरन्धश्च बधिरस्तथा ।
अनुकीर्तनकृन्मर्त्यः [2]खर्वस्वामी भवेत्ततः ॥ ११

गुरुनिन्दापरो नित्यमपस्मारी भवेन्नरः ।
भगंदरी गुरोराज्ञाभङ्गकारी न संशयः ॥ १२

गुरोर्मात्सर्यकारी तु विट्कृमिः स्यान्न संशयः ।
गुर्ववज्ञापरस्तद्वच्छिद्रद्रोही तथा भवेत् ॥ १३

गुरोः शुश्रूषणेऽसक्तो निष्प्रज्ञः स्यात्स मानवः ।
विष्णुद्रोही नरः साक्षात् कृकलासत्वमाप्नुयात् ॥ १४

यो वेददूषको मर्त्यः स चण्डालत्वमाप्नुयात् ।
वेदान्तदूषकः साक्षात्पुल्कसः स्यान्न संशयः ॥ १५

उन्मत्तो वेदविज्ञानां दूषकः पुरुषाधमः ।
रजस्वलाभिगन्ता स्यादन्त्यजातिस्तु मानवः ॥ १६

अग्निदो मनुजः कुष्ठी गरदश्च तथैव च ।
[3]शस्त्रपाणिस्तथा मर्त्यो रूप्यचोरस्तु दद्रुणः ॥ १७

कूटकृन्मुखरोगी स्यात् कूटसाक्षी तथैव च ।
कूटकृत्यसहायश्च तदुपायप्रदोऽपि च ॥ १८

पितृमातृसुतत्यागी बालत्यागी तथैव च ।
अक्षिरोगी भवेन्नित्यं बन्धुत्यागी तथैव च ॥ १९

अल्पायुश्चाप्रदानेन प्रतिज्ञातस्य मानवः ।
पत्नीबहुत्वेऽप्येकस्यां रमते षण्ड एव सः ॥ २०

1. क. पापेन
2. ख. खरः स्वामी
3. इदमर्धमनन्तरार्धं च अ. पुस्तके नास्ति

अन्नापहारी मन्दाग्निर्जिह्वारोगी भवेत्सदा ।
अग्रभुङ् मूलरोगी स्यान्मृष्टभुक् च तथैव च ॥ २१

पञ्चयज्ञविनिर्मुक्तो विड्वराहो भवेन्नरः ।
पर्वमैथुनकृन्मर्त्यः प्रमेही स्यान्न संशयः ॥ २२

अभ्यागतपरित्यागी कपोलः [1]पिलकृद्भवेत् ।
तथानिथिपरित्यागी भवेन्नात्र विचारणा ॥ २३

स्वात्मोत्कर्षपरो नित्यं पामरः पशुरेव च ।
गोघ्नश्चैव कृतघ्नश्च जात्यन्धः स्यान्न संशयः ॥ २४

[2]निःस्नेहकश्च भार्यायां [3]गलगण्डी भवेन्नरः ।
पिशुनः पूतिवक्त्रः स्यान्नरस्त्वन्नादिविक्रयी ॥ २५

एडकाज[4]गवाश्वादिविक्रेता व्याध एव हि ।
ज्ञानापहारी मूकः स्यान्मन्त्रचोरस्तथैव च ॥ २६

[5]अभक्ष्यभक्षको मर्त्यो गण्डमाली भवेत्सदा ।
रङ्गोपजीवी कुमतिर्भवेन्नात्र विचारणा ॥ २७

अन्धः पुस्तकचोरः स्यात्तथा स्याल्लेखिनीहरः ।
सदा पुण्यकथाद्वेषी वक्रनासो भवेन्नरः ॥ २८

शिष्टाचारस्य धर्मस्य दूषको राक्षसो भवेत् ।
ज्ञानयोगगुरुद्वेषी वक्रास्यो वेददूषकः ॥ २९

पुण्यकर्मप्रवृत्तस्य [6]प्रतिषेद्धा कृमिर्भवेत् ।
देवद्रव्यापहारी स्यान्मनुष्यो वायुभक्षकः ॥ ३०

तटाकारामभेत्ता स्यादङ्गहीनस्तु मानवः ।
मर्यादाभेदको [7]दासो भवेन्नात्र विचाराणा ॥ ३१

---

1. अ. पिष्टकी
2. क. ख. नि स्नेहश्चैक-
3. क. ख. गण्डमाली
4. क. गराश्वा अ. गजा
5. इतः सार्धः श्लोकः अ. पुस्तके नास्ति
6. अ. प्रतिषेधात्
7. अ, दाही

परदाराभिगामी तु वातरोगी भवेन्नरः ।
मधुप्रमेही चोष्ट्रादिहन्ता नात्र विचारणा ॥ ३२

पतिव्रताभिगामी तु सूकरः स्यान्न संशयः ।
परापवादनिरतो व्यसनी चालसः सदा ॥ ३३

अतिपातकदोषेण विड्वराहो न संशयः ।
उपपातकदोषेण सदा श्वानस्तथा नरः ॥ ३४

पातकैरपरैः क्षुद्रैर्जायन्ते क्षुद्रयोनिषु ।
महापातकपूर्वैश्च पातकैरखिलैः सदा ॥ ३५

तस्मात्पापविशुद्ध्यर्थमुपायं प्रवदाम्यहम् ।
महत्या श्रद्धया युक्ताः शृणुत ब्रह्मवित्तमाः ॥ ३६

निर्मितानि शिवेनैव भूमौ [1]क्षेत्राणि देहिनाम् ।
सर्वपापविशुद्ध्यर्थं तानि वक्ष्याम्यशेषतः ॥ ३७

अमरेशमिति प्रोक्तं स्थानं सर्वार्थसाध[2]कम् ।
ओङ्काररूपस्तत्रेशश्चण्डिकाख्या महेश्वरी ॥ ३८

तत्र देवं च देवीं च श्रद्धया परया सह ।
तत्तन्नाम्ना तु सम्पूज्य मुच्यते सर्वपातकैः ॥ ३९

प्रभासाख्यमहाक्षेत्रमस्ति भूमितले द्विजाः ।
सोमनाथः शिवस्तत्र शिवा सा पुष्करेक्षणी ॥ ४०

नैमिशाख्यं महाक्षेत्रं तत्र देवो विधिः स्मृतः ।
पुष्कराख्ये महाक्षेत्रे रजोगन्धिः सदाशिवः ॥ ४१

ख्याते श्रीपर्वतक्षेत्रे शङ्करस्त्रिपुरान्तकः ।
[3]जल्पेश्वरे तथा क्षेत्रे त्रिशूली परमेश्वरः ॥ ४२

आम्रातकेश्वरस्थाने सूक्ष्मनामा सदाशिवः ।
महाकालाभिधे क्षेत्रे महाकालेश्वरः शिवः ॥ ४३

---

1. क. ख. स्थानानि
2. क. ख. नम्
3. क. ख. जप्ये

मध्यमाख्ये महास्थाने [1]भवः शर्व इतीरितः ।
केदाराख्ये महाक्षेत्रे ईशाना[2]ख्यः परः शिवः ॥ ४४

भैरवाख्ये महास्थाने भैरवः परमेश्वरः ।
गणनाम्नि महाक्षेत्रे शङ्करः प्रपितामहः ॥ ४५

कुरुक्षेत्राभिधे क्षेत्रे शिवः स्थाणुसमाह्वयः ।
स्थाने [3]कनखिले चैवमुग्रनामा सदाशिवः ॥ ४६

विमलाख्ये महाक्षेत्रे विश्वनामा सदाशिवः ।
अट्टहासेश्वरे क्षेत्रे महानन्द[4]करस्तथा ॥ ४७

महेन्द्रसंज्ञके स्थाने हरनामा सदाशिवः ।
गोकर्णाख्ये महाक्षेत्रे देवदेवो महाबलः ॥ ४८

भद्रकर्णे महाक्षेत्रे [5]महादेवः शिवाभिधः ।
कमलाख्ये हरस्तत्र क्षेत्रे तु कमलालये ॥ ४९

महालयाभिधे क्षेत्रे रुद्रस्तत्र सदाशिवः ।
हेमकूटाभिधे क्षेत्रे विरूपाक्षः सदाशिवः ॥ ५०

क्षेत्रे दक्षिणकैलासे कालहस्तीश्वरः शिवः ।
पुण्डरीकाभिधे क्षेत्रे देवदेवः सभापतिः ॥ ५१

अविमुक्ताभिधे क्षेत्रे देवो विश्वेश्वरः स्मृतः ।
सन्ति चान्यानि भूलोके शिवेनाधिष्ठितानि तु ॥ ५२

क्षेत्राणि दर्शनात्तेषां सर्वपापैः प्रमुच्यते ।
तत्तन्नाम्ना तु सम्पूज्य तत्तत्स्थाने महेश्वरम् ॥ ५३

विधूय सर्वपापानि कैवल्यं प्राप्नुयात्परम् ।
तस्मात्सर्वप्रयत्नेन शिवक्षेत्राणि मानवः ॥
दृष्ट्वा सुखसमृद्धः स्यादिह लोके परत्र च ॥ ५४

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे शिवक्षेत्रदर्शनमाहात्म्यकथनं नाम चतुर्दशोऽध्यायः

---

1. क. ख. शिव-
2. क. ख. -ख्योऽपर
3. क. ख. कनखले
4. क. ख. हर-
5. क. ख. देवदेव-

## ॥ पञ्चदशोऽध्यायः ॥

### शिवभक्तपूजामाहात्म्यकथनम्

सूतः—

शिवप्रीतिकराणि स्युः कर्माणि विविधानि च ।
तथापि शिवभक्तस्य सेवया तुष्यते शिवः ॥ १

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
देवदेवस्य विप्रेन्द्राः सदा प्रीतिकरं द्विजाः ॥ २

शिवज्ञानैकनिष्ठानां भक्तानां सेवनं सदा ।
शिवप्रीतिकराणां तु विशिष्टं नात्र संशयः ॥ ३

पुरा काचित् कुलालस्त्री बभूवातीव शोभना ।
सा ह्यकृत्यशतं कृत्वा कामार्ता धनलोभतः ॥ ४

महाधनवती भूत्वा चकार परिमोहिना ।
कश्चिद्विज्ञानसम्पन्नः शिवयोगी सुनिश्चयः ॥ ५

श्रीमद्दक्षिणकैलासं शिवस्थानोत्तमोत्तमम् ।
पत्तनं श्रद्धयागच्छद्विदित्वा क्षेत्रवैभवम् ॥ ६

तं दृष्ट्वा तस्य शुश्रूषां सा चकार यदृच्छया ।
स्वगृहं तं समानीय स्नानवस्त्रासनादिभिः ॥ ७

तोषयामास सुचिरं यथेष्टं धनदानतः ।
भक्ष्यैर्भोज्यैश्च विविधैस्तोषयित्वा चिरं तदा ॥ ८

चन्दनाद्यैरलङ्कृत्य दत्त्वा ताम्बूलमुत्तमम् ।
समास्थाप्य महात्मानं पादसंवाहनादिभिः ॥ ९

एवं चिरं सेवमाना सुखेना[1]स्ते स्वके गृहे ।
सोऽपि विज्ञानसम्पन्नो महायोगी निराकुलः ॥ १०

---

1. क. ख. -स्यात्

अतीव प्रीतिमापन्नस्तस्याः पूजाविशेषतः ।
एवं दक्षिणकैलासे शिवस्थानोत्तमोत्तमे ॥ ११

अवर्तत चिरं कालमतीव प्रीति[1]संयुतः ।
एवं गते बहुतिथे काले सा जरसान्विता ॥ १२

अन्यामवस्थां सम्प्राप्ता [2]जरसा जर्जराकृतिः ।
तस्यामेवाथ वेलायां शिवः प्रीतमनाः स्वयम् ॥ १३

ततो [ददौ] विज्ञानसम्पत्तिं मुक्तेः परमकारणम् ।
एवं तुष्टः पुरा शम्भुर्निजभक्तस्य पूजया ॥ १४

पापाया अपि कैवल्यप्रदं ज्ञानं प्रदत्तवान् ।
एवमन्ये तु बहवः शिवभक्तस्य पूजया ॥ १५

महापातकिनश्चापि उपपातकिनस्तथा ।
विधूय सर्वपापानि परं कैवल्यमाश्रिताः ॥ १६

तस्मात् कुर्वीत मतिमान् शिवभक्तस्य पूजनम् ।
तेनैव दग्ध्वा पापानि परं पदमवाप्नुयात् ॥ १७

शिवप्रीतिकरेष्वन्येष्वपि सत्सु विशेषतः ।
शिवप्रीतिकरी साक्षाच्छुश्रूषा शिवयोगिनाम् ॥ १८

अतः शिवप्रीतिकरं विचार्य
द्विजोत्तमा वेदविदां वरिष्ठाः ।
मदुक्तमार्गेण सह प्रियेण
सदाशिवप्रीतिकरं कुरुध्वम् ॥ १९

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे शिवभक्तपूजामाहात्म्यकथनं नाम पञ्चदशोऽध्यायः

---

1. क. ख. संयुता  2. क. ख. जराजर्जरिताकृतिः

## ॥ षोडशोऽध्यायः ॥

### नियमफलकथनम्

वर्षमेकं तु यः कुर्यान्नियमं सुमना नरः ।
स तु सर्वफलोपेतो भवत्येव न संशयः ॥ १

अस्मिन्नर्थे पुरावृत्तमाख्यानं प्रवदामि वः ।
पार्वत्यै कथितं पूर्वं देवदेवेन शम्भुना ॥ २

देवी—

भूतं भवद्भविष्यच्च यच्चेदं परमं रहः ।
विदितं तव तत्सर्वं तेन सर्वगतो ह्यसि ॥ ३

यदि तेऽहमनुग्राह्या यदि ते मय्यनुग्रहः ।
यत्पृच्छामि महादेव तन्मे ब्रूहि यथातथम् ॥ ४

यमाश्च नियमाश्चैव ब्राह्मणक्षत्रिया विशः ।
ये वै नियमिनः पूर्वं तेषां पूजा हि यत्फलम् ॥ ५

नियमानां हि दृश्यन्ते समृद्धाः फलवृद्धयः ।
दृश्यन्ते नियमानां च घोरा व्यावृत्तयो न वा ॥ ६

एतन्मे संशयं देव चित्तव्याकुलदायकम् ।
शमयस्व महाबुद्धे नीहारमिव भास्करः ॥ ७

महेश्वरः—

असिधाराव्रतं यद्वत्तद्वन्नियमशीलता ।
दुष्करं नियमं कर्तुं मनुष्येण विशेषतः ॥ ८

देवत्वं देवताः प्राप्ता नियमान्नियमान्विताः ।
तारारूपा ज्वलन्त्यन्ये नियमाच्च तपोधनाः ॥ ९

नियमेन महाभागे वेलां नाक्रमतेऽर्णवः ।
निष्कल्मषः पुरा कृत्वा नियमं च यथाविधि ॥ १०

सा मया [1]सत्यमायाता त्वं शुभे नात्र संशयः ।
यः करोत्यब्दमेकं तु नियमं नियमान्वितः ॥ ११

मल्लोकादिषु लोकेषु राजते देववत् सदा ।
[2]यावज्जीवं तु नियमं कृत्वा संपूजयेच्छिवम् ॥ १२

मम सायुज्यमाप्नोति दुष्प्रापममरैरपि ।
यः कश्चिदपि यत्किंचिन्नियमं कुरुते नरः ॥ १३

शाठ्याद्वा विप्रलोभाद्वा स याति परमां गतिम् ।
वाराणस्यामभूत्कश्चित् ब्राह्मणो वेदनिन्दकः ॥ १४

विकत्थनोऽधर्मरुचिः केवलं [3]धर्मधारकः ।
दुश्शीलः कर्कशश्चण्डः परद्रव्यापहारकः ॥ १५

निष्ठुरो निर्गुणो देवि जनमर्मविघट्टकः ।
परद्रव्येण संहृष्टः परमर्मविमोहनः ॥ १६

प्लुष्टदंष्ट्रो यथा सर्पः शृङ्गहीनो यथा वृषः ।
लूनपक्षो यथा पक्षी विपुष्प इव पादपः ॥ १७

निःस्वाध्यायवषट्कारो वेदवादबहिष्कृतः ।
वणिगापणिकः सोऽथ नियतं रुचिरानने ॥ १८

आस्ते हि कथयन् वाचमबद्धामसमञ्जसाम् ।
तस्य वर्षशतान्येवं निष्क्रियस्य गतानि वै ॥ १९

अतः स्वर्गगतः सिद्धः सिद्धवृंदारसेवितः ।
वेषं विकृतमास्थाय कामं कुब्जोऽट्टहासकृत् ॥ २०

वाराणस्यां महादेवि भ्रमत्येवं [4]दिवानिशम् ।
स तत्र भ्रममाणस्तु सिद्धो विकृतवेषभृत् ॥ २१

तमापणमनुप्राप्तः स यत्रास्ति नराधमः ।
स तं विकृतरूपेण सिद्धमुख्यमुपागतम् ॥ २२

---

1. क. ख. नित्य-
2. इदमर्धं 13, श्लोकः 14. श्लोक-पूर्वार्धं च अ. पुस्तके नास्ति
3. क. ख. नाम
4. क. ख. दिने दिने

प्रहसन्निदमाहासौ प्रत्युत्थायाभिवाद्य च ।
अपूर्वदर्शनं तुभ्यमहो साध्वास्यतामिति ॥ २३

कुतः कथं वा प्राप्तोऽसि शङ्के स्वर्गात् त्वमागतः ।
न हीन्द्रः स्वेन रूपेण [1]शान्तेन रुचिरेण च ॥ २४

दृश्यतेऽन्यस्तदाशङ्के स्वर्गभ्रष्टो भवानिति ।

सिद्धः—
साधु भो सुष्ठु ते ज्ञानमहो ज्ञानमहो महान् ॥ २५

स्वर्गादहमनुप्राप्तः सत्यं सत्यं न संशयः ।

ब्राह्मणः—
यदि वै स्वर्गलोकात्त्वं महीमेनां समागतः ॥ २६

रम्भामप्सरसां श्रेष्ठां जानासि यदि कथ्यताम् ।

सिद्धः—
यां प्रेक्ष्य [2]देवाः कम्पन्ते कल्पान्त इव सागराः ॥ २७

रम्भां कथं न जानामि पूर्णेन्दुसदृशाननाम् ।

ब्राह्मणः—
गतोऽसि यदि च स्वर्गं पुनस्सिद्ध महामते ॥ २८

रम्भामनामयं पृच्छ वचनान्मम सादरम् ।

सिद्धः—
[3]यदि यामि दिवं ब्रह्मन् रम्भामप्सरसोत्तमाम् ॥ २९

प्रष्टास्मि सर्वथा रम्भां मा ते बुद्धिरतोऽन्यथा ।
इत्येवं ब्राह्मणं प्रोच्य ह्यपक्रान्तो दिवं गतः ॥ ३०

अपश्यत्सुकृती रम्भामपरां कमलामिव ।
सिद्धो दृष्ट्वा तु तामाह मद्वचः श्रूयतामिति ॥ ३१

यः काश्यामापणस्थश्च वणिग्दुर्ब्राह्मणः स्थितः ।
स त्वां पृच्छति सुश्रोणि जानासि यदि कथ्यताम् ॥ ३२

---

1. क. ख. कान्तेन
2. क. ख. सिद्धाः
3. इदमर्धं 30, श्लोकः 31 श्लोक पूर्वार्धं च अ. पुस्तके न दृश्यते

रम्भा—

न तं जानाम्यहं विप्रं चिन्तयन्त्यपि यत्नतः ।
इत्येवमुक्तो भूयोऽपि सिद्धो वाराणसीं गतः ॥ ३३

स तं प्रहस्य चोवाच वाराणसिनिवासिनम् ।
न च वै सिद्ध दृष्टा सा त्वया रम्भा वराप्सराः ॥ ३४

सिद्धः—

रम्भा दृष्टा च पृष्टा च तुभ्यं सा वचनान्मया ।
चिरं विचार्य सा प्राह नैनं जानामि कोऽप्यसौ ॥ ३५

ब्राह्मणः—

भो भो सिद्ध पुनर्गच्छ स्वर्गं गत्वेति तां वद ।
एवं भवत्विति प्रोच्य सिद्धः [1]सोऽप्यवदच्च ताम् ॥ ३६

अनामयं पृच्छति ते [2]काशिवासरतो द्विजः ।
श्रुत्वा विहस्य सा रम्भा सिद्धं प्रोवाच सादरम् ॥ ३७

सिद्ध [3]त्वं ब्राह्मणं ब्रूहि यद्यस्ति मयि ते स्पृहा ।
नियमं कुरु कल्याण यत्किञ्चि[4]त्त्वं व्रती भव ॥ ३८

इत्युक्तः स तु वै सिद्धो गत्वा वाराणसीं पुनः ।
सम्प्राप्य कथयामास यदुक्तं रम्भया वचः ॥ ३९

सत्यं सिद्धवचः श्रुत्वा नियमं तु समाश्रितः ।
तदा प्रभृति पाषाणं न खादामीति निश्चितः ॥ ४०

एवं विप्रो व्रतं धृत्वा सिद्धं प्राह पुनर्वचः ।
गच्छ त्वं हि पुनः [5]स्वर्गं जानामीति च तां वद ॥ ४१

इत्युक्तः स तु तां गत्वा तदुक्तं तद्वचोऽवदत् ।
ननु जानामि तं विप्रं पाषाणव्रतधारिणम् ॥ ४२

चतुर्धा स्नेहसम्बन्धो नृणां सञ्जायतेऽधिकः ।
सम्भाषणाद्दर्शनाच्च श्रवणाच्च सहासनात् ॥ ४३

---

1. क. ख. प्राप्या-
2. क. ख. कासावासरतो
3. क. ख. तं
4. अ. नाव्रती ख. मा व्रती
5. क. ख. गच्छ जानासीति

नामस्मरणमात्रेण स्नेहः सञ्जायते महान् ।
इत्येवमुक्त्वा रम्भोरू रम्भा जम्भारिसन्निधिम् ॥ ४४

विस्मयोत्फुल्लनयना जगाम गजगामिनी ।
गत्वा निवेदयामास पाषाणव्रतधारिणम् ॥ ४५

शक्रः प्राह नयामीति [1]गीर्वाणहृदयङ्गमाम् ।
किमानयामि तं विप्रं समीपं तव भामिनि ॥ ४६

इत्युक्त्वा दर्शयामास दिव्यगन्धानुलेपनम् ।
दिव्यमाल्याम्बरधरं नियमव्रतचारिणम् ॥ ४७

[2]तत्रत्यः स द्विजो भोगान् बुभुजे सह रम्भया ।
अवन्त्यां ब्राह्मणवरः शकटव्रततत्परः ॥ ४८

स्वर्गं गतः स बुभुजे दिव्यान् कामान् सुरैः सह ।
एवं नियममाहात्म्यमेत[3]त्तव निवेदितम् ॥ ४९

तस्मात् सन्नियमेनाद्य भवितव्यं विजानता ।
नियमव्रतमेवाहुः कारणं सर्वसम्पदाम् ॥ ५०

यः कश्चिन्नियमं देवि स्वल्पं वा यदि वा बहु ।
[4]दृढं व्रतं समास्थाय सत्यं स्वर्गं स गच्छति ॥ ५१

[5]देवि पूजासु नियमं यः करोति दिने दिने ।
स मल्लोकमवाप्नोति पुनरावृत्तिवर्जितम् ॥ ५२

वरं प्राणपरित्यागः शिरसश्छेदनं वरम् ।
न त्वसम्पूज्य भुञ्जीयाद्भगवन्तं त्रिलोचनम् ॥ ५३

[6]इत्येवं यो विनिश्चित्य करोति नियमं नरः ।
दृढभक्तिसमायुक्तः स मल्लोकमवाप्नुयात् ॥ ५४

---

1. ख. निर्वाण-
2. क. ख. तत्रस्थ-
3. क. ख. ते विनिवेदितम्
4. क. दृढव्रतस्तु कुरुते
5. क. ख. देव
6. अयं श्लोकः अ. पुस्तके नास्ति

[1]इति तव तपनेन्दुसन्निभे
नियमफलं गदितं तवानघे ।
कुरु कुरु मितचारुमध्यमे
नियमपथैकमभीष्टसिद्धये ॥ ५५

सूतः—

इत्युक्तः शम्भुना [2]देव्यै पार्वत्यै नियमक्रमः ।
तस्माद्बुद्धिमता कार्यो नियमो नियमेन हि ॥
तेनैव सिद्धिमाप्नोति स्वल्पेनापि महीसुराः ॥ ५६

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे नियमफलकथनं नाम षोडशोऽध्यायः

1. इदमर्धं अ. पुस्तके नास्ति 2. क. ख. चापि

## ॥ सप्तदशोऽध्यायः ॥

### शोकनाशकथनम्

ऋषयः—

शोकः किमाश्रयो ब्रह्मन् केन वा स तु हन्यते ।
इमं नः संशयं छिन्धि रोमहर्षण सूतज ॥ १

सूतः—

वक्ष्यामि मूलं शोकस्याप्युपायं तस्य संक्षये ।
शृणुध्वमृषयः सर्वे सर्वतत्त्वार्थवेदिनः ॥ २

गृहक्षेत्रकलत्रादि द्विजाः शोकस्य कारणम् ।
लीयते च विवेकेन वदतो मे निबोधत ॥ ३

अत्रैवोदाहरन्तीममितिहासं [1]पुराविदः ।
इन्द्रगुप्तस्य संवादं सिद्धस्य च महात्मनः ॥ ४

अस्त्यवन्ती[2]पुरी नाम पुरं भोजोपशोभितम् ।
तत्रास्ते धनिको वैश्य इन्द्रगुप्त इति श्रुतः ॥ ५

स वै परमधर्मात्मा द्विज[3]धर्मानुपालकः ।
भुक्त्वा भोगान् सुविपुलानन्ते वयसि संयमी ॥ ६

पुत्रसंक्रामितश्रीकः साग्निहोत्रः स भार्यया ।
वानप्रस्थविधानेन वनवासरतोऽभवत् ॥ ७

कुर्वंस्तत्राखिलं कर्म यथोक्तं वनवासिनाम् ।
कदाचिदिन्धनाद्यर्थं जगाम विपिनान्तिकम् ॥ ८

तस्मिंस्ततो विनिष्क्रान्ते तोयाहरणतत्परा ।
आश्रमान्निर्गता भार्या नाम्ना धनवती तदा ॥ ९

---

1. क. ख. वदामि वः
2. क. पुरं नाम पुरं शोभोप ख. पुरं नाम परं शोभोप
3. क, ख, धर्मस्य पालकः

एकाकिनीं सरस्तीरे क्षुत्परीतो मृगादनः ।
व्याघ्रो जघास क्रन्दन्तीमनाथां भयविह्वलाम् ॥ १०

स गृहीतेन्धनो विद्वान् प्रविष्टो निजमन्दिरम् ।
अदृष्ट्वा तत्र तां कान्तां पर्यतप्यत दुःखितः ॥ ११

बहिरन्विष्यमाणोऽपि नाविन्दत यदा च ताम् ।
विललाप गुणांस्तस्या वर्णयन् दुःखितो भृशम् ॥ १२

[1]हा ! गतासि महाभागे सद्वृत्ते प्रियवादिनि ।
विहाय मामरण्येऽस्मिन्नहो तव बलं महत् ॥ १३

पञ्चयज्ञक्रियाः सर्वास्त्वदधीना ममानघे ।
अधुना किं करोम्यद्य च्छिन्नपक्षखगोपमः ॥ १४

याचयन्त्यागता मेऽद्य गृहमन्नाभिकाङ्क्षिणः ।
वदाम्यहं वा किं तेषामहो [2]धातृकृतं महत् ॥ १५

अद्याहं तु कथं सुभ्रु जीविष्ये त्वां विनाबले ।
किं मया जीवतेह स्यात् त्रपायैव हि केवलम् ॥ १६

विना भार्यां गृहस्थस्य सुखं किं वेह विद्यते ।
[3]अदास्त्वमर्थिनामन्नमन्यद्वा यत्तु वाञ्छितम् ॥ १७

भार्या धनं गृहस्थस्य गृहचर्याविवेकिनः ।
त्वया विना कथं कुर्यामागतातिथिपूजनम् ॥ १८

भार्या गुणवती साध्वी सुशीला प्रियवादिनी ।
भर्तुः प्रियहिता यस्य स धन्यः पुरुषो भुवि ॥ १९

पतिव्रता सदा पत्युर्मनोज्ञा पूर्वकारिणी ।
यस्य भार्या भवेदेवं किं न तेन हि साध्यते ॥ २०

स [4]एव पूज्यो लोकेऽस्मिन् स धन्यः स च पण्डितः ।
यस्य चैतादृशी भार्या स्मितपूर्वाभिभाषिणी ॥ २१

---

1. क. ख. क्व
2. क. ख. धात्रा
3. क. ख. अदातुरर्थिना-
4. क. ख. जीवतीह

सन्तुष्टे मयि सन्तुष्टा शोचते मयि शोचति ।
रोषिते दीनवदना या साद्य क्व गता खलु ॥ २२

विहाय मद्भक्तिपरां जीवामीति तदद्भुतम् ।
पतिष्यामि नगाग्राद्वा प्रवेक्ष्यामि हुताशनम् ॥ २३

प्रायोपवेशनं वाथ न जीविष्ये तया विना ।
सहधर्मचरी भार्या विधात्रा विहिता पुरा ॥ २४

यां तां विहाय कल्याणीं कथं जीवामि भामिनीम् ।
मातेवाशनकालादौ भृत्यवद्वाह्यकर्मणि ॥ २५

सखीवापदि शिक्षन्ती त्वं कुत्र गतवत्यसि ।
सदाचारवती भार्या विधात्रा विहिता पुरा ॥ २६

तादृशी यस्य पुंसः स्यात् स गृहस्थ इतीर्यते ।
न हि मृद्दारुसंघातं गृहमित्युच्यते बुधैः ॥ २७

यस्य भार्या गृहे नास्ति सर्वभूतदयापरा ।
पातिव्रत्यगुणोपेता तद्गृहं काननोपमम् ॥ २८

भार्या सर्वगुणोपेता भर्तुः प्रियहिते रता ।
वृक्षमूले वने वापि यत्र तिष्ठति तद्गृहम् ॥ २९

यस्य भार्या मृतप्रायासन्तुष्टाप्रियवादिनी ।
अनुक्तग्राहिणी तेन गन्तव्यं तपसे वनम् ॥ ३०

कुभार्या च कुमित्रश्च कुपुत्रश्च कुभोजनम् ।
एतानि वर्जनीयानि पुरुषेण विजानता ॥ ३१

एवं खेदेन संतप्तमिन्द्रगुप्तं तदा वने ।
कश्चित् सिद्धः समागत्य वचनश्चेदमब्रवीत् ॥ ३२

किमर्थमेवं धर्मात्मन्नद्य शोचसि सुव्रत ।
पापहेतुरयं शोकस्त्वादृशानां न चेष्यते ॥ ३३

त्वद्विधेष्वविवेकोऽयं वर्तते यदि पापकृत् ।
ततश्शास्त्रपरिज्ञानं मुधैव स्यान्महामुने ॥ ३४

श्रुतं प्रज्ञां बलं धैर्यं यशो धर्मं च शाश्वतम् ।
एतानि सर्वधर्मज्ञ शोको दहति देहिनाम् ॥ ३५

शोकोऽयं शोचतो नित्यं क्षीयते न कदाचन ।
वर्धते हि विशेषेण तस्माच्छोकमिमं त्यज ॥ ३६

भार्या तव महाभागा कृतकृत्या पतिव्रता ।
अशोच्या स्वर्गतिं प्राप्ता तस्मात्त्वां प्रति मा शुचः ॥ ३७

मृतस्य च जनिर्जन्तोर्न ह्यजन्मवतो मृतिः ।
तदेवंविधमर्त्येषु त्वं न शोचितुमर्हसि ॥ ३८

अप्राप्यमपि लोकेऽस्मिन्नुपायेनाप्यते हितम् ।
न हि कश्चिदुपायोऽस्ति मृतस्यागमने पुनः ॥ ३९

न शोकः शोचतः शोकविनाशे कारणं भवेत् ।
दृष्टः [1]स एव दोषोऽत्र शोकस्यानघ शोचतः ॥ ४०

पूर्वोत्पन्नो विवेकस्ते शोकेनास्तमितोऽधुना ।
कालेन जायते विश्वं कालेनैव विवर्धते ॥ ४१

निहन्यते च कालेन कालमूलमिदं जगत् ।
निबद्धः कालपाशेन कालो हि दुरतिक्रमः ॥ ४२

कालमूलमिदं सर्वं दृष्टादृष्टविचेष्टितम् ।
कालो भवाय भूतानामभावाय च वर्तते ॥ ४३

भार्या तव च कल्याणी सा कालस्य वशं गता ।
न शोको भवता तस्मात् कर्तव्योऽत्र महामते ॥ ४४

पक्षिणः पशवः [2]सर्पाः पिशाचा राक्षसास्तथा ।
मृगा मनुष्या जन्तूनां मरणे हेतवोऽनघ ॥ ४५

यस्य यन्मरणे कॢप्तं तेन गच्छति सोऽत्ययम् ।
एवंविधेषु भूतेषु कः शोकं कुरुते बुधः ॥ ४६

---

1. क, ख. त्वयैव 2. क. ख. सर्वे

[1]वद भूतात्मके देहे कालसागरगोचरे ।
कः करोति मुदं जाते को वा शोको मृतेऽथ वा ॥ ४७

अव्यक्ताज्जायते जन्तुर्व्यक्ते संस्थीयते क्षणम् ।
पुनरव्यक्ततामेति का तत्र परि[2]देवना ॥ ४८

गृहक्षेत्रकलत्रेषु सदा सीदन्ति जन्तवः ।
तेषु स्नेहो न कर्तव्यस्तस्मादात्महितैषिणा ॥ ४९

सूतः—

इत्येवं बोधयित्वा तमिन्द्रगुप्तं तदा वने ।
स सिद्धस्तेन मार्गेण प्रययौ द्विजसत्तमाः ॥ ५०

इन्द्रगुप्तोऽपि सिद्धेन बोधितः सुमहातपाः ।
भार्याशोकं परित्यज्य स्वस्थचित्तोऽभवत्तदा ॥ ५१

ततः स कृतसंन्यासः परं ब्रह्म सदा स्मरन् ।
अवाप परमां सिद्धिमिन्द्रगुप्तो महामतिः ॥ ५२

उक्तमेतन्मया सर्वं भवतां शोकनाशनम् ।
तस्माच्छोकं परित्यज्य सुखी भूयाद्धि मानवः ॥ ५३

य इदं शृणुयान्नित्यमुपाख्यानं महामतिः ।
स तु सर्वगुणोपेतः परं ब्रह्माधिगच्छति ॥ ५४

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे शोकनाशकथनं नाम
सप्तदशोऽध्यायः

---

1. क. ख. पञ्च        2. क. ख. वेदना

॥ अष्टादशोऽध्यायः ॥

ज्ञानोपदेशकथनम्

सूतः—

ज्ञानं [1]मोक्षप्रदं सद्यः शिष्यायोपदिशेद्गुरुः ।
उपदिष्टं विस्मृतं चेत्तेन चोपदिशेद्गुरुः ॥ १

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
ऋभुश्चोत्पन्नविज्ञानो निसर्गादेव सत्तमः ॥ २

दिव्यवर्षायुतं ब्रह्मन् चचार पृथिवीमिमाम् ।
जन्मान्तरकृतात् पापान्नास्तिक्यात् सर्वजन्तवः ॥ ३

ऋभुं दृष्ट्वापि सर्वज्ञमुपेक्षाञ्चक्रिरे भृशम् ।
सोऽपि स्वात्मनि सन्तुष्टो निर्द्वन्द्वो निष्परिग्रहः ॥ ४

कृपया परया युक्तो विद्यानुच्छित्तिसिद्धये ।
शिष्यं शिष्यगुणोपेतं प्रार्थयामास सुव्रतम् ॥ ५

यथापः प्रयता यान्ति यथा मासा अहर्गणम् ।
एवं मां श्रोतुकामाश्च यातारो यान्तु [2]सर्वशः ॥ ६

इत्येवं प्रार्थिते शिष्ये सुकृतस्य फलोदयात् ।
पुलस्त्यपुत्रो धर्मिष्ठो निदाघाख्यो गृहाश्रमी ॥ ७

ऋभुं दृष्ट्वा महाप्रीतः प्रणि[3]पत्य स्ववेश्मनि ।
भोजयित्वा द्विजं प्राह प्रसादं कुरु मे द्विज ॥ ८

इत्युक्तो ब्राह्मणेनासौ निदाघेन मुनीश्वरः ।
ऋभुः श्रद्धातिरेकेण प्रोवाच ज्ञानमुत्तमम् ॥ ९

यस्मा[4]दिमानि जायन्ते भूतानि भवनानि च ।
येन जातानि जीवन्ति लीयन्ते यत्र वै द्विज ॥ १०

---

1. क. ख. मुक्ति-
2. अ. सर्वतः
3. क. ख. -पत्यात्मवेदिनम्
4. अ. -दिदानीं

विजिज्ञासस्व वेदान्ते ब्रह्मेति सततं मुदा ।
तद्ब्रह्मेदं जगत्सृष्ट्वा प्राप जीवात्मना जगत् ॥ ११

सच्चासच्चाभवत्यच्च निरुक्तश्चाभवद् द्विज ।
अनिरुक्तश्च राजेन्द्र तथा निलयनं जगत् ॥ १२

विज्ञानश्चाभवत्तद्वदविज्ञानं द्विजोत्तम ।
सत्यानृतश्च बहु[1]ना किमुक्तेन द्विजोत्तम ॥ १३

यदिदं दृश्यते दृष्ट्या श्रूयते श्रवणेन च ।
ध्यायते [2]ज्ञानमनसा सर्वं तद् ब्रह्म केवलम् ॥ १४

कोशमन्न[3]मयं भातं स्वात्मवन्माययैव तत् ।
स्वात्मदेहमिवासत्यमिति विद्धि द्विजोत्तम ॥ १५

प्राणापानादिभेदेन विभिन्नो भाति तं त्यज ।
योऽयं प्राणमयः कोशः सोऽयं मायाविजृम्भितः ॥ १६

सङ्कल्पं च विकल्पश्च कुरुते सत्यवत्सदा ।
योऽयं मनोमयः कोशः स नास्तीत्यवबुध्यताम् ॥ १७

निश्चिनोति यदा योऽयं निदाघपरमार्थवित् ।
विज्ञानमयकोशोऽयं स नास्तीत्यवबुध्यताम् ॥ १८

सुख्यहं दुःख्यहं कर्ता इह भोक्तेति भाति यः ।
आनन्दमयकोशोऽयं स नास्तीत्यवबुध्यताम् ॥ १९

सत्यं ज्ञानमनन्तं यद् ब्रह्मानन्तं श्रुतौ श्रुतम् ।
तद्विद्धि हृदये भातं प्रत्यक्तत्त्वमिति द्विज ॥ २०

भिद्यते हृदयग्रन्थिश्छिद्यन्ते चास्य संशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे [4]परावरे ॥ २१

वाचानभ्युदितं यच्च येन वाग्वदति द्विज ।
तद्ब्रह्म त्वं सदा विद्धि नेदं वाग्विषयं न वाक् ॥ २२

---

1. क. -धा
2. क. ख. मनसाप्येतत्
3. अ. -मयाद्भूतं
4. क. ख. परात्मनि

[1]मनो यन्नैव गृह्येत येनैवाहुर्मनोगतम् ।
तद्ब्रह्म त्वं सदा विद्धि न मनो न मनोगतम् ॥ २३

यच्चक्षुषा न गृह्येत येन चक्षुर्न गृह्यते ।
तद् ब्रह्म त्वं सदा विद्धि [2]नैनं दृष्ट्वाभिवीक्षितम् ॥ २४

श्रूयते न सदा विप्र यच्छ्रोत्रेणेन्द्रियेण तु ।
तद्ब्रह्म त्वं सदा विद्धि नेदं श्रोत्रश्रुतं द्विज ॥ २५

यच्च न प्राणिति प्राणो येन प्राणः प्रणीयते ।
तद्ब्रह्म त्वं सदा विद्धि नेदं प्राणविचेष्टितम् ॥ २६

[3]यद्विज्ञानात्त्वया विप्र येन विज्ञानमात्मना ।
ताभ्यामन्यत्परं ब्रह्म विद्धि वेदान्तवाक्यतः ॥ २७

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलश्चेति विद्धि ॥ २८

न भाति सूर्यो न च तारकाः शशी
न भाति विद्युन्न विभाति चाग्निः ।
प्रकाशमाने परमात्मवस्तुनि
प्रकाशमानं परमात्मना सदा ॥ २९

शरीरमेवाशनमत्ति सर्वदा
न चात्मतत्त्वं परमात्म[4]दर्शनम् ।
करोति सर्वत्र निदाघमारुतः
शरीरगो नैव पुमान् विनिष्क्रियः ॥ ३०

देहात्मप्रविभाग[5]बोधमतुलं तत्त्वैः सदा बृंहितं
संन्यासाश्रमशान्तिदान्तिसहितैर्यज्ञाग्नि[6]दग्धैनसः ।

---

1. अ. पुस्तकेऽयं श्लोको नास्ति
2. ख. नैतद्दृष्ट्याभि-
3. क. ख. यद्विज्ञातं त्वया विप्र यन्न विज्ञात-
4. क. दर्शने
5. अ. जोत्थ-
6. अ. दग्धेन्धनैः

सम्पाद्य श्रुतिमस्तकेषु महता यत्नेन विद्यां विना
कः संसारमविद्ययैव विहितं च्छित्त्वा विमुक्तो भवेत् ॥ ३१

यज्ज्ञानेन निदाघदृश्यमखिलं विज्ञातमेवानिशं
मृत्पिण्डेन घटादिवत् भवति तत् सत्यं ततोऽन्यन्मृषा ।
तत्त्वं विद्धि सदाबलेन सततं भक्त्या च मत्सेवया
न त्वं संसरसि श्रुतिश्च सदसत्त्यक्ते मया [1]वक्ति हि ॥ ३२

एतावान् श्रुतिमस्तकेष्वभिहितो ह्यर्थो निदाघादरा-
देतावान् विदितो मया मुनिगणैरन्यैरपि ज्ञानिभिः ।
एतावान् परमेश्वरो वदति मे विष्णुर्विरिञ्चोऽप्यतः
कारुण्यादहमुक्तवानतितरां विद्धयेतमर्थं मुदा ॥ ३३

एवं तस्योक्तवांस्तत्त्वं ततस्तेनैव विस्मृतम् ।
निदाघस्याल्पभाग्यस्य न विद्यावासनाभवत् ॥ ३४

प्रतिवन्धकबाहुल्यात् प्रवृत्ता कर्मवासना ।
अतीते वत्सरे दिव्ये सहसा स ऋभुः पुनः ॥ ३५

निदाघस्य गृहं गत्वा द्वारि केवलवत् स्थितः ।
स्थितस्तेन गृहीतार्घ्यो निजवेश्म प्रवेशितः ॥ ३६

प्रक्षालिताङ्घ्रिपाणिं तु कृतासनपरिग्रहम् ।
उवाच स द्विजो विप्रं भुज्यतामिति सादरम् ॥ ३७

ऋभुः—

भो विप्रवर्य भोक्तव्यं यदत्र भवतो गृहे ।
[2]तत् कथ्यतां कदन्नेषु न प्रीतिः सततं मम ॥ ३८

निदाघः—

सक्तुयावक[3]वानानामपूपानां च मे गृहे ।
यद्रोचते द्विजश्रेष्ठ तत्तद् भुङ्क्ष्व यथेच्छया ॥ ३९

कदन्नानि द्विजैतानि मृष्टमन्नं प्रयच्छ मे ।

निदाघः—

हे हे गृहिणि मद्गेहे यत् किञ्चिदतिशोभनम् ॥ ४०

---

1. क. ख. वर्तहि
2. इदमर्धमनन्तरार्धं च अ. पुस्तके नास्ति
3. क. ख. वद्याना-

मत्स्योपसाधनं मृष्टमस्यैवान्नं प्रकल्पय ।
इत्युक्ता तेन सा पत्नी मृष्टमन्नं द्विजस्य यत् ॥ ४१

प्रसाधितवती तस्मै भर्तुर्वचनगौरवात् ।
तद्भुक्तवन्तमिच्छातो मृष्टमन्नं महामुनिम् ॥ ४२

निदाघः प्राह विप्रेन्द्राः प्रश्रयावनतः स्थितः ।

निदाघः—

अपि ते परमा तृप्तिरुत्पन्ना तृप्तिरेव च ॥ ४३

अपि ते मानसं स्वस्थमाहारेण महामते ।

ऋभुः—

आकाशवदहं पूर्णो देहपादादिवर्जितः ॥ ४४

गमनागमने न स्तः क्षुत्पिपासे च मे न हि ।
क्षुद्यस्य तस्य भुक्तेन तृप्तिर्ब्राह्मण जायते ॥ ४५

न मे क्षुदभव[1]त्तृप्तिं कस्मान्मां परिपृच्छसि ।
वह्निना पार्थिवे धातौ क्षपिते क्षुत्समुद्भवः ॥ ४६

भवत्यम्भसि च क्षीणे तृष्णावारिणि जायते ।
क्षुत्तृष्णे देहधर्माख्ये न मे वै ते द्विजोत्तम ॥ ४७

ततः क्षुत्सम्भवाभावात् तृप्तिरस्त्येव मे सदा ।
पुमान् सर्वगतो व्यापी आकाशवदयं यतः ॥ ४८

कुतः कुत्र च गन्तासीत्येतदप्यर्थवत् कथम् ।
[2]कोऽहं न गन्ता नागन्ता नैकदेशनिकेतनः ॥ ४९

त्वं चान्यो न न च त्वं च न चाहं नाहमप्यहम् ।
[3]एतच्छ्रुत्वा निदाघोऽपि मांसदृष्टया विलोकयन् ॥ ५०

प्राह मिथ्या कथं प्रोक्तं भवता मम सन्निधौ ।
प्रत्यक्षेण विजानामि शरीरगमनं तदा ॥ ५१

---

1. अ. तृप्तिः
2. क. ख. सोऽ
1. अ. एतं दृष्ट्वा

भोजनं मैथुनं नाशं तवाहं पुरुषाधम ।
गच्छ गच्छ महादुष्ट सत्यहीन ममाग्रतः ॥ ५२

इत्युक्तो ब्रह्मपुत्रोऽपि निदाघेन मुनीश्वरः ।
पुनश्चाहाथ विज्ञानमलब्धमिति चिन्तयन् ॥ ५३

विप्रं निदाघमासाद्य प्रत्यक्षं किं ब्रवीषि तत् ।
विमृश्य वद मे नित्यं सत्यनिष्ठ नरोत्तम ॥ ५४

इति ब्रह्मसुतेनोक्तो निदाघः प्राह पूर्ववत् ।
मृष्टान्नं मृष्टमित्येषा जिज्ञासा वै कृता तव ॥ ५५

किं वक्ष्यतीति तत्रापि श्रूयतां द्विजसत्तम ।
किमु स्वाद्वथ वा मृष्टं भुञ्जते भूसुरोत्तम ॥ ५६

मृष्टमेव यदा मृष्टं तदेवोद्वेगकार[1]णम् ।
अमृष्टं जायते[मृष्टं]मृष्टादुद्वेजते यदा ॥ ५७

आदिमध्यावसानेषु तदन्नं रुचिकार[2]कम् ।
मृन्मयं हि गृहं लोके मृदा लिप्तं स्थिरं भवेत् ॥ ५८

पार्थिवोऽयं तथा देहः पार्थिवैः परमाणुभिः ।
यवगोधूममुद्गानि घृतं तैलं पयो दधि ॥ ५९

गुडं फलादीनि तथा पार्थिवाः परमाणवः ।
इति ब्रह्मसुतेनोक्तो निदाघः प्राह पूर्ववत् ॥ ६०

पुनश्च परया युक्तः कृपया स ऋभुर्मुनिः ।
निदाघायोक्तवांस्तत्त्वं शिष्यस्नेहेन संयुतः ॥ ६१

ऋभुः—

यद्यत्प्रकाशते विद्वंस्तत्तद्भानात्मकं तथा ।
भानात्मकं चेद् ब्रह्मैव कथं देहादिदर्शनम् ॥ ६२

अथाभानात्मकं तर्हि प्रत्यक्षेण न भाति तत् ।
भानसम्बन्धतो भानमपि विद्वन्न सिध्यति ॥ ६३

1. क. ख. कम्   2. क. ख. णम्

स्वतो भानविहीनस्य कथं भानेन सङ्गतिः ।
तस्मात्प्रत्यक्षतो दृष्टं ब्रह्मैवात्र विचारतः ॥ ६४

अविचारात्मिका ह्येषा प्रतीतिः प्रतिभाति ते ।
विचारेण विसृज्यैतां ब्रह्म सर्वं विलोकय ॥ ६५

निदाघश्च वचः श्रुत्वा ब्रह्मपुत्रस्य धीमतः ।
प्रदक्षिणत्रयं कृत्वा पपात भुवि दण्डवत् ॥ ६६

तस्य भार्या मुनिश्रेष्ठं प्रणिपत्य पतिव्रता ।
गन्धपुष्पादिभिर्ब्रह्मन् पूजयामास सादरम् ॥ ६७

तं निदाघः समालिङ्ग्य पुनश्चाह द्विजोत्तमम् ।
को भवानिह सर्वज्ञो मम गेहं समागतः ॥ ६८

दर्शनात्तव सन्तुष्टिर्जाता मे महती द्विज ।
इत्युक्तो ब्रह्मविच्छ्रेष्ठो निदाघेनार्द्रमानसः ॥ ६९

ऋभुरस्म्यहमाचार्यः पुरस्तादेव तेऽनघ ।
इदानीमागता विद्या मयोक्ता सुस्थिरा न वा ॥ ७०

इति जिज्ञासया वत्स गमिष्यामि यथेच्छया ।
त्वञ्च कर्म परित्यज्य मदुक्तार्थपरो भव ॥ ७१

इत्युक्त्वा मौनमास्थाय ब्रह्मवित्प्रवरो गतः ।
निदाघश्च तथेत्युक्त्वा प्रणिपत्य द्विजोत्तमम् ॥ ७२

अन्वगच्छद् द्विजाः किञ्चिद्देशं भक्त्या स्वभार्यया ।
एवं ब्रह्मसुतेनोक्तो निदाघः पक्वमानसः ॥ ७३

पुनश्च कर्मनिष्ठोऽभूत् सर्वदा मुनिसत्तमाः ।
पुनः संवत्सरेऽतीते सहस्रे दैविकेन सः ॥ ७४

मुनिर्दत्त्वा निदाघाय परिज्ञानं विशेषतः ।
निर्वाणपरमं ब्रह्म ह्यवाप परमामृतम् ॥ ७५

निदाघो दग्धपापस्तु विशुद्धहृदयो द्विजाः ।
ब्रह्मसूनूपदेशेन प्रबुद्धः परमात्मनि ॥ ७६

बुद्ध्वा मायामयं सर्वं त्यक्त्वा मायामयञ्च सः ।
प्रारब्धकर्मणा किञ्चित्कालं स्थित्वा सदारकः ॥ ७७

भुक्त्वा भोगानविद्योत्थानाभासा[1]न्नो मतस्थितान् ।
तदन्ते विद्यया विद्वान् दग्ध्वा मुक्तोऽभवत्त्वयम् ॥ ७८

इत्युक्तं परमहितं जगद्धिताय
श्रुत्युक्तं परम[2]मितं महानु[3]भाव ।
प्रत्युक्तं द्विजगुरुणा विमुक्तये यत्
तच्छिष्यं परममुदा विशिष्टभक्तम् ॥ ७९

तस्मादुपदिशेज्ज्ञानं शुद्धं शिष्याय देशिकः ।
पुनः पुनश्चोपदिशेद्यावज्ज्ञानं प्रतिष्ठितम् ॥
तेनैव जन्तुः सततं निर्वाणं परमेष्यति ॥ ८०

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे ज्ञानोपदेशकथनं नाम
अष्टादशोऽध्यायः

1. अ. नामति
2. अ, ख. हितं
3. अ. ख. भावः

## ॥ एकोनविंशोऽध्यायः ॥

### अध्यात्मज्ञानकथनम्

सूतः—

अतः परं प्रवक्ष्यामि ध्यान[ज्ञान]माध्यात्मिकं द्विजाः ।
भद्राश्वाय पुरा प्रोक्तमगस्त्येन महात्मना ॥ १

भद्राश्वः—

भगवन् कर्मणा केन जीवते भवसन्ततिः ।
किं [1]हि कृत्वा न जीवन्ति मर्त्या दूतोपपत्तिषु ॥ २

अगस्त्यः—

शृणु राजन् कथां दिव्यां दूरासन्नव्यवस्थिताम् ।
दृश्यादृश्यविभागोत्थां समाहितमना नृप ॥ ३

नाहो न रात्रिर्न दिशो नभश्च
न द्यौर्न देवा न दिनं न सूर्यः ।
तस्मिन् काले पशुपालोऽतिरागात्
स पालयामास पशूननेकान् ॥ ४

तान् पालयन् स कदाचिद्दिदृक्षु-
[2]र्वीरां समुद्रं च जगाम तूर्णम् ।
अनन्तपारस्य महोदधेस्तु
तीरे वसंस्तत्र वसन्ति सर्वे ॥ ५

अष्टौ द्रुमाः कामवहा नदी च
तिर्यक् चान्यद्बभ्रमुस्तत्र चान्ये ।
पञ्च प्रधानाः पुरुषास्तथैकां
स्त्रियं बभ्रुस्तपसा दीप्यमानाम् ॥ ६

---

1. क. ख. वा  2. ख. -गिरिं

सापि स्त्री स्वे वक्षसि धारयन्ती
सहस्रसूर्यप्रतिमं विशालम् ।
तस्याधारस्त्रिप्रकारस्त्रिवर्णः
तं राजानं वीक्ष्य परिभ्रमन्तम् ॥ ७

तूर्ष्णीभूता बहुकल्पा इवासन्
नृपोऽप्यसौ तद्विपिनं विवेश ।
तस्मिन् प्रविष्टे सर्व एते विनेशु-
र्भवेदैक्यं भगवन्तः क्षणेन ॥ ८

तैः संप्रयातैः स नृपोपनीतः
संवेष्टितो दस्युभिश्चिन्तयानः ।
कथं च ते न भविष्यन्ति येन
संवेष्टितो निर्वृतिं प्रार्थयामि ॥ ९

एवं राज्ञश्चिन्तयतस्त्रिवर्णः पुरुषः परः ।
श्वेतं रक्तं तथा कृष्णं त्रिवर्णं [1]ध्यायतस्ततः ॥ १०

स संज्ञां कृतवान् मह्यमपरोऽस्ति क्व यास्यसि ।
एवं तस्य ब्रुवाणस्य महन्नाम व्यजायत ॥ ११

तेनापि राज्ञा संवीतः संबुध्यस्वेति चाब्रवीत् ।
एवमुक्ते ततः स्त्री तु तं राजानं रुरोध ह ॥ १२

महांस्ततो मा भैष्टेति ततोऽन्यः पुरुषो नृपम् ।
संवेष्ट्य स्थितवान् धीरः ततः सर्वे च वेष्टिताः ॥ १३

ततोऽन्ये पञ्च पुरुषा आगत्य नृपसत्तमम् ।
संवेष्ट्य संस्थिताः सर्वे ततो राजा निरोधितः ॥ १४

रुद्धे राजनि ते सर्वे एकीभूतास्तु दस्यवः ।
मथिताः शस्त्रमादाय ते लीनास्तु मिथोऽभवन् ॥ १५

तैर्नीते नृपते[2]र्वेषो [3]बभौ च पुरु शोभनम् ।
अन्येषामपि देवानां कोटिः साग्राभवन्नृप ॥ १६

---

1. अ. धारयंस्ततः 2. अ. वेगः 3. क. ख. बभूव पुर-

ग्रहेषु सलिलं वह्निः सुखशीतश्च मारुतः ।
सावकाशानि शुभ्राणि पञ्चैता निर्गुणानि च ॥ १७

एकैव तेषां सर्वेषां सरित्संवेष्ट्य संस्थिता ।
तेषां स पशुपालोऽसौ कृतवान् गतभीर्नृपः ॥ १८

तस्य तल्लाघवं दृष्ट्वा जयञ्च नृपतेर्मृधे ।
त्रिवर्णः पुरुषो राजन्नब्रवीन्मृगसत्तमम् ॥ १९

त्व[1]त्सुतोऽस्मि महाभाग ब्रूहि किं करवाणि ते ।
अस्माभिर्बद्धुमिच्छद्भिर्भवन्तं निश्चयः कृतः ॥ २०

यदि नाम त्वया सर्वे वयं देव पराजिताः ।
एकमेकं शरीरेषु लीनास्तिष्ठाम पार्थिव ॥ २१

[2]मध्येते तव पुत्रत्वं गते सर्वेषु संभवः ।
एवमुक्तस्ततो राजानन्तरं पुनरब्रवीत् ॥ २२

पुत्रो मे भव कर्ता त्वमन्येषामपि सत्तम ।
अस्मिन् [3]मुहुर्न ते भावैर्नाहं लिप्ये कदाचन ॥ २३

एवमुक्त्वा तु नृपतिस्तमात्मजमथाकरोत् ।
तै[4]र्वियुक्तः स्वयं तेषां मध्ये स विचचार ह ॥ २४

स त्रिवर्णो नृपो दृष्टः स्वतन्त्रत्वाच्च पार्थिवः ।
महन्नामानमसृजत् स पुत्रं सत्रिवर्णकम् ॥ २५

तस्यापि साभवत् कन्या अवबोधस्वरूपिणी ।
सा स्वविज्ञानजं पुत्रं मानसं विससर्ज ह ॥ २६

तस्याश्च सर्वरूपास्तु तनयाः पञ्च भोगिनः ।
यथासंख्येन पुत्रास्तु तेषामक्षाभिधानतः ॥ २७

एते पूर्वं [5]धन्यवस्तु ततो राज्ञा वशीकृताः ।
अमूर्ता इव ते सर्वे चक्षुरायतनं शुभम् ॥ २८

---

1. क. ख. त्पुत्रोऽ-
2. अ. पुस्तके इतस्सार्धश्लोको नास्ति
3. ख. समुन्नते भावे नाहं क. समुन्नतैभावैर्ना-
4. क. र्विमुक्तः
5. क. ख. दृश्य-

नवद्वारं पुरं रम्यमेकस्तम्भं चतुष्पथम् ।
नदीसहस्र[1]सङ्कीर्णं जयरूपैः समावृतम् ॥ २९

तत्पुरं ते प्रविविशुरेकीभूतास्ततोऽभवन् ।
पुरुषो मूर्तिमान् भूत्वा पशुपालोऽभवत् क्षणात् ॥ ३०

ततस्तत् पुरसंस्थं तु पशुपालो महानृपः ।
स सूक्तवाचकान् सर्वान् वेदान् सस्मार तत्पुरे ॥ ३१

आत्मस्वरूपिणो नित्यास्तदुक्तानि भूतानि च ।
नियमान् कृतवांश्चैव सर्वान् राजा चकार ह ॥ ३२

स कदाचिन्नृपः खिन्नः कर्मकाण्डं प्ररोचयत् ।
सर्वज्ञो योगनिद्रायां स्थित्वा पुत्रं ससर्ज ह ॥ ३३

चतुर्वक्त्रं चतुर्बाहुं चतुर्वेदं चतुःस्वरम् ।
तस्मादारभ्य नृपतेर्वश्याः पश्वादयः [2]स्मृताः ॥ ३४

तस्मात्समुद्रे स नृपो वने तस्मिंस्तथैव च ।
तृणादिषु नृपः सोऽयं हस्त्यादिषु तथैव च ॥ ३५

[3]संमोहो यत् कर्मकाण्डादनु राजन् महामते ।

भद्राश्वः—

मत्प्रश्नविषये ब्रह्मन् कथितेयं त्वया कथा ॥ ३६

तस्याः सम्भूतिरभवत् कस्याः केन कृतो न हि ।
अक्रूरे या कथा [4]चित्रा सर्वत्र [5]त्रिनये स्थिता ॥ ३७

त्वद्देहे मम देहे च सर्वजन्तुषु सा समा ।
तस्याः सम्भूतिमिच्छेयस्त[6]स्यैवायुः स्वयंवरः ॥ ३८

पशुपालात् समुत्पन्नो यश्चतुष्पाच्चतुर्मुखः ।
स गुरुस्तु कथायास्तु [7]तस्य कैवर्तकः स्मृतः ॥ ३९

---

1. क. ख. संपूर्णं
2. क. ख. स्थिताः
3. ख. संमोहयन्क क. समोहयत
4. क. ख. ब्रह्मन्
5. अ. विषये
6. क. ख. स्योपायं
7. क. ख. चतुः श्रृङ्गः समास्थितः

[1]तस्याः पुत्रः स्वरो नाम सप्तमूर्तिरसौ स्मृतः ।
तेन प्रोक्तञ्च यत्किञ्चिचतुर्णां साधनं नृप ॥ ४०

नरार्थानां........तदुक्त्या साध्यतां ययुः ।
चतुर्णां प्रथमो यस्तु चतुरश्रीसमाश्रितः ॥ ४१

वृषो द्वितीयस्तत् [2]प्रोक्तो मार्गेणैव तृतीयकम् ।
चतुर्थस्तत्प्रणीतस्त्रीन् पूज्य भक्त्या दिवं व्रजेत् ॥ ४२

सप्तमूर्तेस्तु चरितं शुश्रूषुः प्रथमं नृपः ।
ब्रह्मचर्येण [3]वर्ते च द्वितीयेन समासतः ॥ ४३

ततो भृत्यादि[4]हरणं वृषभारोहणं नृषु ।
न[5]ववासश्च निर्दिष्ट आत्मस्थे वृषभे सति ॥ ४४

अहं सोऽस्मीति च [6]विदश्चतुर्था एकधा द्विधा ।
भेदभिन्नो महोत्पन्नस्तस्यापत्यानि जज्ञिरे ॥ ४५

नित्यानित्यस्वरूपाणि दृष्ट्वा [7]पूर्वं चतुर्मुखः ।
चिन्तयामास जनकं कथं पश्याम्यहं पुनः ॥ ४६

मदीयस्य पितुर्ये हि गु[णा] आसन् महात्मनः ।
न तेषां परिदृश्यन्ते स्वस्यापत्येषु कस्यचित् ॥ ४७

पितुः पुत्रस्य यः पुत्रः स्वपितामहनामभाक् ।
एवं स्थितिः स्थिता चेयं स्वरूपे तेषु नाक्षया ॥ ४८

[8]क सा न दृश्यते भाज्ये द्रष्टव्यश्चापि मे पिता ।
एवंगुणयुतैर्युक्तमिति चिन्तापरोऽभवत् ॥ ४९

तस्य चिन्तयतः शस्त्रं पैतृकं पुरतो बभौ ।
चतुष्पात्तेन शस्त्रेण चिच्छिदे तिलकाण्डवत् ॥ ५०

---

1. एतौ 40, 41, श्लोकौ क. ख. पुस्तकयोर्न स्तः
2. क. ख. प्रोक्तं
3. क. ख. वर्तेत द्वितीयो न
4. क. ख. भरणं
5. अ. च
6. क. ख. वदः
7. क. ख. पूर्वश्च
8. क. ख. कासौ

प्रधाने तिलशश्छिन्ने [1]तत्रैकांशो न वा बभौ ।
अहमेवं वदन् भूतं तमप्येनमथाच्छिनत् ॥ ५१

तस्मिंश्छिन्ने तदंशांशभू[2]स्त्वमन्यमपश्यत ।
अहं भूतादिति वदन् वदन्तं भूतमन्तिकात् ॥ ५२

तमप्येवमथो छित्त्वा द्विपञ्चाशतमैक्षत ।
क्वावकाशः क्वावकाश इति जल्पन्तमन्तिकात् ॥ ५३

तमप्यंशं स शस्त्रेण चिच्छेद तिलकाण्डवत् ।
तस्मिन्नेव तदंशांशभूस्तमन्यमपश्यत ॥ ५४

[3]स्वशस्त्रेण ततश्छित्त्वा कं जयामीति वादिनम् ।
तद्वद्ध्रस्वं ततस्त्वन्यं प्रज्वलन्तमपश्यत ॥ ५५

पुरुषं शस्त्ररूपेण तं छित्त्वान्यमपश्यत ।
तद्ध्रस्वमसितं सौम्यं तमप्येवं तथाकरोत् ॥ ५६

[4]एवं पुनः पुनश्छित्त्वा सांशेषु स पुनः प्रभुः ।
स्वकीयमेव [5]तस्यापि पितरं नृपसत्तमः ॥ ५७

[6]पुरुषं कूपशस्त्रेण छित्त्वा....पश्यत ।
तद्वध्द्वास्तां सितं सिंहं ददर्श च पुनः पुनः ॥ ५८

क्व....तस्यान्तं पितरं नृपसत्तमम् ।
त्रसरेणुसमं मूर्त्या असक्तं सर्वजन्तुषु ॥ ५९

तं दृष्ट्वा वा न परं न लेभे स स्वरान्तवित् ।
एवंविधोऽसौ पुरुषः स्वरनामा महातपाः ॥ ६०

---

1. क. ख. तद्देशांशो
2. ख. भूत्स्व
3. क. ख. स्पर्शास्त्रेण
4. अयं पादः क. ख. पुस्तकयोः नास्ति
5. क. ख. तस्यान्तः
6. अयं श्लोकोऽनन्तरश्लोकपूर्वार्धं च क. ख. पुस्तकयोः नास्ति

मूर्तिस्तस्य प्रवृत्त्याख्या निवृत्त्याख्या शिरो महत् ।
एतस्मादेव तस्यास्तु कथया राजसत्तम ॥ ६१

सम्भूतिरभवद्राजन्नेतद्विद्धि त्वमेव तत् ।
सेतिहासः सप्रथमः सर्वस्य भवतो जगत् ॥
य इमं वेत्ति तत्त्वेन [1]न स कर्मवशो भवेत् ॥ ६२

इति श्रीपुरुषार्थसुधानिधौ मोक्षस्कन्धे अध्यात्मज्ञानकथनं नाम एकोनविंशोऽध्यायः

इति श्रीसायणाचार्यविरचिते पुरुषार्थसुधानिधौ
मोक्षस्कन्धः सम्पूर्णः



1. क. ख. स कर्मण्यपरो

## निगमनम्

सूतः—

इत्येवं कथितो विप्राः पुरुषार्थसुधानिधिः ।
भवतां भव्यचित्तानां पुरुषार्थोपपत्तये ॥ १

पुराणोपपुराणेभ्यो महतो भारतादपि ।
व्यासवाक्यानि सङ्गृह्य कथितानि मयाद्य वः ॥ २

य इमं शृणुयान्नित्यं पुरुषार्थसुधानिधिम् ।
स हि सर्वपुराणार्थश्रवणस्य फलं लभेत् ॥ ३

इत्येवं नैमिशारण्ये सत्रे द्वादशवार्षिके ।
विप्रेभ्यः शौनकादिभ्यः सूतेनोक्ताः कथा इमाः ॥ ४

पुरुषार्थोपयोगिन्यः पुरुषार्थसुधानिधेः ।
[1]इमाः शृण्वन्नरो भक्तया भुक्तिं मुक्तिं च विन्दति ॥ ५

इति श्रुतं मया राजन् माधवार्यान्ममानुजात् [न्ममाग्रजात्] ।
यथावदुपदिष्टास्ते पुरुषार्थफलप्रदाः ॥ ६

त्वया तत्त्वावबोधार्थमनुयुक्तोऽहमञ्जसा ।
प्रोक्तवानस्मि ते राजन् पुरुषार्थसुधानिधिम् ॥ ७

[2]पुरुषार्थकथाख्यानां यः सुधानामयं निधिः ।
तदिमं कथयन्त्यार्याः पुरुषार्थसुधानिधिम् ॥ ८

संसा[3]रानलतप्ताङ्गानन्यशरणान् भुवि ।
आप्यायति [4]सदा जन्तून् पुरुषार्थसुधानिधिः ॥ ९

---

1. अ. पुस्तके इदमर्धमनन्तरश्लोकश्च न स्तः
2. अयं श्लोकः क. ख. पुस्तकयोर्नास्ति
3. क. ख. रानलसंतप्तान-
4. क. सज्जन्तून्

[1]इत्युक्तं माधवार्येण पुरुषार्थसुधानिधिम् ।
श्रुत्वा श्रीबुक्कभूपालः प्रहर्षं प्रत्यपद्यत ॥ १०

[2]उवाच च महात्मानं माधवं स्वगुरुं तथा ।
त्वत्कथागौरवेणाहं कृतार्थोऽस्मि सतां वर ॥ ११

पुरुषार्थप्रदाश्चैव ज्ञातवानस्मि सत्कथाः ।
त्वामुपेन्द्रमिवेन्द्रस्य भुवि पुण्यवतां वर ॥ १२

अनुजं माधवार्यस्य मन्ये माहात्म्यदायकम् ।
श्रुत्वा त्वयोदितं विद्वन् पुरुषार्थसुधानिधिम् ॥ १३

[3]य इमं शृणुयान्नित्यं पुरुषार्थसुधानिधिम् ।
अनायासेन तस्यैव करस्थाः सर्वसिद्धयः ॥ १४

इति श्रीसायणाचार्यविरचितः पुरुषार्थसुधानिधिः
सम्पूर्णः

॥ मङ्गलमस्तु ॥

---

1. इत्युक्तमिति । उक्तं उपदिष्टम् । सायणार्यायेति शेषः । श्रुत्वेति । सायणार्यादिति शेषः ।

2. इदमर्धं क. ख. पुस्तकयोर्नास्ति

3. इदमर्धं अ. क. पुस्तकयोर्न दृश्यते